THE

# HOLY BIBLE

IN THE

SANSCRIT LANGUAGE.

VOL. I.

CONTAINING THE FIVE BOOKS OF MOSES
AND THE BOOK OF JOSHUA.

TRANSLATED OUT OF THE ORIGINAL TONGUES

BY THE

CALCUTTA BAPTIST MISSIONARIES,

WITH NATIVE ASSISTANTS.



CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS, CIRCULAR ROAD.

1848.

इङ्गरीयभाषातो व्याकृतः

# धर्मग्रन्थः।

तस्य प्रथमं खण्डं

यद्वा

मूससा रचितं ग्रन्थपञ्चकं

यिहोशूयपुस्तकञ्च।

कलिकातानगरे

ग्रन्थोयं मुद्राङ्कितोऽभूत्।

शकाब्दा १७७० इं १८४८

# आदिपुस्तकं।

## मूसालिखितं प्रथमपुस्तकं।

### १ प्रथमोऽध्यायः।

१ पृथिव्या आकाशस्य च सृष्टिः ३ दीप्तेः सृष्टिः ६ शून्यतायाः सृष्टिः ९ शुष्कभूमेः सृष्टिः ११ वृक्षादीनां सृष्टिः १४ चन्द्रसूर्य्यादीनां सृष्टिः २० मीनपक्षिणां सृष्टिः २४ ग्राम्यवन्यपश्वादीनां सृष्टिः २६ ईश्वरस्य सादृश्येन मनुष्यस्य सृष्टिः २९ मानुषादीनां भक्ष्यञ्च।

१ आदित ईश्वर आकाशं पृथिवीञ्च ससर्ज। पृथिवी निर्जना शून्या २ चासीत्, अन्धकारश्च गम्भीरजलस्योपरि तस्थौ, तदानीम् ईश्वरस्यात्मा तोयानि व्याप्यासीत्।

३ अनन्तरं, दीप्ति र्भवतु, इतीश्वरेणाज्ञापिते दीप्ति र्बभूव। तदानीम् ४ ईश्वरो दीप्तिमुत्तमां विलोक्य तमिस्रात् तां पृथक् कृत्वा दीप्ते र्नाम ५ दिवसइति, तमिस्रस्य नाम रात्रिरिति कृतवान्। ततः सन्ध्यायां प्रातःकाले च जाते प्रथमो दिवसो बभूव।

६ ततः परं तोयानां मध्ये शून्यत्वमुद्भूय तोयानि भागद्वयेन पृथक् करोतु। ७ ईश्वर इत्यादिश्य शून्यत्वं ससर्ज शून्योर्द्धस्थिततोयेभ्यः शून्याधःस्थितते- ८ यानि पृथक् चकार च, ततस्तादृशं बभूव। तदेश्वरस्तस्य शून्यस्य नाम गगणं चकार। सन्ध्यायां प्रातःकाले च जाते द्वितीयो दिवसो बभूव।

९ पश्चात् ईश्वर इत्याज्ञापयामास, गगणाधःस्थितानि सर्व्वाम्भांसि एक- १० स्मिन् मिलन्तु स्थलञ्च प्रकाशतां; ततस्तथैव बभूव। तदेश्वरः स्थलनाम पृथ्वीति तोयराशे र्नाम समुद्रइति कृतवान्, तच्चोत्तमं ददर्श।

११ अपरम् ईश्वर आदिदेश, मेदिन्यां तृणानि सवीजौषधयो नानाजातीयाः सवीजफलदायिनो महीरुहाश्च समुत्पद्येरन्; ततस्तथैवाभवत्; १२ अर्थात् पृथिव्यां तृणानि सवीजनानाजातीयौषधयः सवीजफलदायिनो

नानाविधा वृक्षाश्च जातानि तदानीमीश्वरस्तानि सर्व्वाण्युत्तमानि दृष्ट-
वान्। तथा सन्ध्यायां प्रातःकाले च जाते तृतीयो दिवसो बभूव। १३

अपरम् ईश्वर आज्ञापयत्, निशातो दिवसं पृथक् कर्त्तुं दिवस- १४
वत्सरर्त्तुचिह्ननिमित्तं नभोमण्डले ज्योतिर्गण उत्पद्यतां. तथा वसुन्ध- १५
रायामालोकं कर्त्तुं दीपइव गगणमण्डले तिष्ठतु; ततस्तादृगभवत्। इत्थम् १६
ईश्वरो दिवसं शासितुम् महाज्योतिरेकं, क्षणदाञ्च शासितुं ततः क्षुद्र-
ज्योतिरेकं, इमे बृहती ज्योतिषी उडुनिवहञ्च ससर्ज। ततो धरित्रीं १७
दीपयितुं, दिवारात्री शासितुं, तमिस्राद् विद्युतिं पृथक् कर्त्तुञ्चेश्वरस्तानि
ज्योतींषि गगणमण्डले स्थापयामास; तानि सर्व्वाणि चेश्वर उत्तमानि १८
वीक्षाञ्चक्रे। तथा सन्ध्याप्रातःकालयोः जातयोः सतोश्चतुर्थो दिवसो १९
बभूव।

ततः परं सलिलानां मध्ये विहारार्थं नानाविधा जलचराः प्राणिनो, २०
मेदिन्या ऊर्द्ध्वं नभोमण्डले उड्डयितुं शक्ता विहगाश्च बाहुल्यम् उत्पद्य-
न्ताम्, इतीश्वर आदिश्य बृहन्मीनादीन् नानाप्रकारान् कीलालचरान् २१
प्राणिनो नानाविधखगांश्च सृष्टवान्। अनन्तरम् ईश्वर एतान् सर्व्वान् २२
उत्तमान् वीक्ष्य एतानाशिषं जगाद, यूयं प्रजावन्तो बहुवंशाश्च भूत्वा
सरित्पतीनां सलिलानि परिपूरयत, वसुधाया उपरि विहङ्गमाश्च बहु-
लीभवन्तु। तथा सन्ध्यायां प्रभाते च जाते पञ्चमो दिवसोऽभवत्। २३

ततः परम् ईश्वर आदिदेश, धरायां ग्राम्या वन्याश्च पशव उरोगा- २४
मिनो जन्तुप्रभृतयो नानाविधा जन्तवो जायन्ताम्; ततस्तथैव बभूव।
इत्थम् ईश्वरो नानाविधान् ग्राम्यवन्यपशून् भूमे नानाजातीयान् उरङ्गम- २५
जन्तूंश्च सृष्ट्वा सर्व्वानेवोत्तमान् व्यालुलोके।

अनन्तरम् ईश्वरो व्याचचक्षे, वयं स्वप्रतिमूर्त्या सादृश्येन च आदमं २६
(अर्थात् मनुष्याः) सृजामः, ते जलचरमीनान् खेचरविहङ्गान् ग्राम्यवन्य-
पशून् सर्व्वपृथिवीं भूमिस्थितोरङ्गमान् प्राणिनश्च शासतु। ईश्वरेण २७
स्वप्रतिमूर्त्या मनुष्यः सृजे; ईश्वरस्य प्रतिमूर्त्त्यैव स तेन सृष्टः; पुरुष-
त्वस्त्रीत्वाभ्यां तौ सृष्टौ। तदनन्तरम् ईश्वरस्ताभ्याम् इत्याशिषं ददौ, युवां २८
प्रजावन्तौ बहुलवंशौ च भवतं, पृथिवीं परिपूर्य्य वशीभूतां कुरुतं,
किञ्च सलिलचरमीनान् खेचरखगान् भूमिस्थोरङ्गमजन्तूंश्च शिष्टं।

ईश्वरोऽपरमपि कथयामास, पश्यतं, निखिलपृथिवीस्थाः सर्व्वसवीजौ- २९
षधीः सर्व्वान् सवीजफलदायिनो महीरुहांश्च युवाभ्यां भोक्तुम् अद-

१० दाम्। तथा वन्यपशुखेचरखगेभ्यो भूमिस्थितसजीवोरङ्गमजन्तुभ्यश्च
११ भोक्तुं सर्व्वहरितौषधीरहमदाम्; ततस्तथैव बभूव। अनन्तरम् ईश्वरः स्वसृष्टसकलवस्तूनि निरीक्ष्य सर्व्वाण्युत्तमानि ददर्श। तथा सन्ध्यायां प्रातःकाले च जाते षष्ठं दिनं बभूव।

---

## २ द्वितीयोऽध्यायः।

१ विश्रामवारस्य निरूपणं ४ सृष्टेर्वृत्तान्तः ७ एदनुद्याननिर्म्माणं १५ तस्य मध्ये मनुष्यस्थापनं १८ स्त्रियाः सृष्टिवृत्तान्तश्च।

१ इत्थम् आकाशस्य पृथिव्यास्तदुभयस्थानां सर्व्ववस्तूनाञ्च सृष्टिः सम्पूर्णा
२ बभूव। पश्चात् सप्तमे दिने ईश्वरः स्वकृतकर्म्माणि समाप्य तस्मिन् सप्तमे
३ दिने स्वकृतकार्य्येभ्यो विशश्राम। तदा ईश्वरेण सप्तमं दिनं आशिष्य पवित्रीकृतं, यस्मात् तस्मिन् दिने ईश्वरेण स्वकृतनिखिलसृष्टिकार्य्यात् विश्रामोऽकारि।

४ सृष्टिकाले गगणधरित्र्योरियं विवृतिः। यस्मिन् काले प्रभुः परमेश्वरः पृथिव्याकाशौ ससर्ज, तदानीं पृथिव्यां किमपि क्षेत्रियं तृणं नासीत्
५ क्षेत्रिया काप्योषधिश्च नासीत्; यतः प्रभुः परमेश्वरः पृथिव्यां न वर्षया-
६ मास भूमौ कृषिकर्म्म कर्त्तुं मनुष्यो नासीत्। किन्तु पृथिव्याः शिशिरः समुत्थाय सर्व्वां भूमिम् असिञ्चत्।

७ अपरञ्च प्रभुणा परमेश्वरेण मृदा मनुष्यं निर्माय तस्य नासारन्ध्रं
८ प्राणवायौ प्रवेशिते स सात्मप्राणी बभूव। अनन्तरं प्रभुः परमेश्वरः पूर्व्वदिक्स्थिते एदन्नामकदेशे उद्यानमेकं कृत्वा तत्र स्वसृष्टं तं मानवं
९ स्थापयामास। तत्र प्रभुः परमेश्वरः भूमौ सर्व्वजातीयान् सुदृश्यान् सुखाद्यफलान् पादपान् तस्योद्यानस्य मध्यस्थाने अमृतं पादपं सदस-
१० ज्ज्ञानदातारं पादपञ्च जनयाञ्चकार। उद्यानं सलिलेन सेक्तुम् एका
११ स्रवन्ती एदनुद्यानात् निर्याय विभिद्य चतुर्मुखी भूत्वा प्रोवाह। तस्याः पीशोनाख्या प्रथमा तटिनी सुवर्णोत्पादिनी हवीला देशनिवहान्
१२ वेष्टित्वा प्रोवाह। तस्य देशस्य जातरूपम् अतीवोत्तमं, तस्मिन् स्थाने
१३ रत्नानि वैदूर्य्यमणयश्च जायन्ते। तथा तस्या गीहोन्नामिका द्वितीया
१४ धुनी समस्तकूशदेशं वेष्टमाना प्रोवाह। तथा तस्या हिद्देकल्नामा तृतीया धुनी अशूरियादेशस्य पूर्व्वदिशा प्रोवाह। तथा तस्याः चतुर्थधुन्या नाम फरात्।

ततः परं प्रभुः परमेश्वर आदमं नीत्वा एदनस्थितस्योद्यानस्य कर्म्म १५ कर्त्तुं तदवितुञ्च नियोजयामास। किञ्च प्रभुः परमेश्वरस्तमित्यादिदेश, १६ एतस्योद्यानस्य सकलपादपानां फलानि त्वया स्वच्छन्दं भोक्तव्यानि; किन्तु सदसज्ज्ञानदातुः पादपस्य फलं मा भुज्यतां, यतो यस्मिन् दिने १७ तत् खादिष्यसि तस्मिन्नेव दिने निश्चितं मरिष्यसि।

अनन्तरं प्रभुः परमेश्वरो जगाद, मनुष्यो यद् एकाकी तिष्ठेत् तन् न १८ भद्रं, तस्य साक्षादिव एकः सहकारी मया निर्म्मास्यते। प्रभुणा परमे- १९ श्वरेण मृदा निर्म्मितानां वन्यपशुखेचरखगानां कानि नामान्यादम् करिष्यतीति वेदितुं यदेश्वरः सर्व्वप्राणिनस्तस्य समीपमानयामास, तदानीं आदम् यस्य यन्नाम चकार, तस्य तदेव नामाभवत्। तदा आदम् सर्व्वेषां २० पशूनां खेचरखगानां वन्यपशूनाञ्च नामानि कृतवान्, किन्तु तेषां मध्यत आदमा साक्षादिव एकः सहकारी न प्राप्तः। अनन्तरं प्रभुः परमेश्वर २१ आदमम् अतिनिद्राप्य तस्यां निद्रायां तस्यैकं पञ्जरं गृहीत्वा क्रव्येण तत् क्षतस्थानं पूरयामास। किञ्च प्रभुणा परमेश्वरेण यः पञ्जर आदमो नीत- २२ स्तेन स एकां स्त्रियं निर्म्माय ताम् आदमः सन्निधिम् आनिनाय। तदा- २३ नीम् आदम् आचचक्षे, एषैव मदीयास्थ्नाम् अस्थि मदीयमांसस्य मांसं; तथेयं नरादजनिष्ट, तस्माद् अस्या नाम नारीति कारिष्यते। एतदर्थं २४ मानवः स्वमातापितरौ परित्यज्य स्वभार्य्यायाम् आसंक्ष्यति, तौ द्वौ जनावेकाङ्गौ भविष्यतः। तदानीम् आदमस्तद्भार्य्यायाश्च नग्नत्वे स्थिते २५ तयोरपि लज्जाबोधो नासीत्।

---

## ३ तृतीयोऽध्यायः।

१ सर्पस्य खलत्वं ८ तेन मानुषाणां पतनं १४ सर्पस्य शप्तत्वं १६ नारीपुरुषयोः शप्तत्वं २१ ताभ्यां वस्त्रं दत्त्वा उद्यानतो दूरीकरणञ्च।

प्रभुणा परमेश्वरेण सृष्टानां भूचरजन्तूनां मध्ये सर्पोऽतीव खल १ आसीत्। स तां नारीमवदत् अये अस्योद्यानस्य कस्यचिदपि पादपस्य २ फलानि भोक्तुं परमेश्वरो युवां न्यषेधत्, किमिदं सत्यं? ततो नारी सर्पं प्रोवाच, आवाम् एतस्योद्यानस्य सर्व्वेषां विटपिनां फलानि भोक्तुं शक्नुवः ३ केवलम् उद्यानमध्यस्थितस्य पादपस्य फलं प्रतीश्वरेण कथितं, युवाम् एतत् फलं मा भुञ्जायाम् मा स्पृशतञ्च तत् कृत्वा मरिष्यथः। तदा भुजगो ४ नारीं बभाषे, युवां निश्चितं न मरिष्यथः, किन्तु यदा तत् खादिष्यथः, ५

तदा युवयोर्लोचनप्रकाशो भविष्यति; तत ईश्वर इव भद्राभद्रज्ञानं
६ लप्स्येथे, इतीश्वरो जानाति। तदा नारी तं महीरुहं सुखाद्यफलं लोचन-
रञ्जकं ज्ञानलाभाय वाञ्छनीयञ्च विज्ञाय तस्य फलानि शातयित्वा
७ बुभुजे, स्वस्वामिने च ददौ सोपि भुक्तवान्। तेन तयोरुभयो र्नयन-
प्रकाशो बभूव, ततस्तौ स्वकीयनग्नतां विज्ञाय वटपत्राणि स्यूत्वा कटौ
बबन्धतुः।

८ ततो दिवावसाने मध्ययुद्यानं गमनागमनकारिणः प्रभोः परमेश्वरस्य
रवं श्रुत्वा आदम् तस्य जाया च प्रभोः परमेश्वरस्य सम्मुखात् उद्यान-
९ स्थानां शाखिनां मध्येऽन्तर्दधाते। तदा प्रभुः परमेश्वर आदमम् आहूय
१० बभाषे, त्वं कुत्र? ततः स उवाच, उद्याने भवतः शब्दं श्रुत्वा नग्नता-
११ कारणात् भीत्वा स्वमगोपयम्। स जगाद, त्वं नग्नोसीति कस्त्वामबोधयत्?
यस्य वृक्षस्य फलं भोक्तुं त्वामहं न्यसेधं तस्य वृक्षस्य फलं किं त्वया भुक्तं?
१२ तत् आदमा गदितं, त्वं यां योषितं मम सङ्गिनीमकरोः, सा मह्यं तस्य
१३ पादपस्य फलम् अददात् तन्मया भुक्तं। प्रभुः परमेश्वरो नारीं जगाद,
त्वया किमिदम् अकारि? नारी बभाषे, सर्पस्य प्रवञ्चनयाहं अखादम्।

१४ पश्चात् प्रभुः परमेश्वर उरगं जगाद, त्वमिदं कर्माकरोः, तस्मात्
ग्राम्यवन्यपशुगणात् अधिकशापग्रस्तो भूत्वा वक्षसा गमिष्यसि, यावज्जीवं
१५ धूलीः खादिष्यसि च। किञ्च त्वया योषिता च त्वदीयवंशेन तस्या वंशेन
च परस्परं वैरितां जनयिष्यामि, तेन स त्वदीयशिर आहनिष्यति,
त्वञ्च तस्य पादमूले आहनिष्यसि।

१६ अनन्तरं स नार्यै कथयामास, त्वदीयप्रसववेदनाम् अहम् अतीव
वर्द्धयिष्यामि, ततस्त्वम् अतिशयकष्टेन सन्तानान् प्रसविष्यसि, तथा
स्वामिनो निघ्नीभूय स्थास्यसि स च त्वां शास्यति।

१७ ततः परं स आदमे कथयाञ्चकार, यस्य पादपस्य फलं भोक्तुं त्वामहं
न्यसेधं, त्वं योषितः कथां निशम्य तस्य पादपस्य फलं अभुंक्थाः, तत्-
कारणात् भूमिरभिशप्ता जाता; त्वया यावज्जीवं क्लेशं प्राप्य तस्याः
१८ शस्यादि भक्षिष्यते। तस्यां शृगालकण्टकानि नानाकण्टकिद्रुमा उत्प-
१९ त्स्यन्ते, त्वञ्च क्षेत्रस्यौषधीः खादिष्यसि। अपरञ्च यस्या मृत्तिकाया अजा-
यथा यावत् तस्यां लीनो न भविष्यसि तावत् घर्माक्तमुखेन भक्ष्यं भोक्ष्यसे;
२० यतस्त्वं मृत्तिका, पुनरपि मृत्तिकायां लीनो भविष्यसि। अनन्तरं आदम्
तस्या योषितो नामधेयं हवा (अर्थात् जीवनीति) चक्रे, यतः सा सर्व्वेषां

सजीवलोकानां माता। ततः प्रभुः परमेश्वरः चर्म्मणो वसनं निर्म्माय २१ आदमं तस्य भार्य्याञ्च परिधापयामास।

ततः परं प्रभुः परमेश्वर उवाच, पश्य, मानवो भद्रमभद्रञ्च विज्ञाय २२ अस्माकमेकइवाभवत्; इदानीं स हस्तं प्रसार्य्य अमृतवृक्षस्य फलं पातयित्वा तद् भुक्त्वा अमरो न भवेत्। तदर्थं प्रभुः परमेश्वरस्तम् एदन् २३ उद्यानात् अपसार्य्य तदुत्पादिन्यां मृत्तिकायां कृषिं कर्त्तुं तं न्ययोजयत्। इत्थं स तं मानुषं दूरीकृत्य अमृततरोः पन्थानं रक्षितुं एदनउद्यानस्य २४ पूर्व्वस्यां दिशि घूर्णायमानतेजोमयखड्गधरान् किरूवः स्थापयामास।

---

## ४ चतुर्थोऽध्यायः।

१ काविलहाविलो वृत्तान्तः ९ हाविलो वधात् काविलः शप्तत्वं १६ काविलो वंशावलिः २५ शेतो जननञ्च।

अपरं आदमि स्वजायां हवाम् उपगते सा गर्भिणी भूत्वा काविलं १ (अर्थात् लाभनामानं) पुत्रमेकं प्रसुषुवे कथयामास च, परमेश्वरात् मम पुत्रैकलाभो जातः। पश्चात् सा हाविलं (अर्थात् अलीकनामानं) तस्य २ सहोदरं प्रसुषुवे; स हाविल् मेषपालकः, काविल् च कृषीवल आसीत्। कालपरिणामे काविल् स्वीयकृषिकर्म्मणः कियत् फलम् परमेश्वरमुद्दिश्य ३ उत्ससर्ज। तथा हाविल् स्वपशुव्रजस्य कतिपयान् प्रथमजातान् पुष्टपशून् ४ उत्ससर्ज। परमेश्वरः हाविलं तेनोत्सृष्टं वस्तु चान्वग्रह्णात् किन्तु ५ काविलं तेनोत्सृष्टं वस्तु च नान्वग्रह्णात्, तत्कारणात् काविल् क्रुद्धो विषण्णवदनो बभूव। ततः परमेश्वरस्तम् उवाच, त्वं कुतः क्रुध्यसि? कुतश्च ६ विषण्णवदनो भवसि? यदि शुभं करोषि, तदा किं नानुग्रह्यसे? यदि ७ शुभं न करोषि, तर्हि पापं द्वारि तिष्ठति। तव भ्राता तव वशीभूय स्थास्यति, त्वञ्च तं शास्यसि। अपरञ्च काविल् स्वीयभ्रात्रा हाविला सह ८ संललाप; तत्पश्चात् तयोः क्षेत्रं गतयोः सतोः काविल् आक्रम्य स्वीयभ्रातरं हाविलं निजघान।

तदनन्तरं परमेश्वरः काविलं पप्रच्छ, तव भ्राता हाविल् कुत्र? ९ ततः स प्रत्युवाच, नाहं जानामि, किमहं निजभ्रातूरक्षकः? ततः स १० कथयामास, त्वया किमकारि? तव भ्रातुः शोणितं भूम्या माम् आक्रन्दयति। अतो या भूमिस्तव हस्ताभ्यां हतस्य भ्रातुः शोणितं पीतवती ११ तस्यां भूमौ तमभिशप्तो भवसि। ततः कृषिकर्म्मणि त्वया कृतेपि बहु- १२

१३ शस्यं नोत्पत्स्यते, तथा त्वं धरित्र्यां पर्य्यटन् भ्रमन् च भविष्यसि। ततः
१४ काबिल् परमेश्वरं बभाषे, एतादृशो दण्डो मया न सह्यः। अद्य यदि त्वं मान् अस्मात् स्थानाद् अपसारयसि, तर्हि तव समक्षाद् वहि र्गत्वा पर्य्यटन् भ्रमन् च भविष्यामि तथा कोपि मानुषो मां प्राप्य हनिष्यति।
१५ तदा परमेश्वरो जगाद, यः कश्चित् काबिलं हनिष्यति, तस्य सप्तगुणदण्डो भविष्यति, तस्मात् कोपि तं वीक्ष्य यथा न हनिष्यति, तदर्थं परमेश्वरः काबिलि चिह्नमेकं निदधौ।
१६ काबिल् परमेश्वरस्य समक्षात् प्रस्थाय एदनः पूर्व्वस्यां दिशि नोद्
१७ नामनि देशे न्युवास। अनन्तरं काबिलि स्वभार्य्यामुपगते सा गर्भवती भूत्वा हनोक्नामानं पुत्रं प्रसुषुवे, किञ्च स नगरमेकं निर्म्माय स्वपुत्र-
१८ नामानुसारेण तस्य नगरस्य नाम हनोक् चक्रे। तस्य हनोकः पुत्र ईरद्, ईरदः पुत्रो मिहूयायेल्, मिहूयायेलः पुत्रो मिथुशायेल्, मिथुशायेलः
१९ पुत्रो लेमक्। तस्य लेमको द्वे जाये, एकस्या नामधेयम् आदा तदन्याया
२० नाम सिल्लासीत्। तस्या आदाया गर्भे जातो यो यावल्, स दूष्यगृहवा-
२१ सिनां पशुपालकानाम् आदिपुरुष आसीत्। अपरं यूवल्नामा तस्यैको
२२ भ्राता वीणावादकानां वंशीवादकानाञ्चादिपुरुष आसीत्। किञ्च सिल्लाया गर्भजन्मा तूवल्काबिल्नामा पुत्रः पित्तलस्य लोहस्य च नानाविधं कर्म्म कर्त्तुं निपुण आसीत्; तस्य तूवल्काबिलो नयमा नासिका
२३ भगिन्यासीत्। पश्चात् लेमक् स्वभार्य्ये अवदत्।

हे आदे शृणु मद्वाक्यं हे सिल्ले त्वञ्च तत् शृणु।
हे मन्नार्य्यौ युवाभ्यां मे वाक्ये चेतो निधीयतां।
आक्रान्तः सन्नहं पूर्व्वं हतवान् लोकमेककं।
आघातः सन्नहं तेन युवानं हतवान् नरं।
२४ फलं बधस्य काबेलो यदि सप्तगुणं भवेत्।
गुणितं सप्तसप्तत्या मद्बधस्य फलं भवेत्।

२५ अनन्तरम् आदमि पुनश्च स्वभार्य्याम् उपगते सा गर्भवती भूत्वा पुत्रमपरं प्रसुषुवे, तथा काबिलाहतस्य हाबिलः प्रतिनिधिरूयं पुत्रमपरं ईश्वरो मह्यं दत्तवान् इति कथयित्वा सा तस्य नाम शेत्
२६ (अर्थात् प्रतिनिधिं) चक्रे। अनन्तरं तस्य शेतः पुत्रे जाते स तस्य नाम इनोश् चक्रे; तदानीं लोकाः परमेश्वरस्य नाम्नि प्रार्थनां कर्त्तुं प्रारभन्त।

# ५ पञ्चमोऽध्यायः।

१ आदमो विवृतिः ६ शेतो विवृतिः ९ इनोशो विवृतिः १२ कैननो विवृतिः १५ महललेलो विवृतिः १८ येरदो विवृतिः २१ हनोको विवृतिः २५ मिथूशेलहो विवृतिः २८ लेमको विवृतिश्च।

आदमो वंशावलिविवरणमिदं। यदेश्वरो मनुष्यं ससर्ज, तदा ईश्वर- १ सादृश्येन तं सृष्टवान्। स्त्रीत्वपुंस्त्वाभ्यां ताव् असृजत्; किञ्च तयोः सृष्टि- २ दिने ताभ्याम् आशिषं दत्त्वा आदम् (अर्थात् मनुष्य) इति नाम चकार। तत आदम स्त्रिंशदधिकशतवत्सरे वयसि तस्य सदृशे तुल्ये च पुत्रे जाते ३ तस्य नाम शेतं चक्रे। अस्य शेतो जन्मनः परम् आदम् अष्टशतानि ४ वर्षाणि जीवन् पुत्रान् कन्याश्च जनयामास। साकल्येन त्रिंशदधिकन- ५ वशतवर्षवयसि सति तस्य मृत्यु र्बभूव।

ततः परं शेतः पञ्चाधिकशतवत्सरवयसि सति इनोशनामा तस्य ६ पुत्रो जज्ञे। तस्य जन्मनः परं शेत् सप्ताधिकाष्टशतानि वर्षाणि जीवन् ७ पुत्रान् कन्याश्च जनयाञ्चक्रे। साकल्येन द्वादशाधिकनवशतवत्सरवयसि ८ सति तस्य मृत्यु र्बभूव।

इनोशो नवतिवत्सरवयसि सति कैनन् नामा तस्य पुत्रो जज्ञे। ९ तस्य जन्मनः परम् इनोश् पञ्चदशाधिकाष्टशतवर्षाणि जीवन् पुत्रान् १० कन्याश्च जनयाञ्चक्रे। साकल्यतः पञ्चाधिकनवशतवत्सरवयसि तस्य ११ मरणं बभूव।

तस्य कैननः सप्ततिवत्सरवयसि सति महललेल्नामा तस्य पुत्रो १२ जज्ञे। तस्य जन्मनः परं कैनन् चत्वारिंशदधिकाष्टशतवत्सरान् जीवन् १३ पुत्रान् कन्याश्च जनयाञ्चक्रे। साकल्यतो दशाधिकनवशतवत्सरवयसि १४ सति तस्य मृति र्बभूव।

तस्य महललेलः पञ्चषष्टिवत्सरवयसि सति तस्य येरद्नामा पुत्रो १५ जज्ञे। तस्य जन्मनः परं महललेल् त्रिंशदधिकाष्टशतानि वर्षाणि १६ जीवन् पुत्रान् कन्याश्च जनयाञ्चक्रे। साकल्येन पञ्चनवत्यधिकाष्टशत- १७ वत्सरवयसि सति तस्य मृति र्बभूव।

येरदो द्विषष्ट्यधिकशतवत्सरवयसि सति हनोक्नामा तस्य पुत्रो १८ जज्ञे। तस्य जन्मनः परं येरद् अष्टशतानि वर्षाणि जीवन् पुत्रान् १९ कन्याश्च जनयाञ्चक्रे। साकल्येन द्विषष्ट्यधिकनवशतवत्सरवयसि सति २० तस्य मरणं बभूव।

२१ हनोको वयसि पञ्चषष्टिवत्सरे सति मिथूशेलहनामा तस्य पुत्रो
२२ जज्ञे। तस्य मिथूशेलहो जन्मनः परं हनोक् त्रीणि शतानि वर्षाणि
२३ यावत् ईश्वरेण सार्द्धं गमनागमने चकार, तथा पुत्रान् कन्याश्च जनितवान्। साकल्येन तस्य पञ्चषष्ट्यधिकशतत्रयवत्सरवयसि सति हनोक्
२४ ईश्वरस्य सहगामी सन् अन्तर्दधे; फलत ईश्वरस्तं निनाय।

२५ अनन्तरं मिथूशेलहः सप्ताशीत्यधिकशतवत्सरवयसि सति लेमक्
२६ नामा तस्य पुत्रो जज्ञे। तस्य जन्मनः परं स द्व्यशीत्यधिकसप्तशतानि
२७ वर्षाणि जीवन् पुत्रान् कन्याश्च जनयाञ्चक्रे। साकल्येन मिथूशेलहः ऊनसप्तत्यधिकनवशतवत्सरवयसि तस्य मरणं बभूव।

२८ ततः परं लेमको द्व्यशीत्यधिकशतवत्सरवयसि तस्यैकस्मिन् पुत्रे जाते भूम्याम् अस्माकं परिश्रमक्लेशदो जनयिता यः परमेश्वरस्याभि-
२९ शाप आस्ते, तत्रास्माकम् एष पुत्रः सान्त्वनां जनयिष्यतीति निश्चित्य
३० लेमक् तस्य पुत्रस्य नाम नोहं (अर्थात् सान्त्वयितेति) चकार। तस्य नोहस्य जन्मनः परं लेमक् पञ्चनवत्यधिकानि पञ्चशतानि वर्षाणि
३१ जीवन् पुत्रान् कन्याश्च जनितवान्। साकल्यतः सप्तसप्तत्यधिकसप्तशत-
३२ वत्सरवयसि तस्य मृति र्बभूव। पश्चात् नोहस्य पञ्चशतवत्सरवयसि सति शाम् हाम् येफत् नामकास्तस्य त्रयः पुत्रा जज्ञिरे।

---

# ६ षष्ठोऽध्यायः।

१ अनुचितविवाहस्य कथनं ५ मानुषस्य दुरवात् प्लावनकथनं ९ नोहवंशावलिः १४ अर्णवपोतनिर्म्माणकथनञ्च।

१ इत्थं मेदिन्यां मानवानां वृद्धौ सत्यां तेषां बहुलासु कन्यासु च जातासु,
२ ईश्वरीयलोका ऐहिकलोकानां कन्याः परमसुन्दरीः समीक्ष्य स्वस्वमनो-
३ रम्याणां नारीणां पाणिग्राहं कर्त्तुमारेभिरे; अतः परमेश्वरः कथयामास, ममात्मा मनुष्येषु सर्व्वदा नाधिष्ठास्यति, यतस्ते पापिनो मांसपिण्डमात्राश्च, तेषां जीवनकालाः केवलं विंशत्यधिकशतवत्सरा भविष्यन्ति।
४ तदानीं पृथिव्यां महावीरा आसन्, तथेश्वरीयलोकानां वीर्य्याद् ऐहिकलोकानां कन्यानिवहस्य गर्भजाता अनेके सन्ताना आसन्; एतएव पूर्व्वकालीयाः प्रसिद्धा महावीराः।

५ अपरम् पृथिव्यां मानुषाणां नानात्याचाराः सर्व्वदा मनःकल्पनो-
६ त्पत्तिश्च दुष्टा इति परमेश्वरो ददर्श; किञ्च परमेश्वरः पृथिव्यां मानुषस्य

सृष्टत्वात् शोचन् मानसेऽनुतपन् कथितवान् अहं सृष्टान् मानुषान् भूत्वा पृथिवीं परिष्करिष्यामि। तैः सार्द्धं उरङ्गमान् पदगांश्च जन्तून् ७ खेचरपक्षिप्रभृतींश्च लोप्स्यामि; यत एषां सर्जनकारणात् ममानुतापो ८ भवति। किन्तु नोहः परमेश्वरस्यानुग्रहपात्रम् अभवत्।

नोहस्य वंशावलिविवरणं। स नोहः स्ववंशे साधु धार्मिकश्च सन् ९ ईश्वरस्य सहगाम्यासीत्। तथा शाम् हाम् येफत् नामानस्तस्य त्रयः १० पुत्रा जज्ञिरे। अपरञ्च ईश्वरस्य साक्षाद् पृथिवी दुष्टा दौरात्म्येन ११ पूर्णा च जाता। पृथिवी दुष्टा पृथिवीस्थानां सर्व्वेषां प्राणिनां पन्थानश्च १२ सदोषाः, ईश्वरः पृथिवीं निरीक्ष्य तद् दृष्टवान्। तत ईश्वरो नोहम- १३ वदत्, मम गोचरे सर्व्वेषां प्राणिनाम् अन्तकाल उपस्थितवान्, यत-स्तेषां दौरात्म्येन पृथिव्याः परिपूर्णत्वात् अहं पृथिव्या सार्द्धं तान् सर्व्वान् विनाशयिष्यामि। त्वं गोफरकाष्ठेन पोतमेकं निर्माहि, तथा १४ तस्य मध्ये कोष्ठानि कृत्वा तस्यान्तर्वहिश्च सर्जरसेन लिम्प। तस्य दैर्घ्यं १५ हस्तानां शतत्रयं, विस्तारः पञ्चाशद्धस्तप्रमाणः, उच्चता च त्रिंशद्धस्त-प्रमाणा इत्थं तं निर्माहि। तस्योपरि हस्तैकाधो वातायनं निर्माहि, १६ तस्य पार्श्वे द्वारं कुरु, तथा तस्य प्रथमद्वितीयतृतीयकोष्ठानि निर्माहि। यतोऽहम् आकाशस्याधःस्थितान् सर्व्वप्राणिनो नाशयितुं पृथिवीम् अद्भि- १७ राप्लावयिष्यामि, तेन पृथिव्याः सर्व्वप्राणिनः प्राणान् परित्यक्ष्यन्ति। किन्तु त्वया सार्द्धम् अहं नियमं निर्णयामि; तेन त्वं स्वपुत्रान् स्वभार्य्यां १८ पुत्रबधूश्च सङ्गिनः कृत्वा पोतम् आरोक्ष्यसि। प्रतिजात्यनुसारतः सकल- १९ प्राणिनां स्त्रीपुरुषाणां युग्मानि समादाय प्राणरक्षार्थं तानि स्वेन सह पोतमानय। फलतः पक्षिणां पशूनां भूमिस्थोरोगामिनाञ्च द्वौ द्वौ २० स्वस्वजात्यनुसारतः स्वस्वप्राणरक्षार्थं तव समीपे गमिष्यतः। अपरं २१ युष्माकम् एतेषाञ्च भोजनार्थम् उपयुक्तद्रव्याणि समानीय स्वसमीपे सञ्चिनु। ततो नोहस्तादृशं चकार, ईश्वरस्याज्ञानुसारतएव सर्व्वाणि २२ कर्माणि कृतवान्।

---

## ७ सप्तमोऽध्यायः।

१ पोतमारोढुं नोहं प्रतीश्वरस्याज्ञा ७ नोहस्य तस्य परिजनानां पशुप्रभृतीनाञ्च पोतारोहणं १७ प्लावनविवरणं।

परमेश्वरो नोहं बभाषे, त्वं सपरिवारः पोतम् आरोह, यत इदानीं १ त्वामेव साधुं पश्यामि। त्वतः पृथिव्यां यथैतेषां वंशास्तिष्ठेयुः, तदर्थं २

३ शुचिपशूनां स्त्रीपुरुषान् गृहीत्वा प्रतिजातिसप्तयुग्मानि, अशुचिपशूनाञ्च स्त्रीपुरुषौ गृहीत्वा एकैकजातेरेकैकं युग्मं, तथा खेचरपक्षिणां ४ स्त्रीपुरुषौ गृहीत्वा प्रतिजातिसप्तयुग्मानि स्वेन सार्द्धं नय। यतः सप्ताहात् परम् अहं चत्वारिंशत् दिवारात्रीः पृथिव्यां वर्षयिष्यामि, ततः ५ पृथिव्यां मया सृष्टान् सर्व्वान् प्राणिनो लोप्स्यामि। तदा नोहः परमे-६ श्वरस्याज्ञानुसारतः सर्व्वाणि कर्म्माणि कृतवान्। तस्य नोहस्य षट्शतवत्सरवयसि पृथिव्यां जलाप्लावनं अभवत्।

७ ततो जलाप्लावनभयात् नोहस्तस्य भार्य्या तस्य पुत्त्राः पुत्त्रबध्वश्च सर्व्वे ८ पोतम् आरुरुहुः। तथा नोहं प्रतीश्वरस्याज्ञानुसारात् शुद्धाशुद्ध-९ पशुपक्षिभूचरोरोगामिजन्तवश्च स्त्रीपुरुषाः युग्मं युग्मं नोहसन्निधाने १० पोतमारुरुहुः। पश्चात् सप्ताहे गते पृथिव्यां जलाप्लावनम् आरेभे। ततो ११ नोहस्य वयसः षट्शततमवत्सरस्य द्वितीयमासस्य सप्तदशदिने महासमुद्रस्य सर्व्वाणि प्रस्रवणानि बभञ्जिरे, गगणस्थानि मेघद्वाराणि च १२ सर्व्वाणि मुक्तानि। ततः पृथिव्यां चत्वारिंशत् दिवारात्री महती वृष्टि १३ र्बभूव। तस्मिन् दिने नोहस्तस्य जाया शाम् हाम् येफत् नामकास्त्रयः १४ पुत्त्रास्तेषः पुत्त्रबध्वश्च पोतम् आरुरुहुः। प्रतिजातिग्राम्यवन्यपशवः १५ प्रतिजातीया उरोगामिभूचराः प्रतिजातीयाः खेचरपक्षिणश्च सर्व्वजीवज्जन्तूनां स्त्रीपुरुषा युग्मं युग्मं भूत्वा नोहस्य समीपे पोतम् आरोहन्। १६ किञ्च ईश्वरस्याज्ञानुसारात् सर्व्वप्राणिनां स्त्रीपुरुषाणां युग्मेषु समारूढेषु परमेश्वरो द्वारं रुरोध।

१७ इत्थं पृथिव्यां चत्वारिंशद् दिनानि यावत् जलाप्लावनं बभूव, तदा-१८ नीम् अप्सु वृद्धासु पोतो भूदं विहाय बभासे। ततः क्रमशः पृथिव्याम् १९ अतीव जलवृद्धौ सत्यां पोतो जलेषु भासमानो जगाम। इत्थं पृथिव्यां २० जलं भृशं ववृधे; तत आकाशस्य नीचस्थाः सर्व्वे प्रोन्नतभूधरा ममज्जुः। २१ तदुपरि पञ्चदशहस्तान् यावत् जल उत्थिते सर्व्वे पर्व्वता अमज्जन्। २२ तेन भूचराः सकलप्राणिनः फलतः पक्षिणो ग्राम्या वन्याश्च पशवः पृथिव्या उरोगामिजन्तवः सर्व्वे मनुष्याश्च मम्रुः। शुष्कभूमिस्थिताः सकल-२३ प्राणिनो मम्रुः। इत्थं पृथिवीवासिनः सर्व्वप्राणिनः अर्थतो मनुजा पशव उरङ्गमजन्तव आकाशीयाः सकलपक्षिणश्च विनेशुः; पृथिव्याः सर्व्वएव २४ विलुप्ताः केवलं नोहस्तस्य सङ्गिनश्च पोतस्थाः प्राणिनो जिजीवुः। इत्थं पृथिव्यां सार्द्धशतदिनानि यावत् आपस्तस्थुः।

# ८ अष्टमोऽध्यायः।

१ प्लावनस्य ह्रासः ६ द्रोणकाकस्योड्डायनं १० कपोतस्योड्डायनं १५ पोतादवरोढुमीश्वराज्ञा २० ईश्वरमुद्दिश्य नोहस्य हवनं तं प्रतीश्वरस्य प्रतिज्ञानञ्च।

ततःपरम् ईश्वरो नोहं तस्य सङ्गिनः पोतस्थितान् पश्वादिसकलप्राणिनः स्मृत्वा पृथिव्यां प्रबलवायुं वाहयामास ततो जलं निववृते। अपरं महासमुद्रस्य प्रस्रवणेषु वियतो मेघद्वारेषु च रुद्धेषु नभसो वर्षे च निवृत्ते सति क्रमशस्तोयं वहत् सार्द्धशतदिनान्ते भूमे र्जह्रास; तदा सप्तममासस्य सप्तदशदिने आरारट् नाम्नि भूधरे पोतो लगन् तस्थौ। अनन्तरं क्रमशो दशममासं यावत् तोयं वहत् स्तोकतरं बभूव; तस्य दशममासस्य प्रथमेऽहनि महीध्राणां शृङ्गानि ददृशिरे। १ २ ३ ४ ५

ततः पुनश्चत्वारिंशद्दिनेषु गतेषु नोहः पोतस्य स्वनिर्म्मितं वातायनं मोचयित्वा द्रोणकाकमेकम् उड्डायामास। ततः स प्रस्थाय मेदिन्या अपशोषणं यावत् यातायातं चकार। पश्चाद् नोहो भूम्या वारिह्रासं वेदितुं पुनः कपोतं उड्डायाञ्चकार। तदा मह्यास्तोयाच्छादितत्वात् स पदार्पणाय स्थानमलभमानः पुनरपि पोते तदभ्यासं प्रत्याजगाम; तदा नोहो हस्तं विस्तार्य्य कपोतं धृत्वा पोताभ्यन्तः स्वसमीपम् आनयत्। ६ ७ ८ ९

ततोऽपरसप्ताहं विलम्ब्य नोहः पोतात् तं कपोतम् उड्डायाञ्चकार। ततः स चञ्च्वा जितवृक्षस्य अभिनवपत्रमेकम् आदाय सन्ध्यायां तस्य सन्निधिं प्रत्याययौ; ततः पृथिव्या अपां ह्रासो जातइति नोहो बुबुधे। अनन्तरम् अपरैकसप्ताहे व्यतीते तेन सएव कपोत उड्डायाञ्चक्रे, किन्तु स तन्निकटं पुन र्न प्रत्याजगाम। नोहस्य वयसः षट्शतवत्सराणां परवत्सरस्य प्रथममासीयप्रथमदिने मेदिन्या अपशोषणं जातं; ततो नोहः पोतस्योपरिभागं विमोच्य निरीक्ष्य भूमिं शुष्कां ददर्श। इत्थं द्वितीयमासस्य सप्तविंशे दिने पृथिवी शुष्का बभूव। १० ११ १२ १३ १४

ततःपरम् ईश्वरो नोहम् अवदत्, त्वमिदानीं स्वजायां पुत्रान् पुत्रवधूश्च सङ्गिनः कृत्वा पोताद् अवरोह। अपरं त्वया सार्द्धं पशुपक्ष्युरङ्गमप्रभृतयो ये ये जीवज्जन्तवः सन्ति, तान् सकलान् त्वया सह वहिरानय; तेन ते धरण्यां बहवो भूयासुः धरण्यां प्रजावन्तो बहुवंशा भूयासुः। तदानीं नोहः स्वजायां पुत्रान् पुत्रवधूश्च गृहीत्वा पोताद् अवरुरोह। अपरं स्वस्वजात्यनुसारतः सर्व्वे पशवः पक्षिण उरोगामिनः सकलभूचरजन्तवश्च निर्ययुः। १५ १६ १७ १८ १९

२० तदनन्तरं नोहः परमेश्वरम् उद्दिश्य यज्ञवेदिं निर्म्माय कतिचित् शुचिपशून् कतिचित् शुचिपक्षिणश्च गृहीत्वा वेद्या उपरि जुहाव।
२१ ततः परमेश्वरस्तस्य सुरभिम् आघ्राय मनसि कथयामास, मनुष्याणां दोषात् पुनः पृथिवीं नाभिशप्स्ये; यद्यपि आबाल्यकालं मनुष्याणां मनःकल्पना दुष्टा तथापि यथा समहार्षं तथा पुनः कदापि सकलान्
२२ प्राणिनो न संहरिष्यामि। यावत् धरित्री तिष्ठति तावत् वपनस्य कर्त्तनस्य च समयः तथा शीतं ग्रीष्मः शीतकालो ग्रीष्मकालश्च दिवा रात्रिश्च एतेषां सर्व्वेषां निवृत्ति र्न भविष्यति।

---

## ९ नवमोऽध्यायः।

१ नोहं प्रतीश्वरस्याशीर्व्वचनं ८ नोहेन सार्द्धं ईश्वरस्य नियमस्थिरीकरणं १८ नोहस्य मत्ततावृत्तान्तः कनिष्ठपुत्त्रस्य हामोभिशपनं २८ नोहस्य मरणञ्च।

१ अनन्तरम् ईश्वरो नोहं तस्य पुत्त्रान् इत्याशिषं जगाद, यूयं प्रजा-
२ वन्तो बहुवंशाश्च भूत्वा मेदिनीं परिपूरयत। धरण्याः सर्व्वे पशवः खचरविहगा भूचरा उरङ्गमा जन्तवः सागरीयमीनाः सर्व्वे युष्मत्तो भीतिमन्तः शङ्कावन्तश्च भविष्यन्ति, एते युष्माक हस्तेषु समर्पिता
३ आसते। सर्व्वे गतिमन्तः प्राणिनो युष्माकं भक्ष्या भविष्यन्ति, हरितौ-
४ षधी इव युष्मभ्यम् एतान् अदाम्। किन्तु सजीवनम् अर्थात् सशोणितं
५ पललं मा भुञ्जीध्वं। अहं युष्माकं जीवनरूपस्य शोणितपातस्य परिशोधं कारयिष्यामि; अहमेकैकपशुं एकैकमनुष्यञ्च नरहत्यायाः
६ परिशोधं कारयिष्यामि। यः कश्चित् मानुषस्य शोणितं पातयिष्यति, मानुषेण तस्य शोणितं पातयिष्यते; यत ईश्वरः स्वसादृश्येन मनुष्यं
७ सृष्टवान्। यूयं प्रजावन्तो बहुवंशाश्च भवत, किञ्च धरायां बहुतरा भूत्वा बर्द्धिष्णवो भवत।
८ अपरम् ईश्वरो नोहं तस्य सङ्गिनः पुत्त्रांश्च बभाषे, पश्यत युष्माभि-
९ र्युष्माकं भाविवंशैश्च युष्माकं सङ्गिभिः पोतान्निर्गतवद्भि ग्राम्यवन्यपशुभिः
१० पक्षिप्रभृतिभिश्च पृथिवीस्थितैः सकलप्राणिभिश्च सह नियममहं स्थिरी-
११ करिष्यामि। अहं युष्माभिः सार्द्धम् एनं नियमं स्थिरीकरोमि, जला-प्लावनात् सकलप्राणिनः पुन र्न विनंक्ष्यन्ति; पृथिव्या विनाशार्थं जलाप्ला-
१२ वनं पुनः कदापि न भविष्यति। ईश्वरोऽपरम् अकथयत्, अहं युष्माभिः सह युष्माकं सङ्गिसकलप्राणिभिः सह यं नित्यनियमं स्थिरीकरोमि,

तस्येदमेकं चिह्नं स्थास्यति। अहं जीमूते स्वीयं कोदण्डं स्थापयामि, तत् १३
धरण्या साकं मदीयनियमस्य लक्ष्म भविष्यति। यस्मिन् समयेऽहं धरण्या १४
ऊर्द्ध्वं पयोदान् सञ्चारयिष्यामि, किञ्च तत् पयोदकार्म्मुकं दर्शिष्यते, १५
तस्मिन् काले युष्माभिः सार्द्धं सर्व्वप्रकारप्राणिभिश्च सार्द्धं ममायं नियम
आस्ते, इति मया संस्मृते सति सकलप्राणिविनाशाय पुन र्न जलाप्लावनं
भविष्यति। यतः पृथिवीस्थितैः सकलप्राणिभिः समं मदीयचिरस्थायी १६
नियमोऽस्तीति मम स्मरणार्थं पयोदकार्म्मुकं प्रति मया दृष्टिरर्पिष्यते।
ईश्वरो नोहं जगाद, क्षितिस्थितैः सकलप्राणिभिः साकं मत्स्थापितस्य १७
नियमस्य लक्षणमिदं भविष्यति।

शाम् हाम् येफत् नामानो नोहस्य ये त्रयः पुत्राः पोताद वहिराग- १८
च्छन्, तेषां मध्ये हाम् किनान् वंशस्य पूर्व्वपुरुष आसीत्। नोहस्यैते- १९
स्त्रिभिः पुत्रैः सर्व्वा धरित्री व्यानशे। अनन्तरं नोहः कृषिकर्म्मणि प्रवृत्तः २०
सन् द्राक्षावृक्षान् रोपितवान्। ततः स द्राक्षारसं पीत्वा मत्तः सन् २१
दूष्यमध्ये विवस्त्रो भूत्वा निपपात। तदा किनानः पिता हाम् स्वतातं २२
नग्नं विलोक्य वहिः स्थितौ द्वौ भ्रातरौ वार्त्तां बभाषे। तदानीं शाम्ये- २३
फतौ वसनं गृहीत्वा स्कन्धे निधाय पश्चात् व्रजित्वा नग्नं तातं समा-
च्छादयामासतुः, तौ पराङ्मुखौ भूत्वा व्रजित्वा जनकस्य नग्नतां न
वीक्षाञ्चक्राते। ततः परं नोहो द्राक्षारसस्य निद्रातः प्रबुध्य स्वीय- २४
कनिष्ठसुतस्य तदाचरणं विज्ञायाह,

अभिशप्तः किनान् स्याच्च भ्रातृचेटकचेटकः। २५

पुनश्च तेनोक्तं। शामः प्रभुः परेशो यः स हि धन्यत्वमाप्नुयात्। २६

भविष्यति किनान्नामा शामाख्यपरिचारकः॥
येफतश्चोन्नतिः सम्यग् ईश्वरेण विधास्यते। २७
दूष्ये वत्स्यति शामः स तद्दासो भविता किनान्॥

जलाप्लावनात् परं नोहः पुनः सार्द्धशतत्रयवत्सरान् अजीवत्। २८
किञ्च नोहः साकल्यतः सार्द्धनवशतवत्सरवयसि प्राणान् तत्याज। २९

---

## १० दशमोऽध्यायः।

१ येफतो वंशावलिः ६ हामो वंशावलिः २१ शामो वंशावलिः।

तस्य नोहस्य शाम् हाम् येफत् नामकानां त्रयाणां पुत्राणां वंशा- १

२ वलिः; जलाप्लावनात् परं तेषां एते सकलपुत्त्रा जज्ञिरे। गोमर माजूज्
३ मादय् यूनान् तूबल् मेशक् तीरस् एते येफतः पुत्त्राः। अस्किनस्
४ रीफत् तोगर्म्म, इमे गोमरः पुत्त्राः। इलीशा तर्शीश् कित्तीम् दोदानीम्,
५ इमे यूनानः पुत्त्राः। एतेभ्यो नानोपद्वीपीया देवपूजकाः स्थाने स्थाने
विभक्ताः सर्व्वेषाञ्च पृथक् पृथक् भाषावंशजातयो बभूवुः।
६ तथा कूश् मिसर् पुट् किनान्, इमे हामः पुत्त्राः। सिवा हवीला
७ सव्ता रयमा सव्तिका, इमे कूशः पुत्त्राः। रयमाः पुत्त्रौ शिवादिदनौ।
८ अपरं कूशः पुत्त्रो निम्रोद् स पृथिवीमध्ये पराक्रमी भवितुम् आरभत।
९ परमेश्वरस्य साक्षात् पराक्रान्तो व्याधो बभूव; तस्मात् लोका अद्यापि
दृष्टान्तमिमं कथयन्ति, परमेश्वरस्य समक्षं निम्रोद इव पराक्रमी
१० व्याधः। किञ्च शिनियरि देशे बाबिल्-एरक्-अक्कार्-कल्नी, एतेषु
११ सर्व्वेषु नगरेषु तस्य प्रथमं राज्यं बभूव। तद्देशात् आसुरो निर्गत्य
१२ निनिवी रिहोबोत् केलह; निनिवी केलहो मध्यस्थितं महानगरं
१३ रेषन्, एतानि नगराणि निर्ममे। अपरं लूदीय अनामीय लिहावीय
१४ नप्तुहीय पथ्रुषीय, पिलेष्टीयानाम् आदिपुरुषः कस्लूहीय, कप्तोरीय,
१५ एते सर्व्वे मिसरः पुत्त्राः। तस्य किनानो ज्येष्ठः पुत्त्रः सीदोन्, ततः
१६ परं हेत्, यिवूषीय इमोरीय गिर्गाशीय, हिव्वीय अर्कीय सीनीय
१७ अर्वदीय सिमारीय हमातीया एतैः पुत्त्रैः किनान् देशो व्याप्त आसीत्।
१८ ततः सीदोनो गिरर् दिशि असामारभ्य सिदोम् अमोरा अद्मा
१९ सिवोयीम् लेशां यावत् किनानीयानां निवाससीमासीत्। एते सर्व्वे
२० हामो वंशाः, किन्तु एतेषां मध्ये जातिकुलभाषादेशानां भेद आसीत्।
२१ येफतो ज्येष्ठो भ्राता शाम् इब्रीयलोकानां आदिपुरुष आसीत्,
२२ तस्यापि पुत्त्राः पुत्र्यश्चासन्। एते तस्य वंशा, एलम् आशुर अर्फक्षद
२३ लूद् अराम्। अरामो वंशा ऊष् हूल् गेथर् मश्। अर्फक्षदो वंशः
२४ शेलहः शेलहस्य पुत्त्र एबर्। एबरो द्वौ पुत्त्रौ एकस्य नाम पेलग्
२५ (अर्थात् भागः) यतस्तदानीं पृथिवी विभक्ताभवत्; तस्य भ्रातुर्नाम
२६ यक्तन्। यक्तनः पुत्त्रा अल्मोदद् शेलफ् हत्सर्मावत् येरह हदोराम्
२७ ऊषल् दिक्ला ओवल् अवीमायेल् शिवा ओफीर् हवीला योवव्. एते
२८ यक्तनो वंशाः। आ मेषातः पूर्व्वदिशीयं सिफरभूधरं यावत् तेषां वस-
२९ तिरासीत्। एते सर्व्वे शामो वंशाः; एषां मध्ये जातिकुलभाषादेशानां
३० भेद आसीत्। एषां कुलजात्यो र्भेदे सत्यपि ते नोहस्य पुत्त्राणां वंशा

आसन्; किञ्च जलाप्लावनात् परम् एतेभ्यो नानाजातयः क्षितौ विभक्ता ३२ अभवन्।

---

# ११ एकादशोऽध्यायः।

१ बाबिलो निर्म्माणेन लोकानां भाषाया भेदनं १० शामो वंशावलिः १७ तेरहस्य वंशावलिः ३० तेरहस्य इब्रामो लोटश्च हारणं प्रति गमनं तत्र तेरहस्य मरणञ्च।

पूर्व्वं वसुधास्थितानां सर्व्वेषां लोकानाम् एकैव भाषा एकमेवोच्चा- १ रणम् आसीत्। पश्चात् लोकाः पूर्व्वदिशि भ्रमन्तः शिनियरो देशस्य २ प्रान्तरमेकं प्राप्य तत्र न्यूषुः। तदा परस्परं मन्त्रयाञ्चक्रुः, आगच्छत, वयं ३ इष्टकानि निर्म्माय वह्निना दाहयामः एतेन तेषां पाषाणानां विनिमयात् इष्टकानि बभूवुः चूर्णस्य विनिमयाच्च शिलाजतु बभूव। ततः परं कथयामासुः, आगच्छत, वयं स्वार्थं नगरमेकं गगणस्पर्शि प्रोच्च- ४ गृहमेकञ्च निर्म्मिमीमहे; ततोऽस्माकं कीर्त्ति र्भविष्यति किञ्च वयं सर्व्वस्यां पृथिव्यां न विकारिष्यामहे। अनन्तरं ते मानुषा यन्नगरं गृहञ्च ५ निर्म्ममते, तद् वीक्षितुं परमेश्वरोऽवरुरोह। परमेश्वरः कथयामास, ६ पश्यत, सर्व्वेषाम् एतेषाम् एका जातिः भाषा चैषाम् एका, ते कर्म्मण्यस्मिन् प्रवर्त्तन्ते; इदानीं यद्यत् कर्त्तुमिच्छन्ति, तस्मात् न निवर्त्तिष्यन्ते। अतस्ते केपि केषामपि भाषां बोद्धुं न शक्नुयुः तदर्थम् आगच्छत वयं ७ अधस्तत्र गत्वा तेषां भाषाया भेदं जनयाम। इत्थं परमेश्वरेण ते मेदिन्याः सर्व्वदिक्षु व्यकीर्य्यन्त ते च नगरनिर्म्माणात् न्यवर्त्तन्त। इति ८ कारणात् तस्या नगर्य्या नाम बाबिल् (अर्थतो भेद) इत्यभवत्; यतः ९ परमेश्वरेण सर्वस्या मेदिन्या भाषाभेदं जनयित्वा तस्मात् स्थानात् सर्वस्यां मह्यां व्यकीर्य्यन्त।

शामो वंशावलिः। जलाप्लावनात् परं वत्सरद्वये गते सति शामो १० वत्सरशते वयसि अर्फक्षद्नामा तस्य पुत्त्रोऽजायत। तस्य जन्मनः परं ११ शाम् पञ्चशतानि वर्षाणि जीवन् पुनः पुत्त्रान् पुत्त्रीश्च जनयामास। किञ्च अर्फक्षदः पञ्चत्रिंशद्वत्सरवयसि सति शेलहनामा तस्य पुत्त्रो १२ जज्ञे। तस्य जन्मनः परं अर्फक्षद् त्र्यधिकचतुःशतानि वर्षाणि जीवन् १३ पुनः पुत्त्रान् पुत्त्रीश्च जनयाञ्चक्रे। ततः शेलहस्त्रिंशद्वर्षवयसि सति एवर् १४ नामा तस्यैकपुत्त्रो बभूव। तस्य जन्मनः परं शेलह् त्र्यधिकचतुःशतानि १५ वर्षाणि जीवन् पुनः पुत्त्रान् पुत्त्रीश्च जनयाञ्चक्रे। तत एवरः चतुस्त्रिंशद- १६

१७ र्षवयसि सति पेलग्नामा तस्य पुत्रो जज्ञे। तस्य जन्मनः परम् एवर् त्रिंशदधिकचतुःशतानि वर्षाणि जीवन् पुनः पुत्रान् पुत्रीश्चाजनयत्।
१८ ततः पेलगस्त्रिंशद्वर्षवयसि सति रियूनामा तस्यैकः पुत्रोऽजायत। तस्य
१९ जन्मनः परं पेलग् नवाधिकवर्षशतद्वयं जीवन् अपरपुत्रान् पुत्रीश्च
२० जनयाञ्चक्रे। ततो रियोर्द्वात्रिंशद्वर्षवयसि सति सिरूग्नामा तस्यैकः
२१ पुत्रोऽजायत। तस्य जन्मनः परं रियूः सप्ताधिकशतद्वयवत्सरान्
२२ जीवन् अपरान् पुत्रान् पुत्रीश्चाजनयत्। ततः सिरूगस्त्रिंशद्वर्षवयसि
२३ सति नाहोरनामा तस्यैकः पुत्रोऽजायत। तस्य जन्मनः परं सिरूग् द्वेशते
२४ वत्सरान् जीवन् अपरान् पुत्रान् पुत्रीश्च जनयाञ्चक्रे। अपरं नाहोर
२५ ऊनत्रिंशद्वत्सरवयसि सति तेरहनामा तस्यैकः पुत्रो जज्ञे। तस्य जन्मनः परं नाहोर् ऊनविंशाधिकशतं वत्सरान् जीवन् अपरान्
२६ पुत्रान् पुत्रीश्चाजनयत्। अपरं तेरहस्य सप्ततिवत्सरवयसि सति इब्राम् नाहोर् हारण् नामानः तस्य त्रयः पुत्रा जज्ञिरे।

२७ तेरहस्य वंशावलिः। तस्य तेरहस्य पुत्रा इब्राम् नाहोर् हारण्।
२८ हारणः पुत्रो लोट् किन्तु हारण् आत्मनः पितुः तेरहस्याग्रे स्वजन्मस्थाने
२९ कस्दीयानाम् ऊर्नामक नगरे प्राणान् तत्याज। अनन्तरं इब्राम्-नाहोरौ व्यूहतुः इब्रामो जायाया नाम सारी, नाहोरो जायाया नाम मिल्का। सा नाहोरो जाया मिल्का हारणः कन्यासीत् स हारण् मिल्कायिस्कयो र्जनक आसीत्।

३० सा सारी वन्ध्याभवत्, तस्या अपत्यं न जातम्। अनन्तरं तेरह इब्राम्
३१ पुत्रं हारणः पुत्रं लोट्नामकं पौत्रम् इब्रामो जायां सारीनामिकां पुत्रवधूञ्च गृहीत्वा कस्दीयानाम् ऊर्नामकनगरात् किनानदेशम् उद्दिश्य
३२ गच्छन् हारण्नगरीं प्राप्य तत्रैव न्यवसत्। ततः परं तेरहस्तस्मिन् हारणि नगरे तिष्ठन् पञ्चाधिकशतद्वयवत्सरवयसि प्राणान् अत्यजत्।

---

## १२ द्वादशोऽध्यायः।

१ इब्रामं प्रतीश्वरस्याशीर्व्वदनं ४ इब्रामो हारणगमनं ६ किनान्देशे तस्य भ्रमणं १० दुर्भिक्षकारणात् तस्य मिसरगमनं १४ इब्रामो जायाया राज्ञा ग्रहणं पुनस्तस्मै दानञ्च।

१ ततः परम् परमेश्वर इब्रामम् आचचक्षे, त्वं स्वदेशं ज्ञातिं कुटुम्बं
२ पैतृकगृहञ्च परित्यज्य यं देशमहं त्वां दर्शयामि, तं देशं व्रज। अहं

त्वत्तो महाजातिमेकाम् उत्पाद्य तुभ्यं आशिषं प्रदास्यामि, तेन त्वं विख्यातो मङ्गलदाता च भविष्यसि। अपरं ये तुभ्यम् आशिषं ददति, २ अहं तेभ्य आशिषं दास्यामि; ये तुभ्यम् अभिशापं ददति, तेभ्योऽहम् अभिशापं दास्यामि, त्वत्तो मेदिन्याः सर्व्वे वंशाश्च आशिषं प्राप्स्यन्ति।

अनन्तरम् इब्राम् परमेश्वरस्याज्ञानुसारात् जगाम; तदा लोट् च ४ तेन सहितो जगाम; इब्रामो हारण्नगरात् गमनकाले पञ्चसप्तति वत्सरवय आसीत्। इत्थं इब्राम् सारीं जायां भ्रातृपुत्रलोटं हारणि ५ प्राप्तं स्वीयसञ्चितधनञ्च दासदासीनिवहञ्च समादाय किनान्देशं प्रति यात्रां कृत्वा तं देशं प्राप्तवान्।

अनन्तरं तस्मिन् देशे भ्रमन् शिखिम्स्थानस्य समीपस्थितं मोरि- ६ प्रान्तरं प्राप्तवान्; तदानीं किनानीयलोकास्तस्मिन् देशे न्यवसन्।

ततः परमेश्वर इब्रामं दर्शनं दत्त्वा जगाद, तव वंशाय देशमिमं ७ दास्याम्यहं; अत इब्राम् तस्मिन् स्थाने दर्शनदातारं परमेश्वरम् उद्दिश्य यज्ञवेदिं निर्म्मितवान्। पश्चात् स तत्स्थानं परित्यज्य बैथेलः पूर्व्वदिशः ८ पर्व्वतं गत्वा दूष्यं स्थापयामास; तस्य पश्चिमे बैथेल्, पूर्व्वदिशि अयनगर- मासीत्; तत्रापि परमेश्वरम् उद्दिश्य यज्ञवेदिं कृत्वा तस्य नाम्नि प्रार्थ- याञ्चक्रे। ततः परम् इब्राम् भ्रमन् ततो दक्षिणदेशं गतवान्। ९

तदानीं तस्मिन् देशे दुर्भिक्षस्य जातत्वात् इब्राम् मिसरदेशे प्रवस्तुं १० यात्रां चकार; यतः किनान्देशे दुर्भिक्षम् अतीव ववृधे। अनन्तरं ११ मिसरदेशं प्रवेष्टुम् उद्यतः सन् इब्राम् निजजायां सारीं बभाषे, पश्य, त्वं द्रष्टुं सुन्दरीत्यहं जानामि। एतत्कारणात् मिसरीयलोकास्त्वां दृष्ट्वा १२ मदीयजायेति विज्ञाय मां हत्वा त्वां जीवन्तीं स्थापयिष्यन्ति। अतए- १३ वाहं विनये, त्वं मम भगिनीति वद, तेन त्वया मम मङ्गलं भविष्यति, त्वया मम प्राणाश्च रक्षिष्यन्ते।

अनन्तरम् इब्रामि मिसरं प्रविष्टे मिसरीयलोकास्तां नारीं परम- १४ सुन्दरीं ददृशुः। अपरं राज्ञोऽध्यक्षास्तां निरीक्ष्य राज्ञः साक्षात् तां १५ प्रशशंसुः; ततः सा नारी राज्ञो गृहम् आनिन्ये। तदा तन्निमित्तं नृप १६ इब्रामं समादृत्य तस्मै गोमेषगर्दभगर्दभीमहाङ्गादीन् दासीदासांश्च ददौ। किन्तु सारी इब्रामो भार्य्या, तस्मात् परमेश्वरो राज्ञः सप- १७ रिवारस्य महाक्लेशं घटयामास। अतो राजा तम् इब्रामम् आहूय १८ बभाषे, मया सह त्वया किं व्यवहृतं? एषा मम जायेति कुतो मह्यं

१९ नावादीस्त्वं? इयं मम भगिनीति कुतोऽवादीः? येनाहं तां विवोढुं
२० गृहीतवान्; इदानीं त्वं तां तव जायां गृहीत्वा याहि। तदा राजा-
ज्ञया भृत्या सर्व्वस्वैः सार्द्धं तं तदीयजायाञ्च व्यसृजन्।

---

## १३ त्रयोदशोऽध्यायः।

१ इब्रामो लोटस्य मिसर्देशाद् गमनं, तेषां पशुपालकानां विरोधः १० लोटः सिदोम्-गमनं १४ इब्रामं प्रतीश्वरस्य प्रतीज्ञा च।

१ तदनन्तरं इब्राम् निजजायां लोटञ्च सकलसम्पत्तिञ्च गृहीत्वा मिसरः
२ प्रस्थाय दक्षिणदेशं प्राप्तवान्। स इब्राम् पशुभिः स्वर्णरूप्यैश्च अतीव
३ धनवान् आसीत्। पश्चात् स पूर्व्वयात्रानुसारेण दक्षिणस्माद् बैथेलो
दिशं गच्छन् बैथेल्अयो र्मध्यवर्त्तिनि यस्मिन् स्थाने तस्य दूष्यं स्थापित-
४ मासीत्, तत् स्थानम् उपस्थाय पूर्व्वं स्वनिर्म्मितायाः यज्ञवेद्याः सन्निधौ
५ परमेश्वरस्य नाम गृहीत्वा प्रार्थयाञ्चक्रे। अपरम् इब्रामः सङ्गी यो
लोट् तस्यापि अजमेषगोदूष्याणां विद्यमानत्वात् तस्मिन् देशे तयोः
६ सहवासो न समपद्यत। तयोः प्राज्यसम्पत्तेः सम्भवात् सहवस्तुं तौ न
७ शेकतुः। यत इब्रामः पशुपालकानां लोटः पशुपालकैः सार्कं परस्पर-
विरोधो बभूव; तदानीं तस्मिन् देशे किनानीयाः पिरिषीयाश्च मानुषा
८ न्यवसन्। अत इब्राम् लोटम् अवदत्, अहं त्वां विनये, त्वं मम ज्ञातिः
त्वया मया तव पशुपालकै र्मम पशुपालकैश्च सार्द्धं विरोधो न भवतु।
९ तव सम्मुखे किं समस्तदेशो नास्ति? अतस्त्वां विनये, त्वं मत्तः पृथक्
भव त्वं वामं याहि, अहं दक्षिणं यामि; यदा त्वं दक्षिणं याहि, अहं
वामं यामि।

१० तदा लोट् नेत्रे उन्मील्य ददर्श, सोयर्यावत् यर्द्दन नद्याः सकल-
प्रान्तरं परमेश्वरस्य उद्यानसमानं मिसरदेशइव तस्य सर्व्वत्र जलं
११ भवति; यतस्तदानीं सिदोमअमोरौ परमेश्वरेण न नाशितौ। अतो
लोट् यर्द्दनः सकलप्रान्तरं मनोनीतं कृत्वा पूर्व्वदिशं प्रति प्रतस्थे; इत्थं
१२ तौ परस्परं पृथक् बभूवतुः। अपरं इब्राम् किनानदेशे न्युवास; किञ्च
लोट् तत्प्रान्तरस्थितानां सर्व्वेषां नगराणां मध्ये सिदोम नगरस्य समीपे
१३ दूष्यं स्थापयामास। तस्य सिदोमो लोका अतीव दुष्टाः परमेश्वरस्य
गोचरे महापापिष्ठाश्चाभवन्।

१४ इत्थं इब्रामो लोटि पृथक् भूते सति, परमेश्वर इब्रामं बभाषे त्वं नेत्रे

उन्मील्य स्थानादस्मात् उत्तरदक्षिणपूर्व्वपश्चिमान् वीक्षस्व। त्वं यावद् १५ दूरं द्रष्टुं शक्नोषि, तावतीं भूमिं चिरकालार्थं तुभ्यं तव वंशाय च दास्यामि। अपरं पृथिव्या धूलिवत् तव वंशं बर्द्धयिष्यामि; यदि कश्चित् १६ पृथिव्या धूली गणयितुं शक्नोति, तर्हि तेन तव वंशो गणयिष्यते। उत्तिष्ठ, १७ देशस्यास्य दैर्घ्यं विस्तारञ्च भ्रम, तावतीं भूमिं तुभ्यं दास्यामि। तदानीम् १८ इब्राम् दूष्यमुत्थाप्य हिब्रोणः समीपस्थितं मम्रीनामकं प्रान्तरं गत्वा न्युवास, किञ्च तत्र परमेश्वरम् उद्दिश्य यज्ञवेदिं निर्म्ममे।

---

## १४ चतुर्दशोऽध्यायः।

१ चतुर्भि र्नरपतिभिः सार्द्धं पञ्चानां भूपतीनां युद्धं १२ लोटो लोठनं परहस्तगतत्वं इब्रामा पुनर्मोचनं १७ प्रत्यागमनकाले सिदोमो राज्ञो मल्कीषेदक्राजस्य साक्षात्करणं तस्य कथाकथनञ्च।

अनन्तरं शिनियरोऽम्राफल्नामको राजा, इल्लासरोऽरियोकनामको १ राजा, एलमः किदर्लायोमर्नामको राजा, अन्यजातीधितिदियल्नामको २ राजा, चैते सिदोमो विरानाम्ना राज्ञा सार्द्धं अमोराया विर्शानाम्ना राज्ञा सार्द्धं, अद्माया शिनाब्नाम्ना राज्ञा सार्द्धं, सिवोयिमः शिमेबर्नाम्ना राज्ञा सार्द्धं, सोयरोऽर्थतो विलानाम्ना राज्ञा च सार्द्धं युयुधः। तत्र सर्व्वे सिद्दीमः प्रान्तरेऽर्थतो लवणसागरेऽमिलन्। यस्मात् ते द्वाद- ३ शवत्सरान् यावत् तस्य किदर्लायोमरभूपतेर्वशीभूताः सन्तस्त्रयोदशे ४ वत्सरे तस्यावशा अभवन्। एतत्कारणात् चतुर्दशे वत्सरे किदर्लायो- ५ मरराजा निजसहायै राजभिः सहित आगत्य, अस्तिरोत्कर्णयिमदेशीयान् रिफायीयलोकान् हामदेशीयान् सुषीयलोकान् शाविकिरि- ६ याथयिमदेशीयान् एमीयलोकान् एल्पारण्प्रान्तरं यावत् सेयीरपर्व्वतनिवासिनो होरीयलोकांश्च जिगाय। अपरञ्च ते तस्मात् परावृत्य ७ एणमिस्पटोऽर्थतो कादेशो मध्येन गत्वा, अमालेकीयलोकानां कृत्स्नं देशं हत्ससोन्तामर् निवासिन इमोरीयलोकान् पराजिग्युः अतएव सिदो- मराजा, अमोराराजा, अद्माराजा, सिवोयिमराजा, विला अर्थत ८ सोयरराजा, चेमे पञ्च राजानो मिलित्वा एलम् देशस्य किदर्लायोमर- ९ राजेन सार्द्धं, अन्यजातीयानां तिदियल्राजेन सार्द्धं, शिनियरोऽम्राफल्राजेन सार्द्धं, इल्लासरो अरियोक्राजेन सार्द्धं, सिद्दीम्प्रान्तरे युद्धं कर्त्तुमारेभिरे। तदा तस्मिन् सिद्दीम्प्रान्तरे शिलाजतोः खातानि आसन्, १०

ततः सिदोममोराराजानौ पलायमानौ तेषां मध्ये पेततुः शेषाश्च
११ पर्व्वतं प्रत्यपलायन्त। तस्मात् ते सिदोममोरयोः सर्व्वसम्पत्तिं भक्ष्यद्र-
१२ व्याणि च लोठयित्वा प्रतस्थिरे। अपरम् इब्रामो भ्रातृपुत्त्रं सिदोम-
निवासिनं लोटं तदीयां सर्व्वसम्पत्तिञ्च निन्युः।

१३ तदानीम् एकः पलाय्य इब्रीयम् इब्रामं वार्त्ताम् अवदत्, तदा इब्राम्
इष्कोल आनेरश्च भ्राता इमोरीयस्य मम्रीप्रान्तरे न्यवसत्; इब्रामस्ते
१४ च सहाया आसन्। शत्रुभिः स्वीयभ्रातृपुत्त्रो धृत इतिवार्त्तां श्रुत्वैव
इब्राम् स्वगृहजातान् अष्टादशाधिकशतत्रयशिक्षितभृत्यान् सुसज्जान्
१५ कृत्वा शत्रूणां पश्चात् धावित्वा दान्नगरं यावत् गतवान्। अनन्तरं
स्वभृत्यान् द्विधा विभज्य रजन्यां वैरिणः प्रति आचक्रमे; ततो दम्मे-
१६ षको वामस्थितं होबानगरं यावत् तेषां पश्चात् अधावत्। ततः सर्व्व-
सम्पत्तिं स्वभ्रातृपुत्त्रं लोटं तस्य सम्पत्तिञ्च योषितः सर्व्वान् लोकांश्च परा-
वर्त्त्यानिनाय।

१७ इत्थं इब्राम् किदर्लायोमरं तस्य सहायभूपतींश्च जित्वा प्रत्यागत-
वान्; तदा सिदोमो राजा तं साक्षात् कर्त्तुं शावीप्रान्तरम् अर्थतो
१८ राज्ञः प्रान्तरं उपतस्थौ। अपरञ्च सर्व्वोपरिस्थेश्वरस्य यष्टा मल्कीषे-
दक नामा शालमो राजा पूपान् द्राक्षारसञ्च नीत्वा इब्रामं इत्याशिषं
१९ जगाद, गगणपृथिव्योः स्वामी सर्व्वोपरिस्थ ईश्वर इब्रामो मङ्गलं
२० क्रियात्। सर्व्वोपरिस्थ ईश्वरो धन्यो भवतु, स तव वैरिणस्तवैव हस्ते
समर्पितवान्; तदानीम् इब्राम् सर्व्वद्रव्याणां दशमांशं तस्मै ददौ।
२१ अनन्तरं सिदोमो राजा इब्रामम् आचष्ट त्वं सर्व्वां सम्पत्तिं गृहाण;
२२ किन्तु लोकान् मह्यं देहि। तत इब्राम् सिदोमो राजानं प्रत्युवाच, गगण-
मेदिन्योः स्वामिनः सर्व्वोपरिस्थितस्य प्रभोः परमेश्वरस्य नाम्ना शपमानोऽहं
२३ कथयामि, मम युवलोकै र्यद् अभोजि; अपरं मम सहकारिण आनेर
इष्कोल् मम्रिश्च, एतेषां यो भागः प्राप्तव्यस्तं परित्यज्य यद्यदस्ति तत्
२४ तवैव तिष्ठतु। अहम् इब्रामं धनिनं अकार्षम्, एतां कथां यथा न वक्ष्यसि
तदर्थं त्वदीयमेकं सूत्रं उपानद्बन्धनरज्जुं वा नाहं ग्रहीष्यामि

## १५ पञ्चदशोऽध्यायः।

१ इब्रामोऽपत्यं दातुं तदपत्याय किनान्देशं दातुम् ईश्वरस्य प्रतिज्ञानं ईश्वरम् उद्दिश्य इब्रामो बलिदानञ्च।

१ एतद्घटनासु सतीषु परमेश्वर इब्रामं स्वप्नइव दर्शनं दत्त्वा बाच-

मेतां बभाषे, हे इब्राम् मा भैषीः अहं तव फलकरूपो महापारि-
तोषिकरूपश्च। तत इब्राम् प्रत्यूचे, हे प्रभो परमेश्वर त्वं मह्यं किं २
दास्यसि? अहं स्वयम् अनपत्यः किञ्च एतद्दम्मेषकीयइलीयेषरनामको ३
मम गृहस्य धनाधिकारी विद्यते। इब्राम् पुनरवदत् पश्य मह्यम् ४
अपत्यं नादाः सुतरां मम गृहजातः कोपि जनो ममोत्तराधिकारी
भविष्यति। तदानीं परमेश्वर इब्रामं प्रति इति कथां कथयामास स ५
जनस्त्वदीयोत्तराधिकारी न भविष्यति; किन्तु यस्तवौरसपुत्रो जनि-
ष्यते सएव त्वदीयोत्तराधिकारी भविष्यति। अनन्तरं स तं वहिरा- ६
नीय जगाद त्वम् अन्तरीक्षं निरीक्ष्य यदि नक्षत्राणि गणयितुं शक्नोषि
तर्हि गणयन् ब्रूहि। सोऽपरमपि कथयामास, एतादृशस्तव वंशो भवि-
ष्यति; तदानीं तस्मिन् परमेश्वरे विश्वसति सति स तस्य विश्वसनं
पुण्याय गणयाञ्चकार। ततः परमेश्वरस्तस्मै कथयामास; यस्त्वाम् एनं ७
देशम् अधिकारयितुं कस्दीयानाम ऊरनगराद् आनिनाय सएव पर- ८
मेश्वरोहम्। तदा स बभाषे, हे प्रभो परमेश्वर अहमेनं देशमधिकरि- ९
ष्यामीति कथं ज्ञास्यामि? परमेश्वर आचचक्षे त्वं त्रिहायणं गोवत्समेकं
त्रिहायणीं छागीमेकां त्रिहायणं मेषमेकञ्च पुनः कपोतमेकं पारावतमे-
कञ्च मां निकषानय। ततः स तान् पशून् तस्य समीपम् आनीय द्विख- १०
ण्डीकृत्य खण्डैकस्याग्रेऽन्यखण्डं निदधे; किन्तु विहङ्गान् न द्विखण्डीचकार।
अनन्तरं हिंस्रविहगेषु तेषां मृतपशूनाम् उपरि पतत्सु इब्राम् तान् ११
अपसारयाञ्चक्रे। ततो दिनकरस्यास्तकाले इब्राम् अतीव निद्रितः सन् १२
अन्धतमसभयेनाक्रान्तोऽभूत्। तदानीं परमेश्वर इब्रामम् उवाच तव १३
सन्तानाश्चतुःशतानि वर्षाणि परदेशे प्रवत्स्यन्ति दास्यं कर्म्म कुर्व्वाना
क्लेशं भोक्ष्यन्ते च निश्चितमिदं विद्धि; किन्तु यज्जातीय लोकाः तान् १४
दास्यं कर्म्म कारयिष्यन्ति तानहं दण्डयिष्यामि; ततः परं ते प्राज्यं द्रविणं
गृहीत्वा तस्माद् देशात् निर्गमिष्यन्ति। अपरं त्वया क्षेमेण पूर्व्वपुरुषाणां १५
सन्निधिं गमिष्यते अतीव जरता श्मशानं लप्स्यते। अपरञ्च तव वंशीयश्च- १६
तुर्थः पुरुष एनं देशं प्रत्यागमिष्यति; यत इमोरीयलोकानां वृजिनमद्यापि
सम्पूर्णत्वं न व्रजति। अस्तं गते सवितरि तमिस्रे च सति तयोः खण्ड- १७
श्रेण्यो मध्येन चुल्लीधूमो वह्निप्रदीपश्च चेलतुः। अपरं तस्मिन्नेवाहनि १८
परमेश्वर इब्रामा सार्कं नियमं निर्णीय कथयाञ्चकार एतां मिसरीय-
सरितम् आरभ्य फरात्नामिकां वृहतीं धुनीं यावत् केनीयानां किनसी- १९

२० यानां कद्मोनीयानां हित्तीयानां पिरिषीयाणां रिफायीयानां इमो-
२१ रीयाणां किनानीयानां गिर्गासीयानां यिबूषीयानाञ्च निखिलान् देशान्
तव वंशायाहं दास्यामि।

---

## १६ षोडशोऽध्यायः।

१ सार्य्या इब्रामहाजिरयोरुद्वाहः ४ स्वामिन्या दुःखमनुभूय हाजिरायाः पलायनं ईश्वराज्ञया तस्याः प्रत्यागमनञ्च।

१ तस्येब्रामो जाया सारी बन्ध्यासीत् किञ्च मिसरीया हाजिराना-
२ मिका तस्या दास्येकासीत्। ततः सारी इब्रामम् अवदत् परमेश्वरेणाहं बन्ध्या कृतास्मि ततोऽहं त्वां विनये त्वं मदीयामेनां दासीमुपगच्छ, तेनाहं
३ तस्याः पुत्रं प्राप्स्यामि; तदा इब्राम् सारीवाक्यात् तदङ्गीकृतवान्। तदा किनान्देशे इब्रामः प्रवासस्य दशवर्षेषु गतेषु तस्य जाया सारी तां मिसरीयां हाजिरां दासीं नीत्वा स्वस्वामिनम् इब्रामम् उद्वाहयाञ्चक्रे।
४ अनन्तरम् इब्रामि हाजिराम् उपगते सा गर्भिणी बभूव; किञ्च स्वकीयो गर्भोऽभवत् इति विज्ञाय सा स्वस्वामिनीम् अवमन्तुम् आर-
५ भत। ततः सारी इब्रामं बभाषे मां प्रतीत्यन्यायस्य फलं तुभ्यं भवेत्; मया या स्वीया दासी तव क्रोड़े दत्ता साधुना निजगर्भं विदित्वा माम-
६ वमन्यते; परमेश्वरएव त्वां माञ्च विचारयतु। तत इब्राम् सारीं जगाद पश्य सा दासी त्वदीया तवैव हस्तगतास्ते; त्वदिच्छानुसारेण तां प्रति व्यवहर; तदा सारी हाजिरां प्रति काठिन्यं व्यवजहार ततः सा तस्याः
७ समीपात् पलायाञ्चक्रे। ततः परमेश्वरस्य दूतः शूरः पथि मध्येप्रान्तरं कस्यचित् प्रस्रवणस्य समीपे तां निरीक्ष्य प्रोवाच, हे सार्य्या दासि
८ हाजिरे, त्वं कुत आगतासि? कुत्र च गमिष्यसि? ततः सा प्रत्युवाच
९ स्वस्वामिन्याः सार्य्याः समीपात् पलायेऽहम्। तदा परमेश्वरस्य दूतस्तां
१० जगाद त्वं स्वस्वामिन्याः समीपं परावृत्य तस्या वशीभव। परमेश्वरीय-दूतः पुनः प्रोवाच तव वंशो बाहुल्यात् अगण्यो यथा भवेत् तथाहं तं
११ वर्द्धयिष्यामि। परमेश्वरस्य दूतः पुनस्तां बभाषे पश्य तवोदराद् यः पुत्रो जनिष्यते तस्य नाम इस्मायेल् (अर्थत ईश्वरः शृणोतीति) करि-
१२ ष्यसि यतः परमेश्वरस्तव दुःखस्य कथां श्रुतवान्। सोऽबाध्यः पुमान् भविष्यति तस्य हस्तः सर्व्वेषां विरुद्धं स्थास्यति सर्व्वेषां हस्ताश्च तस्य
१३ विरुद्धं स्थास्यन्ति; स च निजभ्रातॄणां पूर्व्वदिशि निवत्स्यति। अपरञ्च

हाजिरा स्वया साकं यः परमेश्वरः संललाप तस्य नाम मद्दर्शकेश्वर इति १४ चक्रे। यतः सा कथयामास किमहं मद्दर्शकं नादर्शम्? किञ्च तस्य प्रहे नाम बेर्लहयरोयी (अर्थतः स्वयंजीवी मद्दर्शकस्य प्रहिरिति) चक्रे। स प्रहिः कादेशबेरदो मध्ये विद्यते। अनन्तरं हाजिरया पुत्रे प्रसूते इब्राम् १५ हाजिरातो जातस्य तस्य पुत्रस्य नामधेयम् इस्मायेल् इति चक्रे। इब्रामः १६ षडशीतिवत्सरवयसि हाजिरा तस्य पुत्रं इस्मायेलं प्रसुषुवे।

---

# १७ सप्तदशोऽध्यायः।

१ इब्राहिमा सहेश्वरस्य नियमस्थिरीकरणं तन्नियमस्य लक्ष्म त्वक्छेदः १५ साय्या नामविनिमयः पुत्रप्रसवकथनं २३ इब्राहीमा इस्मायेल प्रभृतीनां त्वक्छेदनञ्च।

इब्राम ऊनशतवत्सरवयसि परमेश्वरस्तं दर्शनं दत्वा जगाद, १ सर्व्वशक्तिमान् ईश्वरोऽहं मम समक्षं धर्म्म माचरन् सिद्धो भव। अहं २ त्वया सह स्वनियमं निर्णीय त्वां भृशं वर्द्धयिष्यामि। तदानीम् इब्रामि ३ दण्डवत् प्रणमति ईश्वरस्तेन सार्द्धम् आलप्य कथितवान् पश्याहमेव ४ त्वया सहितः स्वीयनियमं संप्रधारयामि त्वं बहुजातीनाम् आदिपुरुषो भविष्यसि। किञ्च तव नामधेयम् इब्राम् (अर्थात् महापितेति) पुन ५ र्न स्थास्यति किन्तु इब्राहीम् (अर्थात् बहुलोकानां पितेति) नाम भविष्यति। यतोऽहं त्वां वहुजातीनामादिपुरुषं कृत्वा तव वंशं भृशं ६ वर्द्धयिष्यामि किञ्च त्वत्तो बहुजाती र्जनयिष्यामि राजानस्त्वत्त उत्प- त्स्यन्ते। अहं त्वदर्थं तव भाविवंशार्थञ्च यं नियमं निर्णीतवान् स चिर- ७ स्थायी भविष्यति; ततोऽहं तव त्वदीयभाविवंशस्य ईश्वरो भविष्यामि। अपरं त्वमिदानीं यस्मिन् किनान्देशे प्रवससि निखिलमिमं देशं तुभ्यं ८ तव भाविवंशाय च चिरकालमधिकर्त्तुं दास्यामि; तेषामहम् ईश्वरो भविष्यामि। पुनरीश्वर इब्राहीमं जगाद त्वया त्वदीयभाविवंशेन च ९ पुरुषपरम्परां यावत् मम नियमः पालयिष्यते। त्वया सार्द्धं त्वदीयभा- १० विवंशेन च सार्द्धं मम यो नियमः पालयितव्यः स एषः; युष्माकं सकल- पुत्रापत्यानां त्वक्छेदनं भविष्यति युष्माभिः स्वस्वलिङ्गाग्रचर्म्मणि छिन्ने ११ तद् युष्माभिः साकं मदीयनियमस्य चिह्नं भविष्यति। युष्माकं पुरुषपर- १२ म्पराणां स्वस्वपुत्रापत्यस्याष्टदिनवयसि त्वक्छेदनं भविष्यति किञ्च तवा- नौरसो विदेशीयो यः पुत्रस्तद्गृहजातो मूल्येन क्रीतो वा भवति तस्यापि त्वक्छेदनं भविष्यति। तव गृहजातस्य मूल्येन क्रीतस्य वा १३

बालकस्य त्वक्छेदनम् अवश्यं कर्त्तव्यं तेन चिरकालार्थं युष्माकं मांसे
१४ मदीयनियमचिह्नं स्थास्यति। किन्तु यस्य पुमपत्यस्य लिङ्गाग्रचर्म्मच्छेदनं
न भविष्यति स मम नियमभञ्जनात् स्वलोकानां मध्यत उच्छेत्स्यते।
१५ तदनन्तरम् ईश्वर इब्राहीमं बभाषे त्वं तव सारीं (अर्थात् कुलीनां)
जायाम् इतःपरं सारीत्युक्त्वा माह्वय तस्या नाम सारा (राज्ञीति) जातं।
१६ अहं तस्यै आशिषं वदामि तस्या गर्भजं पुत्त्रमेकं तुभ्यं ददामि तस्यै वर-
मिमञ्च ददाम्यहं सा नानाजातीनाम् आदिमाता भविष्यति किञ्च तस्या
१७ वंशे नानाजातीया नृपतय उत्पत्स्यन्ते। तदानीम् इब्राहीम् दण्डवत्
प्रणतिं कृत्वा हसन् मनसि कथितवान् पुरुषस्य शतवत्सरवयसि किं पुत्त्रो
१८ जनिष्यते? नवतिवत्सरवयसि सारा किं पुत्त्रं प्रसविष्यति? तत इब्रा-
१९ हीम् ईश्वरं जगाद इस्मायेल तव गोचरे जीवन् तिष्ठतु। तदानीम् ईश्वरः
कथयामास तव जाया सारा त्वदर्थं निश्चितं पुत्त्रं प्रसविष्यति त्वञ्च
तस्य नाम इस्हाक् (हास्य) इति करिष्यसे अहन्तु तेन सार्द्धं तदीयभा-
२० विवंशेन च सार्द्धं चिरस्थायिनं नियमं निर्णेष्यामि। तथा इस्मायेलीयां
तव प्रार्थनामपि श्रुतवानहं; पश्चाहम् आशिषा तं बहुप्रजं कृत्वा
तदीयवंशम् भृशं वर्द्धयिष्यामि; तस्माद् द्वादश राजान उत्पत्स्यन्ते तमहं
२१ महाजातिं करिष्यामि। किन्तु भविष्यद्वत्सरस्यास्मिन् काले साराया
२२ गर्भे तव य इस्हाक् पुत्त्रो जनिष्यते तेन सार्द्धं स्वीयनियमं निर्णेष्याम्य-
हम्। इत्थं संलप्येश्वर इब्राहीमः समीपाद् ऊर्द्धं जगाम।
२३ अनन्तरम् इब्राहीम् इस्मायेलं पुत्त्रं स्वीयगृहजातान् मूल्येन क्रीतान्
स्वगृहस्थितान् सकलान् पुरुषांश्च गृहीत्वा ईश्वरस्याज्ञानुसारेण तस्मि-
२४ न्नेव दिने सर्व्वेषां लिङ्गाग्रचर्म्म चिच्छेद। इब्राहीम ऊनशतवत्सरवयसि
२५ सति तदीयलिङ्गाग्रस्य त्वक्छेदनं बभूव। किञ्च तस्य पुत्त्रस्येस्मायेलस्त्र-
२६ योदशवत्सरवयसि सति लिङ्गाग्रस्य त्वक्छेदनं बभूव। इत्थम् इब्राहीम-
२७ स्तस्य पुत्त्रस्येस्मायेल एकस्मिन्नेव दिने त्वक्छेदनं बभूव। अपरं तेन
सार्द्धं तस्य गृहजातानां मूल्येन क्रीतानाम् अन्यजातीयानां तस्य गृह-
स्थितानां सर्व्वेषां पुरुषाणामेव लिङ्गाग्रस्य त्वक्छेदनं बभूव।

---

## १८ अष्टादशोऽध्यायः।

१ इब्राहीमः स्वर्गीयाणां त्रयाणां दूतानामातिथ्यविधानं तैः सार्द्धं संलपनं १६ तान

मार्गं दर्शयितुं सिदोमदिशं प्रतीब्राहीमो गमनं २२ सिदोमोरचार्थं इब्राहीमो निवेदनञ्च।

अनन्तरं मध्याह्नसमये मम्रीनामकोद्याने इब्राहीम् स्वीयदूष्यगृहद्वारि १ समुपाविशत् एतस्मिन्नन्तरे परमेश्वरस्तस्मै दर्शनं ददौ। तदा स स्वलो- २ चने उन्मील्य सम्मुखे समुपस्थितान् त्रीन् पुरुषान् ददर्श; किञ्च दृष्ट्वैव साक्षात् कर्त्तुं दूष्यद्वारात् वेगेन गत्वा भूमिष्ठः सन् प्रणम्य कथयाञ्चकार हे प्रभो निवेदयामि यदि मां प्रत्यनुग्रहोऽस्ति तर्हि भृत्यस्यास्य स्थानात् ३ न यास्यसि। विनयेहं अल्पतोयम् आनयतु तेन यूयं पादान् प्रक्षाल्य ४ पादपस्यास्य मूले विश्राम्यत। अपरं किञ्चित् खाद्यं मयानीते तेन स्वान्तः- ५ करणम् आप्यायध्वम् पश्चाद् अयिष्यध्वे; तद्धेतो यूयं स्वदासस्य समीपम् आगताः। तदानीं ते प्रत्यूचुः त्वया यदुक्तं तदेव क्रियताम्। तत इब्रा- ६ हीम् क्षिप्रं दूष्यगृहे सारायाः समीपं गत्वा बभाषे गोधूमचूर्णानां श्रेट- कत्रयं तोयेनाभिषिच्य चुल्यां प्रतप्य तूर्णं पूपान् कुरु। तत इब्राहीम् तूर्णं ७ गोष्ठं गत्वा उत्तमं कोमलं वत्समेकं गृहीत्वा भृत्याय ददौ; स तं झटिति पपाच। तदानीं दधि दुग्धं सिद्धवत्सपललञ्च समानीय तेषां साक्षात् ८ स्थापयामास; किञ्च स पादपमूले तेषां भुञ्जतां सन्निधौ तस्थौ। अनन्तरं ९ ते तं पप्रच्छुः तव जाया सारा कुत्र? स कथयामास पश्यत सा दूष्ये विद्यते। तदा तेषामेकः पुरुष उवाच अहम् आगामि वत्सरस्यास्मिन् १० समयेऽवश्यं पुनरागमिष्यामि पश्य तत्पूर्व्वं तव जायायाः सारायाः पुत्र- एको जनिष्यते। एतां वाचं सारा दूष्यद्वारे तस्य पश्चात् तिष्ठन्ती शुश्राव। तदानीम् इब्राहीम् सारा चातीव वृद्धावास्तां सारायाः रजोपि न्यव- ११ र्त्तत। ततः सारा हसन्ती मनसि बभाषे, मम मत्प्रभुश्च वृद्धावस्थायां १२ किमेतादृश आनन्दो भविष्यति? तदा परमेश्वर इब्राहीमम् आचख्यौ १३ स्वीयवार्द्धक्यकाले किं निश्चितं पुत्त्रो जनिष्यते इति चिन्तयित्वा सारया कुतो हसितं? परमेश्वरस्य किं कर्म्मासाध्यम्? आगामिनो वत्सरस्या- १४ स्मिन् समयेहं परावृत्यागमिष्यामि तदा सारायाः पुत्त्रो भविष्यति। ततः सारा वितथं बभाषे नाहमहासिषम् यतः सा बिभयाञ्चकार। १५ ततस्तेनोचे सत्यं त्वमहासीः।

ततः परं ते पुमांस उत्थाय तस्मात् स्थानात् सिदोमो दिशं प्रतस्थिरे। १६ तदानीम् इब्राहीमि पन्थानं दर्शयितुं तैः सार्द्धं व्रजति परमेश्वर १७ उवाच, यत् कर्त्तुमहम् उद्यतोस्मि तत् किम् इब्राहीमो गोपायिष्यामि?

१८ इब्राहीमो महती बलवती च जातिरेका जनिष्यते धरित्र्याः सर्व्वा जाति-
१९ स्तस्मात् मङ्गलं प्राप्स्यति। अहं तं जानामि स निजानि भावीन्यपत्यानि परिवारांश्च परमेश्वरीयवर्त्मनि चलितुं न्यायं धर्म्मञ्च कर्त्तुम् आदेक्ष्यति;
२० तेन इब्राहीमं प्रति परमेश्वरोक्ता प्रतिज्ञा सेत्स्यति। परमेश्वरोऽपरम-प्यवदत् सिदोमीय अमोरीयश्च महाशब्द उत्तिष्ठति तेषां पापम्
२१ अतीव गुरुतरं तत्कारणादहं अधोऽवरुह्य गत्वा मत्सन्निधिमागतशब्दा-नुसारेण ते लोकाः सर्व्वथा कृतवन्तो नवेति वेदिष्यामि।

२२ पश्चात् तौ पुमांसौ तस्मात् स्थानात् परावृत्य सिदोमो दिशं जग्मतुः; किन्तु इब्राहीम् परमेश्वरस्य समक्षं तदानीं अप्युत्थित एव तस्थौ।
२३ तत इब्राहीम् समीपं गत्वा जगाद त्वं पापिभिः सार्द्धं धार्म्मिकानपि
२४ नाशयिष्यसि किं? नगरस्य मध्ये पञ्चाशत् जना धार्म्मिका भवितुं शक्ष्यन्ति तन्मध्यस्थितानां पञ्चाशत्धार्म्मिकानां कृते तत् स्थानं न रक्षन् किं विना-
२५ शयिष्यसि? पातकिभिः समं धार्म्मिकानां विनाशनं कर्म्म त्वत्तो दूरे तिष्ठतु; धार्म्मिकानां पापिभिः समानकरणञ्च त्वत्तो दूरे तिष्ठतु। सर्व्व-
२६ मेदिन्या विचारयिता किं न्यायं न करिष्यति? ततः परमेश्वरः कथया-मास यद्यहं सिदोमनगरे पञ्चाशत् जनान् धार्म्मिकान् पश्यामि तर्हि
२७ तेषां निमित्तात् तत् सर्व्वं स्थानं रक्षिष्यामि। तत इब्राहीम् कथयामास
२८ पश्य मयि रुदि भस्ममात्रेपि सति प्रभुं प्रति कथां कथयितुं उद्यतोस्मि। यदि पञ्चाशत् धार्म्मिकाः पञ्चोना भवन्ति तर्हि पञ्चन्यूनत्वात् किं सर्व्वं नगरं विनाशयिष्यसि? तेन कथितं, पञ्चचत्वारिंशत्सु प्राप्तेष्वपि तदहं
२९ न विनाशयिष्यामि। स तं पुनरवदत्, तत्र यदि चत्वारिंशत् जना
३० लभ्यन्ते? तेनोक्तं, चत्वारिंशत्सु प्राप्तेष्वपि तन्न करिष्यामि। पुनरपि स कथयामास, चेत् प्रभु र्न विरजिष्यति, तदा पुनः कथयामि; यदि तत्र त्रिंशत् जना प्राप्यन्ते? स उक्तवान,त्रिंशज्जनेषु प्राप्तेष्वपि तन्न करिष्यामि।
स उवाच, पश्य, प्रभुं प्रति मया क्षोभरहितेन पुनरपि कथ्यते यदि
३१ तत्र विंशति र्जना लभ्यन्ते? स उवाच, विंशतौ जनेषु प्राप्तेष्वपि तन्न
३२ नाशयिष्यामि। स पुनरुवाच एतेन प्रभु र्न क्रोत्स्यति, केवलमहं वारमेकं कथयामि यदि तत्र दशजनाः प्राप्यन्ते? स उवाच, दशसु जनेषु प्राप्तेष्वपि
३३ तन्न नाशयिष्यामि। तदानीं परमेश्वर इब्राहीमा सार्द्धं इत्थं संलापं समाप्य प्रतस्थे, इब्राहीम् च स्वस्थानं प्रतस्थे।

---

# १९ ऊनविंशोऽध्यायः।

१ दूतद्वयस्य लोटः समीपागमनं, तौ प्रति सिदोमीयानां दुराचरणं लोटतत्कन्यानां रक्षणं, सिदोमीयलोकानां लोटस्त्रियाश्च विनाशनं २७ सिदोमो विनाशाद् दूब्राहीमादे रक्षणं ३० लोटस्तत्कन्ययोश्च दुराचारात् मोयाबीयाम्मोनीयलोकानाञ्चोत्पत्तिश्च।

अनन्तरं सन्ध्याकाले स्वर्गीयदूतौ सिदोम्नगरमुपागतौ, तदा नगरद्वार्य्युपविष्टो लोट् तौ विलोक्य समुत्थाय तौ साक्षात् चकार भूमिलग्नशिराः प्रणम्य कथयाञ्चकार च, हे मदीयप्रभू विनयेहं, अद्य यामिन्याम् एतस्य दासस्य गेहमागत्य वसतां पादान् प्रक्षालयताञ्च; ततः प्रत्यूष उत्थाय गन्तव्यं स्थानं गमिष्यतः। तदा तौ कथयामासतुः नहि, आवां कृत्स्नां यामिनीं वर्त्मन्येव स्थास्यावः। ततो लोटातीव यतिते तौ परावर्त्त्य तेन समं तदीयनिवेशनं प्रविविशतुः; तदानीं स तयोः कृते किरवहीनपूपादीनि खाद्यानि समासादयाञ्चक्रे, तौ च बुभुजाते। किन्तु तयोः शयनात् पूर्व्वं सिदोमनगरीया बालादिवृद्धपर्य्यन्ताः सकललोकाः चतुर्दिशः समागत्य तस्य गेहमावृतवन्तः। किञ्च लोटमाहूय जगदुः, अद्य यामिन्यां ये मनुजास्तव गेहम् आगमन्, ते कुत्र? तान् वहिरस्माकं समीपम् आनय, वयं तानुपगमिष्यामः। तदा लोट् वहिरागत्य द्वारं रुद्ध्वा कथयामास, हे भ्रातरो विनयेहम् एतादृशं मा कुरुत। पश्यत मम द्वे अनूढकन्ये आसाते, ते युष्माकं समीपम् आनयामि यूयं ताभ्यां समं यथेष्टाचारम् आचरत, किन्त्वेतौ मनुजौ प्रति किमपि मा कार्ष्ट, यत एतौ मम गेहम् अशिश्रियतां। तदानीं ते कथयामासुः अपसर; पुनरूचुः एष एको विदेशी मध्येऽस्माकं प्रवस्तुम् आगत्य अस्माकं विचारयिता भवितुमिच्छति; इदानीं तेभ्योप्यतीव दुराचारं त्वां प्रति करिष्यामः; ततस्ते लोटं प्रति समाक्राम्यन्तः कवाटं भंक्तुं जग्मुः। तदा तौ द्वौ लोकौ हस्तैः स्वसमीपं गृहान्तरं लोटमाकृष्यानीय द्वारं रुरुधतुः किन्तु द्वारसमीपस्थान् क्षुद्रान् महतो वा लोकान् अन्धान् चक्रतुः; ततस्ते द्वारम् अन्विच्छन्तः परिशश्रमुः। अनन्तरं तौ मनुजौ लोटं कथयामासतुः अस्मिन् नगरे त्वदीया अपरे के के सन्ति? पुत्राः पुत्र्यो जामात्रादयश्च तदीया ये ये लोका एतस्मिन् नगरे सन्ति तान् सकलान् एतत्स्थानात् नय। यत आवाम् इदं स्थानमुत्क्षेत्स्यावः परमेश्वरस्य साक्षात् एतस्य नगरस्य महाध्वनिरुदतिष्ठत्। अतः परमेश्वर एतन् नगरम् उच्छेत्तुं

आवां प्रहितवान् तदा लोट् वहि र्गत्वा तस्य कन्याग्रहणोद्यतान् जामातॄन् उवाच, उत्तिष्ठत, अस्मात् स्थानात् वहिर्भवत, परमेश्वर एतन्नगरं
१५ उच्छेत्स्यति; किन्तु तस्य जामातरस्तम् उपहासकमिव वुबुधिरे। अपरं प्रभाते सति दूतौ शीघ्रयन्तौ लोटं जगदतुः, उत्तिष्ठ. या स्वीया जाया, ये द्वे कन्ये चात्रासते, तास्त्वं नय; नो चेद् नगरीयदण्डेन विनंक्ष्यसि।
१६ तथापि तस्मिन् विलम्बमालम्बमाने सति परमेश्वरस्यानुग्रहात् तौ तस्य तद् जायाया द्वयोः कन्ययोश्च हस्तान् धृत्वा नगरस्य वहि र्नीत्वा तान्
१७ स्थापयामासतुः। इत्थं तान् वहिः कृत्वा तयोरेको लोटं जगाद, प्राणरक्षार्थं पलायस्व, पश्चात् न वीक्षस्व, किञ्च एषां प्रान्तराणाम् मध्येपि मा
१८ तिष्ठ; पर्व्वतं पलायस्व, नो चेद् विनंक्ष्यसि। तदा लोट् प्रत्युवाच, हे मम
१९ प्रभो, इत्थं नहि; इदानीम् त्वं मत्प्राणान् रक्षितुम् एतस्मिन् भृत्येऽनुग्रहं महतीं दयाञ्च कृतवान्; अहं पर्व्वतं प्रति पलायितुं न शक्नोमि; पथि
२० विपदि सत्यां म्रियेहं। पश्य, इदानीं पलायितुम् अदो-यन्नगरं निकटे वर्त्तते, तत् क्षुद्रमस्ति, तत्र पलायितुम् आज्ञापयतु, तत् किं क्षुद्रस्थानं
२१ नहि? तेन मम प्राणा जीविष्यन्ति। ततः सोवदत्, भद्रं, त्वामनुगृह्य तदपि
२२ स्वीकरोमि, त्वया यन्नगरनिमित्तं प्रार्थ्यते तन्न नाशयिष्यामि। किन्तु क्षिप्रं तत् स्थानं प्रति पलायस्व, यतस्त्वयि तत्र नोपस्थिते नाहं किमपि कर्त्तुं
२३ शक्ष्यामि। तस्मात् तस्य स्थानस्य नाम सोयर् (क्षुद्रं) इत्यभवत्। ततो
२४ लोटि सोयर्नगरं प्रविशति सति पृथिव्यां भास्कर उदियाय। तदानीं परमेश्वरस्य समीपात् अर्थत आकाशात् सिदोमघमोरयोरुपरि परमे-
२५ श्वरेण सगन्धकाग्नौ वृष्टे ते नगरे सर्व्वप्रान्तरं तन्नगरनिवासिनो नरा
२६ उद्भिदश्च सर्व्वे विनाशिताः। तदानीं लोटो जाया पश्चाद्दिशि दर्शनात् लवणस्तम्भो वभूव।
२७ अपरम् इब्राहीम् प्रातरेव समुत्थाय प्राक् यत्र परमेश्वरस्य साक्षात्
२८ तस्थौ, तत्रोपस्थाय सिदोमघमोरौ तत्सर्व्वप्रान्तरभूमिञ्च प्रति वीक्षाञ्चक्रे,
२९ तदा तस्माद्देशात् वह्निकुण्डस्य धूममिव धूमं उत्यातुं ददर्श। किन्त्वीश्वरः तत्प्रान्तरस्थितानां सर्व्वनगराणां विनाशकाले इब्राहीमं सस्मार, तद्धेतो र्लोटो वासस्थाननगराणां विनाशकवह्नेर्मध्यात् लोटं निर्गमयामास।
३० ततः परं लोट् सोयरि वस्तुं शङ्कमानस्तस्मान्निर्गत्य स्वीयदुहितृभ्यां
३१ सार्द्धं गिरौ न्युवास; ततः स तस्य द्वे कन्ये च गुहायां ऊषुः। अनन्तरं तस्य ज्येष्ठा कन्या कनिष्ठां जगाद, आवयोः पिता वृद्धः, किञ्च संसा-

रिकव्यवहारानुसारेण आवामुपगन्तुम् अस्मिन् देशे कोपि पुरुषो नास्ति। आगच्छावां पितरं गोस्तनीरसं पाययावः पितुर्वंशरक्षार्थं तेन सार्द्धं २२ शयावहै च। अपरं तस्यां रजन्यां ते स्वपितरं द्राक्षारसं पाययामासतुः २३ तस्य ज्येष्ठा कन्या गत्वा पित्रा साकं सुष्वाप च, किन्तु सा यत् सुष्वाप उत्थाय जगाम च, तत् लोट् न बुबुधे। परेऽहनि सा ज्येष्ठा कनिष्ठा- २४ माह, पश्याहं गतरजन्यां पित्रा सार्द्धम् अस्वपं; आगच्छाद्य यामिन्यामपि पितरं द्राक्षारसं पाययावः; ततस्त्वं पितुर्वंशरक्षार्थं गत्वा तेन सार्द्धं शेष्व। तदा तस्यां रजन्यामपि पितरं गोस्तनीरसं पाययामासतुः, २५ तस्य कनिष्ठा कन्या तेन सार्द्धं सुष्वाप च; किन्तु तया यत् शयितं उत्थाय गतञ्च तत् लोट् न विदामास। इत्थं लोटो द्वेएव कन्ये स्वपितृतो २६ गर्भिण्यौ बभूवतुः। अनन्तरं ज्येष्ठा कन्या पुत्रं प्रसूय तस्य नाम मोयाब् २७ चक्रे; स इदानीन्तनानां मोयावीयनराणाम् आदिपिता। कनिष्ठापि २८ कन्या पुत्रं प्रसूय तस्य नाम विनम्मि चक्रे, स इदानीन्तनानाम् अम्मोनीयनराणाम् आदिपिता।

---

## २० विंशतितमोऽध्यायः।

१ इब्राहीमः स्वभार्य्याया भगिनीकथनात् तद्भार्य्याया अवीमेलकागृहीतात्वं, स्वप्ने ईश्वरभर्त्सनात् इब्राहीमो जायाया दानञ्च।

अनन्तरम् इब्राहीम् तस्माद् दक्षिणदेशं प्रति गत्वा कादेशशूरो १ र्मध्यस्थितगिररप्रदेशं प्रविश्य न्यवसत्। किन्तु इब्राहीम् स्वजायां सारां २ प्रति कथयामास, सा मम भगिनी, इति कारणात् गिररो राजा अवीमेलक् नरान् प्रहित्य सारां जग्राह। ततो यामिन्याम् ईश्वरः स्वप्ने निक- ३ षावीमेलकं आगत्य जगाद, पश्येयं त्वया गृहीता योषित् तव मृत्युहेतुः, यतः सा स्वामिनोढा। किन्त्ववीमेलक् तामनुपगत्य बभाषे, हे प्रभो निर्दो- ४ षामपि जातिमेकां किं विनाशयिष्यसि? एषा मम भगिनीति कथां किं स पुमान् मह्यं नाकथयत्? किञ्च ममैष भ्रातेति कथां किमेषा नाकथयत्? ५ अतो मनसः सारल्येन हस्तयो र्निर्दोषत्वेन च कार्य्यमिदम् अकरवं। तदानीम् ईश्वरः स्वप्ने तमाचख्यौ, त्वया मनसः सरलत्वेन कार्य्यमेतद् ६ अकारीति विज्ञाय तां स्प्रष्टुं त्वां निवार्य्य मद्विरुद्धं कलुषकरणात् त्वां न्यवर्त्तयम्। अत इदानीं तस्य मनुजस्य जायां परावृत्य देहि, यतः स ७ भविष्यद्वक्ता; त्वन्निमित्तं प्रार्थयिष्यते, तेन त्वं जीविष्यसि; यदि न

८ ददासि तां, तर्हि त्वं सपरिवारोऽवश्यं मरिष्यसीति जानीहि। अनन्तरम् अवीमेलक् प्रत्यूष उत्थाय भृत्यानाहूय तान् सकलवृत्तान्तान् तेषां
९ कर्णगोचरे बभाषे; तदा तेऽतीव विभयाञ्चक्रुः। ततः परम् अवीमेलक् इब्राहीमम् आहूय जगाद, त्वयास्मान् प्रति किमिदं व्यवहृतं? मया को दोषः कृतः, येन त्वं मां प्रति मम प्रजाः प्रति च महापराधं घटयितुम्
१० ऐच्छः? त्वं मां प्रत्यकर्त्तव्यं कर्म्माकरोः। अवीमेलक् इब्राहीमम् अपर-
११ मप्यवदत्, त्वं किं विलोक्य कर्म्मैतत् कृतवान्; तदानीम् इब्राहीम् कथयामास, देशेऽस्मिन् ईश्वरात् किमपि भयं न विद्यते, इमे मम पत्नीलो-
१२ भात् मां विनाशयिष्यन्तीति मया शंकितं; किञ्च सा मम भगिन्यपि भवति, यतः सा मम पितुः कन्या, नतु मातुः कन्या, किञ्च मम भार्य्याभवत्।
१३ यदेश्वरो मां पैतृकात् गेहाद् अभ्रमयत, तदानीम् अहं तां भाषितवान् त्वं मां प्रतीममनुग्रहं कुरु, आवां यद्यत् स्थानं यास्यावः तत्र तत्र
१४ ममायं भ्रातेति मां परिचाययिष्यसि। तदानीम् अवीमेलक् मेषगोदासदासीरानाय्य इब्राहीमे ददौ, तदीयजायां साराञ्च तस्मिन् समर्प-
१५ यामास। अनन्तरम् अबीमेलक् जगाद, पश्यैते मम देशास्तव गोचरा
१६ विद्यन्ते; तव यत्रेच्छा तत्र निवस। साराञ्च बभाषे, पश्य, त्वयान्यैः सर्व्वैश्च यद् घटितं, तत् कारणात् तव भ्रात्रे सहस्रं रूप्यमुद्राः प्राय-
१७ श्चित्तदानं मयादीयन्त; इत्थम् अभर्त्स्यत सा। ततः परम् इब्राहीमा ईश्वरे प्रार्थिते ईश्वरेणाबीमेलक् तस्य जाया तस्य दास्यश्च स्वस्था अक्रि-
१८ यन्त, ततस्ता प्रासूयन्त। यतः परमेश्वर इब्राहीमो जायायाः सारायाः हेतोः अवीमेलको गेहस्थितानां गर्भान् रोधयामास।

---

## २१ एकविंशतितमोऽध्यायः।

१ इस्हाको जननं त्वन्यत्यजनं ९ हाजिरायां दूरीकृतायां सत्यां दूतेन तस्याः शमनं २२ इब्राहीमा सार्द्धम् अवीमेलको नियमनिर्णयनं ३३ बेर्शेबायां इब्राहीमा प्रार्थनञ्च।

१ अपरं परमेश्वरः स्ववाक्यानुसारतः सारां प्रति मनो निधाय स्वीयां
२ प्रतिज्ञां फलयामास। ततः सारा इब्राहीमो वार्द्धक्यएव गर्ब्भिणी भूत्वा
३ ईश्वरेण निरूपितकाले पुत्त्रं प्रसुषुवे। तदानीम् इब्राहीम् सारायाः गर्भ-
४ जातस्य तस्य पुत्त्रस्य नामधेयम् इस्हाक् (हास्य) इति चक्रे। तत ईश्वरा-
५ देशानुसारात् तत्पुत्त्रस्येस्हाकोऽष्टदिनवयसि त्वचं चिच्छेद। इब्राहीमः-
६ शतवत्सरवयसि तस्य पुत्त्र इस्हाक् जज्ञे। अपरञ्च सारा कथयामास, माम्

ईश्वरोऽहासयत्, इति श्रुत्वा सर्व्वे माम् उद्दिश्य हसिष्यन्ति। सा पुनः ७
कथयामास, सारा पुत्रान् स्तन्यं पाययिष्यतीति वाचम् इब्राहीमं को
वक्तुम् अशकत्? यतोऽहं इदानीं तस्य वार्द्धक्ये पुत्रं प्रासूये। अनन्तरं बाल ८
एधित्वा स्तन्यं तत्याज ; यद्दिने इस्हाक् स्तन्यपानं तत्याज, तद्दिने
इब्राहीम् महाभोज्यम् आसादयामास।

अनन्तरं मिसरीय हाजिराया गर्भजात इब्राहीमः पुत्रः परिहस- ९
ति, तद् दृष्ट्वा सारा इब्राहीमं बभाषे, त्वम् इमां दासीं अस्याः पुत्रञ्च १०
अपसारय ; एष दासीपुत्रो मत्पुत्रेणेसहाका समं नोत्तराधिकारी भवि-
ष्यति। किन्तु वाचमिमां निशम्य इब्राहीम् स्वपुत्रनिमित्तम् अतीवदुःखी ११
बभूव। तदानीम् ईश्वर इब्राहीमम् उवाच, स्वदास्याश्च निमित्तं त्वं मा
दुःखी भव ; सारा तुभ्यं यत् कथयति, तस्यास्तद्वाक्ये मनो निधेहि ; यत १२
इसहाकि तव वंशो विख्यास्यति। एष दासीपुत्रस्तव वंश, एतत्कारणात् १३
तस्मादपि जातिमेकाम् उत्पादयिष्यामि। अत इब्राहीम् प्रत्यूष उत्थाय १४
पूपान् तोयपूर्णां कुतूञ्च गृहीत्वा हाजिरायाः स्कन्धे निदधे, बालकञ्च
दत्त्वा तां विससर्ज। ततः सा प्रस्थाय बेर्शेबानामके प्रान्तरे बभ्राम।
ततः परं कुत्वास्तोये निःशेषे सति हाजिरा स्तम्वतले बालं निधाय १५
तस्य सम्मुखात् शरैकक्षेपाद् दूरं गत्वा समुपविवेश, किन्तु यथाहं १६
बालकस्य मृतिं न पश्येयमिति कथयित्वा बालकस्य सम्मुखात् दूरं
उपविश्य प्रोच्चैः चक्रन्द। तदानीम् ईश्वरो बालकस्य रवं शुश्राव, तदा १७
ईश्वरीयदूतो नभस आहूय हाजिरां जगाद, हे हाजिरे, तव किमभूत्?
मा भैषीः, तत्र स्थाने स्थितस्य बालकस्य क्रन्दनम् ईश्वर आकर्णयत्, १८
त्वमुत्थाय बालकम् उत्थाप्य कराभ्यां धारय ; तस्मादहं महाजातिमेकाम्
उत्पादयिष्यामि। तदानीम् ईश्वरेण तस्या लोचनयोः प्रसन्नीकृतयोः १९
सा सतोयप्रहिं ददर्श ; तदन्तिकं गत्वा च तोयेन कुतूं पूरयित्वानीय
बालकं पाययामास। तत ईश्वरो बालकस्य सहायो बभूव, ततः स २०
क्रमश एधमानः प्रान्तरे वासात् धनुर्द्धरो बभूव। किञ्च पारन्नाम्नि २१
प्रान्तरे वसतिं चक्रे। अनन्तरं तस्य माता मिसरदेशीयां कन्यां तमु- २२
द्वाहयामास।

तस्मिन् काले अवीमेलक् फीखोल् नामा तस्य सेनापतिश्च इब्राहीमं २३
व्याजहार, ईश्वरः सकलकार्य्ये तव सहाय आस्ते। अतस्त्वं मां प्रति २४
मम पुत्रपौत्रांश्च प्रति विश्वास्यघातित्वं न करिष्यसि ; किञ्च त्वां प्रति

यथानुग्रहो मया कृतस्तदनुसारेण मां प्रति तव प्रवासस्थानमेतं देशञ्च प्रति तथैवानुग्रहं करिष्यसीति वचनं मम साक्षात् ईश्वरस्य शपथं
२५ कृत्वा ब्रूहि। तत इब्राहीम् आचचक्षे, तमेव शपथं करिष्यामि। किन्त्व-बीमेलको भृत्या इब्राहीमः सतोयं प्रहिं बलात् अध्यकुर्व्वन्, तस्मात्
२६ इब्राहीम् अबीमेलकं भर्त्सयाञ्चक्रे। ततोऽबीमेलक् उवाच, कम्मतत् केन कृतं तदहं न वेद्मि, त्वयाप्यहं न विज्ञापितः, किञ्च केवलमद्याहं
२७ श्रुतवानेतत्। अनन्तरं इब्राहीम् मेषान् गाश्च गृहीत्वा अबीमेलके
२८ प्रददौ किञ्च तौ द्वौ नियममेकं स्थिरीकृतवन्तौ। अपरम् इब्राहीम् सप्त-
२९ मेषशावकान् पृथक् कृत्वा निदधे। तदानीम् अबीमेलक् तं पप्रच्छ त्वया
३० केनाशयेन सप्तैते मेषशावकाः पृथक्स्थिताः? इब्राहीम् प्रतिजगाद, एष प्रहि र्मया खातस्तत्प्रमाणार्थं मत्त एतान् सप्त मेषशावकान् प्रति-
३१ गृहाण। अतएव तस्य स्थानस्य नाम बेर्शेबा (शपथीयकूपइति) जातं,
३२ यतस्तस्मिन् स्थाने उभाभ्यां शपथोऽकारि। इत्थं बेर्शेबायां नियमे निर्णीते, अबीमेलक् तस्य फीखोल्नामा सेनापतिश्च उत्थाय पिलेष्टीयानां देशं प्रत्याजग्मतुः।

३३ अनन्तरम् इब्राहीम् तद्बेर्शेबायाः सन्निधावुपवनं कृत्वा तत्र नित्य-
३४ स्थायिनः प्रभोः परमेश्वरस्य नामनि प्रार्थयाञ्चक्रे, तत इब्राहीम् पिलेष्टी-यानां देशे बहुकालं प्रोवास।

---

## २२ द्वाविंशतितमोऽध्यायः।

१ इब्राहीमः स्वपुत्त्रमिस्हाकं बलिं दातुम् आज्ञापनं तत्र प्रवृत्ते ईश्वरीयदूतेन निषेधनं १५ तस्मात् कर्म्मण ईश्वरस्याशीर्व्वदनं २० इब्राहीमो भ्रातुर्नाहोरो वंशराजिश्च।

१ एतासां घटनानां पश्चात् ईश्वर इब्राहीमम् परीक्षितुम् उवाच,
२ हे इब्राहीम्। ततः सः प्रतिजगाद, पश्चाहमुपतिष्ठामि। तदानीं स कथितवान्, त्वं निजपुत्त्रम् अर्थात् यस्मिन् अद्वितीयपुत्त्रे इस्हाकि प्रीणासि तं गृहीत्वा मोरियादेशं याहि, किञ्च तत्रत्यं यं धराधरं वदि-
३ ष्याम्यहं, तस्मिन् धराधरे तं बलिं दत्त्वा जुहुधि। तत इब्राहीम् प्रत्यूष उत्थाय गर्द्दभं सज्जयित्वा द्वौ भृत्यौ पुत्त्रमिस्हाकञ्च सङ्गिनः कृतवान्; किञ्च होमार्थं काष्ठे कृत्ते सति स उत्थाय ईश्वरेण निर्दिष्टं स्थानं
४ जगाम। अनन्तरं तृतीये दिवसे इब्राहीम् लोचने उन्मील्य दूरात्
५ तत् स्थानं ददर्श। तदानीम् इब्राहीम् भृत्याववदत्, युवामत्र गर्द्दभेन

साद्धं तिष्ठतं; अहं बालकश्च द्वौ तत् स्थानं इत्वाराधयावः; ततः परं युवयोः समीपम् आगमिष्यावः। तदानीम् इब्राहीम् यज्ञकाष्ठम् ६ आदाय स्वपुत्त्रस्य इस्हाकः स्कन्धे निधाय करेण वह्निं असिञ्च गृहीतवान्; पश्चाद् उभौ मिलित्वा चेलतुः। अपरम् इस्हाक् स्वतातम् ७ इब्राहीमम् आहूय जगाद, हे मत्तात! ततः स प्रत्युवाच, हे मदात्मज, अहमुपतिष्ठामि। तदा स पप्रच्छ, वह्निमिन्धनञ्च पश्य, किन्तु होतुं मेषशावकः कुत्र? तत इब्राहीम् कथयाञ्चकार, हे मदात्मज ८ होतुं मेषशावकम् ईश्वरः स्वयं योजयिष्यति; पश्चाद् उभौ मिलित्वा चेलतुः। अपरम् ईश्वरेण निर्दिष्टस्थानम् उपस्थाय इब्राहीम् तत्र यज्ञ- ९ वेदिं कृत्वा तदुपरि काष्ठं सज्जयित्वा स्वपुत्त्रमिस्हाकं बद्ध्वा वेद्याः काष्ठोपरि निदधे। तत इब्राहीम् करं प्रसार्य्य स्वपुत्त्रं हन्तुम् असिं १० जग्राह। एतस्मिन्नन्तरे गगणात् परमेश्वरीयदूतः हे इब्राहीम् हे ११ इब्राहीम् इत्याहूतवान्; ततः स उवाचाहम् उपतिष्ठामि। ततः स १२ कथयामास, त्वमेतस्य यूनः प्रतिकूलं करमुत्तुल्य तम्प्रति किमपि माकार्षीः; यत ईश्वरं प्रति तव भीतिरस्तीति मया बुद्धमिदानीं; यस्मात् त्वया मह्यं स्वीयमेकमात्रं तनयं दातुम् अनङ्गीकृतं नहि। तदनन्तरं १३ इब्राहीम् लोचने उन्मील्य दृष्टवान् तदा स्वपश्चात् स्तम्बस्थायां वल्ल्यां बद्धशृङ्गं मेषमेकं वीक्षाञ्चक्रे; तत इब्राहीम् गत्वा तं मेषं गृहीत्वा निजपुत्त्रस्य विनिमयात् होतुम् उत्ससर्ज। किञ्च इब्राहीम् तस्य स्थानस्य नामधेयम् यिहोवा यिरि (अर्थात् परमेश्वरो द्रक्ष्यतीति) चकार। तस्माद् १४ अद्यापि नरैरुच्यते गिरौ परमेश्वरो योजयिष्यतीति।

अपरञ्च परमेश्वरस्य दूत आकाशात् इब्राहीमं द्वितीयवारं आहूय १५ जगाद, परमेश्वरः कथयति, त्वया मह्यं स्वीयमेकमात्रं पुत्त्रं दातुम् १६ अनङ्गीकृतं नहि, त्वदीतत्कार्य्यहेतोः स्वनाम्ना शपमानः कथयाम्यहं, १७ त्वामाशिषं गदित्वा गगणस्थभानीव सरित्पतेस्तटे सिकताइव च तवान्वयं वर्द्धयिष्यामि; ते सपत्नानां नगराण्यधिकरिष्यन्ति। किञ्च मेदिनी- १८ स्थिताः सर्व्वजातयस्त्वदन्वयाद् आशिषं लप्स्यन्ते; यतस्त्वया मदीयनिदेशोऽपाल्यत। तत इब्राहीम् स्वचेटकयोः सन्निधिं परावृत्य गतवान्, १९ तदा ते समुत्थाय मिलित्वा बेर्शेबां वव्रजुः; किञ्च बेर्शेबायाम् इब्राहीम् न्युवास।

तस्या घटनायाः परं नरएक इब्राहीमं वार्त्तामिमां बभाषे, पश्य, तव २०

२१ नाहोरनाम्नो भ्रातुर्वीर्य्यात् मिल्काया उदरात् पुत्त्रा अजायन्त; तेषां ज्येष्ठपुत्त्रस्य नामधेयम् उष् तस्य भ्राता बुष् अरामः पिता किमुयेल्।
२२ किष्च केषद् हसोः पिल्दस् यिद्लफ् बिथुयेल्। तस्य बिथुयेलो दुहिता
२३ रिब्का। एतेऽष्टौ जना इब्राहीमो नाहोर्नामकात् भ्रातुर्मिल्काया
२४ उदराद् अजायन्त। अपरं नाहोरो रूमा नामिकाया उपपत्न्या उदरात् टेबह् गहम् तहश् माखा अजायन्त।

---

## २३ त्रयोविंशोऽध्यायः।

१ साराया मरणं मक्पेलानाम्नि श्मशाने तस्याः स्थापनं।

१　साराया आयुषो वत्सरा सप्तविंशत्यधिकशतम् आसन्, तस्या आयुष
२ एतेषु वत्सरेषु सत्सु सा किनान् देशस्य किरियथर्व्वऽर्थतः हिब्रोणे
३ ममार। तत इब्राहीम् सारायै शोचितुं विलपितुञ्च अभ्यन्तरं जगाम।
४ अनन्तरं मृतजायायाः समीपात् उत्थाय गत्वा इब्राहीम् हेतः सन्तानेभ्यः कथयामास, युष्माकं मध्येऽहं यात्री प्रवासी च नरोऽस्मि, तस्मात् स्वीयदृष्टिगोचरात् मृतां जायां श्मशाने स्थापयितुं युष्माकं मध्ये श्मशान-
५ स्थानाधिकृतिं मह्यं दत्त। ततो हेतः सन्ताना इब्राहीमं प्रत्याचख्युः,
६ हे प्रभो, अस्माकं वचनं निशामयतु, भवान् अस्मन्मध्ये प्रबलो राजा; तस्मादस्माकं श्मशानस्थानमध्ये श्रेष्ठवेश्मनि स्वीयां मृतपत्नीं स्थापयतु अस्माकं कोपि निजश्मशानवेश्मनि भवतो गतासुजायां स्थापयितुं न
७ निषेत्स्यति। तदानीम् इब्राहीम् उत्थाय तस्मिन् देशे वासिनो हेतीय-
८ सन्तानान् नत्वा संभाष्य कथयाञ्चकार, मद्दर्शनात् गतासुं जायां श्मशाने स्थापयितुं यदि यूयं सम्मन्यध्वे तर्हि मम गिरं निशामयत।
९ युष्माभि र्मत्कृते सोहरः पुत्त्र इफ्रोणे निवेद्यतां, मक्पेलायां तस्य क्षेत्रान्ते या गुहा स तां मह्यं ददातु; तस्या यावन्मूल्यं भवति तावत्
१० आदाय युष्मन्मध्ये श्मशानस्थानमधिकर्त्तुं तां ददातु। तदानीं हेतीय इफ्रोण् हेतीयसन्तानानां मध्ये उपविशन् तत्र निजनगरद्वारि प्रवि-
११ शतां सर्व्वेषां हेतीयसन्तानानां साक्षाद् इब्राहीमं प्रतिजगाद, भो मत्प्रभो, मदीयगिरं भवान् निशामयतु, मया तत् क्षेत्रं गुहया सहितं तुभ्यम् अदायि; अहं स्वजातीयनराणां समक्षमेव तत् तुभ्यमदां,
१२ त्वया स्वीयमृतपत्नी श्मशाने निधीयताम्। तत इब्राहीम् तद्देशीय-
१३ जनान् प्रणम्य तद्देशीयजनानां कर्णगोचरं इफ्रोणं उवाच, यदि त्वं मम

प्रत्यनुगृह्णासि, तर्हि निवेदयामि मदुक्तिम् आकर्णय। अहं तस्य वप्रस्य मूल्यं वितरामि, त्वया तद् गृह्यतां, पश्चाद् अहं तत्र स्थाने गतासुं जायां स्थापयिष्यामि। तत इफ्रोन् इब्राहीमं प्रति व्याज- १४ हार, भो मम प्रभो, मद्वचनम् आकर्णय, तस्या भूमे मूल्यं चतुः- १५ शतानि रूप्यमुद्रा एव; ताभिस्तव मम च किं भवितुं शक्नोति? तस्मात् त्वया स्वीयमृतभार्य्या श्मशाने निधीयताम्। इफ्रोण एनां कथां निशम्य १६ इब्राहीम् हेतः सन्तानानां कर्णगोचरे गदितसंख्यानुसारेण तदानीं वणिग्भिः परिचालिताः चतुःशतरूप्यमुद्राः तुलया तुलित्वा इफ्रोणे प्रददौ। अतो मम्रेः पूर्व्वस्यां मक्पेलायाम् इफ्रोणो यः केदार आसीत्, १७ तस्य मध्ये या गुहा तस्याश्चतुर्दिक्षु सीमायां ये पादपाश्च तेषु सर्व्वेषु हेतः सन्तानानां समक्षं तन्नगरनिवासिनां समक्षञ्च इब्राहीमः स्वत्वं निरनायि। अनन्तरं मम्रेः पूर्व्वस्यां मक्पेलाक्षेत्रस्थितायां गुहायाम् १८ इब्राहीम् स्वभार्य्यायाः सारायाः श्मशानं विदधे। तत् मम्रीस्थानं १९ किनानदेशस्य हिब्रोनि आस्ते। इत्थं हेतः सन्तानैः सा भूमिस्तन्मध्य- २० स्थिता गुहा चेब्राहीमः श्मशानवेश्मार्थं निरनायि।

---

## २४ चतुर्व्विंशतितमोऽध्यायः।

१ इब्राहीमा स्वदासस्य शापनं १० तस्य दासस्य गमनं प्रार्थनञ्च १५ रिब्का साक्षात् करणं ईश्वरस्य धन्यवदनं २८ लावना तस्यातिथ्यकरणं ३१ तेन दासेन रिब्काया याचनं तां दातुं लावन्बिथुयेलोः स्वीकारः ५५ दासेन सार्द्धं रिब्काया गमनं ६२ इस्हाकः साक्षात् करणञ्च।

बहुतवर्षवयस्कत्वाद् इब्राहीम् वृद्धतमो बभूव, किञ्च परमेश्वर इब्रा- १ हीमे सर्व्वकर्म्मण्याशिषं ददौ; स स्वगृहस्य सर्व्वकार्य्याध्यक्षं वृद्धदासं २ बभाषे, विनयेहं त्वं मम जङ्घायां हस्तं निधाय स्वर्गमर्त्ययोः प्रभोः पर- मेश्वरस्य नाम्ना मां प्रति शप, मम पुत्रेण विवोढुं ममैतद्वासस्थानस्य ३ किनानीयनराणां कन्यामगृहीत्वा मम देशस्य ज्ञातीनां समीपं गत्वा ४ मम पुत्रस्येस्हाकः कृते कन्यामानेष्यसीति। तदानीं स दासस्तं जगाद ५ यदि कापि कन्या मया सार्द्धम् एतं देशम् आयातुं न सम्मन्यते तर्हि त्वं यस्माद्देशाद्बहिरागतोसि तं देशं किं तव पुत्रं नेष्यामि? तत इब्राहीम् ६ कथयामास, सावहितो भव, मम पुत्रं तत्र कदापि न नेष्यसि। यतः ७ स्वर्गस्य प्रभुः परमेश्वरो मां पैतृकात् सदनात् जन्मदेशाच्च समानीय,

त्वदीयान्वयाय देशमिमं दास्याम्यहम्, इति शप्तवान्, अतस्तेन तवाग्रे निजदूते प्रेषिते सति त्वं मम पुत्रेण विवोढुं कन्यामेकां तस्मात् स्थानात्
८ आनेष्यसि। किन्तु यदि कापि कन्या त्वया सार्द्धं आयातुं नेच्छति, तर्हि त्वं तस्मात् शपथात् मोच्यसे; किन्तु मम पुत्रं तं देशं न नेष्यसि।
९ तदानीं स दासः स्वीयप्रभोरिब्राहीमो जङ्घायां करं निधाय तदर्थं तथैव शशाप।

१० तदनन्तरं स दासः स्वप्रभो र्महाङ्गानां मध्यात् दश महाङ्गान् प्रभो र्नानाविधसम्पत्तिञ्च गृहीत्वा प्रस्थाय अराम्-नहरयिम् देशस्य नाहोर्
११ नगरम् जगाम। ततः सन्ध्यायां यदा कन्या अप उत्तोलयितुम् आगच्छन्ति, तदानीं स तस्य नगरस्य वहिः स्थितोदपानं निकषा महाङ्गान्
१२ उपवेश्य स्थापितवान् इदं प्रार्थयत च। हे मम स्वामिन इब्राहीमः प्रभो परमेश्वर प्रार्थयेहं, मम प्रभुमिब्राहीमं प्रत्यनुगृह्य मामद्य कृतार्थं
१३ कुरु। पश्चाद्हमेतस्य प्रहेः समीप उत्तिष्ठन्नेव, नगरनिवसतां कन्या
१४ अप उत्तोलयितुम् आयान्ति। अतएव त्वं स्वीयकलशमवरोह्य मामपः पाययेति मयोच्यमाना काचित् कन्या यदि वदिष्यति पिब तावकीनमहाङ्गानपि पाययिष्ये, तर्हि स्वीयदासस्येस्हाकः कृते भवन्निरूपिता कन्या सैव भवतु, त्वं मम प्रभुं प्रत्यनुगृहीतवानिति तेनैवाहं ज्ञास्यामि।

१५ इमां कथां तस्मिन् कथयति सतीब्राहीमो नाहोराख्यस्य भ्रातुः पत्न्या मिल्काया गर्भजातो यो विथूयेल् तस्य दुहिता रिब्का स्कन्धे कलशं
१६ वहन्ती वहिराजगाम। सा कन्यातीव सुन्दरी चानूढासीत्, केनापि
१७ पुंसा नोपभुक्ता च। सा प्रहिमवरुह्य कलशं पूरयित्वा उपर्य्यायाति, तस्मिन्नेवावसरे स दासो धावन् तां साक्षात्कृत्य कथितवान्, अहं विनये
१८ तव कलशात् किञ्चित् तोयं पातुं मह्यं देहि। ततः सा व्याजहार, भो महेच्छ, पिब, इत्युक्त्वा सा शीघ्रं कलशं करोपर्य्यवरोह्य पातुं तस्मै ददौ।
१९ किञ्च तं पाययित्वा कथितवती, यावत् सर्व्वे महाङ्गा न पिबन्ति, तावत्
२० अहं तेषां कृतेपि तोयमुत्तोलयिष्यामि। ततः सा शीघ्रं निपाने कलशस्य तोयमवतार्य्य पुनस्तोयमुत्तोलयितुं प्रहेः समीपं धावन्ती गत्वा सर्व्वेषां
२१ महाङ्गानां कृते तोयमुत्तोलयामास। ततः स पुरुषो निरीक्ष्य परमेश्वरात् स्वयात्रा सफला भविष्यति नवेति निःशब्दः सन् तत् चिन्तयाञ्चकार।
२२ महाङ्गानां जलपाने सम्पूर्णे सति स पुरुषस्तस्याः कृतेऽर्द्धमुद्रापरिमितसुवर्णस्य नासाभरणं, दशमुद्रापरिमितसुवर्णस्य करवलयद्वयञ्च

गृहीत्वा कथयामास, निवेदयामि, त्वं कस्य कन्यासीति मह्यं कथय। अस्माकं यामिनीयापनार्थं तव पितुर्निवेशने किं स्थानमास्ते? ततः २३ सा प्रत्युवाच नाहोर औरससुतो मिल्काया गर्भजातो यो विथूयेल् २४ तस्य कन्याहं। सापरं जगाद, अस्माकं नालानि माषाश्च प्रभूताः २५ सन्ति, यामिनीयापनार्थञ्च स्थानमास्ते। तदानीं स पुमान् उत्तमाङ्गं २६ नमयन् परमेश्वरं प्रणनाम कथयामास च, मम स्वामिन इब्राहीमः प्रभुः २७ परमेश्वरो धन्यो भवतु, यतः स मम स्वामिनं प्रत्यनुग्रहीतुं सत्यमाचरितुञ्च न न्यवर्त्तत; परमेश्वरो माञ्च यात्रया मम प्रभो र्ज्ञातिनिवेशनम् आनैषीत्।

अपरं सा कन्या धावन्ती स्वमातु र्निवेशनं गत्वा तां कथां ज्ञाप- २८ यामास। लावन्नामा रिवूकायाः सहोदर एक आसीत्; स वहिः २९ प्रस्रैः समीपे तस्य मनुजस्य समीपं धावन् वव्राज। फलतः पुरुषोऽसौ ३० मह्यम् अमुकीं कथामचकथत्, स्वभगिन्या रिवूकाया वदनाद् इति श्रुत्वा, भगिन्या नासाभरणं करयो र्वलयद्वयञ्च विलोक्य लावन् तस्य पुरुषस्य सन्निधिं गत्वा प्रस्रैः समीपे महाङ्गैः सार्द्धं तिष्ठन्तं निरीक्ष्य कथयाञ्चकार, ३१ भोः परमेश्वरानुगृहीतमानव, त्वं कुतो वहिस्तिष्ठसि? गेहमायाहि, वेश्म परिष्कृतमास्ते, महाङ्गानां कृतेपि स्थानमास्ते। ततः स मनुजो गेहं ३२ गतवान् तदा स तस्य महाङ्गानां सज्जां मोचयित्वा तेभ्यो नालानि माषांश्च दत्त्वा तस्य तत्सङ्गिमनुजानाञ्च पादप्रक्षालनाय पानीयं ददौ। अपरं ३३ तस्य सम्मुखे भोजनीयान्ने स्थापिते सति स कथयामास, वक्तव्यं वचनं नोक्त्वा न भक्षिष्यामि; ततो लावन् अकथयत् कथय। तदानीं स वदि- ३४ तुमारेभे, इब्राहीमो दासोहं, परमेश्वरस्य प्रसादात् मम प्रभु र्महान् ३५ मनुजोऽभवत्, परमेश्वरो तस्मै मेषगवादीनां भूरिव्रजान् महाङ्गान् गर्द्दभान् रूप्याणि सुवर्णानि दासान् दासीश्च व्यतरत्। मम प्रभोः पत्नी ३६ सारा वार्द्धक्ये तस्य पुत्त्रैकं प्रासोष्ट, स च तस्मिन् निजं सर्व्वस्वं समार्पयत्। अपरं प्रभु र्मां शापयित्वा कथितवान्, मम पुत्त्रेण विवोढुं मभेत- ३७ दासस्थानकिनानदेशीयानां कामपि कन्यां न गृहीत्वा मम पैतृकनिवेशने ज्ञातीनां समीपं गत्वा मम पुत्त्रार्थं कन्यामानेष्यसि। ततोहं प्रभवे- ३८ ऽकथयं, यदि कापि कन्या मया सार्द्धं नागमिष्यति? ततः सोऽचकथत्, ३९ अहं यस्य परमेश्वरस्य साक्षाद् आचरामि, स त्वया सार्द्धं निजदूतं ४० प्रहित्य तव यात्रां सफलयिष्यति। ततस्त्वं मम पैतृकनिवेशनस्य ४१

ज्ञातीनां मध्यात् मम पुत्त्रार्थं कन्यामानेष्यसि। किन्तु ते चेत् कन्यां न दास्यन्ति, तदा त्वं शपथात् मोक्ष्यसे; मम ज्ञातीनां सन्निधिं गत्वैव त्वं
४२ शपथात् मोक्ष्यसे। अतोद्याहं प्रहेः सन्निधिम् आगत्य प्रार्थितवान् इदं हे
४३ मम स्वामिन इब्राहीमः प्रभो परमेश्वर, यदि मया कृतां यात्रां सफलां कुर्य्याः तर्हि पश्याहं इदानीमेतस्य साम्बुप्रहेः सन्निधौ तिष्ठामि, अतएव
४४ या कन्या तोयमुत्तोलयितुम् आयाति, तव कलशात् किञ्चित् तोयं पातुं मह्यं देहीति मया प्रोच्यमाना सा यदि वदति, पिब तव महाङ्गानां कृतेपि तोयमुत्तोलयिष्यामि, तर्हि यां कन्यां परमेश्वरो मम प्रभोः
४५ पुत्त्रकृते निरूपितवान्, सैव सा भवतु। एतां कथां मनसि चिन्तित-
४६ वानहं, तस्मिन्नेव काले रिब्का स्कन्धे कलशं गृहीत्वा वहिरागमत्, किञ्च तयावरुह्य प्रहेरप्सूत्तोलितासु मया गदितं, विनयेहं मां तोयं पायय। ततः सा क्षिप्रं स्कन्धात् कलशमवतार्य्य गदितवती, पिब तव महाङ्गानपि पाययिष्यामि; तदानीं मया तोये पीते सति सा महा-
४७ ङ्गान् अपाययत्। ततो मया साप्रच्छि, त्वं कस्य कन्यासि? ततः सा प्रत्यवादीत् नाहोर औरससुतो मिल्कागर्भजातो यो बिथुयेल् तस्याहं दुहिता। तदाहं तस्या नासिकायां स्वर्णाभरणं करयो र्वलयद्वयञ्च पर्य्य-धापयं। अपरं यो मत्प्रभोः पुत्त्रकृते तस्य भ्रातुः कन्यां ग्रहीतुं मां न्याय्य-
४८ वर्त्मना नीतवान् तमिब्राहीमो मम स्वामिनः प्रभुं परमेश्वरम् अहं प्रह्वः
४९ सन् प्रणम्य धन्यमवादिषम्। अतो यदि यूयं साम्प्रतं यथार्थं मम प्रभुमनु-गृह्णीथ, तर्हि तद् ब्रूत; यदि नहि तदपि ब्रूत; ततोहं दक्षिणं वामं
५० वा यास्यामि। तदा लावन्बिथूयेलौ प्रत्यूचतुः, परमेश्वराद् इयं घटना
५१ जाता, तत्र वयं भद्रमभद्रं वा वक्तुं न शक्नुमः। पश्य रिब्केयं तव सम्मुखे तिष्ठति, एनां गृहीत्वा गम्यतां; तेन परमेश्वरस्य वाक्यानुसा-
५२ रतः सा तव प्रभोः पुत्त्रस्य भार्य्या भवतु। तदानीम् इब्राहीमो भृत्यस्त-
५३ योरिमां कथां श्रुत्वा भूमिस्पृक्शिराः सन् परमेश्वरं प्रणनाम। तदा स दास रूप्यसुवर्णपात्राणि वासांसि च वहिः कृत्वा रिब्कायै ददौ,
५४ तस्या भ्रात्रे मात्रे च महार्घाणि द्रव्याणि दत्तवान्। पश्चात् स तस्य सङ्गिनो जनाश्च भुक्त्वा पीत्वा तत्र निशायां न्यवसन्।

५५ अनन्तरं तेषु प्रातः समुत्थाय स्थितेषु स दासः कथितवान्, मम प्रभोः समीपं गन्तुं मां विसृजत। ततो रिब्काया भ्राता माता च जगाद, कन्येयम् अस्माकं समीपे कतिपयदिनानि तिष्ठतु, यद्वा दश दिनानि

तिष्ठतु, पश्चात् सा गमिष्यति। किन्तु स तान् अवदत्, मां मा विल- ५६
म्बयत यतः परमेश्वरो मम यात्रां सफलीं कृतवान्, इदानीं प्रभोः
समीपं व्रजितुं मां विसृजत। ततस्ते प्रतिबभाषिरे, वयं कन्यामाहूय ५७
तां पृच्छामः। ततस्ते रिबकाम् आह्वयन् अवदन् च, त्वं किमेतेन ५८
मानुषेण सार्द्धं व्रजिष्यसि? ततः सावादीत्, यास्यामि। तदानीं ते ५९
रिबकां भगिनीं तस्या धात्रीं इब्राहीमो दासं तदीयमनुजांश्च विसृज्य
रिबकाम् इत्याशिषं जगदुः, त्वमस्माकं भगिनी, बहुसहस्रनराणां ६०
जननी भव, तव वंशः स्वशत्रूणां नगराण्यधिकरोतु; अनन्तरं रिबका
तस्या दास्यश्च समुत्थाय महाङ्गान् आरुह्य तस्य मनुष्यस्य पश्चात् जग्मुः।
इत्थं स दास रिबकां गृहीत्वा प्रतस्थे। ६१

अपरं इस्हाक् दक्षिणदेशे वसनात् बेर्लहय्रोयी नाम्नि स्थाने ६२
समुपस्थितवान्। स सन्ध्यायां ध्यातुं केदारं जगाम। इति समये ६३
लोचने उन्मील्य वीक्ष्य महाङ्गान् आगच्छतो ददर्श। किञ्च रिबका ६४
लोचने उन्मील्य इस्हाकं निरीक्ष्य महाङ्गात् अवरुरोह, ततस्तं दासेयं ६५
पप्रच्छ अस्मान् साक्षात् कर्त्तुं क्षेत्रमध्य आयाति कोऽयं पुरुषः? ततो
दासेयः कथयामास, मम प्रभुरयं। अतो रिबका प्रच्छादनं गृहीत्वा
स्वाम् आच्छादयामास। अनन्तरं स दासेयः स्वकर्म्मणां सर्व्ववृत्तान्तं ६६
इस्हाकं जगाद। तदानीं इस्हाक् रिबकां गृहीत्वा सारया मातु- ६७
र्दूष्यम् आनीय ताम् उदुवाह, तस्यां प्रीतवांश्च मातृमरणजस्य शोकस्य
सान्त्वनां लेभे।

---

## २५ पञ्चविंशतितमोऽध्यायः।

१ किटूरया इब्राहीमो वंशराजिः तस्य मरणं श्मशाने स्थापनञ्च ११ इस्हाक् प्रतीश्व-
रस्याशीर्व्वचनं १२ इस्मायेलो वंशराजिमरणञ्च १९ इस्हाको यमजपुत्रयो र्जननं
२७ एषावो व्यवसायकर्म्म ज्येष्ठाधिकारविक्रयश्च।

अनन्तरं इब्राहीम् किटूरानामिकाम् अपरां जायाम् व्युवाह; तस्या १
गर्भे सिम्रन् यक्षन् मिदान मिदियन् यिश्वक् शूह एते पुत्रा जज्ञिरे। २
किञ्च तस्य यक्षन शेबासौ शिवादिदनौ जज्ञाते। तस्य दिदनः पुत्रो ३
आश्शूरीयानां लिटूशियानां लियुम्मीयानाञ्चादिपुरुष आसीत्। अपरं ४
मिदियनः पुत्त्र ऐफा एफर् हनोक् अवीद् इल्दाया एते सर्व्वे किटू-
रान्वयाः। अनन्तरम् इब्राहीम् इस्हाके निजं सर्व्वस्वं प्रददौ, किन्तु- ५

६ सपत्नीनां पुत्रेभ्यः किञ्चिद् दत्त्वा स्वीयजीवनदशायामेव इस्हाकः समी-
७ पात् तान् पूर्व्वदिकस्थे पूर्व्वदेशे स्थातुं विससर्ज। इब्राहीम् पञ्चसप्तत्य-
८ धिकशतवत्सरान् स्वीयजीवनकालान् यापयामास। ततः परं वृद्धः पूर्णायुश्च सन् उत्तमवार्द्धक्ये प्राणान् परित्यज्य निजलोकानां सन्निधौ
९ समगच्छत। अपरं इस्हाक्-इस्मायेलौ तस्य पुत्रौ मम्रः पूर्व्वं हेतीयसो-हरः पुत्रस्येफ्रोणो भूमिस्थितमक्पेलागुहायां श्मशानवेश्मनि तं स्थाप-
१० यामासतुः। यत इब्राहीम् हेतीयसन्तानेभ्यस्तां भूमिं क्रीतवान्; इब्राहीमस्तस्य जायायाश्च सारायास्तत्र स्थाने श्मशानं बभूव।

११ इब्राहीमो मृतौ सत्याम् ईश्वरस्तस्य पुत्रम् इस्हाकम् आशिषं ददौ; तत इस्हाक् बेर्लहयरोयी नाम्नि स्थाने उवास।

१२ साराया दास्या मिसरीयाया हाजिराया गर्भजात इस्मायेल् नामा
१३ य इब्राहीमः पुत्र आसीत् तस्य वंशराजिरयं। नामजन्मनोरनुसारात्
१४ इस्मायेलः सन्तानानां नामान्येतानि। इस्मायेलो ज्येष्ठपुत्रो निबायोत्
१५ पश्चात् केदर् अद्बेल् मिब्सम् मिश्म दूमा मसा हदर् तेमा यिटूर्
१६ नाफीश् केदिमा, एते सर्व्वे इस्मायेलः पुत्राः; तेषां नामानुसारात्
१७ नगराणि दुर्गाणि चासन्, ते च स्वस्वजात्यनुसारात् द्वादशाधिपतय आसन्। अनन्तरम् इस्मायेलः सप्तत्रिंशदधिकशतवत्सरवयसि प्राणान्
१८ परित्यज्य स्वीयलोकानां सन्निधौ समगच्छत। ततः परं तस्य सकलभ्रातृणां पूर्व्वदिशि वासानुसारात् तदीयसन्ताना हवीलामिसरोः पूर्व्वस्यां स्थितं शूरमवधिं कृत्वाऽशूरीयानां दिशि न्यवसन्।

१९ इब्राहीमः पुत्रस्येस्हाको वंशराजिरयं। इब्राहीमः पुत्र इस्हाक्, स
२० इस्हाक् चत्वारिंशद्वत्सरवयसि अरामीयस्य लाबनो भगिनी पद्दन्
२१ अरामस्थस्य बिथूयेलः कन्या या रिब्का तां व्युवाह। किन्तु तस्या रिब्-काया बन्ध्यात्वात् तस्याः पुत्रजननार्थम् इस्हाक् परमेश्वरं प्रार्थयाञ्चक्रे। ततः परमेश्वरेण तदीयप्रार्थनायां श्रुतायां सत्यां तस्य जाया रिब्का
२२ गर्भिणी बभूव। अनन्तरं तस्य गर्भमध्ये पुत्राभ्यां समालिङ्गिते ममैतादृशं कुतोऽभवत्? इति चिन्तयित्वा सा परमेश्वरं प्रष्टुं जगाम।
२३ तदा परमेश्वरस्तां बभाषे, तव गर्भे द्वे जाती आसाते, त्वदीयोदरात् द्विविधौ वंशौ निःसरिष्यतः; तयोरेक इतरस्मात् बलवान् भविष्यति,
२४ ज्येष्ठश्च कनिष्ठं सेविष्यते। अनन्तरं प्रसूतिकाले सम्पूर्णे सति तस्या
२५ जठरात् यमजपुत्रौ बभूवतुः। तयोर्ज्येष्ठोरक्तवर्णोऽभवत् तस्य सर्व्वाङ्गानि

लोमश्चवसनवत् आसन्। तस्मात् तस्य नामधेयम् एषौ (लोमव्याप्त) इति चक्रे। तस्मात् परं तस्य पादमूलं धृत्वा तस्यानुजो भूमिष्ठो बभूव। २६ तस्मात् तस्य नाम याकूब् (पदापहारक) इति चक्रे। इस्हाकः षष्टि-वत्सरवयसि सति पुत्रावेतौ यमजौ बभूवतुः।

अनन्तरं बालकयोरेधमानयोः सतोः एषौ मृगयानिपुणो काननवासी २७ चाभवत्; किन्तु याकूब् मृदुर्दूष्यनिवासी चाभवत्। मृगमांसस्याति- २८ स्वादुत्वबोधात् इस्हाक् एषौपुत्रे अप्रीयत किन्तु रिब्का याकूबि समप्रीयत। ततः परम् एकदा एषौः क्षेत्रादागत्य समक्लाम्यत्, तदानीं २९ याकूब् व्यञ्जनम् अपचत्। ततः स याकूबं जगाद निवेदयामि क्लान्तो- ३० स्म्यहं, रक्तेनानेन व्यञ्जनेन मामाप्यायय। अतः कारणात् तस्य नाम-धेयम् इदोम् (रक्तवर्ण) इति विख्यातं। तदा याकूब् अवदत् अद्य त्वं ३१ मयि स्वीयज्येष्ठाधिकारं विक्रीणीहि। एषौः प्रतिजगाद पश्येदानीमहं ३२ मृतकल्पो ज्येष्ठाधिकारे मम किं प्रयोजनं? याकूब् उवाच त्वमद्य मम ३३ सन्निधौ शपथं कुरु; ततस्तस्य समीपे शपथं कृत्वा निजज्येष्ठाधिकारं याकूबि व्यक्रीणात्। तदा याकूब् एषावे पूपं पक्कं रक्तद्विदलञ्च ददौ; स ३४ भुक्त्वा पीत्वाच उत्थाय जगाम। इत्थम् एषौः स्वीयज्येष्ठाधिकारं तुच्छीचकार।

---

## २६ षड्विंशतितमोऽध्यायः।

१ दुर्भिक्षात् इस्हाको गिररनगरगमनं, तत्र स्वीयभार्य्यायां भगिनीवदनञ्च १२ इस्हाको धनवृद्धिः १७ प्रहिनिमित्तं दासानां विवादः बेर्शेबायां वसनञ्च २६ इस्हाका सार्द्धं अबीमेलको नियमनिर्णयः ३२ शपथप्रहेः खननं ३४ एषवा बिवाहेन पित्रो दुःखीकरणञ्च।

पूर्व्वम् इब्राहीमि विद्यमाने यादृशोऽभवत् तस्मिन् देशे ततोपि १ दुर्भिक्षे उपस्थिते इस्हाक् गिरर् देशे पिलेष्टीयानां राजानं अबी-मेलकम् उपजगाम। परमेश्वरः प्रत्यक्षीभूय तमवदत्, त्वं मिसर्देशं २ मा गाः, यं देशमहं तुभ्यं कथयिष्यामि, तत्र निवस तत्र प्रवस च; ३ ततोहं तव सहायो भवन् त्वामाशिषं वदिष्यामि; अपरं तुभ्यं तव वंशाय चैतान् सर्व्वान् देशान् दत्त्वा तव पितुरिब्राहीमः सन्निधौ स्वकृतशपथं सफलं करिष्यामि। अहं गगणस्य तारागणवत् तव वंशम् ४ एधयित्वा तेभ्य एतान् देशान् दास्यामि, तव वंशेन च मेदिनीस्थिताः

५ सर्व्वजातय आशिषं लप्स्यन्ते। यत इब्राहीम् मम वाक्यं संमान्य मम
६ विधानम् आज्ञां विधिं व्यवस्थाञ्च अपालयत्। अनन्तरं इस्हाक् गिररि
न्यवसत्। ततस्तत्स्थानस्थलोकैस्तस्य जायायाः परिचये पृष्टे सोऽवदत्
७ एषा मम भगिनी। यतो रिब्काया अतीव सौन्दर्य्यात् अत्रत्यनराः
तस्याः कृते मां हनिष्यन्तीति कारणात् स तां भार्य्येति वक्तुं बिभया-
८ ञ्चकार। किन्तु तत्र बहुकालमुषिते सति एकदा पिलेष्टीयभूपतिर-
वीमेलक् वातायनद्वारा निरीक्ष्य इस्हाकं स्वजायया रिब्कया सार्द्धं
९ क्रीड़न्तं ददर्श। अतोऽवीमेलक् राजा इस्हाकम् आहूय जगाद, सा
नारी निश्चितं तव जाया; तर्हि भगिनीति परिचयं कुतस्त्वं अवादीः?
तदानीमिस्हाक् प्रतिजगाद, तस्याः कृते यथा मम मृत्यु र्न जायते
१० तदर्थमवादिषम्। तदानीम् अविमेलक् कथयामास, त्वयास्माभिः सार्कं
किमिदं व्यवहृतम्? यदि कश्चित् नरस्तव जायया सार्द्धं निःशङ्कम्
११ अशयिष्यत तर्हि त्वमस्मान् दोषिणोऽकरिष्यः। अनन्तरम् अवीमेलक्
सर्व्वान् मनुजान् प्रतीत्यादिदेश, यः कश्चित् एनं मनुजं वा तस्य जायां
स्प्रक्ष्यति स वध्यो भविष्यति।

१२ अनन्तरम् इस्हाक् तस्मिन् देशे कृषिं कृत्वा परमेश्वरस्याशीर्व्वादात्
१३ तस्मिन्नेव वत्सरे शतगुणं लेभे। इत्थं स धनी बभूव, क्रमश उन्नतिमेत्य
१४ महान् बभूव च। ततस्तस्य गोमेषाणां बहुव्रजा बहुदासा दास्यश्च बभूवुः
१५ तेन पिलेष्टीया नरास्तं प्रतीर्षितुमारेभिरे। अपरं तस्य तात इब्राहीमि
विद्यमाने तस्य दासेया यान् यान् प्रहीन् अखनन् पिलेष्टीयनरा
१६ मृद्भिस्तान् सर्व्वान् अपूरयन्। अनन्तरम् अवीमेलक् इस्हाकम् अवदत्
त्वमस्मत् समीपात् याहि, यतस्त्वम् अस्मत्तोऽतीव बलवान् भवसि।

१७ ततः परम् इस्हाक् तस्मात् यात्रां विधाय गिरर् उपत्यकायां दूष्यं
१८ स्थापयित्वा तत्र न्यवसत्। अपरं निजतात इब्राहीमि विद्यमाने ये ये
प्रहयः खाता इब्राहीमो मरणात् परं पिलेष्टीयैः पूरितास्तान् सर्व्वान्
१९ इस्हाक् पुनः खनित्वा निजतातेन कृतनामानि पुनः कृतवान्। अप-
रम् इस्हाको दासेयास्तामुपत्यकां खनित्वा स्रोतोवाह्निनं प्रहिमेकं
२० प्रापुः। ततो गिररनगरीयाः पशुपालका इस्हाकः पशुपालकैः सार्द्धं
विवदमाना अकथयन्, इदं तोयमस्माकं; तस्मात् इस्हाक् तस्य प्रहे-
२१ र्नाम एषक् (विवाद) इति कृतवान्, यतस्ते तेन सार्द्धं व्यवदन्त। अन-
न्तरं तस्य दासेयैरपरस्मिन् प्रहौ खाते ते तन्निमित्तमपि व्यवदन्त;

तत इस्हाक् तस्य नाम सिट्ना (द्वेषेति) कृतवान्। तस्मात् ते प्रस्थायान्यं २२ प्रहिं चखुः तदर्थं तै र्न व्युदिते सति तस्य नाम रिहोवोत् (स्थानं) इत्यकरोत्; सोऽकथयत् इदानीं परमेश्वरोऽस्मभ्यं स्थानं दत्तवान् वयं देशे वर्द्धिष्णवो भविष्यामः। अनन्तरं स तस्मात् बेर्शेवां जगाम, २३ तत्र तस्यां रजन्यां परमेश्वरस्तं दर्शनं दत्त्वा जगाद, तव पितुरिब्राहीम २४ ईश्वरोहं, मा भैषीः, स्वदासेयस्येब्राहीमः कृते तव सहायोहमस्मि, त्वामाशिषमुक्त्वा तव वंशम् एधयिष्यामि। तत इस्हाक् तत्र यज्ञवेदिं २५ कृत्वा परमेश्वरस्य नाम्नि प्रार्थयाञ्चक्रे। पश्चात् तेन तत्र दूष्ये स्थापिते तस्य दासेयाः प्रहिमेकं चखुः।

अनन्तरम् अवीमेलक् अहूषत्नामकं मित्रं फीखोल् नामकं सेना- २६ पतिञ्च नीत्वा गिरर्नगराद् इस्हाकः समीपमागतवान्। तत इस्- २७ हाक् तान् अवदत्, यूयं मां द्विषन्तो निजमध्यात् दूरीकृतवन्तः, इदानीं मम सन्निधिं कुत आगमत? तदा ते प्रत्यवदन्, परमेश्वरस्तव २८ सहायोस्तीति ज्ञातमस्माभिः, तस्मात् कथयामो वयम् अस्माभिः सार्द्धं तव शपथ एको भवेत्, अस्माभिः सार्द्धं तवायं नियमश्च भवेत्। त्वमस्मान् प्रति काञ्चन हिंसां न करिष्यसि, यतो वयं त्वां नास्पृशाम, २९ तव विना मङ्गलं किमपि नाकुर्म्म, त्वां शान्त्या व्यसृजाम च, त्वमीदानीमपि परमेश्वरस्यानुग्रहपात्रमसि। तदानीमिस्हाक तेषां कृते भोज्य- ३० मासादयत ते च बुभुजिरे पपुश्च। ततस्ते प्रत्यूष उत्थाय परस्परं शपथं ३१ चक्रुः तत इस्हाका विसृष्टास्ते क्षेमेण तस्मात् प्रतस्थिरे।

अपरं तस्मिन्नेव दिन इस्हाको दासेया आगत्य खातप्रहे वार्त्तां ३२ निवेदयन्तस्तं जगदुः, तोयमस्माभिरलभि। अतः स तस्य प्रहे नाम ३३ बेर्शेवा (शपथस्य प्रहिरिति) कृतवान, अद्य यावत् तत्स्थानस्थनगरं बेर्शेवानाम्ना विदितमास्ते।

अनन्तरम् एषौः चत्वारिंशद्वत्सरवयसि हित्तीयबेरे यिहूदीत्ना- ३४ मिकां कन्यां हित्तीयैलोनोवासिमत्नामिकां कन्याञ्च उदुवाह; किन्तु ३५ ते इस्हाको रिब्कायाश्च मनोदुःखदायके बभूवतुः।

---

## २७ सप्तविंशोऽध्यायः।

१ मृगमांसार्थम् इस्हाका एषौप्रेषणं ५ याकूबं प्रति रिब्काया मन्त्रणा १४ रिब्काया मन्त्रणया याकूबः स्वपितरम् इस्हाकं भ्रान्तं कृत्वाशीः प्राप्तिः ३० मृगमांसमानो-

याश्रिषं प्राप्तम् एषावा चेष्टने कृते पितुरनङ्गीकरणं ४१ एषावः क्रोधेन याकूवं हन्तुमिच्छा च।

१ अनन्तरम् इस्हाकि स्थविरे सति लोचनयो र्निस्तेजस्कत्वात् स्पष्टं द्रष्टुं न शशाक; स स्वपुत्त्रं ज्येष्ठमेषावमाहूय बभाषे, हे मम तनय;
२ ततः स प्रतिजगाद, पश्याहम् उपस्थितोस्मि। तदानीम् इस्हाक् कथयामास, पश्याहम् इदानीं वर्षिष्ठोस्मि, कर्हि मम मरणं भविष्यति,
३ तदहं न जाने। अतस्त्वम् एतर्हि तुनीरकोदण्डास्त्राणि गृहीत्वा प्रान्तरं
४ गत्वा मत्कृते मृगमांसम् आनय। यादृशेऽहं प्रीये तादृशं सुखादु खाद्यमासाद्य मत्सन्निधिमानय; ततोहं भुक्त्वा मरणात् पूर्व्वमेव तुभ्यम् आशिषं प्रदास्यामि।

५ इस्हाका यदेतत् एषौतनयाय कथितं तत् रिबका शुश्राव। अत
६ एषावि मृगयित्वा मृगमांसम् आनेतुं प्रान्तरं गते सति रिबका निजपुत्त्रं याकूवं जगाद, पश्य तव पिता तव भ्रातरम् एषावम् एतां कथाम्
७ अवादीत्, त्वं मृगमांसम् आनीय मदर्थं सुखादु खाद्यमासादय, ततोहं भुक्त्वा मरणात् पूर्व्वं परमेश्वरस्य साक्षात् आशिषं तुभ्यं दास्यामि, तस्येदं
८ वचोऽश्रौषमहं। अतो हे ममात्मज साम्प्रतम् अहं त्वां यद् आज्ञापयामि
९ तन्मदीयं वचो निशामय। त्वमिदानीं व्रजं ब्रजित्वा तस्मात् उत्तमं छागवत्सद्वयम् आनय, ततस्तव तातेन यादृशे प्रीयते तादृशं सुखादु
१० खाद्यमहं तदर्थं पक्ष्यामि। त्वं तदादाय निजतातस्य सन्निधिं व्रजिष्यसि,
११ ततस्तेन तत् खादित्वा मरणात् पूर्व्वमेव तुभ्यमाशी र्वितरिष्यते। तदानीं याकूब् स्वप्रसूं रिबकाम् आचचक्षे, पश्य मम सगभ एषौ लोमशः किन्तु
१२ निर्लोमाहं, तेन यदि तातो मां स्पृशन् प्रवञ्चकं वेदिष्यति, तर्हि
१३ आशिषं न प्राप्य प्रत्युताभिशापेन ग्रसिष्येहम्। किन्तु तस्य प्रसूरुवाच, हे तनय सोभिशापो मयि वर्त्ततां, केवलं मम वाचं मन्यमानो व्रजं व्रजित्वा छागवत्सद्वयम् आनय।

१४ ततो याकूब् अयित्वा तद् गृह्णन् प्रसूसमीपम् आनिनाय; तत्प्रसूश्च
१५ तस्य तातो यादृशे प्रीयते तथा सुखादु खाद्यं पपाच। ततो रिबका ज्येष्ठपुत्त्रस्यैषावो गेहस्थितं उत्तमवसनमानीय कनिष्ठतनयं याकूवं परि-
१६ धापयामास। अपरं छागवत्सयोः कृत्ती गृहीत्वा तदीयकरौ लोमशून्यं
१७ गलदेशञ्चाववेष्टत्। तत् सुपक्वं सुखादु खाद्यं पूपञ्च याकूबो हस्ते ददौ।
१८ तदानीं याकूब् स्वतातं उपागत्य बभाषे, हे, तात; ततः स प्रत्याचख्यौ,

अहमुपस्थितोस्मि, हे वत्स, कस्त्व? याकूब् स्वतातम् उक्तवान्, अहं तव १९ ज्येष्ठतनय एषौः; त्वं मां यदाज्ञापयो मया तदकारि; एतर्हि निवेदयामि, त्वमुत्थायोपविशन् मदानीतं मृगमांसं खादित्वा मह्यम् आशिषं देहि। तत इस्हाक् पुत्त्रं जगाद, हे पुत्त्र, त्वमतीव क्षिप्रं तत् प्राप्तवान्। २० स उवाच, तव प्रभुः परमेश्वरएव मम समक्षं तदानीतवान्। इस्हाक् २१ याकूबम् अपरमपि जगाद, हे सूनो, मम सन्निधिम् एहि, त्वं मदीय एषौः सुतो न वेति त्वां स्पृष्ट्वा ज्ञास्यामि। तदानीं याकूब् इस्हाक्- २२ पितुः सन्निधिं इयाय, स च तं स्पृशन् बभाषे, स्वरोयं याकूबो भवति किन्तु करोयम् एषावः। इत्थं स तं परिचेतुं न शशाक, यतः २३ स एषावः सहजस्य कराविव स्वकरौ सलोमानौ चक्रवान्; अतः स तस्मायाशिषं दत्तवान्। अनन्तरं तेनोक्तं, त्वं किं ध्रुवं मदीय एषौसुतः? २४ ततः स गदितवान् सएवाहं। तदानीम् इस्हाक् अकथयत, हे २५ आत्मज, खाद्यं समीपमानय, पुत्त्रेणानीतम् एणमांसं भुक्त्वा त्वामाशिषं प्रभाषे। ततः सन्निधिमानीय दत्ते तत् इस्हाक् बुभुजे द्राक्षारसञ्च आनीय दत्तवान् स तमपि पपौ। अनन्तरं तस्य तात इस्- २६ हाक् आचचक्षे, हे सूनो साम्प्रतं समीपमेत्य मां चुम्ब। तदा तेन २७ समीपं व्रजित्वा तस्मिन् चुम्बिते सति तस्य वसनस्य गन्धम् आघ्राय तमाशिषं ब्रुवन् अवोचत्, परमेश्वरस्याशीर्युक्तक्षेत्रस्येव मम तनयस्य सौगन्ध्यम्। अत ईश्वर आकाशीयशिशिरात् उर्व्वरायां भूमावुत्पन्नं २८ शस्यं द्राक्षारसञ्च प्रभूतं तुभ्यं देयात्। नानानरास्त्वदधीना भूयासुः २९ नानाजातीयास्त्वां नम्यासुः स्वीयगोत्रमध्ये त्वं मुख्यो भूयाः, तव मातृतनयास्च त्वां नम्यासुः, यस्त्वाम् अभिशपेत सोभिशप्तो भूयात्, यश्च त्वामाशिषं भाषेत स आशिषं प्राप्यात्।

इत्थं इस्हाका याकूबे आशिषि दत्तायां सत्यां स्वपितुरिस्हाकः ३० समक्षात् याकूबि बहिर्गतएव तस्य सहज एषौ मृगयात आगत्य सुस्वादु खाद्यमासाद्य पितुः समीपमानीय कथयामास, हे पितस्त्वम् ३१ उत्तिष्ठ पुत्त्रानीतमृगमांसं भुक्त्वा मामाशिषं भाषस्व। तदा तस्य तात ३२ इस्हाक् अब्रवीत्, कस्त्वं? सोऽवदत्, अहं तव ज्येष्ठपुत्त्र एषौः। तदानीम् इस्हाक् अतीवकम्पमान उदितवान्, तर्हि यो मृगयमाणो ३३ मम सन्निधिं मृगपललम् अनैषीत् स कः? अहं तवागमनात् पूर्व्वमेव तदखादिषं तमाशिषम् अवादिषञ्च, सएव साशीष्कः स्यास्यति।

३४ तदानीम् एषौः पितुरीदृशीं वाचं निशम्य भृशं विलप्य व्याकुलचेता रोदितुम् आरभ्य तताय कथयामास, हे पितः, आशिषं मह्यमपि
३५ देहि। तत इस्हाक् बभाषे, तव सहज आगत्य वञ्चयन् तव प्राप्त-
३६ व्यामाशिषम् अग्रहीत्। तत एषौरुवाच, तदीयं नाम किं यथार्थं याकूब् नहि? यतः स वारद्वयं मामवञ्चयत्; पश्य स पूर्व्वं मम ज्येष्ठाधिकारं गृहीतवान्, इदानीमपि मम प्राप्तव्यामाशिषम् अग्रहीत्;
३७ स पुनरवोचत् किं मत्कृते त्वयैकाशी न रक्षिता? तदानीम् इस्हाक् एषावं प्रतिबभाषे, पश्याहं तं तव प्रभुमकार्षं, तदीयं सकलकुटुम्बञ्च तदधीनीकृतवान्। अपरं तस्य प्रतिपालनार्थं शस्यानि द्राक्षारसांश्च
३८ दत्तवान्; अतएव हे तनय, त्वदर्थम् इदानीं किं कर्त्तुं शक्नोमि? तत एषौः पुनरपि स्वतातं जगाद, हे तात तव किं केवलम् एकाशीरासीत्?
३९ हे तात मह्यमप्याशिषं प्रयच्छ। इति ब्रुवन् एषौरुच्चैः चक्रन्द। अनन्तरं तस्य तात इस्हाक् इमां वाचं गदितवान्, यस्मिन् देशे भूमिरुर्व्वरा न भवति, गगणाच्च शिशिरं न पतति तस्मिन् देशे तव वसति
४० भविष्यति। त्वं चन्द्रहासव्यवसायेन कालं यापयिष्यसि, स्वसहजस्य निघ्नीभविष्यसि च; यदा तु तव प्रभुत्वं भविष्यति, तदा स्वीयग्रीवातः तस्य युगं भंक्ष्यसि।

४१ इत्थं याकूब् स्वपितृत आशिषम् अलभत, तस्मात् एषौरीर्ष्यन् मनसा चिन्तयाञ्चकार, पितुरन्तकालः प्रायेणोपतिष्ठति, ततः परं याकूबं
४२ भ्रातरं हनिष्यामि। किन्तु ज्येष्ठपुत्रस्यैषाव एतस्मिन् वाक्ये रिब्कायाः कर्णगोचरीभूते, सा कनिष्ठसुतं याकूबं प्रति कथयामास, पश्य तव सगर्भ एषौ त्वां हन्तुं मनसि निश्चित्य सुस्थिर आस्ते। अतो हे ममात्मज, मद्व-
४३ चनम् आकर्णय। त्वं सम्पलाय्य हारन्नगरस्थितस्य मम सहजलाबनस्य
४४ समीपं याहि। यावत् तव सगर्भस्य क्रोधो न निवर्त्तते तावत्कालं तत्र
४५ तिष्ठ। पश्चात् त्वां प्रति भ्रातुः क्रोधे निवृत्ते त्वं तं प्रति यत् कृतवान् तस्मिन् तेन विस्मृते च सति नरं प्रहित्य तत्स्थानात् त्वाम् आनेष्यामि;
४६ एकदा द्वौ युवां कुतो हारयिष्ये? ततो रिब्का इस्हाकं जगाद, एताभ्यां हित्तीयकन्याभ्यां मम प्राणा व्याकुलीभवन्ति, यदि याकूब् हित्तीयकन्यानाम् अर्थात् एतद्देशीयकन्यानां मध्यात् अनयोस्तुल्यां काञ्चन कन्यां विवहति, तर्हि मम प्राणधारणे किं सुखं?

---

# २८ अष्टाविंशोऽध्यायः।

१ याकूबः पद्दनराम्देशं प्रेरणं ६ एषाव इस्रायेल् कन्यां विवहनं १० याकूबो यात्राकथनं स्वप्नदर्शनञ्च १८ स्वप्नदर्शनस्थानस्य वैथेल्नामकरणं तत्र स्थाने मानसप्रतिज्ञा च।

अनन्तरम् इस्हाक् याकूबम् आहूय आशिषं बभाषे, इत्यादिश्य च १ तं जगाद, किनान्देशीया कन्या त्वया नोद्वाह्या। उत्तिष्ठ पद्दनरामि २ स्वीयमातामह्या विथुयेलो गृहं गत्वा तत्र स्वमातुलस्य लावनः काञ्चन कन्यां विवह। सर्व्वशक्तिमान् ईश्वर आशिषं दत्त्वा त्वां बहुकुलं कर्त्तुं ३ फलवन्तं बहुप्रजञ्च क्रियात्। अपरम् इब्राहीमं प्रति दत्तामाशिषं ४ त्वयि तव वंशे च सफलां क्रियात्; तत ईश्वर इब्राहीमे यं देशं दत्तवान् यत्र स्थाने त्वमिदानीं विदेशी, तत्रैव देशे तवाधिकारो भविष्यति। तत इस्हाक् याकूबं विसृष्टवान् स च पद्दनरामीयविथुयेलः ५ आत्मजस्य लावनो, अर्थात् याकूब् एषावो मातू रिव्काया भ्रातुः समीपं प्रतस्थे।

अपरम् इस्हाक् याकूबम् आशिषम् उक्त्वा विवोढुं पद्दनरामं प्रति ६ विससर्ज; आशीर्व्वदनकाले च किनानीयां कन्यां विवोढुं न्यसेधत्; ततो याकूब् मातापित्रोराज्ञानुसारात् पद्दनरामं प्रति प्रतस्थिवान्, ७ एषौरिति विलोक्य किनानीयाः कन्याः प्रति स्वपितुरिस्हाकोऽसन्तुष्टिञ्च ८ विज्ञाय तस्य जायाद्वये सत्यपि इस्मायेलः सन्निधिं व्रजित्वा इब्राहीमः ९ पुत्रस्येस्मायेलः पुत्रीं निवायोतो भगिनीं महलत् नामिकां कन्यां व्यवहत्।

अनन्तरं याकूब् वेर्शेवातो हारणं प्रति यात्रां कृतवान्। सूर्य्येऽस्तं १० गते सति स कस्मिन् स्थान उत्तीर्य्य यामिनीं यापयामास; तदानीं स ११ तत्रत्यं पाषाणमेकम् उपधानीकृत्य तत्र निद्रातुम् अशेत। ततः स स्वप्ने १२ सोपानमेकं ददर्श, तस्य मूलं मेदिन्यां स्थितं शिरश्च गगणस्पर्शि, तेनेश्वरीयदूता अवरोहन्ति आरोहन्ति च, परमेश्वरस्तदुपर्य्युत्थितः कथ- १३ याञ्चकार, परमेश्वरोहं, तव पूर्व्वपुरुषस्येब्राहीम इस्हाकस्येश्वरः, त्वं यत्र देशे शेषे देशमिमं तुभ्यं तव वंशाय चाहं प्रदास्यामि। तव वंशो १४ धरण्या धूलिवत् असंख्यो भविष्यति, त्वञ्च पूर्व्वपश्चिमोत्तरदक्षिणासु दिक्षु समेधिष्यसे त्वत्तस्तव वंशाच्च मेदिनीस्थिताः सर्व्वजातय आशिषं १५ लप्स्यन्ते। अपरं त्वं यत्रैव गमिष्यसि, तत्रैव तव सहायो भविष्यामि,

त्वाञ्चावित्वा देशमेतम् आनेष्यामि; किन्तु तव सन्निधौ यदवोचं तत्सर्व्वं
१६ यावन्न सफलं करिष्यामि तावत् त्वां न परित्यक्ष्यामि। अनन्तरं भग्न-
निद्रो याकूब् जागरित्वा जगाद, स्थानेऽस्मिन् अवश्यमीश्वरोऽस्ति,
१७ किन्त्वहं तन्नाज्ञासिषं। भयादपरमपि व्याजहार, स्थानमिदं कीदृक्
भयङ्करम्; इदं स्थानमवश्यम् ईश्वरस्य भवनं स्वर्गद्वारस्वरूपञ्च।
१८ अनन्तरं याकूब् प्रत्यूष उत्थाय उपधानार्थं यं पाषाणं निदधे तं स्तम्भ-
१९ रूपं संस्थाप्य तदुपरि तैलमसिञ्चत्। तस्य स्थानस्य नाम बैथेलम्
(ईश्वरभवनं) चकार; किन्तु पूर्व्वं तस्य स्थानस्य नाम लूस् आसीत्।
२० अपरं स मनसैतत् प्रतिज्ञातवान्, यदीश्वरो मम सहायः सन् मम
गन्तव्याध्वनि मां रक्षेत्, भोजनार्थम् अन्नं परिधानार्थं वसनं दद्याच्च,
२१ पुनः क्षेमेण परावर्त्त्य पितृसदनम् आनयेत्, तर्हि परमेश्वरो मम प्रभु
२२ र्भविष्यति, मया च स्थापितस्यास्य स्तम्भरूपस्य पाषाणस्योपरि ईश्वरी-
यभवनं निर्म्मायिष्यते; अपरं तेन मह्यं यत्किञ्चित् दायिष्यते तस्य
दशमांशम् अहं तस्मै दास्याम्यवश्यम्।

---

# २९ ऊनत्रिंशोऽध्यायः।

१ हारन्‌चेत्रे याकूब् उपस्थानं ९ राहेलः समीपे परिचयदानं लावनः सकाशात् आतिथ्यग्रहणं १५ राहेलं प्राप्तुं सप्त वत्सरान् दास्यकर्म्मकरणं २१ भ्रान्त्या राहेल् विनिमयात् लेयां प्राप्य राहेलः कृते पुनश्च सप्तवत्सरान् दास्यकर्म्मकरणं ३१ लेयाया अपत्योत्पत्तिश्च।

१ ततः परं याकूब् गच्छन् पूर्व्वदेशम् उपस्थाय वीक्षाञ्चक्रे, मध्येप्रान्तरं
२ प्रहेः समीपे मेषाणां त्रयोव्रजाः शयानाः सन्ति; यतो लोकास्तस्य
प्रहेरपो मेषान् पाययन्ति; किन्तु तस्य प्रहेः समीपे सर्व्वेषां पशुव्रजानां
मेलनं यावत् तावत् तस्य प्रहेर्मुखे वृहत्पाषाण एक आच्छादक-
३ स्तिष्ठति। अनन्तरं नरास्तस्मात् पाषाणम् अपसार्य्य मेषव्रजान् अपः
४ पाययन्ति, पुनरपि प्रहेरास्ये पाषाणं निदधति। याकूब् तान् अपृच्छत
५ हे भ्रातरो युष्माकं निवासः कुत्र? ततस्ते प्रत्यूचुः, हारन् नगर्यां। तदा
याकूब् पृष्टवान्, यूयं नाहोरः पौत्रं लावनं परिचिनुथ न वा? ते
६ कथयामासुः, परिचिनुमः। याकूबा पृष्टं, स क्षेमेण वर्त्तते? ते प्रत्य-
वोचन्, स क्षेमेण वर्त्तते; पश्यासौ तदीया कन्या राहेल् मेषव्रजम्
७ आदायायाति। तदा याकूब् अवादीत्, इदानीमपि बहुवेला विद्यते,

मेषव्रजानाम् एकत्र मेलनसमयो नाभूत्; यूयं मेषव्रजान् अपः पाययित्वा पुनरपि चारयितुं नयत। किन्तु ते कथयाञ्चक्रुः, सर्व्वान् मेष- ८ व्रजान् एकत्र मेलयित्वा यावत् प्रहेरास्यात् पाषाणो नापसार्य्यते तावत् वयं तत् कर्त्तुं न शक्नुमः, तथा भूतएव वयं मेषान् अम्भः पाययिष्यामः।

याकूब् तैः सार्द्धम् इत्थं कथां कथयति तस्मिन् समये राहेल् आत्मनः ९ पितुः पशुव्रजम् आदाय समुपातिष्ठत्, यतः सा मेषपालिकासीत्। तदानीं याकूब् आत्ममातुलस्य लावनः कन्यां राहेलं तस्य मातुलस्य १० पशुव्रजञ्च दृष्ट्वा समीपं व्रजन् प्रहेराननात् पाषाणम् अपसार्य्य मातुलस्य लावनः पशुव्रजं तोयमपाययत्।

अनन्तरं याकूब् राहेलं चुम्बन् उच्चै रुरोद, तव पितु र्भागिनेयो ११ रिबकायाः पुत्रोऽहमिति परिचाययामास च। तदा राहेल् द्रुतं व्रजित्वा १२ स्वतातं वार्त्ताम् अवदत्। ततो लावन् स्वभागिनेयस्य याकूबो वार्त्तां १३ श्रुत्वा तूर्णं तं साक्षात् कर्त्तुम् वव्राज; तमालिङ्ग्य चुम्बित्वा स्वभवनं निनाय च; पश्चात् स निजागमनस्य सर्व्ववृत्तान्तं लावनं ज्ञापयामास। ततो लावन् कथयामास, त्वं ममास्थिमांसस्वरूपोसि; ततो याकूब् तस्य १४ निवेशने मासमेकं अभिन्यवसत्।

अनन्तरं लावन् याकूबं जगाद, त्वं कुटुम्बः सन् किं विना वेतनं १५ मम दास्यकर्म्म करिष्यसि? तस्मात् किं वेतनं ग्रहीष्यसि, तद् ब्रूहि। तस्य लावनो द्वे दुहितरावास्तां; तयो र्ज्येष्ठाया नाम लेया कनिष्ठाया १६ नाम राहेल्। लेया क्लिन्ननयनासीत् किन्तु राहेल् रूपवती सुन्दरी १७ चासीत्। याकूब् तस्यां राहेल्यप्रीयत, तेन स प्रत्यवादीत् तव कनिष्ठ- १८ कन्याया राहेलः कृते सप्तवत्सरान् दास्यं कर्म्म करिष्यामि। ततो लावन् १९ उवाच, अन्यपात्राय दानात् तुभ्यं दानमुत्तमं भवति, तस्मात् मम सन्निधौ तिष्ठ। इत्थं स याकूब् राहेलः कृते सप्त वत्सरान् दास्यं कर्म्म कृतवान्; २० राहेलं प्रति तस्यानुरागात् सप्त वत्सरा अपि तेनाल्पदिनवत् बुबुधिरे।

अनन्तरं याकूब् लावनं जगाद, नियमितः कालः सम्पूर्णोऽभूत्, इदानीं २१ मम भार्य्यां मह्यं देहि, तामहम् उपैष्यामि। ततो लावन् तत्रत्यान् २२ सर्व्वजनान् आमन्त्र्य भोजयित्वा यामिन्यां लेयानामिकां निजदुहितरम् २३ आनीय तस्मै दत्तवान्, तदा याकूब् तामुपजगाम। लावन् निजकन्याया २४ लेयाया दास्यकर्म्म कर्त्तुं सिल्पानामिकां स्वीयदासीं दत्तवान्। किन्तु २५

प्रभाते सति सा लेयेति दृष्ट्वा याकूब् लाबनम् उक्तवान्, मया सार्कं त्वया किमिदं व्यवहृतं ? मया राहेलः कृते किं तव दास्यं कर्म्म नाकारि ?
२६ तयाले किमर्थं त्वयाहं वञ्चितः ? तदा लाबन् अचकथत्, अस्माकमत्र
२७ स्थाने ज्येष्ठायामदत्तायां सत्यां कनिष्ठा न दातव्या। अत इदानीं तस्याः सप्त दिनानि यापय यदि पश्चात् अपरान् सप्तवत्सरान् मम दास्यं
२८ कर्म्म करिष्यसि, तर्ह्यन्यां कन्यामपि तुभ्यं प्रदास्यामि। ततो याकूब् तथैव
२९ कृतवान्, अर्थात् तस्याः सप्तदिनानि यापितवान्। अनन्तरं लाबन् दुहितरं राहेलं तं विवाहयामास; राहेलो दास्यकर्म्मकरणार्थं विल-
३० हानामिकां निजदासीं दत्तवान्। तदानीं स राहेलम् अभिजगाम; लेयातो राहेलि बहु प्रीतवान् राहेलः कृते पुनः सप्त वत्सरान् दास्यं कर्म्म कृतवान्।

३१ ततः परमेश्वरो लेयामवज्ञातां ज्ञात्वा तस्यै गर्भधारणशक्तिं दत्तवान्;
३२ किन्तु राहेल् बन्ध्या बभूव। ततो लेया गर्भवती भूत्वा पुत्रं प्रसुषुवे, तस्य च नाम रूबेन् (पुत्रं पश्यतेति) कृतवान्, यतः सा कथयामास, परमेश्वरो निश्चितं मम दुःखमपश्यत्; अतः पतिः साम्प्रतं मयि प्रेष्यते।
३३ अपरं सा पुनर्गर्भवती सती पुत्रं प्रसूय गदितवती, अहमवमान्या विद्ये, परमेश्वर इति ज्ञात्वा मह्यम् इमं तनयञ्च दत्तवान्, पश्चात् तस्य
३४ नाम शिमियोनं (श्रवणं) चक्रे। पुनश्च सा गर्भवती सती पुत्रं प्रसूय कथितवती, एतावतो दिनात् परं स्वामिना मयि समासंक्ष्यते; यतो मया तस्य त्रयः सुताः प्रासूयन्त, तस्मात् तदीयं नाम लेविं (आसक्तं)
३५ चक्रे। अनन्तरं पुनरपि तस्या गर्भे सति सा सुतं प्रसूय प्रोवाच, इदानीम् अहं परमेश्वरं प्रशंसामि; तस्मात् तदीयं नाम यिहूदां (प्रशंसां) अकरोत्; ततः परं तस्या गर्भो निववृते।

---

## ३० त्रिंशत्तमोऽध्यायः।

१ लेयां प्रति राहेलः ईर्षणं १४ राहेलो दूदाफलप्रापणं १९ लेयायाः पुनरपत्यजननं २२ राहेलः सुतस्य यूषफो जननं २५ याकूबि पितृसदनं यातुमिच्छति तेन सार्द्धं लाबनो नियमनिर्णयनं ३७ सम्पत्तिसाप्तं याकूब उपायचिन्तनञ्च।

१ अपरं स्वतो याकूबः सुतो न जातवान् इति विलोक्य राहेल् भगिनीम् ईर्ष्यती याकूबं जगाद, मह्यमपत्यानि देहि, नो चेदहं मरि-
२ ष्यामि। तदा याकूब् राहेले प्रकुप्य प्रोवाच, त्वदीयगर्भफलं न्यवारि

येनेश्वरेण तस्य किमहं प्रतिनिधिः? तदानीं राहेल् बभाषे, तर्हि ३
मदीयदासीं बिल्हाम् उपेहि, तया पुत्रं प्रसूय मम क्रोडे़ दत्ते तेनाहं
पुत्रिणी भविष्यामि। एतत् कथयित्वा सा स्वीयदासीं बिल्हां स्वस्वा- ४
मिनं व्यवाहयत्। तदा याकूबि तामुपगते बिल्हा गर्भिणी सती याकूबः ५
सुतमेकं प्रसूतवती। तदानीं राहेल् अवादीत्, ईश्वरो मम विचार- ६
मकार्षीत्, यतः स मम काकूक्तिं निशम्य मह्यं सुतमदात्; अतः सा तस्य
नाम दानं (विचारम्) अकुरुत। अनन्तरं राहेलो बिल्हा दासी पुनर्गर्भं ७
धारयन्ती याकूबो द्वितीयं सुतं प्रसूतवती। तदानीं राहेल् कथयामास, ८
महायत्नेनाहं भगिन्या समं मल्लयुद्धं कृत्वा जितवती; अतः सा तस्य
नाम नप्तालिं (मल्लयुद्धं) कृतवती। अनन्तरं लेया स्वीयगर्भनिवृत्तिम् ९
अवगम्य स्वीयदासीं सिल्पानामिकां आनीय स्वस्वामिनं याकूबं विवाह-
यामास। ततो लेयाया दास्याः सिल्पाया गर्भात् याकूबः सुतएको जज्ञे। १०
तदानीं लेया कथितवती निवहएक आयाति, तस्मात् तस्य नाम गादं ११
(निवहं) कृतवती। अपरं लेयाया दासी सिल्पा याकूबो द्वितीयं सुतं १२
प्रसुषुवे। ततो लेया जगाद, धन्याहं सर्व्वा योषितो मां धन्यां वदि- १३
ष्यन्ति, तस्मात् सा तस्य नाम आशेरं (धन्यं) चकार।

अपरं गोधूमकर्त्तनकाले रूबेन् बहि र्गत्वा क्षेत्रे दूदाफलं प्राप्यानीय १४
स्वजनन्यै लेयायै दत्तवान्; तदा राहेल् लेयाम् अवदत्, तव सुतेना-
नीतानां दूदाफलानां कानिचित् मह्यं देहि। ततः सा बभाषे, त्वया १५
मम स्वामी गृहीत, इति किं क्षुद्रकार्य्यं? त्वं मम सुतस्य दूदाफलमपि
जिघृक्षसि? तदा राहेल् जगाद, तव सुतस्य दूदाफलविनिमयात् सोद्य
यामिन्यां त्वया सह शयिष्यते। तत्पश्चात् सन्ध्याकाले क्षेत्रात् याकूब १६
आगमनकाले लेया तं साक्षात् कर्त्तुं बहि र्गत्वा बभाषे, अद्य यामिन्यां
मया सह त्वया शयितव्यं यतोहं स्वसुतस्य दूदाफलं दत्त्वा त्वां भाटकित-
वती तस्मात् स तस्यां रजन्यां तया सार्द्धं अशेत। तत ईश्वरेण लेयायाः १७
प्रार्थनायां श्रुतायां सत्यां सा पुन र्गर्भिणी भूत्वा याकूबः पञ्चमं पुत्रं
प्रसुषुवे। तदा लेया कथयामास, मह्यम् ईश्वरो वेतनम् अददात्, यतो १८
मया स्वामिने दासी दत्ता, तस्मात् सा तस्य नामधेयम् इषाखरं (वेतनं)
कृतवती।

अनन्तरं लेया पुनरपि गर्भं धारयन्ती याकूबः षष्ठं पुत्रं प्रसूतवती। १९
तदा लेया कथयाञ्चकार, मह्यम् ईश्वर उत्तमं यौतुकं दत्तवान् इदानीं २०

मम स्वामी मया सार्द्धं वत्स्यति, यतो मत्तस्तस्य षट् सुता अजायन्त;
२१ तस्मात् सा तस्य नाम सिबूलून् (वासं) चकार। तत्पश्चात् तस्याः सुतैकायां जातायां तस्या नाम सा दीणां कृतवती।
२२ अनन्तरम् ईश्वरो राहेलं स्मरन् तस्याः प्रार्थनां निशम्य गर्भधारण-
२३ शक्तिम् अददात्। तदानीं तस्या गर्भे सति सा सुतं प्रसूय कथितवती,
२४ ममापमानम् इदानीम् ईश्वरो दूरीकृतवान्। ततः सा तस्य नाम यूषफं (वृद्धिं) कृत्वा कथितवती, परमेश्वरो मह्यम् अपरमेकं सुतं ददातु।
२५ अनन्तरं राहेलो यूषफि जातवति याकूब् लाबने कथयाञ्चकार,
२६ स्वदेशे स्वस्थानं गन्तुं मां विसृज; ययोः कृते तव दास्यं कर्म्माहं अकरवं, मम ते योषिते सुतांश्च मयि समर्प्य यातुमादिश; ततो यथा
२७ तव दास्यकर्म्म कृतवान्, तत् त्वं जानासि। तदानीं लाबन् तस्मै कथयामास, विनयेहं, त्वमिदानीं मय्यनुग्रहं कुरु, यतोहम् अनुभवेन ज्ञातवान् केवलं तव कृतएव परमेश्वरो मह्यम् आशिषं दत्तवान्।
२८ अतः स उक्तवान् स्वयमेव त्वं यत् वेतनं निरूपयिष्यसि, तदेवाहं तुभ्यं
२९ वितरिष्यामि। तदा याकूब् तस्मै कथितवान्, मया यादृशं तव दास्यं कर्म्म कृतं, मम सन्निधौ तव पशवश्च यादृग् विद्यन्ते, तदपि त्वया
३० ज्ञायते। यतो मदागमनात् पूर्व्वं तव कनीयसी सम्पत्तिरासीत्; किन्तु साम्प्रतं प्रभूताभूत्; मदागमनम् आरभ्य परमेश्वरेण तव मङ्गलं
३१ व्यधायि; किन्तु मया निजपरिजनाय कदा सञ्चेष्यते? ततो लाबन् कथितवान, तुभ्यमहं किं दास्यामि? याकूब् अवदत् त्वं मह्यम् अन्यं किमपि न दत्त्वा यदि मां प्रति कर्म्मैतत् करोषि, तर्हि तव पशून्
३२ पुनरहं चारयित्वा पालयिष्यामि। अद्य मया तव सर्व्वेषां पशुव्रजानां मध्यं गत्वा कर्व्वुरवर्णा विचित्रा मेषाः कपिशवर्णा मेषशावका विचित्राः कर्व्वुरवर्णाश्छागाश्च पृथक् कारिष्यन्ते; ते सर्व्वे मम वेतनरूपा भवि-
३३ ष्यन्ति। इतः परं यदा तव समक्षं मम वेतनमुपस्थास्यति, तदानीं मम न्यायस्य प्रमाणमेकं भविष्यति; तत्र यदि छागानां मध्ये कर्व्वुर-वर्णात् विचित्राच्च भिन्ना मेषाणां मध्ये धूसलवर्णात् अन्ये तिष्ठन्ति, तर्हि
३४ ते मम तास्कर्य्यरूपेण गण्या भविष्यन्ति। तदानीं लाबन् उवाच,
३५ भद्रं तव वचनानुसारादेव भविष्यतीति। अपरं स तद्दिनएव विन्दु विचित्रान् कर्व्वुरवर्णांश्च छागान्, सर्व्वाः विचित्राः कर्व्वुरवर्णाश्छागीश्च यासु च किञ्चित् शुक्लवर्णम् आसीत्, ताः कपिशवर्णान् सर्व्वमेषांश्च पृथक्

कृत्वा स्वपुत्त्राणां हस्तेषु समर्प्य दूरं दिनत्रयमार्गं प्रेषयामास; पश्चात् ३६ याकूब् लाबनोऽवशिष्टपशुव्रजान् चारयितुम् आरब्धवान्।

अपरं याकूब् लिब्नी लूसः अर्मोनां वृक्षाणां सरसाः शाखाश्छित्त्वा ३७ तत्त्वचं विमोच्य काष्ठस्य शुक्लरेखा बहिष्कृतवान्। अनन्तरं यदा ३८ पशवो जलं पातुम् आयान्ति, तदानीं ते यथा गर्भं धारयन्ति, तदर्थं तोयपानकाले पशूनां सङ्गमे तेषां सम्मुखे पानपात्रस्य मध्ये ताः शाखा उच्चीकृत्य स्थापयितुम् आरभत। अतएव तेषां तासां शाखानां सन्निधौ ३९ गर्भधारणात् विन्दुचित्रिताः कर्व्वुरवर्णा विचित्रा वत्सा अजायन्त। ततो याकूब् तान् वत्सान् पृथक् कृतवान् लाबनो विन्दुचित्रितानां कपि- ४० शवर्णानां वत्सानां सम्मुखे निजव्रजं स्थापितवान्; इत्थं स लाबनो व्रजेन सार्द्धं न निधाय निजव्रजं पृथक् चक्रे। अपरं बलिनः पशवो ४१ यथा शाखासमीपे गर्भान् धारयन्ति, तदर्थं पानभाजनमध्ये पशूनां समक्षं ताः शाखाः स्थापयामास, किन्तु दुर्ब्बलानां पशूनां समक्षं ४२ नास्थापयत्, तेन यावन्तो बलवन्तः पशवस्तावन्तएव याकूबो बभूवुः। अतो याकूब् अतिवर्द्धिष्णु र्बभूव अर्थात् तस्य पशुदासदासीमहाङ्गर्द- ४३ भाश्च बहवो बभूवुः।

---

## ३१ एकत्रिंशत्तमोऽध्यायः।

१ लाबनः समीपात् याकूबः पलायनं १७ लाबनो पुत्तलिकानां राहेलापहरणं २२ याकूब पलायनवार्त्ताश्रवणं २५ तस्य पश्चाद्धावनं ३० दुष्टे देवान्वेषणं ३६ लाबनं प्रति याकूबस्तिरस्कारः ४३ याकूबा सह लाबनो नियमश्च।

अपरं याकूब् अस्माकं तातस्य सर्व्वस्वमग्रहीत्, अस्मत्पितु र्धनात् १ तस्यैतान्यैश्वर्य्याणि जातानीति लाबनः पुत्त्राणां वचनं याकूब् श्रुतवान्। लावन् तं प्रति पूर्व्ववत् नहीति च तस्य वदनं विलोक्य याकूब् बुबुधे। २ ततः परमेश्वरो याकूबं बभाषे, त्वम् आत्मनः पैटकदेशं ज्ञातीनां सन्निधिं ३ परावृत्य याहि, अहं तव सहायोस्मि। अतो याकूब् प्रान्तरे पशूनां ४ सन्निधौ राहेलं लेयाञ्च समाहूय बभाषे, युवयोः पितुर्वदनं मां प्रति ५ पूर्व्ववत् नहि इत्यहमपश्यं, किन्तु मम पितुरीश्वरो मम सहाय आस्ते। अहं यथाशक्ति युष्माकं पितु र्दास्यं कर्म्म कृतवान् तत् युवां जानीथो ६ युवयोः पिता मां वञ्चितवान् दशकृत्वो मम वेतनस्यान्यथा कृतवांश्च ७ किन्त्वीश्वरो मम हानिं कर्त्तुं तं न्यवारयत्; यतो विचित्राः सर्व्वे पशव- ८

स्तव वेतनस्वरूपा भविष्यन्तीति वाचं यदि स स्वयम् अवदत्, तर्हि सर्व्वेभ्यः पशुभ्यएव विचित्राः पशवो जाताः, अपरं रेखाविशिष्टाः पशवः सर्व्वे तव भविष्यन्ति यद्येतत् अवादीत्, तर्हि सर्व्वएव पशवो रेखायुक्ता
९ बभूवुः। इत्थम् ईश्वरो युवयोः पितुः पशुधनम् आदाय मह्यं दत्तवान्।
१० यतः पशूनां गर्भाधानकाले ऽहं स्वप्ने स्वचक्षुषा दृष्टवान्, व्रजस्य मध्ये योषित्पशूनाम् उपरि यावन्तः पुंपशव आरोहन्ति, तावन्तएव विन्दु-
११ चित्रिता विचित्रा रेखायुक्ताश्च भवन्ति। तदानीम् ईश्वरीयदूतः स्वप्ने मां याकूब् इत्याहूतवान्, तदा मया प्रतिभाषितम् अहमुपस्थितोस्मीति।
१२ ततः स उक्तवान्, पश्यैतत् योषित्पशूनाम् उपरि यावन्तः पुंपशव आरोहन्ति, तावन्तएव विन्दुचित्रिता विचित्रा रेखावन्तश्च; यतस्त्वां
१३ प्रति लाबन् यादृग् व्यवहरति, तदहं दृष्टवान्। यत्र स्थाने त्वं स्तम्भेऽ-भिषेचनं मम सन्निधौ प्रतिश्रवणञ्च कृतवान् तस्य बैथेल् ईश्वरोहम्; इदानीम् उत्थाय देशमिमं परित्यज्य स्वीयज्ञातीनां देशं परावृत्य
१४ याहि। ततो राहेल्लेये प्रतिजगदतुः, पैतृकनिवेशन आवयोः किं
१५ कोप्यंशोस्ति वाधिकार आस्ते? आवामिदानीं तस्य समीपे विदे-शिवेन किं गणिते नहि? यतः स आवां विक्रीय मूल्यं भुक्तवान्।
१६ तस्मात् ईश्वर आवयोः पितुः सकाशात् यावन्ति धनानि गृहीतवान्, तावन्ति सर्व्वाण्यावयोः स्वीयापत्यानाञ्च ईश्वरस्तुभ्यं यत् कथितवान् त्वं तदेव कुरु।

१७ तदानीं याकूब् उत्थाय स्वीयापत्यानि योषितश्च महाङ्गान् आरो-
१८ हयामास, पद्दनरामि तेन ये पशवो याश्च सम्पत्तिरुपार्जिताः किनान्
१९ देशे स्वतातस्येसहाकः समीपं गन्तुं तान् नीतवान्। तदानीं लाबन् मेषलोमानि छेत्तुं गतवान्, इत्यवकाशे राहेल् निजतातस्य पुत्तलिका
२० अपजहार। अनन्तरं याकूब् काञ्चन वार्त्ताम् अनुक्का लाबनम् अरामीयं
२१ वञ्चयित्वा तेनाज्ञातं पलायाञ्चक्रे। इत्थं स निजसर्व्वस्वं गृह्णन् अपलायत; फरात् नद्याः पारं गत्वा गिलियदं गिरिं सम्मुखीकृत्य चलितवान्।

२२ अनन्तरं तृतीयदिवसे लाबन् इत्थं याकूबः पलायनवार्त्तां प्राप्य
२३ निजकुटुम्बान् नीत्वा तस्य पश्चात् सप्तदिनगम्यमार्गं धावन् गिलियद्-
२४ गिरौ तं धृतवान्। किन्त्वीश्वरो रात्रौ स्वप्ने दर्शनं दत्वा अरामीयलाबनं बभाषे, सावधानो भव, भद्रं विना याकूबम् अभद्रं मा वद।

२५ अनन्तरं लाबन् याकूबं दधार, तदानीं याकूबो दूष्यं पर्व्वतोपरि

स्थापितमासीत् ततो लाबनपि कुटुम्बैः सह गिलियद्पर्व्वतोपरि दूष्यं स्थापयामास। ततः परं लाबन् याकूबे कथयामास, त्वं कुत ईदृक् कर्म्म २६ कृतवान्? मां वञ्चयित्वा अस्त्रधृतलोकाइव मम कन्ये गृह्णन् कुत आगमः? त्वं मां वञ्चयन् कथं गुप्तः पलायितः? मां वार्त्तां नावादीः, २७ तस्यामुक्तायां सत्याम् अहं त्वां आह्लादेन डिण्डिमवीणावाद्यगानपूर्व्वकं व्यसर्क्ष्यम्। त्वं पुत्रान् कन्याश्च चुम्बितुं मह्यं नादाः कर्म्मेदम् अतीव २८ मूढस्य कृतवान्। त्वां हिंसितुं मम करः समर्थो भवति, किन्तु गतायां २९ यामिन्यां तव पितुरीश्वरो मामवदत्, सावधानः सन् विना भद्रम् किमप्यभद्रं याकूबं मा वादीः।

अपरं निजतातनिवेशनं यातुं तवातीव वाञ्छायां जातायां त्वं यातु- ३० मुद्यतोसि, तद् अस्तु, किन्तु मम देवाः कुतश्चोरिताः? ततो याकूब् ३१ लाबनं प्रतिजगाद, त्वंचेद् बलात् निजकन्ये मत्तो ऽपहरेः, इति चिन्तयित्वा भीतवानहं। किन्तु मृगयित्वा यस्य निकटे तव देवान् ३२ प्राप्स्यसि, स न जीविष्यति। ममात्र त्वदीयं यदस्ति, तद् अस्माकं कुटुम्बानां समक्षम् अन्विष्य गृहाण; यतो याकूब् राहेलस्तत् चौर्य्यं नाजानात्। तदानीं लाबन् याकूबो लेयाया द्वयोर्दास्योश्च दूष्यगृहाणि ३३ गत्वा गवेषयामास, किन्तु न लेभे। अनन्तरं स लेयाया दूष्यतो राहेलो दूष्यगृहं प्रविवेश। किन्तु राहेल् ताः पुत्तलिका आदाय ३४ महाङ्कस्य सज्जाया अन्तः स्थापयित्वा तदुपरि समुपविवेश; ततो लाबन् तस्याः सर्व्वं दूष्यगृहं मृगयित्वापि ता न प्राप्तवान्। तदानीं ३५ राहेल् ताताय कथयामास; भवतः समक्षम् उत्थातुं न शक्ताहं हे प्रभो तेनासन्तुष्टो माभूत् यतोहं स्त्रीधर्म्मिणी विद्ये; तस्मात् तेनान्विष्यापि पुत्तलिका न प्राप्ताः।

तदानीं याकूब् क्रुद्धन् लाबनं भर्त्सयित्वा जगाद, मम कोऽपराधः किं ३६ पापं वा विद्यते, यत् त्वं प्रज्वलन् मम पश्चात् धावन् आगतवान्? त्वं मम ३७ सर्व्वाणि वस्तूनि मृगयित्वा निजगृहस्य किमपि वस्तु यदि प्राप्तवान्, तर्हि तद् मम तव च कुटुम्बानां साक्षात् निधेहि, इमे पक्षयोरुभयो विचारं करिष्यन्ति। एतान् विंशतिवत्सरान् यावत् तव गृहे स्थितवा- ३८ नहं; तावत् तव मेषीणां छागीनाञ्च गर्भस्रावोपि नाभवत्; तव व्रजस्य मेषानप्यहं न भुक्तवान्। वरं हिंस्रजन्तुना यो विदारितः सोपि तव ३९ समीपं मया नानीतः, तां हानिं स्वयमहं सोढवान्; दिवा रात्रौ च

४० यश्चोरितस्तद्विनिमयो मत्तो गृहीतस्त्वया। अहं दिवसस्योत्तापात्
४१ रात्रेः शीताच्च मृतकल्पोऽभवं; मम लोचनतो निद्रा दूरं गता। इत्थ-
महं विंशतिवत्सरान् यावत् तव गृहे दास्यं कर्म्म कृतवान्, तत्र तव
द्वयोः कन्ययोः कृते चतुर्दश वत्सरान् तव पशूनां कृते षट् वत्सरान्
दास्यवृत्तिं कृतवान्; तन्मध्ये त्वं मम वेतनान्यथा दशकृत्वः कृतवान्।
४२ यो मम पैतृक ईश्वरोऽर्थात् इब्राहीम ईश्वर इस्हाकस्य भयस्थानं स
यदि मम सहायो नाभविष्यत् तर्हीदानीं त्वमवश्यं मां रिक्तहस्तं
व्यसर्ज्यः! ईश्वरो मम दुःखं करपरिश्रमञ्च दृष्टवान् तस्मात् गतायां
यामिन्यां त्वाम् अतर्जयत्।

४३ तदानीं लाबन् याकूबं प्रत्यवदत्, एताः कन्या ममैव कन्याः, एते
बालका ममैव बालका, एष पशुव्रजो ममैव पशुव्रजः, यद्यत् पश्यसि
४४ तत् सर्व्वं ममैवास्ते। अत एतयो र्निजकन्ययो स्तयोः प्रसूतापत्यानाञ्च
कृते किमिदानीं कर्त्तुं शक्नोमि? किन्त्वागच्छ त्वया मया नियमो निर्णीयते
४५ स तव मम च साक्षी स्थास्यति। तदानीं याकूब् पाषाणमेकं गृहीत्वा
४६ स्तम्भम् अस्थापयत्। याकूब् निजकुटुम्बान् अवदत्, यूयमपि पाषा-
णान् आनीय राशिं कुरुत, ततस्ते पाषाणान् आनीय राशिमेकं
४७ चक्रुः, तत्र स्थाने तस्मिन् राशौ च ते स्वयं बुभुजिरे। अनन्तरं लाबन्
तस्य नाम यिगर्साहदुथां (साक्षिराशिं) चकार, किन्तु याकूब् तस्य
४८ नाम गलियेदं (साक्षिराशिं) चकार। तदानीं लाबन् उवाच, राशि-
रयम् अद्य तव मम च साक्षी विद्यते, तस्मात् तस्य नाम गलियेदं
४९ मिस्पां च (रक्षिणं) कृतवान्। यतः सोऽकथयत्, अस्मासु परस्परम्
५० अदृष्टेषु सत्सु परमेश्वरो मम तव च रक्षकः स्थास्यति। यदि त्वं मम
कन्याभ्यां दुःखं ददासि वा मम कन्याभ्याम् इतरां कन्यां विवहसि, तर्हि
तदानीं कश्चिन्नपि समीपे न स्थितेपि मम तव चेश्वरः साक्षी भवि-
५१ ष्यति। लाबन् याकूबम् अपरमप्यवदत्, एतं राशिं वीक्षस्व मया स्थापितं
५२ मम तव च मध्यवर्त्तिनं एतं स्तम्भं पश्य च। अहम् अपकर्त्तुं राशेरस्य
पारमुत्तीर्य्य तव समीपं न गमिष्यामि, तथा त्वमपि अपकर्त्तुं राशेरस्य
स्तम्भस्य च पारमुत्तीर्य्य मम सन्निधिं न यास्यसि, तस्य साक्षी राशिरयं,
५३ तस्य साक्षी स्तम्भोयञ्च। एतस्मिन् इब्राहीम ईश्वरो नाहोर ईश्वर-
स्तयोः पूर्व्वपुरुषाणाञ्चेश्वरो मध्य आवयोर्विचारं करिष्यति; तदानीं
५४ याकूब् स्वपितुरिस्हाको भयस्थानस्य नाम्नि शपथं चकार। ततो याकूब्

तस्मिन् धराधरे बलिं दत्त्वा भोक्तुं निजकुटुम्बान् न्यमन्त्रयत्, तत्र ते भक्षित्वा धराधरे कृत्स्नां रात्रिं यापयामासुः। अनन्तरं लाबन् प्रत्यूषएव ५५ प्रोत्थाय निजदुहितरौ बालकांश्च चुम्बित्वाशिषं प्रोवाच यात्रां कुर्वंश्च निजदेशं प्रतस्थे।

---

## ३२ द्वात्रिंशत्तमोऽध्यायः।

१ याकूबो दर्शनं एषावं प्रति वार्त्ताप्रेरणं ६ दूतस्य प्रत्यागमनं याकूबः प्रार्थना १३ उपढौकनासादनं १६ उपढौकनप्रेषणं २४ याकूबो मल्लयुद्धं ३१ खञ्जस्य तस्य नदी पारगमनञ्च।

तदनन्तरं याकूबा यात्रायां कृतायां सत्यां ईश्वरीया दूतास्तस्य १ प्रत्यक्षा बभूवुः। तदानीं याकूब् तान् विलोक्य कथितवान्, ईश्वरीय २ सैन्यानीमानि, तस्मात् तस्य स्थानस्य नाम मह्नयिमं (सैन्यद्वयं) चकार। ततः परं याकूब् अग्रस्थितसेयीरदेशीयम् इदोमप्रदेशं प्रति भ्रातुरेषावः ३ समीपं दूतान् प्रेरयित्वा तान् इत्याज्ञापयामास, यूयं मम प्रभुमेषावम् ४ इमां वार्त्तां वदत, तव दासो याकूब् त्वां ज्ञापितवान्, अहम् अद्य यावत् लाबनः समीपे प्रवासं कृत्वागतोस्मि। मम गोमेषगर्द्दभादीनां- ५ व्रजा दासा दास्यश्च विद्यन्ते, ततोहं स्वप्रभोरनुग्रहदृष्टिं प्राप्तुं त्वां प्रति वार्त्तां प्रहितवान्।

अनन्तरं दूताः प्रत्यागत्य याकूबं जगदु वयं तव भ्रातुरेषावः समीपं ६ अगमाम; स चतुःशतानि लोकान् गृहीत्वा त्वां साक्षात् कर्त्तुम् एति। ततो याकूब् अतीवभीतो दुःखितश्च बभूव सङ्गिनो लोकान् गोमेषादिसर्व्व- ७ व्रजान् महाङ्गांश्च विभज्य द्वौ निवहौ कृत्वा बभाषे एषौरागत्य यदि निवहमेकं प्रहरिष्यति, तथापीतरो निवहो जीविष्यन् पलायिष्यते। ८ तदानीं याकूब् उक्तवान्, हे मम पितुर् इब्राहीम ईश्वर मम पितुरि- ९ स्हाक ईश्वर, त्वमेव परमेश्वरस्त्वं स्वयं मह्यं कथितवान्, त्वं स्वदेशे ज्ञातीनां समीपं प्रत्यागच्छ, ततोहं त्वया सार्द्धं साधु व्यवहरिष्यामि। त्वम् एतं दासेयं प्रति दयां विश्वास्यत्वञ्च यादृक् प्रादुष्कृतवान् तस्य लव- १० स्यापि नाहं योग्योस्मि; अहं यष्टिमात्रं गृहीत्वा यर्द्दन्धुनीमिमां तीर्ण- वान्, किन्त्विदानीमहं निवहद्वयस्य पतिरभवम्। इदानीम् भ्रातुरेषावः ११ करात् मामव, यतः स आगत्य चेत् मां मम बालकान् तेषां मातॄश्च

१२ हनिष्यतीति विभेमि। त्वया कथितं, मया तव क्षेमं कृत्वाऽसङ्ख्यक-समुद्रसिकतेव तव वंशोऽवश्यम् एधयिष्यते।

१३ अपरं याकूब् तस्यां यामिन्यां तत्र स्थाने तिष्ठन् उपस्थितेभ्यः पशुभ्यः कतिचित् आदाय भ्रातुरेषावः कृते उपढौकनम् आसादितवान्; अर्थात्
१४ द्वे शते छाग्यो विंशतिश्छागा द्वे शते मेष्यो विंशति मेषा स्त्रिंशत् सवत्सा
१५ दुग्धवत्यो महाङ्गश्चत्वारिंशत् स्त्रीगव्यो दश वृषा विंशति गर्द्दभ्यो दश गर्द्दभाश्च तेन समासादिताः।

१६ अनन्तरं एकैकस्मिन् दासे एकैकं व्रजं समर्प्य तान् दासान् आज्ञा-पयामास, यूयं ममाग्रे गच्छत; मध्ये मध्ये स्थानं स्थापयित्वा च व्रजमेकैकं
१७ पृथक् कुरुत। ततः सोऽग्रगामिनं दासेयमित्याज्ञापयामास, मम भ्रातरेषावि त्वया साक्षात् कृते स यदा प्रक्ष्यति, त्वं कस्य दासेयः?
१८ कुत्र वा यासि? तवाग्रस्थितास्ते सर्व्वे च कस्य? तदानीं प्रतिवक्ष्यसि, एते सर्व्वे तव दासेयस्य याकूबः स निजप्रभवे एषावे सर्व्वान् एतान्
१९ उपढौकनीकृत्य प्राहात्, पश्य, स पश्चादस्माकं समेति। इत्थं द्वितीय-तृतीयप्रभृतीनां व्रजाणां पश्चाद्गामिनः सर्व्वदासान् आदिशन् जगाद,
२० एषावि साक्षात् भूते यूयमित्थं कथां कथयिष्यथ। अपरं कथयिष्यथ, पश्य, तव दासेयो याकूब् अस्माकं पश्चात् समायाति। यतः स मनसि कथयामास, पूर्व्वम् उपढौकनं प्रहित्य तं शान्तयिष्यामि, पश्चात् तं
२१ साक्षात् करिष्यामि, तेन स मां प्रत्यनुग्रहं करिष्यति। तस्मात् तदाग्र
२२ उपढौकनद्रव्यं गतं, किन्तु स्वयं तस्यां यामिन्यां निजनिवहस्य मध्ये तस्थिवान्। ततो यामिन्यां स उत्थाय स्वस्य द्वे जाये द्वे दास्यौ स्वीयैका-
२३ दशपुत्रांश्च यब्बोक्घाटे पारं तारयितुं निनाय। तान् तटिनीपारं तारयित्वा निजं सकलद्रव्यं पारं प्रहितवान्।

२४ तदानीं याकृबि तत्रैकाकिनि तिष्ठति सति पुरुष एक आप्रभातं
२५ तेन सार्द्धं मल्लयुद्धेन युयोध, किन्तु तं जेतुं न शशाक। इति वीक्ष्य स याकूब ऊरुसन्धिम् आजघान। तेन सार्द्धम् इत्थं मल्लयोधनात् याकूब
२६ ऊरुसन्धिः स्थानान्तरीबभूव। ततःपरं स पुरुष उदितवान्, मां त्यज यतः प्रभातमभूत्; तदानीं याकूब् उक्तवान् मह्यम् अदत्ताशिषं त्वां
२७ न त्यक्ष्याम्यहम्। पुनश्च तेन पुरुषेणावादि, तव किं नाम? स प्रत्युवाच,
२८ याकूब्। स उवाच, त्वं याकूब्नाम्ना पुन र्न विख्यास्यसि, किन्तु इस्रा-येला (ईश्वरजेत्रा) नाम्ना विख्यास्यसि, यतस्त्वम् ईश्वरेण मानुषेण च

राजवत् युद्धा जितवान्। तदानीं याकूब् जगाद, प्रार्थयेहं भवतः किं २९ नाम? वदतु। स कथितवान्, त्वं किं कृते मम नाम पृच्छसि? ततः परं तत्र याकूबम् आशिषं प्रोक्तवान्। तदा याकूब् तस्य स्थानस्य नाम ३० पिनूयेलं (ईश्वरवदनं) कृतवान्; यतः स गदितवान्, मयेश्वरीयवदने प्रत्यक्षतो दृष्टेपि मम प्राणा अजीवन्।

ततः परं तस्मिन् पिनूयेलः पारं गते भास्कर उदियाय; किन्तु तदी- ३१ योरुसन्धे र्भुक्तत्वात् स ऊरुणा खञ्जो बभूव। अत इस्रायेलन्वयैरद्यापि ३२ नोर्व्वोः सङ्कोचितमुख्यधमनि र्भुज्यते; यतो दूतेन याकूब ऊरो र्वंक्षणे स्पृष्टे तस्य धमनिः सङ्कोचिता बभूव।

---

## ३३ त्रयस्त्रिंशत्तमोऽध्यायः।

१ याकूब एषौसाक्षात्करणं १६ याकूबः सुक्कोत्गमनं १८ याकूबः शिखिम्नगर उपस्थानं भूमिक्रयणं वेदिनिर्म्माणञ्च।

अनन्तरं याकूब् लोचने उन्मील्य वीक्षमाणश्चतुःशतै र्नरैः सार्द्धम् १ आगच्छन्तम् एषावं ददर्श; ततो निजापत्यैः सार्द्धं लेयां राहेलं द्वे दास्यौ च पृथक् कृतवान्। फलतोऽग्रे स्वीयापत्यैः सार्द्धं दास्यौ तत्पश्चात् निजा- २ पत्यैः सार्द्धं लेयां सर्व्वशेषे यूषफा सार्द्धं राहेलं नियुज्य स्वयं सर्व्वेषाम् ३ अग्रे गत्वा भूमिष्ठः सन् सप्तकृत्वः प्रणमन् स्वभ्रातुः समीप उपस्थितवान्। तदानीम् एषौस्तेन सार्द्धं मेलितुं द्रुतमागत्य याकूबः कण्ठं धृत्वालिङ्गन- ४ चुम्बने चकार, तत उभावेव रुरुदतुः। स लोचन उन्मील्य योषितो ५ बालकांश्च विलोक्य पप्रच्छ, इमे तव के? ततः स प्रत्युवाच, ईश्वरस्तव दासं प्रति दयां कृत्वा सर्व्वाणीमान्यपत्यानि दत्तवान्। तदानीं ६ दास्यौ तयोरपत्यानि च समीपमागत्य प्राणमन्। अनन्तरं लेया तद- ७ पत्यानि चागत्य प्राणमन्; सर्व्वशेषे यूषफ्राहेलौ समीपमागत्य प्राणमताम्। एषौ पृष्टवान् अहमग्रे यान् पशुनिवहान् अदर्शं, ते किन्नि- ८ मित्ताः? याकूब् उदितवान्, प्रभोरनुग्रहप्राप्तिनिमित्ताः। तदानीम् एषौः ९ कथितवान, हे भ्रात मम प्रभूताः सन्ति तव यदास्ते तत् तवैव तिष्ठतु। याकूबोदितं नेत्थं भवतु, निवेदयामि, यद्यहं भवतो दृष्टानुग्रहं प्राप्तस्तर्हि १० मम करात् उपढौकनीयं द्रव्यं त्वया गृह्यतां; यतोहम् ईश्वरीयवदनदर्शनवत् त्वदीयवदनम् अदर्शं, तेन त्वमपि मयि तुष्टवान्। अत इदानीं ११ भवतः कृते यदुपढौकनीयद्रव्यं आनीयते तद् गृह्यतां मदीयेयं प्रार्थना;

यत ईश्वरो माम् अन्वग्रहीत् मम प्राज्यमास्ति च ; इत्थम् अत्याग्रहं
११ प्रार्थित एषौ स्तत् जग्राह। अनन्तरम् एषौः कथयामास, आगच्छावां
१२ यावः, युष्माकमग्रेऽहं गच्छामि। ततो याकूब् बभाषे, एते बालकाः कोमला
दुग्धवत्यो मेष्यो गवादिव्रजाश्च मम सङ्गिनः सन्ति, तत् प्रभुः पश्यति ;
१४ दिनैकमात्रमधिकं चालिताः सर्व्वे व्रजा मरिष्यन्ति। अतो निवेदयामि,
हे मम प्रभो, भवान् निजदासेयस्याग्रे यातु ; सेयीर्प्रदेशे मम प्रभोः
समीपोपस्थितिं यावत् पशूनां बालकानाञ्च गमनशक्तेरनुसारतः शनैरहं
१५ तान् नयामि। एषौः कथयामास, तर्हि मम सङ्गिनः कियन्तो मनुजा-
स्तव समीपे निधाय यानि ; याकूब् कथितवान् तेन प्रयोजनं किं?
साम्प्रति केवलं प्रभोरनुग्रहो भवतु।

१६　तत एषौस्तस्मिन्नेवाहनि सेयीरः पथा प्रत्याजगाम। किन्तु याकूब्
१७ सुक्कोतं गत्वा तत्र निजार्थं गेहं पश्वर्थं कूटीश्च निर्म्ममे ; तस्मात् तत्
स्थानं सुक्कोत् (कूटीति) व्याख्यत्।

१८　इत्थं याकूब् पद्दनरामः प्रत्यागम्य निर्व्विघ्नं किनान् देशान्तर्गतशि-
१९ खिम एकस्मिन् नगरे उपस्थाय नगरस्य वहि दूष्यं स्थापयामास। अन-
न्तरं यस्मिन् स्थाने दूष्यं स्थापितवान् तद् भूमिखण्डं शिखिमः पितृह-
२० मोरो वंशीयजनेभ्यः शतरूप्यमुद्राभ्य क्रीत्वा तत्र वेदीमेकां निर्म्मितवान्,
तन्नामधेयम् एलिलोहीइस्रायेल् (इस्रायेलः सर्व्वशक्तिमान् ईश्वरः) इति
कृतवांश्च।

---

## ३४ चतुस्त्रिंशत्तमोऽध्यायः।

१ शिखिमा दीणाया भ्रष्टत्वं त्वक्छेदनेन विवाहसम्बन्धनिर्णयः १० हमोरः शिखिमस्य वाक्येन नराणां त्वक्छेदाङ्गीकारः २५ त्वक्छेदेन पीडितजनान् प्रति याकूबीयसुतद्वयोराक्रमणं हननं लोठनञ्च।

१　अनन्तरं याकूबो लेयाया जायाया जाता दीणानामिका कन्या तद्देशी-
२ यकन्याः साक्षात् कर्त्तुं वहि र्गता। तदा हिव्वीय हमोरो नामाधिपतेः
३ सुतः शिखिम् तां विलोक्य बलादपहृत्य संगम्य भ्रंशयामास। याकूब-
स्तस्यां कन्यायां दीणायां तस्य मनसो मग्नत्वात् स मनोहरं वच उक्त्वा
४ तस्यां प्रीतवान्। ततः परं शिखिम् निजपितरं हमोरं जगाद, कन्या-
५ मेतां त्वं मां विवाहय। अनन्तरं शिखिम् मम दुहितरं भ्रंशितवान्,
इति कथां याकूब् शुश्राव। तदानीं तस्य पुत्राः प्रान्तरे पशुव्रजान्

अचारयन्; अतो याकूब् तेषामागमनपर्य्यन्तं स्तब्धोऽतिष्ठत्। तदानीं ६
शिखिमः पिता हमोर् याकूबा सार्द्धं संलपितुं जगाम। अपरं याकूबः ७
सुतास्तां वार्त्तां श्रुत्वा प्रान्तराद् आजग्मुः; याकूबः कन्याया बलात्कार-
सङ्गमात् इस्रायेलो विरुद्धं शिखिम इदम् अधमं अकर्त्तव्यञ्च यत्
कर्म्म तस्मात् मनस्तापिताः शोकान्विताश्च बभूवुः। तदानीं हमोर् तैः ८
सार्द्धं संलप्य कथयामास, युष्माकम् अस्यां कन्यायां मम सुतस्य शिखिमो
मन आसजत्; अतो निवेदयामि, मम सुतेन सार्द्धं तां विवाहयत; ९
सार्द्धमस्माभि वैवाहिकसम्बन्धञ्च कुरुत, युष्माकं कन्या अस्मभ्यं दत्त,
अस्माकं कन्या गृह्णीत च। यूयमस्माभिः सार्द्धं वसत, युष्माकं सम्मुखे १०
देशोयमास्ते, तत्र वसत, वाणिज्यं कुरुत, अधिकुरुत च। शिखिम् ११
दीणायाः पितरं भ्रातॄंश्च जगाद, यूयं मां प्रति कृपादृष्टिं कुरुत; ततो
यद् वदिष्यथ, तदेव दास्यामि। यौतुकं दानञ्च यावद् अधिकं प्रार्थयि- १२
ष्यथ युष्माकं वाक्यानुसारात् तावदेव दास्यामि, किन्तु मया सार्द्धम्
एनां कन्यां विवाहयत। तदानीं शिखिमा तेषां दीणाया भगिन्या भ्रंश- १३
नात् याकूबः सुताः शिखिमं तस्य तातं हमोरञ्च छलोक्त्या जगदुः; अत्व- १४
क्छेदिभ्यो वयं निजभगिनीं दातुं न शक्नुम; दाने कृतेऽस्माकम् अप-
यशो भविष्यति। किन्तु वयमिव यूयं सर्व्वे पुरुषा यदि त्वक्छेदिनो १५
भवेत तर्हि पणेनानेन वयमङ्गीकरिष्यामः। युष्मभ्यं निजकन्याः प्रदा- १६
स्यामः, युष्माकं कन्याश्च वयं ग्रहीष्यामः, युष्माभिः सार्द्धं निवसन्त एक-
जातयो भविष्यामः। किन्तु यूयं चेत् त्वक्छेदनेऽस्माकं वचो न शृणुथ १७
तर्हि वयं तां कन्यां गृहीत्वा यास्यामः। तदानीं तेषां कथयानया हमोर् १८
तत्सुतः शिखिमपि तुतुषतुः। अनन्तरं स युवा तत् कर्म्म क्षिप्रं कर्त्तु- १९
मुद्यक्तवान्; यतः स याकूबः कन्यायाम् अतीवान्वरज्यत; स च शिखिम्
निजपितृपरिवारेभ्यः सर्व्वेभ्यो गुरुतर आसीत्।

ततः परं हमोर् तस्य शिखिम् सुतश्च निजनगरस्य द्वारम् आगत्य २०
नगरवासिभिः सार्द्धं संलप्य कथयामासतुः, इमे जना अस्माभिः समं २१
निर्व्विरोधिनः, तस्मात्त इमं देशमधिवसन्तु वाणिज्यमत्र कुर्व्वन्तु च;
यतः पश्यत देशोयं तेषां कृते प्रभूतोस्ति; तेषाञ्च कन्या वयं ग्रहीष्यामः
अस्माकं कन्याश्च तेभ्यो दास्यामः। किन्तु तेषामयं पण आस्ते, अस्माकं २२
मध्ये सर्व्वे पुरुषा यदि तद्वत् छिन्नत्वचो भवन्ति, तर्हि तेऽस्माभिः
सार्द्धम् उषित्वा एकजातयो भवितुं संमन्यन्ते। अपरं तेषां धनानि २३

सम्पत्तयः पशवश्च किमस्माकं न भविष्यन्ति ? अस्माभिस्तेषां वचने-
२४ ऽङ्गीकृते तेऽस्माभिः साकं निवत्स्यन्ति । तदानीं तन्नगरद्वारगामिनः
सर्व्वे नरा हमोरस्तत्सुतस्य शिखिमस्य कथामेताम् अमन्यन्त ; तन्नगर-
द्वारगामिनः सर्व्वएव मनुजा श्छिन्नत्वचो बभूवुः ।

२५ अपरं तृतीयदिवसे तेषु पीडितेषु सत्सु दीणायाः सहोदरौ शिमियोन्
लेविश्च याकूब एनौ द्वौ सुतौ खड्गान् गृहीत्वा हठात् नगरं प्रविश्य
२६ सकलान् पुरुषान् निजघ्नतुः। हमोरं तस्य सुतं शिखिमञ्च खड्गाघातेन
२७ हत्वा शिखिमो गृहात् दीणां निन्यतुः। अपरं स्वीयसोदराया भ्रंशनात्
२८ याकूबः सुता हतनराणां समीपम् आगत्य नगरं लोठयामासुः। अपरं
२९ तेषां गोमेषगर्द्दभादीनि नगरक्षेत्रस्थानि सर्व्वद्रव्याणि जगृहुः। अपरं
तेषां शिशून् योषितश्च वन्दीकृत्य तेषां सर्व्वाणि धनानि गेहस्थसर्व्वस्वानि
३० लोठयामासतुः । तदानीं याकूब् शिमियोनं लेविञ्च जगाद, युवामे-
तद्देशीयानां अर्थात् किनानीयपिरिषीयमनुजानां सन्निधौ मां दुर्गन्ध-
स्वरूपं कृत्वा व्याकुलीकृतवन्तौ ; मदीयलोका अल्पा एतस्मात् ते मद्विरुद्धं
३१ मिलित्वा मां हनिष्यन्ति, ततोऽहं सपरिवारो विनंक्ष्यामि । तावूचतु
र्यथा वेश्यया सार्द्धं तथैव स किमस्माकं भगिन्या सार्द्धं व्यवहरेत् ?

---

## ३५ पञ्चत्रिंशोऽध्यायः।

१ ईश्वरेण याकूबो बैथेलं प्रति प्रेरणं ६ तत्र वेदिनिर्म्माणं दिवोराया मरणं ९ बैथेलि याकूबे ईश्वरस्याशीर्दानं प्रसववेदनाकष्टात् राहेलो मरणं २१ याकूबो वंशराजिः २७ इस्हाको मरणं श्मशाने निधानञ्च।

१ अनन्तरम् ईश्वरो याकूबं व्याजहार, त्वमुत्थाय बैथेलं गत्वा तत्र वासं
कुरु; भ्रातुरेषावः समीपात् तव पलायनकाले य ईश्वरस्तुभ्यम् दर्शनमा-
२ शिषञ्च दत्तवान् तमुद्दिश्य तत्र यज्ञवेदिं निर्म्माहि। ततो याकूब् निज-
परिजनान् सङ्गिलोकांश्च अवदत् युष्माकं सन्निधौ यद्देवमूर्त्तय आसते,
३ यूयं ता अपसार्य्य वस्त्राण्यन्यानि परिधाय शुद्ध्यत। अपरं वयमुत्थाय बैथेलं
यामः ; य ईश्वरो मदीयदुःखसमये मम प्रार्थनां श्रुत्वा मम गमनमार्गे
४ सहायोऽभवत्, तमुद्दिश्य तत्र यज्ञवेदीमेकां निर्म्मामि । ततस्ते स्वसमी-
पस्थितदेवमूर्त्तिकर्णकुण्डलानि गृहीत्वा याकूबे व्यतरन्, स तान्यादाय
५ शिखिम् देशस्थितैलावृक्षमूले पोथयित्वा ततो यात्रां चकार। किन्तु

चतुर्दिक्स्थनगरेषु ऐश्वरिकभयोपस्थितेस्तत्रत्यलोकाः केपि याकूबः पुत्त्राणां पश्चात् ताडयितुं न जग्मुः।

अनन्तरं याकूब् तस्य सङ्गिनश्च किनान्देशस्य लूस् नगरम् अर्थात् ६ बैथेलम् आगत्य स यज्ञवेदिं निर्म्माय तस्य स्थानस्य नाम एल् बैथेलं ७ (बैथेल ईश्वरं) कृतवान्; यतो याकूबो भ्रातृभयात् पलायनकाले ईश्वरस्तस्मिन् स्थाने तस्मै दर्शनं दत्तवान्। अपरं तत्र रिबकाया दास्या ८ दिबोराया मरणे सति बैथेलः समीपस्थालोन् पादपस्य मूले तस्याः श्मशानवेश्म बभूव; तस्य स्थानस्य नामधेयम् आलोन् बाखूत् (शोकवृक्षः) इति बभूव।

अनन्तरं याकूबि पद्नरामः प्रत्यागते सतीश्वरस्तं पुनः संदर्शयामास ९ पुनराशिषञ्च व्याजहार। अपरम् ईश्वरस्तं जगाद, इदानीं तव याकूब् १० नामास्ते किन्त्वतःपरं याकूब् नाम न स्थास्यति, इस्रायेलिति तव नाम भविष्यति; ततःपरं तस्य नामधेयम् इस्रायेलं कृतवान्। ईश्वरेण तस्मै ११ पुनरकथ्यत, सर्व्वशक्तिमान् अहमेवेश्वरस्त्वं फलवान् भूत्वा प्रवर्द्धस्व; त्वत्त एका जातिरिति नहि बहुजातिरुत्पत्स्यते त्वत्तौरसा राजानो जनिष्यन्ते। अपरम् अहम् इब्राहीमे इस्हाके च यं देशं दातुं प्रतिज्ञा- १२ तवान् तं देशं तुभ्यं तव भाविवंशाय च दास्यामि। इत्थं संलप्य तस्मात् १३ ईश्वर ऊर्द्धं जगाम। ततो याकूब् ईश्वरस्य तत्संलपनस्थाने स्तम्भम् १४ एकम् अर्थात् प्रस्तरस्य स्तम्भमेकं संस्थाप्य तदुपरि पेयनैवेद्यं तैलञ्च सिषेच। अपरं याकूब् ईश्वरेण सार्द्धं संलपनस्थानस्य नाम पुनरपि १५ बैथेल् (ईश्वरगृहं) इति कृतवान्।

अनन्तरं ते बैथेलः प्रतस्थिरे; किन्तु इफ्राथायाम् उपस्थितेरल्पे पथि १६ स्थिते राहेलः प्रसववेदना बभूव, तस्याः प्रसूतौ बहु कष्टञ्च जातम्। ततः १७ प्रसववेदनाया अतिशयत्वे सति धात्री तां बभाषे, मा भैषीस्त्वमिदानीमपि सुतं प्रसोष्यसे। ततो मरणकाले प्राणवियोगसमये सा तस्य नाम १८ बिनोनी (कष्टजातपुत्त्रः) इति चकार; किन्तु तस्य तातस्तस्य नाम बिन्यामीन् (दक्षिणहस्तपुत्त्रः) इति कृतवान्। इत्थं राहेलो मरणे सति १९ इफ्राथाया अर्थात् बैत्लेहमो गमनमार्गस्य समीपे तस्याः श्मशानस्थानं बभूव। ततो याकूब् तस्य श्मशानस्योपरि स्तम्भमेकं स्थापयामास, तस्य २० नामाद्यापि राहेलः श्मशानस्तम्भ इति वदन्ति।

अनन्तरम् इस्रायेल् तत्स्थानात् प्रस्थाय मिग्दलेदरस्य (पशुयूथदुर्गस्य) २१

२२ यारं गत्वा तस्य समीपे दूष्यं स्थापयामास। तस्मिन् देशे निवासकाले रूवेन् निजतातस्य विल्हानामिकाम् उपपत्नीम् उपगतवान् एतत्
२३ इस्रायेल् श्रुतवान्। याकूबो द्वादशसुतास्तेषां मध्ये लेयागर्भजाता इमे, रूवेन् ज्येष्ठः, अपरं शिमियोन् लेवि यिहूदा इषाखरः सिबूलून्।
२४ राहेलः सुतौ यूषफ्बिन्यामीनौ। अपरं राहेलो विल्हाया दास्याः
२६ सुतौ दान् नप्तालिश्च। लेयायाः सिल्पाया दास्याः सुतौ गाद् आशेरौ, याकूब एते सुताः पद्दनरामि जज्ञिरे।
२७　अपरम् इब्राहीम् इस्हाक् च यत्र मम्रीस्थाने अर्थात् अर्ब्बनगरे न्यवसतां, अद्य यावत् यच्च हिब्रोणं वदन्ति, तत्र याकूब् निजतातस्येस्-
२८ हाकः समीप उपस्थितवान्। अनन्तरम् इस्हाकि साशीतिशतवत्सर-
२९ वयसि सति स वृद्धः पूर्णायुश्च भवन् प्राणान् त्यक्त्वा निजलोकैः सार्द्धं संगृहीतोऽभवत्; तस्य सुतावेषौयाकूबौ तं श्मशाने स्थापयामासतुः।

---

# ३६ षट्त्रिंशत्तमोऽध्यायः।

१ किनान्देशीयस्यैषावौ वंशराजिः ६ तस्य सेयीर्पर्व्वतगमनं ९ सेयीर्पर्व्वते तस्य वंशराजिः १५ तस्य पुत्त्रजातानां राज्ञां नामानि २० सेयीरो वंशराजिः ३१ इदोमो राज्ञां नामानि ४० एषौजातानां राज्ञां नामानि च।

१　एषावोऽर्थाद् इदोमो वंशराजिरयं। एषौः किनानीयानां द्वे कन्ये
२ अर्थात् हित्तीयैलोनः कन्याम् आदाम् हिव्वीयस्य सिवियोनः पौत्रीम्
३ अनाः कन्याम् अहलीवामां; तदन्याम् वासिमन्नामिकाम् इस्रायेलः
४ कन्यां निवायोतो भगिनीं व्यवहत्। अनन्तरम् आदागर्भाद् इलीफस्
५ वासिमतो गर्भात् रूयेल् च एषाव औरसपुत्रौ यज्ञाते। अपरम् अहलीवामाया गर्भात् यियूश् यालम् कोरहो जज्ञिरे, एषाव एते सर्व्वसन्तानाः किनानदेशे जज्ञिरे।
६　ततः परम् एषौः स्वीयभार्य्याः सुतान् कन्या गेहस्थितान्यान् सकल-लोकांश्च स्वकीयपश्वादीन् किनानदेश उपार्जितां सर्व्वसम्पत्तिञ्च गृहीत्वा
७ भ्रातु र्याकूबः सन्निधे र्देशमन्यं प्रतस्थिवान्। यस्मात् तयोः प्रभूतैश्वर्य्य-सम्भवात् वास एकत्र न संबभूव, तयोः प्रवासदेशश्च पशुधननिदानात्
८ तयो र्भारं वोढुं नाशक्नोत्। इत्थम् एषौः सेयीर्धराधरे न्युवास तस्यैषावो नामधेयम् इदोमप्यासीत्।
९　अपरं सेयीर् धराधरस्थायोदोमीयानां पूर्व्वपुरुषस्यैषावो वंशराजि-

रयं। एषावः सन्तानानां नामानीमानि। एषाव आदानामिकाया १०
जायाया गर्भजातः सुत इलीफस् वासिमत्नामिकायाः स्त्रिया गर्भजातः
सुतो रूयेल्। अपरम् इलीफसः सुतस्तैमन् ओमार् सिफो गयितम् ११
किनस्। अपरम् एषावः सुतस्येलीफसः तिम्ना नामिकाया उपपत्न्या १२
गर्भजात अमालेक् एते सर्व्वे एषाव आदायाः पत्न्याः पौत्त्राः। रूयेलः १३
सुतो नहत् सेरह शम्म मिसा इमे एषावो जायाया वासिमतः पौत्त्राः।
अपरम् एषावोऽहलीवामा या जाया सिवियोनः पौत्री अनाः कन्या १४
तस्या अपत्यानि यियूश् यालम् कोरहः।

एषावः सुतानां राज्ञां वंशराजिः। एषावो ज्येष्ठपुत्त्रो य इलीफस् १५
तस्य पुत्त्रो राजा तैमन् भूप ओमार् भूपः सिफो भूपः किनस्;
भूपः कोरहो राजा गयितम् भूपत् अमालेक् एत इलीफसः पुत्त्रा १६
आदायाः पौत्त्रा इदोम्देशस्य राजान आसन्। एषावः पुत्त्रस्य रूयेलः १७
सन्ताना राजा नहत् राजा सेरहो राजा शम्मो राजा मिसा एते
रूयेल औरससुता एषावो वासिमत् जायायाः पौत्त्रा इदोम्देशस्य
राजान आसन्। अपरम् एषावो अहलीवामाया भार्य्यायाः पुत्त्रा १८
राजा यियूश् राजा यालम् राजा कोरह एते अनाः कन्या या एषावो
जाया अहलीवामा तस्या गर्भजाता राजानः। एते एषाव अर्थात् १९
इदोम औरसपुत्त्रा राजानः।

पूर्व्वकाले तद्देशनिवासिनो होरीयसेयीरः सन्तानाः लोटन् शोवल् २०
सिवियोन् अना दिशोन् एत्सर् दीशन्। इमे इदोम्देशीयाः सेयीरः २१
पुत्त्रा होरीयलोकानां राजान आसन्। लोटनः पुत्त्रौ होरिहेममौ २२
लोटनस्य तिम्ना नामिका भगिन्यासीत्। अपरं शोवलः पुत्त्रो अल्वन् २३
मानहत् एवल् शिफो ओनम्। सिवियोनः पुत्त्रौ अया अनाश्च, अयम् २४
अना निजपितुः सिवियोनो गर्द्दभचारणसमये वने उष्णतोयस्य प्रस्रवणं
प्राप्तवान्। तस्यानाः पुत्त्रो दिशोन् कन्या अहलीवामा। दिशोनस्य पुत्त्रा २५
हिम्दन् इश्वन् यित्रन् किरान्। अपरम् एत्सरस्य पुत्त्राः विल्हन् २७
सावन् याकन्। दिशनः पुत्त्रौ ऊस् अरान्। अपरं होरीया राजान २८
इमे राजा लोटन् राजा शोवल् राजा सिवियोन् राजा अना राजा २९
दिशोन् राजा एत्सर् राजा दिशन्। एते सेयीरदेशस्थहोरीयवंशीया ३०
राजान आसन्।

अपरम् इस्रायेलः सन्तानानां राजत्वात् पूर्व्वम् इमे इदोमो देशस्य ३१

२२ भूपतय आसन्। वियोरा वेलानामा सुत इदोमदेशं शशास दिन्-
२३ हावानगरञ्च तस्य राजधान्यासीत्। अपरं वेले मृते सति तस्य पदे
२४ बस्रानिवासिनः सेरहः सुतो योवव् तच्छशास। ततो योववि मृते सति
२५ तैमन्देशीयो हूशम् तस्य पदे देशं शशास। ततो हूशमि मृते सति
विददः सुतो यो हदद् मोयावः प्रान्तरे मिदियनं जितवान् स तस्य
पदे देशं शशास; तस्य राजधान्याश्च नामधेयम् अवीत् आसीत्।
२६ ततो हददि मृते सति मस्रेकानिवासी सम्लस्तस्य पदे देशं शशास।
२७ ततः सम्ले मृते सति फरात्तटिन्याः समीपस्थरिहोवोत्निवासी
२८ शौल् तस्य पदे देशं शशास। ततः शौलि मृते सति अक्वोरः सुतो
२९ बाल्हानन् तस्य पदे देशं शशास। अपरम् अक्वोरः सुते बाल्हाननि
मृते सति हदर् तस्य पदे देशं शशास; पायूनगरं तस्य राजधान्या-
सीत्; मिहेटवेल्नामिका तस्य जायासीत्, सा मट्रेदः कन्या मेषाहवो
दौहित्र्यासीत्।
४० एषाव उत्पन्ना नामस्थानकुलभेदात् ये ये राजान आसन् तेषां
४१ नामानि। राजा तिम्नो राजा अल्वा राजा यिथेत् राजा अहलीवामा
४२ राजा एला राजा पीनोन् राजा किनस् राजा तैमन् राजा मिव्सर्
४३ राजा मग्दीयेल् राजा ईरम्। इमे स्वस्वराज्यभेदेन राजधानीभेदेन
च इदोमो देशस्य राजान आसन्। इदोमीयानाम् आदिपुरुषस्य एषावो
वंशराजिरिति।

---

## ३७ सप्तत्रिंशोऽध्यायः।

१ यूषफं प्रति भ्रातृणां द्वेषः ५ यूषफः स्वप्नद्वयदर्शनं ९ याकूबा तस्य भ्रातॄन् प्रति प्रेरणं १२ शिखिमि तेषां मेषपालनं १५ तेषां साक्षात्कारः १८ यूषफं हन्तुं तेषां परामर्शः २३ इस्रायेलीयेषु यूषफो विक्रयः २९ तस्य वस्त्रं शोणितखचितं दृष्ट्वा याकूबः शोचनञ्च।

१ याकूबा निजतातस्य प्रवासीयस्थाने किनान्देशे प्रोषिते सति तस्मै यद्
२ घटितं तस्य विवृतिरियं। यूषफ् सप्तदशवत्सरवयसि निजभ्रातृभिः
सार्द्धं पशुव्रजान् अचारयत् स बालकः सन् निजतातस्य भार्य्ययो र्बिल्-
हासिल्पयोः सुतानां सहचर आसीत्, तेषाञ्च सहजानां कुव्यवहारं
३ स्वीयतातस्य समीपे गदितवान्। स यूषफ् इस्रायेलो वार्द्धक्यवयसः
सुतस्तस्मात् इस्रायेल् सकलसुतेभ्योऽधिकं तस्मिन् अप्रीयत, नानावर्णम्

उत्तरीयं निर्म्माय च तस्मै दत्तवान्। किन्त्वस्माकं पिता सकलसुतेभ्योऽधिकं ४
यूषफि प्रीयते, इति विलोक्य तस्य भ्रातृभिस्तदारभ्य तस्यर्तीयितत्वात्
तं प्रति स्नेहवचनं वक्तुमपि नाशक्यत।

अनन्तरं यूषफ् स्वप्नं दृष्ट्वा निजभ्रातृभ्यस्तं कथयामास; तेन तैः ५
सोऽधिकम् ऋतीयितः। फलतः स कथितवान्, अहं स्वप्नमेकं दृष्टवान्, तं ६
निवेदयामि शृणुत। पश्यत वयं क्षेत्रे शस्यमुष्टीन् अबध्नीम, तत्र मम ७
शस्यमुष्टिरुत्तिष्ठन् अस्थात्, किन्तु युष्माकं शस्यमुष्टयश्चतुर्दिक्षु तिष्ठन्तो
मम शस्यमुष्टिं प्राणमन्। तेन तस्य भ्रातरस्तं जगदुः किं त्वमस्माकं ८
उपरि निश्चितं राजत्वं करिष्यसि? किमस्माकम् उपरि प्रभविष्यसि?
ततस्ते तस्य तस्मात् स्वप्नात् कथायाश्च तमतीव समृतीयितवन्तः।

अनन्तरं यूषफ् अपरैकं स्वप्नं दृष्ट्वा भ्रातॄणां समक्षं कथितवान्, पश्य- ९
ताहम् अपरमेकं स्वप्नं दृष्टवान्, पश्यत सूर्य्यचन्द्रैकादशनक्षत्राणि च
मां प्राणमन्। किन्तु यूषफ् स्वीयपितु र्भ्रातॄणाञ्च साक्षात् तं गदित- १०
वान् तदा तस्य पिता तं तर्जयन् उक्तवान् त्वया कीदृशोयं स्वप्नो दृष्टः?
अहं तव माता भ्रातरश्च वयं भूमौ तिष्ठन्तः किं त्वां प्रणंस्यामः? तत- ११
स्तस्य भ्रातरस्तं प्रत्यैर्ष्यन्, किन्तु तत्पिता तां कथां मनसि निदधे।

अपरं यूषफो भ्रातरः पितुः पशुव्रजान् चारयितुं शिखिमं जग्मुः, तत १२
इस्रायेल् यूषफं जगाद तव भ्रातरः किं शिखिमि पशुव्रजान् न चार- १३
यन्ति? आगच्छ त्वामहं तेषां सन्निधिं प्रेषयामि; ततो यूषफ् उक्तवान्
अहमुपस्थितोस्मि। तदानीम् इस्रायेल् तं जगाद, त्वं गत्वा तव भ्रातरः १४
पशुव्रजाश्च सकुशलाः सन्ति न वेति विलोक्य मां वार्त्तां वद। इत्थं स
हिब्रोण उपत्यकातो यूषफं विसृष्टवान् स च शिखिमं गतवान्।

तदानीम् एको मनुजो यूषफं प्रान्तरे भ्रमन्तं वीक्ष्य पप्रच्छ, त्वं किं १५
मृगयसे? स उक्तवान् निजसहजान् गवेषये; ते कुत्र पशुव्रजान् चार- १६
यन्ति? विनयेहं तन्मां वद। स मनुज उदितवान्, त इतो गतवन्तः, १७
यतो वयं दोथनं यास्याम इति वाचं तेषाम् अश्रौषम्; अतो यूषफ्
पश्चात् पश्चात् व्रजित्वा दोथनि निजभ्रातॄन् साक्षात् चकार।

अपरं तस्य तेषां समीपगमनकाले ते दूरात् तं दृष्ट्वा हन्तुं मन्त्रयित्वा १८
परस्परं जगदुः पश्यतासौ स्वप्नदर्शक आगच्छति। आगच्छत वयमिमं १९
हत्वा कस्मिंश्चित् अवटे निक्षिपाम; पश्चात् कश्चन हिंस्रो जन्तुस्तम- २०
खादत् इति वाचं वदिष्यामः, तेन तस्य स्वप्नानां किं भविष्यतीति

२१ पश्यामः। किन्तु रूबेन् तत् श्रुत्वा तेषां करेभ्यस्तम् अवितुं कथयामास,
२२ नहि, वयं तं न हनिष्यामः। रूबेन् तेषां करेभ्यस्तं रक्षित्वा पितुः
समीपं प्रहेतुम् इच्छन् पुनस्तान् अवदत्, एतस्य शोणितपातम् अकृत्वा
तं प्रान्तरीयावटमध्ये पातयत, किन्तु तं प्रति करान् मोत्तोलयत।
२३ 　अनन्तरं यूषफि भ्रातॄणां समीपमागते ते तस्य गात्रात् वसनम्
२४ अर्थात् नानावर्णवस्त्रं बलात् गृहीत्वा तं धृत्वा अवटमध्ये पातयामासुः;
२५ किन्तु सोवटो रिक्तस्तत्र न तोयमासीत्। अनन्तरं ते भोक्तुम् उपविश्य
वीक्ष्य ददृशुः, गिलियद् एको निवह इस्मायेलीयलोका महाङ्गवाहनेन
२६ सुगन्धिद्रव्याणि गुग्गुलुगन्धरसान् आदाय मिसर्देशं गच्छन्ति। तदानीं
यिहूदा भ्रातॄन् उवाच, भ्रातु र्हननात् शोणितगोपनाच्च अस्माकं को
२७ लाभः? आगच्छत वयं तं न हिंसित्वा एतेषाम् इस्मायेलीयानां करेषु
विक्रीणाम, यतः सोऽस्माकं भ्रातास्माकं मांसस्वरूपश्च; ततस्तस्य भ्रात-
२८ रोऽङ्गीचक्रुः। तदानीं तेषु मिदियन्वासिवणिक्षु समीपमागतेषु ते यूषफं
गर्त्तात् आकृष्य प्रोत्तोलयामासुः; तत इस्मायेलीयानां विंशतिरूप्यमुद्रा
गृहीत्वा तेषां करेषु तं व्यक्रीणन्; ततस्ते यूषफं मिसर्देशं निन्युः।
२९ 　अनन्तरं रूबेन् परावृत्य गर्त्तसमीपं जगाम, यूषफ् गर्त्ते नास्तीति
३० विलोक्य स निजवसनं चिच्छेद। भ्रातॄणां समीपं गत्वा च जगाद,
३१ बालको नास्ति, अहमिदानीं कुत्र गमिष्यामि? ततः परं ते यूषफो
वसनं आदाय छागवत्समेकं मारयित्वा तस्य शोणितेषु तद् मज्जितवन्तः।
३२ अनन्तरं तस्य पितुः समीपं तत् नानावर्णं वसनं प्रेषयामासुः कथयामा-
सुश्च, वयम् एतावन्मात्रं प्राप्ताः, इदं तवात्मजस्य वसनं भवति न वा?
३३ ततः स तत् परिचीय कथितवान्, इदं मम पुत्त्रस्य गात्रीयवसनं
भवति; कश्चित् हिंस्रो जन्तुस्तं भक्षितवान्, यूषफ् निश्चितं विदीर्णो
३४ भूतः। तदानीं याकूब् निजवस्त्रं छित्त्वा कटौ शणजं परिधाय पुत्त्राय
३५ बहुदिनानि शुशोच। अनन्तरं तस्य कन्याः पुत्त्राः सर्व्वे उत्थाय तं सान्त्व-
यितुं यतितवन्तः, किन्तु स प्रबोधं न मत्वा कथितवान्, अहं शोकेन
३६ पुत्त्रसमीपं परलोकं गमिष्यामि, इत्थं तस्य पिता तदर्थं रुरोद। अनन्तरं
ते मिदियनीया यूषफं मिसरं नीत्वा पोटीफर्नामकस्य फिरौणो रक्षक-
सेनापतेः समीपे तं विक्रीतवन्तः।

# ३८ अष्टत्रिंशोऽध्यायः।

१ यिहूदाख्यत्पुत्रत्रयाणां एर्-ओनन्-शेलानां विवृतिः १२ जायामरणात् परं यिहूदाः तिम्नागमनं १५ तदीयपुत्त्रबधूपगमनं २४ तस्य दोषाविष्करणं २७ तस्य पुत्त्रबध्वाः पेरस् सेरह इति सुतद्वयजननञ्च।

तदानीं यिहूदा निजसहजानां समीपात् अदुल्लमीयहीरानाम्न १ एकमनुजस्य समीपं गत्वा तत्र शूयनामकस्य किनानीयपुरुषस्य कन्यामेकां २ विलोक्य तामादायाभिजगाम। ततः सा गर्भिणी बभूव, अपरं तस्यां ३ पुत्त्रमेकं प्रसूतायां स तस्य नामधेयम् एर् इति चकार। पुनः सा ४ गर्भवती भूत्वा पुत्त्रं प्रसूय तस्य नामधेयम् ओनन् इति चकार। पुन- ५ रपि तस्या गर्भे सति सा सुतं प्रसूय तस्य नाम शेलेति चकार; एतस्य जन्मकाले यिहूदाः किषीवि स्थितवान्। ततो यिहूदाः तामर्नामिकां ६ कन्याम् आनीय ज्येष्ठपुत्त्रम् एरं विवाहयामास, किन्तु यिहूदा ज्येष्ठपुत्त्र एर् परमेश्वरस्य साक्षात् दुष्टोऽभवत् तदा परमेश्वरस्तं ७ व्यनाशयत्। ततो यिहूदा ओननं जगाद, त्वं निजभ्रातृभार्य्यां विवह, ८ तामभिगम्य भ्रातुर्वंशम् उत्पादय। किन्तु स वंशः स्वीयो न भविष्यतीति ९ विज्ञाय ओनन् भ्रातृभार्य्याम् अभिगम्यापि भ्रातुर्वंशोत्पादनानिच्छया भूमौ शुक्रं पातयामास। तस्मात् तस्यैतादृशेन कर्म्मणा परमेश्वरोऽ- १० सन्तुष्टः सन् तमपि नाशितवान्। तदानीं यिहूदास्तां तामर्नामिकां ११ पुत्त्रबधूं बभाषे, यावत् मम शेला पुत्त्रो युवा न भवति, तावत् त्वं विधवा सती निजपितृगेहे तिष्ठ; यतः सोऽचिन्तयत् चेत् भ्रातराविव शेलापि म्रियते; तस्मात् तामर् गत्वा पितृसदने न्यवसत।

अपरं शूयस्य कन्याया यिहूदा भार्य्याया मरणात् परं वहुदिनेषु १२ गतेषु यिहूदाः सान्त्वनायुक्तः सन् अदुल्लमीयहीरानाम्ना बन्धुना सह तिम्नां प्रति निजमेषाणां लोमच्छेदकानां समीपं जगाम। तदानीं श्वशुरः १३ स्वीयमेषाणां रोमाणि छेत्तुं तिम्नां यातीति वार्त्तां कश्चित् तामरं कथया- मास। ततस्तामर् विधवावसनं विहाय आवरकवस्त्रं परिधाय स्वाम् १४ आच्छाद्य ऐनमो निकटे तिम्नामार्गपार्श्वे समुपविश्य तस्थौ; यतः सा ददर्श शेला युवत्वे सत्यपि तेन सार्द्धं विवाहो नाभवत्।

तदानीं यिहूदास्तां विलोक्य वेश्यां विवेद, यतः सा मुखमाच्छाद्य १५ स्थिता। ततः स पुत्त्रबधूं परिचेतुम् अशक्तः सन् मार्गपार्श्वे तामरः १६ समीपं गत्वाब्रवीत्, आगच्छ त्वामहम् अभिगमिष्यामि, तेन तामर्

१७ उवाच त्वमुपगमनहेतो मह्यं किं दास्यसि? स कथितवान् व्रजात् एकं छागवत्सं प्रेषयिष्यामि; तामर् अवदत् यावत् तं न दास्यसि तावत्
१८ मह्यं किं बन्धकं दास्यसि? यिहूदाः पृष्टवान् किं बन्धकं दास्यामि? तामरवादीत् तव मुद्रां सूत्रं हस्तयष्टिञ्च देहि। तदानीं स तामरे
१९ तानि सर्व्वाणि दत्त्वा तामभिगतवान् ततः सा गर्भवती बभूव। पश्चात् तामर् उत्थाय प्रतस्थे, आवरकं वसनं विहाय विधवावसनं परिदधे।
२० अनन्तरं यिहूदास्तस्या योषितो बन्धकं ग्रहीतुं निजादुल्लमीयबन्धुना
२१ छागवत्सं प्रहितवान्, किन्तु स तां न दृष्टवान्। अतः स तत्रत्यान् जनान् पृष्टवान्, एतस्य ऐनम्ग्रामस्य समीपे मार्गपार्श्वे या वेश्या
२२ प्रोपाविशत् सा कुत्र? ते कथितवन्तः कापि वेश्यात्र न तिष्ठति। अनन्तरं स यिहूदाः समीपं गत्वा कथयामास, नाहं तां दृष्टवान् तत्रत्या जनाश्च
२३ कथितवन्तः, स्थानेऽस्मिन् कापि वेश्या न तिष्ठति। तदा यिहूदा जगाद, तस्याः स्थाने यदस्ति तत् सा गृह्णातु, कुतो वयं लज्जास्पदं भविष्यामः? पश्चाहं छागवत्सं प्रहितवान् किन्तु त्वं तां न दृष्टवान्।

२४ अपरं प्रायेण मासत्रये गते कश्चित् यिहूदां जगाद, तव पुत्त्रबधूस्तामर् व्यभिचारिणी जाता, तेन तस्या गर्भोऽभवत्; तदानीं यिहूदाः
२५ कथितवान् तां वहिरानीय वह्निना दाहय। अनन्तरं तस्यां वहिरानीतायां सा लोकं प्रहित्य श्वशुराय जगाद, यस्यैतानि वस्तूनि तस्मात् पुरुषात् मम गर्भोऽभवत्; पुनरवदत्, एतानि मुद्रायष्टिसूत्राणि कस्य?
२६ वीक्ष्य परिचिनु। तदानीं यिहूदाः स्वीयानि तानि वस्तूनि स्वीकृत्य कथितवान् सा मत्तोपि महाधर्म्मिष्ठा, यतोहं तस्यै निजं शेलासुतं न दत्तवान्, किन्तु यिहूदास्तां पुन र्नाभिजगाम।

२७ अपरं तामरः प्रसवकाल उपस्थिते सति तस्या उदरात् यमजौ सुतौ
२८ जज्ञाते। तस्याः प्रसववेदनायां समुपस्थितायां सुतस्यैकस्य करो वहिर्बभूव; ततो धात्री तस्य तस्मिन् करे रक्तसूत्रं बद्धा बभाषे, बालकोयं
२९ ज्येष्ठो भविष्यति। किन्तु स निजकरम् आकृष्य नीतवान् ततस्तस्य भ्राता भूमिष्ठो बभूव; तदा धात्री कथितवती त्वं कथं विभिद्यागतोसि?
३० तस्मात् तस्य नाम पेरस् (भेदको) बभूव। पश्चात् रक्तसूत्रबद्धस्तस्य भ्राता भूमिष्ठो बभूव, तस्य नाम च सेरह चकार।

# ३९ ऊनचत्वारिंशोऽध्यायः।

१ पोटीफरो गेहे यूषफ उन्नतिः ७ पोटीफरो जायाया यूषफि प्रेमासक्तिः अभिलषिताप्राप्तिहेतोः तस्य मिथ्यापवादनं कारावन्धनञ्च।

यूषफि मिसरदेशमानीते सति मिस्रीयपोटीफर्नामा फिरौन्राजस्य रक्षकसैन्याधिपतिः तस्यानयनकारिभ्य इस्मायेलीयनरेभ्यो यूषफं क्रीतवान्। किन्तु परमेश्वरस्य साहाय्यात् यूषफ् श्रीमान् बभूव, निजमिस्रीयप्रभो गृहे न्यवसत्। यतः परमेश्वरस्य साहाय्येन तेन कृतानि सकलकर्म्माणि फलवन्ति भवन्तीति स प्रभुः स्वयं दृष्टवान्। अतएव स यूषफमनुगृह्य स्वीयसेवायां नियुक्तवान्, स्वीयनिवेशनस्याधिपतिं कृत्वा तस्य करे सर्व्वसम्पत्तिं समर्पयामास। इत्थं स यूषफं स्वीयनिवेशनस्य सकलसम्पत्तेश्चाधिपतिं चकार, तदारभ्य यूषफः कारणात् तस्य मिस्रीयपुरुषस्य निवेशनं प्रति परमेश्वरस्यानुग्रहात् निवेशनस्य क्षेत्रस्य च सर्व्वसम्पत्तिं प्रति तस्याशी बभूव। ततस्तेन यूषफः करे निजसर्व्वस्वस्य तादृशो भारोऽर्पितो येन स्वयं भोजनपाने विना कस्यापि कर्म्मणः प्रवृत्तिं न ज्ञातवान्। १ २ ३ ४ ५ ६

यूषफ् रूपेण सौन्दर्य्येण च मनोहारी आसीत्, तत्कारणात् कालक्रमशः तस्य प्रभो र्जाया यूषफं निरीक्ष्य तं बभाषे, त्वं मया सार्द्धं शेष्व। किन्तु यूषफ् तदनङ्गीकृत्य प्रभो र्भार्य्यां जगाद, पश्य निवेशनेऽस्मिन् यदहं करोमि, तस्य किमपि प्रभु र्नानुसन्धत्ते; स मम करे सर्व्वस्वम् अर्पितवान्। अस्मिन् निवेशने मत्समो महान् कोपि नास्ति; त्वन्तु तस्य जाया कारणादतः केवलं त्वां विना मां प्रति किमपि वारितं नास्ति; तस्मात् कथम् एतादृशीं दुष्टतां कुर्व्वन् ईश्वरस्य गोचरे पातकं कर्त्तुं शक्नोमि? तथापि सा योषित् स्वया सार्द्धं शयितुं वा स्वसमीपे स्थातुं यूषफं प्रत्यहं आह्वयति; किन्तु यूषफ् तत् नाङ्गीकरोति। अनन्तरम् एकदा कार्य्यवशात् यूषफ् गृहमध्यं जगाम, तदा तत्रान्यभृत्याभावात् मया सह शेष्वेति वदन्ती सा यूषफो वसनं धृत्वा चकर्ष, किन्तु यूषफ् तस्याः करे निजवसनं विहाय वहिः पलायाञ्चक्रे। तदानीं यूषफ् तस्या हस्ते निजवस्त्रं परित्यज्य वहिः पलायित इति विलोक्य सा गेहस्य लोकान् आहूय बभाषे, स्वामी सार्द्धमस्माभि र्हास्यं कर्त्तुम् एनम् इब्रीयम् आनीतवान्; स मया शयितुं मम सन्निधिम् आगमत्। ततोऽहम् उच्चैराहूतवती ममोच्चैःशब्दं श्रुत्वा स मत्समीपे वसनं विहाय वहिः ७ ८ ९ १० ११ १२ १३ १४ १५

१६ पलायितः। अपरं सा स्वामिनो गृहागमनम् अपेक्ष्य तद् वसनं
१७ स्वसमीपे निदधे। अनन्तरं स्वस्वामिनं पूर्व्वोक्तानुसारत ऊचे, त्वया य इब्रीयदासोऽस्मत्कृते समानायि, स मया सार्द्धं हास्यं कर्त्तुं समीपम्
१८ आगमत्। किन्तु मया प्रोच्चैराहूते स तद् वसनं मम हस्ते परित्यज्य
१९ बहिः पलायितः। तदानीं तव दासो मां प्रतीत्थं कृतवान् स्वजायाया वदनात् एतां कथां श्रुत्वा यूषफः प्रभुः क्रोधेन प्रज्वलितः सन् यूषफं
२० नीत्वा राजबन्दिनां वासस्थाने बन्धनालये स्थापितवान्, ततो यूषफ्
२१ तस्यां कारायां तस्थौ। किन्तु परमेश्वरस्य साहाय्यात् कृपातश्च
२२ यूषफ् कारारक्षिणोऽनुगृह्यत। अपरं स कारारक्षी काराबद्धानां सर्व्वेषां भारं यूषफः करे समार्पयत्, तस्मात् तत्रस्थानि सर्व्वकर्म्माणि
२३ यूषफ आज्ञानुसारतः प्रवर्त्तिरे। स कारारक्षी यूषफो हस्ते यद्यत् समर्पितवान् तदनुसन्धानमपि न कृतवान्, यतो यूषफ् यद्यत् कृतवान् परमेश्वरस्तस्य सहायः सन् तत् तत् सफलीकृतवान्।

---

## ४० चत्वारिंशोऽध्यायः।

१ फिरौणः पानपात्रवाहकस्य मोदककृतश्च यूषफा सह कारायां निधानं ५ तयो र्द्वयोः स्वप्नफलस्य यूषफा प्रकाशनं २० यूषफः कथानुसारात् स्वप्नस्य सफलत्वं पानपात्रवाहकस्याकृतज्ञत्वञ्च।

१ अपरं मिसरो भूपस्य पानपात्रवाहकेन मोदककृता च स्वीयप्रभो
२ र्मिस्रीयभूपतेः समीपेऽपराधे कृते फिरौन् स्वीयप्रधानपात्रवाहकः
३ प्रधानमोदककृच्च एताभ्यां भृत्याभ्यां प्रकुप्य रक्षकसैन्याधिपते र्यस्यां
४ कारायां यूषफ् आसीत् तत्र तौ बन्दीकृत्य स्थापितवान्। ततो रक्षकसैन्याधिपतिना यूषफो हस्ते तयोः समर्पितयोः सतो र्यूषफ् तौ सेवितुम् आरेभे। इत्थं तौ बहुदिनानि कारायां स्थितौ।

५ काराबद्धौ मिस्रीयराजस्य पानपात्रवाहकमोदककृतौ द्वावेकस्यां
६ यामिन्यां द्विधार्थविशिष्टौ द्वौ स्वप्नौ ददृशतुः। ततो यूषफ् प्रभाते
७ समीपं गत्वा तौ विषण्णवदनौ ददर्श। तदानीं फिरौणो यौ भृत्यौ स्वेन सार्द्धं प्रभोः कारायां बद्धावास्तां, तौ पप्रच्छ कुतो युवयो र्वदनेद्य
८ विषण्णे? तौ प्रत्यूचतुरावामुभौ स्वप्नौ दृष्टवन्तौ, किन्तु तयोः स्वप्नयोः फलवक्ता कोपि न विद्यते; तदा यूषफ तौ जगाद, फलकथनशक्तिः किम्
९ ईश्वरान्न जायते? विनयेहं युवयोः स्वप्नौ मां वदतं। तदानीं प्रधान-

पात्रवाहको निजस्वप्नकथां यूषफे प्रकाश्य कथयामास, अहं स्वप्ने द्राक्षालतामेकां दृष्टवान्। तस्याः शाखात्रये पल्लविते तत्र पुष्पाणि १० जातानि स्तवके स्तवके तस्याः फलानि पक्वानि जातानि। तदा मम ११ हस्ते फिरौणः पानपात्रस्य सत्त्वात् द्राक्षाफलानि निधाय तत्र पात्रे निष्पीड्याहं फिरौणो हस्ते तत्पात्रं दत्तवान्। ततो यूषफ् तस्मै कथ- १२ यामास, अस्य फलमेतत् ताभिस्तिसृभिः शाखाभि र्दिनत्रयं बोध्यते। त्रयाणां दिनानां मध्ये फिरौन् त्वां विचार्य्य तव पदे पुन र्नियोजयि- १३ ष्यति; तेन त्वं पूर्व्ववत् पानपात्रवाहको भूत्वा फिरौणो हस्ते पान-पात्रं दास्यसि। किन्तु यदा तव मङ्गलं भविष्यति, तदा मां स्मरिष्यसि, १४ मय्यनुग्रहं विधाय फिरौणो गोचरे मद्विषयिकां कथां कथयित्वा मामस्याः काराया उद्धरिष्यसि। यत इब्रीयानां देशात् लोका मां १५ चोरयित्वानयन्, किन्त्वहं यत् कूपरूपे बन्धनालये बद्धो भवेयं तादृशं किमपि कर्म्म नात्र स्थानेपि कृतवान्। अपरं प्रधानमोदककृत् तस्य १६ कथाया उत्तमं फलं निशम्य यूषफे कथयामास, अहमपि स्वप्नमेकं दृष्ट-वान्, मम मस्तकोपरि शुक्लपिष्टकानां त्रीणि भाजनान्यासन्। तदुपरिस्थ- १७ भाजने फिरौणो भोजनार्थानि बहुविधानि पक्वान्नान्यासन्; ततः पक्षिण आगत्य मम मस्तकोपरिस्थिताद् भाजनाद् आदाय तान्यभक्षन्। तदा १८ यूषफ् प्रत्युवाच एतस्य फलमेतत्, तैस्त्रिभि र्भाजनै र्दिनत्रयं बोध्यते। दिनत्रयमध्ये फिरौन् त्वां विचार्य्य वृक्षोपर्य्युद्बंक्ष्यति पक्षिणश्चागत्य तव १९ शरीरात् मांसं खादिष्यन्ति।

ततः परं तृतीयदिवसे फिरौणो जन्मदिन उपस्थिते स सर्व्वेभ्यो २० निजदासेभ्यो भोज्यम् आसादयामास। तत्र सर्व्वेषां निजदासानां साक्षात् प्रधानपात्रवाहकं प्रधानमोदककृतञ्च विचारयाञ्चकार। फिरौन् स्वीय- २१ हस्ते पानपात्रं दातुं प्रधानपानपात्रवाहकं तस्य निजपदे पुनरपि नियोजयामास; किन्तु यूषफा कथितार्थानुसारात् प्रधानमोदककृतं २२ उद्बबन्ध। तथापि प्रधानपानपात्रवाहको यूषफं न सस्मार किन्तु २३ विसस्मार।

---

## ४१ एकचत्वारिंशोऽध्यायः।

१ फिरौणः स्वप्नद्वयदर्शनं ९ पानपात्रवाहकस्य यूषफवार्त्ता कथनं १४ फिरौणो

यूषफे निजस्वप्नकथनं २५ राज्ञः स्वप्नफलज्ञापनं उपदेशनं ३७ यूषफ उन्नतिः ४६ मिसरि शस्यसञ्चयनं ५० यूषफः सुतद्वयजननं ५३ दुर्भिक्षारम्भश्च।

१ अनन्तरं द्वितीयवत्सरस्य शेषे फिरौन् इति स्वप्नं ददर्श। स नदीतीरे
२ तिष्ठति, तदा नद्याः सप्त सुन्दराः पुष्टा गाव उत्थाय शस्यमध्ये चरितुं
३ आरेभिरे। पश्चात् सप्तान्याः कृशाः कुत्सिता गावः सरित उत्थाय
४ तटिन्यास्तटे तासां गवां समीपे स्थिताः। अनन्तरं ताः कृशाः कुत्सिता गावस्ताः सप्त हृष्टाः सुन्दरा गा अग्रसन्। तदानीं फिरौणो निद्रा
५ भग्ना। तदनन्तरं फिरौन् निद्रितः सन् द्वितीयवारं इति स्वप्नं दृष्टवान्;
६ एकस्मिन् वृन्ते सप्त स्थूला उत्तमाः शस्यमञ्जर्य्य उदतिष्ठन्। ततः परं
७ पूर्व्वीयवायुना शुष्का अन्याः सप्त क्षीणाः शस्यमञ्जर्य्य उदतिष्ठन्। ताः सप्त क्षीणाः शस्यमञ्जर्य्यः स्थूलाः सप्त मञ्जरी र्जग्रसुः। अनन्तरं फिरौणो निद्राभङ्गे सति स्वप्नमात्रो बभूव।

८ ततः परं प्रातःकाले तस्य मनस्युद्विग्ने सति स लोकान् प्रहित्य मिसरदेशीयान् सर्व्वान् मायाविनो ज्ञानिनश्चाकारयितवान्; किन्तु फिरौणा तेषां समीपे स्वप्नदृष्टकथायां कथितायां तेषां मध्ये कोपि फिरौणे तत्-
९ फलं कथयितुं नाशक्नोत्। तदानीं प्रधानपात्रवाहकः फिरौणे निवेद-
१० यामास, अद्य स्वीयापराधं स्मरामि। फिरौन् द्वाभ्यां स्वीयभृत्याभ्यां अर्थात् मह्यं प्रधानमोकदकृते च प्रकुप्य आवां रक्षकसैन्याधिपतेः
११ कारायां बद्धवान्। तत्र सोहञ्च द्वावेकस्यां यामिन्यां स्वप्नौ दृष्टवन्तौ;
१२ द्वयोः स्वप्नयो र्द्विविधफले जाते। तत्र सार्द्धमस्माभी रक्षकसैन्याधिपते र्युवदास एक इब्रीय आसीत्; आवाभ्यां तस्मै कथिते स आवयोः
१३ स्वप्नार्थं कथितवान्; उभयोः स्वप्नयोः फले उक्तवान्। तत्र स आवाभ्यां यादृशं फलं गदितवान् तादृशमेव घटितं अर्थात् महाराजो मां निजपदे नियुक्तवान् तन्तूदबध्नात्।

१४ फिरौणि यूषफम् आनेतुं जनान् प्रहितवति लोकास्तं कारातः क्षिप्रम् आनिन्युः। ततः स क्षौरं कारयित्वा वसनान्तरं परिधाय फिरौणः
१५ समीप उपस्थितवान्। तदा फिरौन् यूषफम् अवदत्, अहं स्वप्नं दृष्टवान्, तस्य फलं कोपि कथयितुं नाशक्नोत्; किन्तु त्वं स्वप्नं श्रुत्वा
१६ तस्य फलं कथयितुं शक्नोसीति मया श्रुतम्। ततो यूषफ् फिरौणं प्रति जगाद, तदहं न शक्नोमि, किन्त्वीश्वरः फिरौणं मङ्गलयुक्तम् उत्तरं
१७ वदिष्यति। फिरौन् यूषफं जगाद, स्वप्नेहं तटिनीतटे स्थितवान्। तदा

सरितः सप्तपुष्टाः सुन्दराश्च गाव उत्थाय शस्यमध्ये चरितुम् आरभन्त। १८
अनन्तरं मिसरि देशेऽहं यादृशीः कदापि न दृष्टवान् तादृश्यः सप्त १९
दुर्ब्बलाः कुत्सिताः कृशाश्चापरा गाव उदतिष्ठन्। अपरं ताः कृशाः २०
कुत्सिताश्च गावस्ताः पूर्व्वीयाः पुष्टाः सप्त गा अग्रसन्। किन्तु ताभिस्तासु २१
ग्रस्तासु ग्रस्ताइति बोधो नाभवत्; यतस्ताः पूर्व्ववत् कुत्सिताएव स्थिताः;
तदा मम निद्राभङ्गोऽभवत्। अनन्तरम् अहं पुनः स्वप्नमपश्यम् एक- २२
स्मिन् वृन्ते स्थूलान्युत्तमानि सप्त कणिशान्युदतिष्ठन्। ततः परं पूर्व्वीय- २३
वायुना शुष्कानि क्षीणानि म्लानानि च सप्त कणिशान्युदतिष्ठन्। अपरं २४
तैः क्षीणै म्लानैश्च सप्तकणिशैस्तानि स्थूलान्युत्तमानि च सप्त कणिशानि
ग्रस्तानि। इति स्वप्ने दृष्टम् अहं मायाविभ्यः कथितवान्, किन्तु कोप्यस्य
फलं वक्तुं नाशक्नोत्।

तदानीं यूषफ् फिरौणं प्रत्युवाच, फिरौणो द्वयोः स्वप्नयोः फलमेक- २५
मेव; ईश्वरो यत् कर्त्तुम् उद्यतोस्ति तदेव फिरौणं ज्ञापितवान्। ता २६
उत्तमाः सप्त गावः सप्तवत्सरस्वरूपास्तैः सप्तभिरुत्तमैः कणिशैश्च सप्त
वत्सरा बोध्यन्ते; द्वयोः स्वप्नयोः समानत्वं। अपरं तत्पश्चात् उत्थिता याः २७
कृशाः कुत्सिताश्च सप्त गावस्ता अपि सप्त वत्सरस्वरूपाः; पूर्व्वीयपवनेन
शुष्कानि यानि सप्त कृशानि कणिशानि, तानि दुर्भिक्षस्य सप्त वत्सरा
भविष्यन्ति। फिरौणे मया यथा कथितं तथेश्वरो यत् कर्त्तुम् उद्य- २८
तोस्ति तत् फिरौणं दर्शितवान्। पश्यतु सकलमिसर्देशे सप्त वत्सरा २९
अतीव सुभिक्षा भविष्यन्ति। पश्चात् सप्त वत्सरास्तथा दुर्भिक्षा भवि- ३०
ष्यन्ति यथा मिसर्देशस्य सर्व्वं सुभिक्षत्वं विस्मारिष्यते, तेन दुर्भिक्षेण
देशो नंक्ष्यति। तेन दुर्भिक्षेण पूर्व्वीयं सुभिक्षत्वं नानुभाविष्यते च; तद- ३१
तीवासह्यं भविष्यति। फिरौणो वारद्वयदृष्टस्वप्नस्य फलमेतत् ईश्वर ३२
एतत् निश्चितं कृत्वा तूर्णं घटयिष्यति। अतएव फिरौन् एकं विवेचकं ३३
ज्ञानिपुरुषं चेष्टित्वानीय तं मिसर्देशोपरि नियुनक्तु। अपरं फिरौन् ३४
एतत् कर्म्म करोतु; ये सप्त वत्सराः सुभिक्षा भविष्यन्ति तत्र काले
देशेऽध्यक्षान् नियुज्य मिसर्देशात् पञ्चमांशं गृह्णातु। पश्चात् ते तदुत्तम- ३५
वत्सराणां शस्यानि संगृह्णन्तु भोजनार्थं फिरौणः स्थाने प्रतिनगरे तत्
सञ्चित्य स्थापयन्तु च। इत्थं मिसर्देशे भाविदुर्भिक्षस्य सप्तसु वत्सरेषु ३६
देशस्थितानां कृते सञ्चितभक्ष्येषु स्थितेषु दुर्भिक्षात् देशो न नंक्ष्यति।

तदानीं फिरौणस्तदीयसकलदासेयानाञ्च दृष्टौ कथैषा उत्तमा बभूव। ३७

३८ ततः फिरौन् भृत्यान् उवाच, यच्चैतस्मिन् पुरुष ईश्वरस्यात्मास्ति, एता-
३९ दृशः किमन्यः कश्चिल्लभ्यते ? तदा फिरौन् यूषफं जगाद ईश्वरस्त्वाम्
एतानि ज्ञापितवान्; अतएव त्वत्तुल्यो विवेचको ज्ञानी च कोऽपर
४० आस्ते? त्वामहं निजगृहस्याधिपतिकर्म्मणि नियुक्तवान्, मदीयाः सर्व्वे
लोकास्त्वदीयवाक्यस्य वशीभविष्यन्ति; केवलं सिंहासनेहं त्वत्तो महान्
४१ स्थास्यामि। फिरौन् यूषफं पुनरुक्तवान्, पश्य सकलमिसर्देशोपरि
४२ त्वामहं नियुक्तवान्। अनन्तरं फिरौन् निजकरात् अङ्गुरीयकं विमोच्य
यूषफः करे दत्त्वा तं सूक्ष्मवसनं परिधाप्य तस्य कण्ठे सुवर्णं हारञ्च
४३ ददौ। तं स्वस्य द्वितीयरथम् आरोहयामास, अपरं जनास्तस्याग्रेऽग्रे
अब्रेक् अब्रेक् (जानूनि पातयत जानूनि पातयतेति) घोषयामासुः;
४४ इत्थं स सकलमिसर्देशस्याधिपत्ये न्ययोजि। पश्चात् फिरौन् यूषफं
जगाद, यद्यहं फिरौन् भवेयं तर्हि त्वदीयाज्ञां विना सर्व्वदेशे कोपि
४५ लोको करौ पादौ च लाडयितुं न शक्ष्यति। अपरं फिरौन् यूषफो
नाम साफिनत्यानेहं (निगूढवाक्यप्रकाशकं) चकार। तत ओन्नगरी-
यस्य पोटीफेरनामकयाजकस्य कन्याम् आसिनतं तं विवाहयामास।
अनन्तरं यूषफ् सकलमिसर्देशे यातायातं कर्त्तुमारेभे।

४६ त्रिंशद्वत्सरवयसि यूषफ् मिस्रीयभूपतेः फिरौणः समक्षम् उपस्थित-
वान्; तदानीं फिरौणः समीपात् प्रस्थाय मिसर्देशस्य सर्व्वत्र बभ्राम।
४७ अनन्तरं सुभिक्षस्य ते सप्त वत्सराः भूम्यां बहुशस्यानि जनयामासुः।
४८ तेषु सप्तसु वत्सरेषु मिसर्देशे जातानि सर्व्वशस्यानि संगृह्य प्रतिनगरं
सञ्चिचाय। अपरं यद्यन्नगरस्य चतुर्दिक्षु भूमौ यावन्ति शस्यानि जातानि,
४९ तावन्ति तत्र तत्र नगरे सञ्चिचाय। इत्थं यूषफ् समुद्रीयसिकतावत्
प्रभूतानि शस्यानि संजग्राह यत् तेषां गणनं तत्याज यतस्तान्यपरि-
मितान्यासन्।

५० अपरं दुर्भिक्षवत्सरेभ्यः पूर्व्वं ओन्नगरनिवासिनः पोटीफेरयाजकस्य
५१ कन्यायाम् आसिनत्नामिकायां यूषफो द्वौ सुतौ जज्ञाते। ततो यूषफ्
तयो र्ज्येष्ठस्य नाम मिनशिं (विस्मृतिं) चकार; यतः स कथितवान्
५२ ईश्वरो मम सर्व्वक्लेशं पितृगेहञ्च मां विस्मारितवान्। अपरं द्वितीय-
सुतस्य नाम इफ्रयिमं (फलवन्तं) चकार; यतः स उक्तवान् यत्राहं दुःख-
ग्रस्तस्तत्र देशे माम् ईश्वरः फलवन्तं कृतवान्।

५३ अनन्तरं मिसर्देशे सुभिक्षस्य सप्तवत्सरेषु सम्पूर्णतां गतेषु यूषफो

वाक्यानुसारात् दुर्भिक्षस्य सप्तवत्सराणाम् आरम्भो बभूव, ततोऽन्य- ५४
सर्व्वदेशेषु दुर्भिक्षो बभूव, किन्तु समस्तमिसर्देशे शस्यान्यासन्। सर्व्वेषु ५५
मिसर्देशेषु दुर्भिक्षे जाते प्रजानिवहः फिरौणः समीपे भक्ष्यार्थं
प्रार्थयाञ्चक्रे; ततः फिरौन् सकलमिस्रीयान् बभाषे, यूयं यूषफः
समीपं यात, स युष्मभ्यं यत् वदति तदेव कुरुत। तदानीं सर्व्वपृथिव्यां ५६
दुर्भिक्षो बभूव, मिसर्देशस्य सर्व्वस्थानेऽतीवप्रबले दुर्भिक्षे सति यूषफ्
सर्व्वस्थानीयं भाण्डागारं मोचयित्वा मिस्रीयेषु शस्यानि विक्रेतुम् आर-
भत। अपरं नानादेशीया नरा मिसर्देशे शस्यानि क्रेतुं यूषफः समीपं ५७
आजग्मुः, यतः सर्व्वेषु देशेषु प्रबलो दुर्भिक्षो बभूव।

---

## ४२ द्विचत्वारिंशत्तमोऽध्यायः।

१ याकूबः पुत्राणां शस्यं क्रेतुं मिसर्गमनं ५ यूषफः समीपे उपस्थानं ६ तैः सार्द्धं यूषफो व्यवहरणं शिमियोनं बद्ध्वा विन्यामीनम् आनेतुम् आज्ञापनं २१ तेषां भ्रातरं प्रति कृतापराधस्मरणं २५ तेषां शाणपुटेषु मुद्रा निधाय यूषफस्तेषां विसर्जनं २९ गृहं गत्वा पितुः समीपे सर्व्ववृत्तान्तकथनं ३५ याकूबो भयं विन्यामीनं प्रहेतुम् अनङ्गीकरणञ्च।

अपरं मिसर्देशे शस्यानि सन्तीति वार्त्तां श्रुत्वा याकूब् स्वीयपुत्रान् १
उवाच, यूयं परस्परं विलोक्य कुत आध्वे? स पुनरुदितवान्, पश्यत २
मया श्रुतं मिसरि शस्यानि सन्ति, तस्माद् यूयं तत्र गत्वास्मत्कृते शस्यं
क्रीत्वानयत; तेन वयं न मृत्वा जीविष्यामः। अनन्तरं यूषफो दशभ्रा- ३
तरः शस्यं क्रेतुं मिसरं जग्मुः। किन्तु याकूब् यूषफः सहोदरं विन्या- ४
मीनं भ्रातृभिः सार्द्धं न प्रहितवान् यतः स कथितवान् यद्येतस्यापि
विपद् घटेत।

तदानीं यात्राकारिणां लोकानां सङ्गे इस्रायेलः सुताः शस्यानि क्रेतुं ५
गतवन्तः, यतः किनानदेशेऽपि दुर्भिक्ष आसीत्। यूषफस्तस्य देशस्याधि- ६
पतित्वात् तद्देशीयमनुष्येषु शस्यानि व्यक्रीणात् ततो यूषफो भ्रातर
आगत्य भूमिष्ठाः सन्तस्तं प्रणेमुः। यूषफ् निजसहजान् निरीक्ष्य परि- ७
चिचाय, किन्तु तेषां समीपे अपरिचित इव व्यवहृत्य निष्ठुरवाक्यं
जगाद, यूयं कुत आगताः? ते कथयामासुः वयं शस्यं क्रेतुं किनान्देशात्
आगताः। यूषफो निजसहजेषु परिचितेष्वपि ते तं परिचेतुं न शेकुः। ८

यूषफ् तानधि पूर्व्वं दृष्टानि स्वप्नानि संस्मृत्य तानवोचत्, यूयं सर्व्वे ९
चारजना, एतद्देशस्य अनावृतसकलस्थानानि निरीक्षितुं समागताः।

१० ते कथयामासुः हे प्रभो तन्न; भवत इमे दासाः शस्यं क्रेतुम् आगमन्।
११ वयं सकला एकस्य सुता विश्वास्या मनुजा भवत एते दासेयाश्चारा
१२ नहि। सोऽवदत् नहि किन्तु यूयं देशस्यानावृतस्थानानि वीक्षितुम्
१३ आगताः। ते प्रत्यवदन् भवत इमे दासेया द्वादश भ्रातरः किनान् देश-
निवासिन एकस्यैव सुताः; यश्चतु अस्माकं कनिष्ठः सहजोऽद्यापि पितुः
१४ समीपेऽस्ति अपरैकजनस्तु न विद्यते। यूषफ् तान् पुनरवोचत्,अहं युष्मभ्यं
१५ यत् चारा इति गिरं कथितवान्, यूयं तएव भवत। अहं युष्मान् परीक्षितुं
फिरौण आयुषः शपथं कुर्व्वन् कथयामि, युष्माकं कनिष्ठो भ्राता चेदत्र
१६ नायास्यति तर्हि यूयमितः स्थानात् गन्तुं न शक्ष्यथ। युष्माकमेकं प्रहित्य
निजभ्रातरम् आनयत, तत्कालपर्य्यन्तं युष्माभि र्बद्धैः स्थातव्यं; ततो युष्माकं
वचः सत्यं न वेति परीक्ष्यैव ज्ञायिष्यते; नो चेत् फिरौण आयुषः शपथं
१७ कुर्व्वन् कथयामि यूयमवश्यमेव चारा भवथ। अनन्तरं यूषफ् तान्
१८ दिनत्रयं यावत् कारायां बद्धा स्थापितवान्। अपरं तृतीयेऽह्नि तान्
उक्तवान् ईश्वरात् भीति र्ममास्ति; यूयमित्थं कुरुत, तेन जीविष्यथ।
१९ यदि यूयं विश्वास्यमानवा भवेत तर्हि येषामेकः सहजोऽस्यां कारायां
२० बद्धस्तिष्ठतु, यूयञ्च दुर्भिक्षहेतो र्गेहाय शस्यानि नीत्वा निजकनिष्ठसह-
जम् मत्समीपम् आनीय युष्मदुक्तागिरं प्रमाणीकुरुत तेन न मरिष्यथ।
२१ ततस्ते तथैव कृतवन्तः, पश्चात् परस्परं जगदुः, स्वीयसहजमधि
वयं निश्चितापराधिन आस्महे, यतोऽस्माकं समीपे तेन काकूक्तिः कृता,
वयं तस्य मनसो व्याकुलत्वं विलोक्यापि तां न श्रुतवन्त एतत्कारणात्
२२ अस्माकम् एषा विपद् अजनि। तदानीं रूवेन् तान् अवादीत्, यूय-
मेतस्मिन् यूनि पापं मा कार्ष्ट कथामिमाम् अहं किं युष्मान् न गदित-
वान्? तथापि यूयं नामन्यध्वं पश्यतेदानीं तस्य शोणितं परिशोध्यते।
२३ किन्तु यूषफ् यत् तेषां संलापं बुद्धवान् तत् ते बोद्धुं नाशक्नुवन्. यतो
२४ द्विभाषावादिना कथोपकथनम् अभवत्। अनन्तरं यूषफ् तेषां समी-
पात् गत्वा चक्रन्द; पुनरागत्य तैः सार्द्धं संलप्य तेषां मध्यात् शिमियोनं
नीत्वा तेषां साक्षादेव बबन्ध।

२५ अनन्तरं यूषफ् तेषां शाणपुटेषु शस्यानि पूरयित्वा एकैकजनस्य
शाणपुटे मुद्राः परावर्त्य दातुं तेभ्यः पाथेयभक्ष्यं दातुञ्चाज्ञापितवान्; ततो
२६ भृत्यास्तथैव कृतवन्तः। अनन्तरं स्वस्वगर्द्दभस्योपरि शस्यानि निधाय
२७ तत्स्थानात् प्रतस्थिरे। किन्तूत्तरणस्थानं प्राप्य एकः स्वीयगर्द्दभाय भक्ष्यं

दातुं श्याणपुटं मोचयित्वा निजमुद्रा ददर्श, यतः श्याणपुटस्य मुखएव मुद्रा आसन्। तदानीं स सहजान् जगाद, मम मुद्राः प्रत्यावृताः पश्य- २८ तैता मम श्याणपुटे सन्ति। तदा तेषां मनांसि प्रोद्विज्यन्त ते बिभ्यतश्च परस्परं प्रोक्तवन्त ईश्वरोऽस्मान् प्रति किमिदं कृतवान्?

अनन्तरं ते किनान्देशे निजपितुर्याकूबः समीपं प्राप्य खेषु यद्यद् २९ अघटत, तत्सर्व्वं तं विज्ञाप्य जगदुः, स देशाधिपतिरस्मान् देशचारान् ३० ज्ञात्वा निष्ठुरवचनं भाषितवान्। ततोऽस्माभिः स उदितः, वयं चारा ३१ न भवामो विश्वास्यमानवाः। वयं द्वादश भ्रातरः सर्व्वे एकपितुः सुताः; ३२ अस्माकं मध्यादेको नास्ति कनिष्ठः सहजश्च पितुः समीपे किनान्देशे विद्यते। तदानीं स देशाधिपतिरस्मभ्यम् अकथयत्, अनेनाहं युष्मान् ३३ विश्वस्यान् बोद्धुं शक्नोमि; यदि यूयं खेषाम् एकं सहजं मम सन्निधौ निधाय खेषां गेहस्य दुर्भिक्षकारणात् शस्यानि गृहीत्वा यास्यथ, निजकनिष्ठं सहजञ्च मत्समीपं आनेष्यथ, तदा यूयं याथार्थिका लोका ३४ भवत, चारा नहीति ज्ञास्यामि। पश्चात् युष्माकं सहजं युष्मभ्यं दास्यामि ततो यूयम् अस्मिन् देशे वाणिज्यं कर्त्तुं शक्ष्यथ।

अनन्तरं तैः श्याणपुटेभ्यः शस्येषु उत्तारितेषु सर्व्वे खखश्याणपुटेषु ३५ मुद्राग्रन्थिं प्रापुः। तदानीं सकलमुद्राग्रन्थी विलोक्य तेषां पिता ते च बिभ्युः। तदा तेषां पिता याकूब् उक्तवान्, यूयं मां पुत्त्रहीनं कुरुथ; ३६ पश्यत यूषफ् नास्ति, शिमियोन् नास्ति, पुनश्च बिन्यामीनं नेतुम् इच्छथ; एतत् सर्व्वं मम विरुद्धं भवति। ततो रूवेन् निजतातं जगाद, ३७ यद्यहं तं तव समीपं नानयामि, तर्हि मम द्वौ सुतौ हनिष्यसि; त्वं मम करे बिन्यामीनं समर्पय, तमहं पुनश्च तव समीपम् आनेष्यामि। तदानीं तेन कथितं, मम पुत्त्रो युष्माभिः सार्द्धं न यास्यति, यतस्तस्य ३८ सहोदरस्य मरणात् स एकएव जीवन् आस्ते; यूयं येन मार्गेण याथ, तत्र यद्यस्यापि कापि विपद् घटेत, तर्हि शोकात् एतैः पक्वकेशैः सार्द्धं मां परलोकं प्रेषयिष्यथ।

---

## ४३ त्रिचत्वारिंशत्तमोऽध्यायः।

१ शेषे याकूबा बिन्यामीनः प्रेरणं १५ भ्रातॄणां यूषफो गेहगमनं अधिपतेः समीपे तेषां भयप्रकटनं २५ यूषफे पारितोषं दत्त्वा तेन सार्द्धं भ्रातॄणां भोजनञ्च।

अनन्तरं देशे महादुर्भिक्षे तिष्ठति ते मिसर्देशात् यानि शस्यान्या- १

२ नयन् तानि सर्व्वाणि भक्षितानि। तदा तेषां तातस्तान् बभाषे, यूयं पुन-
३ र्गत्वा किञ्चित् शस्यम् अस्मत्कृते क्रीणीत। ततो यिहूदास्तं गदितवान्,
सोधिपति र्दृढं प्रतिज्ञाय कथितवान्, युष्माकं भ्राता युष्माभिः सार्द्धं
४ न स्थितश्चेत् तर्हि युष्माभि र्मम वदनं वीक्षितुं न शक्ष्यते। तस्मात् यदि
त्वम् अस्माभिः सार्द्धं सहजं प्रेरयसि, तर्हि वयं त्वत्कृते शस्यं क्रेतुं
५ यास्यामः। यदि न प्रेरयसि, तर्हि वयं न यास्यामः; यतः सोऽधिपतिः
कथितवान्, युष्माकं सहजे युष्माकं सङ्गे न तिष्ठति सति यूयं मम वदनं
६ वीक्षितुं न प्राप्स्यथ। तत इस्रायेल् कथयामास युष्माकम् अपर एकः
सहज आस्ते इति मनुजस्य तस्य समीपे कथयन्तो मां प्रति कुव्यवहा-
७ रमिमं कुतः कृतवन्तः? ते कथितवन्तः, युष्माकं तातः किमद्यापि जीवन्
आस्ते? युष्माकं किम् अपरः सहजोऽस्तीति तेनास्मान् अस्माकं ज्ञातींश्च
प्रति यथा परिपृष्टं तथा वयं एतेषां वाक्यानाम् उत्तरं अवोचाम; किन्तु
युष्माकं भ्रातरम् अत्रानयतेति वाचं स वदिष्यतीति केन प्रकारेण
८ बोधेमहि? अनन्तरं यिहूदा निजपितरम् इस्रायेलं बभाषे, त्वं मया सार्द्धं
तं युवानं प्रेषय; वयम् उत्थाय यात्रां कुर्म्मः, तेन वयं त्वं बालकाश्च सर्व्व-
९ एव रक्षिता भविष्यामो न मरिष्यामः। अहमेतस्य लग्नकोऽभूवम् एनं मम
करात् ग्रहीष्यसि; यद्यहम् एनम् आनीय तव सम्मुखे न स्थापयामि,
१० तर्हि स दोषः सर्व्वदा मयि वर्त्तिष्यते। यद्यस्माकम् एतावान् विलम्बो
११ नाभविष्यत् तर्हि वयं द्वितीयवारं परावृत्यागन्तुम् अशक्ष्याम। तदानीं
तेषां जनक इस्रायेल् तान् अवदत्, यदीत्थं भवति, तर्हि कर्म्मैकं
कुरुत; तस्मायधिपतये पारितोषिकं दातुं गन्धरसमधुसिल्हगुग्गुलु-
पेस्तावादामा इत्यादीनि देशस्यास्य फलान्युत्तमानि स्वेषां पात्रेषु गृह्णीत।
१२ अपरं स्वेषां करेषु द्विगुणा मुद्रा गृह्णीत, युष्माकं शाणपुटानां मुखेषु
या मुद्राः परावृत्यागतास्ताश्च करेषु गृहीत्वा यात; को जानाति तत्र
१३ वा भ्रान्तिः संजाता। अपरं निजभ्रातरं गृहीत्वा उत्थाय पुनरपि
१४ तस्याध्यक्षस्य सन्निधिं गच्छत। सर्व्वशक्तिमान् ईश्वरो युष्मान् तेना-
धिपतिना तथानुगृहीतान् करोतु यथा सोधिपतिः स्वयं युष्माकम्
अन्यभ्रातरं विन्यामीनञ्च परित्यक्ष्यति; किन्तु यदि मया पुत्रहीनेन
भवितव्यं तर्हि पुत्रहीनोऽभूवम्।

१५ तदा ते तान्युपढौकनीयानि द्रव्यानि द्विगुणमुद्रा विन्यामीनञ्च नीत्वा
१६ उत्थाय मिसरं गत्वा यूषफः समक्षम् अतिष्ठन्। यूषफ् तैः सार्द्धं विन्यामीनं

विलोक्य निजगृहाधिपतिं गदितवान् एतान् मनुजान् मम निवेशनं
नय पशूंश्च मारयित्वा भक्ष्यद्रव्याण्यासादय; इमे मध्याह्ने मया सार्द्धं
भोक्ष्यन्ते। ततः स यूषफ आदेशानुसारात् तान् यूषफो निवेशनं नीत- १७
वान्। किन्तु तेषां यूषफो निवेशननयनात् ते भीताः परस्परं गदि- १८
तवन्तः, पूर्व्वम् अस्माकं शाणपुटेषु या मुद्राः प्रत्याहृत्य गतास्तत्कारणात्
अस्मान् अत्रानीतवान्; इदानीम् अस्मद्विरुद्धं तं दोषम् आरोप्य ससा-
क्रम्यास्माकं गर्द्दभानपि गृहीत्वास्मान् क्रीतदासानिव स्थापयिष्यति।
तदानीं ते यूषफो गृहाधिपतेः समीपं गत्वा गृहद्वारे तिष्ठन्तस्तेन १९
सार्द्धं संलप्य कथयामासुः, हे महेच्छ वयं पूर्व्वं शस्यानि क्रेतुम् आग- २०
साम, किन्तूत्तरणस्थानं गत्वा निजशाणपुटेषु मोचितेषु शाणपुटमुखे २१
प्रतिमनुजपरिमितमुद्राः प्राप्ताः; वयं ताः करेषु समानयाम, शस्यानि २२
क्रेतुञ्चापरा मुद्रा आनयाम; किन्तु ता मुद्रा अस्माकं शाणपुटेषु केन
निहिता वयं तन्न जानीमः। ततः स गृहाधिपतिः कथितवान् युष्माकं २३
शान्ति र्भूयात् मा भैष्ट, युष्माकम् ईश्वरोऽर्थात् युष्माकं पैतृक ईश्वरो
युष्माकं शाणपुटेषु युष्मभ्यं गुप्तधनं दत्तवान्, युष्माकं मुद्रा मम करे
स्थिताः। अनन्तरं स शिमियोनं तेषां समीपम् आनीय तान् यूषफो २४
गेहाभ्यन्तरं नीत्वा पादान् प्रक्षालयितुं तोयं ददौ, ततस्तेषां गर्द्दभेभ्यः
खाद्यद्रव्यम् अददात्।

अनन्तरं मध्याह्नात् पूर्व्वं यूषफ आगमनसमये ते पारितोषिकान्य- २५
सज्जयन् यतोऽत्रास्माभि र्भोक्तव्यम् इतिवाचं ते श्रुतवन्तः। ततो यूषफि २६
गृहम् आगते ते करस्थितानि पारितोषिकानि तस्मिन् गृहे निधाय
भूमिष्ठाः सन्तः प्रणेमुः। तदानीं यूषफ् तेषां क्षेमं पृष्ट्वा कथयामास, २७
युष्माकं यस्य वृद्धतातस्य कथाम् अकथयत, स किं क्षेमेणास्ते? स किम्
अद्यापि जीवन् आस्ते? ते प्रत्यूचुः, भवतो दासोऽस्माकं जनकोऽद्यापि २८
जीवन् क्षेमेणास्ते, ततस्ते भूमिष्ठाः सन्तः प्राणमन्। तदानीं यूषफ् २९
पश्यन् निजसहोदरं बिन्यामीनं विलोक्य कथयामास, युष्माकं यस्य कनि-
ष्ठसहजस्य कथामकथयत स किमयम्? अपरं स कथितवान्, हे वत्स
त्वामीश्वरोऽनुगृह्णातु। तदानीं यूषफोऽन्तःकरणे स्नेहस्योपस्थितत्वात् स ३०
व्याकुलीभूय रोदितुं स्थानमन्विष्य क्षिप्रं निजकोष्ठं प्रविवेश तत्र रुरोद
च। तदनन्तरं स वदनं प्रक्षाल्य वहिरागत्य धैर्य्यमवलम्ब्य भक्ष्याणि ३१
परिवेष्टुम् आदिदेश। ततो दासा यूषफे तस्य भ्रातृभ्यश्च तद्देहे ३२

भोक्तृभ्यो मिस्त्रिभ्यश्च पृथक् पृथक् परिवेषयामासुः, यत इब्रिभिः सार्द्धं मिस्त्रियाणां भोजनव्यवहारो नास्ति तत्कर्म्म मिस्त्रीयाणाम् ऋतीयनीयं। अनन्तरं निजसम्मुखे तेषां ज्येष्ठं ज्येष्ठाधिकारानुसारात् कनिष्ठञ्च कनिष्ठाधिकारानुसारेण समुपवेशयामास, तेन ते परस्परम् ३४ आश्चर्य्यं मेनिरे। अपरं स स्वीयसम्मुखस्थिताद् भक्ष्यात् उत्थाप्य तेभ्यो दत्तवान्, किन्तु तेषां भागेभ्यो विन्यामीनो भागं पञ्चगुणाधिकं कृतवान्। ततस्ते पीत्वा तेन सार्द्धम् आनन्दितवन्तः।

३३ ... ३४ (verse numbers in margin)

## ४४ चतुश्चत्वारिंशोऽध्यायः।

१ सहजान् प्रति यूषफस्य चातुरी ६ तस्य पानपात्रं विन्यामीनः शाणपुटे स्थापनं १४ पुनरपि तेषां तत्समीपागमनं १८ यूषफं प्रति यिहूदाः कातरोक्तिः।

१ अनन्तरं यूषफ् निजगृहाधिपतिम् आदिष्टवान् एषां मानुषाणां शाणपुटानि यावत् शस्यं धरन्ति तावत् शस्यं परिपूर्य्य देहि, अपरं २ एकैकशो मुद्रास्तेषां शाणपुटानां मुखेषु स्थापय च। विशेषतः कनिष्ठस्य शाणपुटे तस्य शस्यक्रयणीयमुद्राभिः सह मम पानपात्रम् अर्थात् रूप्यमयपात्रं निधेहि; ततः स यूषफ आदेशानुसारेण कृतवान्। ३ अपरं प्रभाते सत्येव ते गर्द्दभैः सार्द्धं विसर्जनं प्राप्तवन्तः। किन्तु नग- ४ रात् तेषु बहुदूरं न गतेषु यूषफ् निजगृहाधिपं जगाद, त्वम् उत्थाय तेषां मानुषाणां पश्चाद् धावन् तान् धृत्वा वद, यूयम् उपकारपरि- ५ वर्त्तेन कुतोऽपकारम् अकार्ष्ट? मम प्रभु र्येन पिबति येन च गणयति तत् पानपात्रं किमेतत् नहि? एतत् कर्म्म करणात् यूयं दोषिणो जाताः।

६ ततः परं स तान् धृत्वा तथोक्तवान्, तदा ते प्रतिजगदुः अस्माकं ७ प्रभुः कुत एतादृशीं वाणीं वक्ति? तव दासानां एतादृक् कर्म्मकरणं दूरे ८ तिष्ठतु। पश्य निजनिजशाणपुटे पूर्व्वं या या मुद्राः प्राप्ताः, किनानदेशात् ताः पुनरपि तव समीपम् आनीतवन्तः, तर्हि कथं निजप्रभो र्गेहात् ९ सुवर्णं दुर्वर्णं वा चोरयिष्यामः? तव दासानां मध्ये यस्य समीपे तत् १० प्राप्यते, स मरिष्यति; अपरं वयमपि प्रभोः क्रीतदासा भविष्यामः। ततः स उक्तवान्, भद्रं युष्माकं कथानुसारादेव भवेत्; यस्य समीपे तत् प्राप्यते, स मम दासो भविष्यति, किन्त्वन्ये निर्दोषा भविष्यन्ति। ११ तदानीं ते भूमौ स्वं स्वं शाणपुटम् अवारोहयन् स्वं स्वं शाणपुटं

मोचयामासुः । ततः स गृहाधिपो ज्येष्ठमारभ्य कनिष्ठपर्य्यन्तं १२ समाप्य पात्रम् अन्विष्टवान्, तदा विन्यामीनः शाणपुटे तत् प्राप्तं। अतएव ते स्वस्ववस्त्रं छित्त्वा स्वस्वगर्द्दभोपरि शाणपुटानि निधाय १३ पुनर्नगरम् जग्मुः।

अपरं यिहूदास्तस्य भ्रातरश्च यूषफो गृहं पुनरायचुः। यूषफि तत्र १४ स्थिते सति ते तस्याग्रे भूमौ दण्डवत् बभूवुः । तदा यूषफ् तान् अवदत् १५ यूयं किमिदं कर्म्म कृतवन्तः? एतादृशोऽहं पुमान् अवश्यं गणयितुं शक्नोमीति यूयं किं न जानीथ? ततो यिहूदा जगाद, वयं प्रभोः समक्षं १६ किमुत्तरं दास्यामः? किं वा वदिष्यामः? कथं वा स्वान् निर्दोषान् करिष्यामः? ईश्वरेण तव दासेयानां दुष्टता प्रकाशिता; पश्यतु यस्य स्थाने पानपात्रं प्राप्तं स वयञ्च सर्व्वएव भवतो दासेया भविष्यामः। ततो यूषफ् उक्तवान्, एतादृशं कर्म्म मत्तो मा भूत्; यस्य स्थाने पात्रं १७ प्राप्तं सएव मम दासो भविष्यति, किन्तु यूयं क्षेमेण पितुः समीपं यात।

ततो यिहूदाः समीपं गत्वा जगाद, हे प्रभो भवान् फिरौणा समः, १८ एतान् दासान् प्रति भवतः क्रोधो यदि न प्रज्वलति, तर्हि प्रभोः कर्णगोचरे भवतो दासोऽहं किञ्चिन्निवेदयामि। यूष्माकं पिता भ्राता वास्तीति १९ प्रभुरेतान् दासान् अपृच्छत्। ततो वयं प्रभुं प्रत्यवदाम, अस्माकं २० जनक आस्ते, स स्थविरः; अपरं तस्य वृद्धावस्थाया एकः कनिष्ठः पुत्त्रोस्ति, तस्य सहोदरो मृतवान्, सएव तन्मातुरेकः पुत्त्रोस्ति, तस्मात् पिता तस्मिन् स्निह्यति। अनन्तरम् एतान् दासान् भवान् अवादीत्; २१ यूयं तं मम समीपम् आनयत तं द्रक्ष्यामि। वयम् तदा प्रभुम् अवदाम, २२ स युवा जनकं त्यक्तुं न शक्ष्यति, यदि त्यजेत्, तदा तातो मरिष्यति। ततस्त्वं दासान् एतान् अवादीः, युष्माकं सङ्गे कनिष्ठे सहजे नागते २३ यूयं मम वदनं पुन र्न द्रक्ष्यथ। पश्चात् वयं तव दासस्यास्मत्पितुः २४ समीप उपस्थाय तं प्रभोरेताः कथा अवदाम। अपरं जनको गदितवान् २५ यूयं पुनर्गत्वास्मत्कृते किञ्चित् शस्यं क्रीणीत । ततो वयं अवदाम, २६ यातुं न शक्ष्यामः, कनिष्ठो भ्राता यद्यस्माभिः सार्द्धं तिष्ठति, तर्हि यास्यामः; यतः कनिष्ठे सहजे सङ्गे न तिष्ठति वयं तस्याधिपस्य वदनदर्शनमपि प्राप्तुं न शक्ष्यामः। ततस्तव दासेयोऽस्माकं जनकः २७ कथितवान् मम तस्या भार्य्याया द्वावेव पुत्त्रौ जातौ, तत् यूष्माभि र्ज्ञायते। तयोरेकस्मिन् गते कथितवानहं स खण्डखण्डीभूय छिन्नोऽ- २८

२९ भवत्; तदारभ्य तमहं कदापि द्रष्टुं न प्राप्तवान्। इदानीं मम सन्निधेरेतस्मिन् नीते, यद्येतमपि काचित् विपत् प्राप्नोति, तर्हि यूयं शोकात्
३० अनेन पक्वकेशेन मां परलोकं प्रहेष्यथ। अतो भवद्दासो यो मम पिता तत्समीपे मयोपस्थाने कृते यद्येष युवास्माकं सङ्गे न तिष्ठति,
३१ तर्हि स युवानमेनम् अदृष्ट्वा तत्क्षणात् मरिष्यति। यतस्तस्य प्राणा वत्सस्य प्राणै र्बद्धाः सन्ति; तेन तव दासेया वयं शोकेन पक्वकेशेन
३२ सार्द्धं तव दासं तमस्माकं जनकं परलोकं प्रेषयिष्यामः। यस्मात् तव दासोऽहं निजपितुः समीपे एतस्य यूनः प्रतिभू र्भवन् कथितवान्, यद्यहं तं तव सन्निधिं नानयेयं, तर्हि पितुः समीपे सर्व्वदा दोषी
३३ स्थास्यामि। अतोऽहं निवेदयामि, एतस्य यूनः परिवर्त्तेन प्रभोः समीपेऽहं
३४ दासो तिष्ठामि, किन्तु युवानमेनं सहजैः सार्द्धं विसृजतु। यत एष युवा मया सार्द्धं चेन्न याति, तर्ह्यहं केन प्रकारेण पितुः समीपं गन्तुं शक्नोमि? अपरं पितरि या विपत् घटिष्यते तां केन प्रकारेण द्रष्टुं शक्नोमि?

---

## ४५ पञ्चचत्वारिंशोऽध्यायः।

१ भ्रातॄणां समीपे यूषफः परिचयनं, ईश्वरानुग्रहस्य प्रशंसनं पित्रे वार्त्ताप्रेषणं ६ यूषफो भ्रातॄणामागमनात् फिरौणस्तुष्टिः पाथेयं दातुमाज्ञा २५ यूषफो जीवनवार्त्तां निशम्य याकूबः प्रफुल्लश्च।

१ अनन्तरं यूषफ् समीपस्थजनानां साक्षात् अधैर्य्यः सन् जगाद, मम सम्मुखात् सर्व्वान् मनुजान् बहिः कुरुत। तत्र कस्मिंश्चित् न तिष्ठति
२ यूषफ् निजसहजान् निजं परिचाययितुम् आरब्धवान्। तत उच्चै रुरोद तत् मिस्रीयाः फिरौणो गृहस्थिताश्च सर्व्वे जनाः श्रुतवन्तः।
३ यूषफ् निजसहजान् जगाद, यूषफहं, मम जनकः किमद्यापि जीवन्नास्ते? किन्तु तदीया भ्रातरस्तस्य समक्षम् उद्विग्ना अभवन्, तस्मात्
४ उत्तरं दातुं न शेकुः। अनन्तरं यूषफ् निजसहजान् अवदत्, विनयेऽहं मत्समीपम् आगच्छत, ततस्ते सन्निधिम् ईयुः; तदा यूषफ् बभाषे,
५ यूयं यं मिसर्गामिषु व्यक्रीणीत युष्माकं स यूषफ् सहजोऽहं। किन्तु युष्माभिरत्राहं विक्रीत इत्यस्मात् माखिद्यध्वं स्वेषु मा विरज्यध्वं; यतः
६ प्राणरक्षार्थम् ईश्वरो युष्माकमग्रे मां प्रेषितवान्। पश्यत देशे द्वावेव

वत्सरौ दुर्भिक्षौऽभवतां; अपरे पञ्च वत्सरा एतादृशा भविष्यन्ति, तेषु कर्षणं शस्यकर्त्तनञ्च न भविष्यतः। ईश्वरः पृथिव्यां युष्माकं वंशान् ७ रक्षितुं महोपकारेण युष्मान् प्राणै र्जीवयितुं युष्माकमग्रे मां प्रेषितवान्। युष्माभिरहमत्र प्रहित इति नहि, ईश्वरेण प्रेरितोहम्, स मां फिरौणः ८ पितरं तदीयगेहस्य प्रभुं सर्व्वमिसर्देशस्याधिपञ्च कृतवान्। अतो यूयं ९ पितुः समीपं शीघ्रं गत्वा तं वदत, तव पुत्त्रो यूषफ् इत्थम् उक्तवान् ईश्वरो मां निःशेषमिसर्देशस्य प्रभुं कृतवान्; त्वं मम सन्निधिम् आगच्छ, विलम्बं मा कृथाः। त्वं पुत्त्रपौत्त्रादिभिः सार्द्धं गोमेषादिसर्व्वस्वैः सार्द्धञ्च समागत्य १० मम समीपस्थो भवितुं गोशन्प्रदेशे वत्स्यसि। अहं तत्र स्थाने त्वां पाल- ११ यिष्यामि, नो चेत् ये पञ्च वत्सरा दुर्भिक्षाः स्थास्यन्ति, तत्र सपरिवारस्य त्वदीयस्य सर्व्वस्य च दारिद्र्यं भविष्यति। पश्यताहं स्ववक्त्रेण युष्माभिः १२ संलापयामि, तत् यूयं बिन्यामीन् सहोदरश्च निजनयनै र्दृष्टवन्तः। अत १३ एतस्मिन् मिसर्देशे मम यद्यदैश्वर्य्यादिकं युष्माभि र्दृष्टं, तत् सर्व्वं मम पितुः समीपे कथयित्वा तं क्षिप्रमत्रानेष्यथ। अनन्तरं यूषफ् निज- १४ सहजस्य बिन्यामीनः कण्ठं धृत्वा रुरोद, बिन्यामीनपि, तस्य कण्ठं धृत्वा चक्रन्द। अपरं यूषफ् अन्यसहजानपि चुम्बित्वा तेषां कण्ठेषु रुदितवान्; १५ तदानीं तस्य सहजास्तेन सार्द्धम् आलपितुम् आरेभिरे।

अपरं यूषफः सहजा आगमन्, इति जनरवे फिरौणो गृहं गते, १६ फिरौन् तस्य दासेयाश्च सर्व्वे तुतुषुः। अपरं फिरौन् यूषफं जगाद, त्वं १७ निजसहजेभ्यः कथय यूयमेतत् कर्म्म कुरुत, निजपशूनां शाणपुटानि समवतार्य्य किनान्देशं गत्वा स्वीयपित्रा सार्द्धं सकलपरिवारान् मम १८ सन्निधिम् आनयत; अहं युष्मभ्यं मिसर्देशस्य उत्तमं स्थानं दत्त्वा देशीयोत्तमानि द्रव्याणि भोजयिष्यामि। इदानीं ममाज्ञयैतत् कर्म्म कुरुत, १९ यूयं मिसरः शकटानि गृहीत्वा निजवालकान् निजयोषितो निज- जनकञ्च समानयत। तत्र निजद्रव्यादीनि प्रति मा चिन्तयत, कृत्स्न- २० मिसर्देशीयोत्तमानि द्रव्याणि युष्माकं सन्ति। तत इस्रायेलः सुतास्त- २१ दनुसारेण चक्रुः यूषफ् फिरौण आज्ञानुसारात् तेभ्यः शकटानि पाथेयानि च दत्तवान्। प्रतिजनं परिधानाय वस्त्रयुग्मं दत्तवान्; किन्तु २२ बिन्यामीने शतत्रयरूप्यमुद्राः पञ्च युग्मवासांसि च ददौ। अपरं पितुः २३ कृते मिसरीयोत्तमवस्तूनां भाराक्रान्तान् दश गर्दभान् पितुः पाथेयानां शस्यानां पूपानां तदन्यभक्ष्यवस्तूनाञ्च भाराक्रान्ता दश गर्द-

२४ भीञ्च प्रेषयामास। इत्थं यूषफा निजसहजेषु विसृष्टेषु ते प्रतस्थिरे; ततः स तान् उवाच, सावधाना यूयं पथि मा विवदध्वम्।

२५ इत्थं ते मिसर्देशात् प्रस्थाय किनान्देशे स्वपितु र्याकूबः समीप २६ उपतस्थुः। अपरं ते तं बभाषिरे, हे तात यूषफ् अद्ययावत् जीवन् विद्यते स निःशेषमिसर्देशस्याधिपतिरभूत्; अनया वाचा याकूबो २७ हृदयं जडीबभूव, यस्मात् स तेषां वचसि न विशश्वास। तदानीं यद्वाक्यं यूषफ् तेभ्यः कथयामास, तत् सर्व्वं ते तं बभाषिरे, ततः स यदा यूषफा प्रेषितानि वहनार्थानि शकटानि ददर्श, तदा तेषां जनकस्य २८ याकूबो मनः प्रफुल्लं बभूव। तत इस्रायेल् कथयामास, मम पुत्रो यूषफ् अद्ययावत् जीवन् आस्ते, एतदेव यथेष्टं; अहं गत्वा मरणात् पूर्व्वं तं वीक्षिष्ये।

---

## ४६ षट्चत्वारिंशोऽध्यायः।

१ याकूबो बेर्शेबागमनं ईश्वरेण दर्शनं ५ मिसरि यात्रा ८ तस्य वंशश्रेणिः २८ यूषफः सत्कारः सहजानां समीपे यूषफः कथा च।

१ अनन्तरं इस्रायेल् निजसर्व्वस्वं गृहीत्वा यात्रां विधाय बेर्शेबायामु- २ त्तीर्य्य तत्र निजपितुरिस्हाक ईश्वरम् उद्दिश्य बलीन् प्रददौ। तत ईश्वरो रजन्याम् इस्रायेले दर्शनं दत्त्वा कथितवान्, हे याकूब् हे ३ याकूब्, ततः स उक्तवान्, अहमत्रास्मि। तदा स कथितवान्, अह- मीश्वरस्तव पितुरीश्वरः, त्वं मिसरं गन्तुं मा भैषीः, तत्राहं त्वां एकां ४ हृज्जातिं करिष्यामि। अहमपि त्वया सार्द्धं मिसरं गमिष्यामि; ततः परं त्वां पुनरवश्यं परावर्त्तयिष्यामि, यूषफ् निजकराभ्यां तव नेत्रे निमीलयिष्यति।

५ अनन्तरं याकूबा बेर्शेबातो यात्रायां कृतायां इस्रायेलः पुत्रा तं वोढुं फिरौणा प्रहितेषु शकटेषु निजपितरं याकूबं बालकान् योषितश्च ६ निन्युः। ततः परं ते स्वीयपशून् किनान्देशोपार्जिताः सकलसम्पत्तीश्च ७ गृह्णन्तो याकूबा सार्द्धं सवंशा मिसर्देशम् उत्तीर्णवन्तः। इत्थं याकूब् सुतान् सुताः पौत्रान् पौत्रीः सकलपरिवारान् मिसर्देशं निनाय।

८ मिसरमागतानाम् इस्रायेलः अर्थात् याकूबः सन्तानानां नामान्येतानि। याकूबो ज्येष्ठपुत्रो रूबेन्।

९ तस्य रूबेणः सुता हनोक् पल्लुः हिष्रोन् कर्म्मिश्च।

शिमियोनः सुता यिमूयेल् यामीन् ओहद् याखीन् सोहर् तस्य १० किनानीयजायाया जातः सुतस्य शौल्।

लेवेः सुता गेर्शोन् किहात् मिरारिश्च। ११

यिहूदाः सुता एर् ओनन् शेलाः पेरस् सेरहश्च। किन्तु एरओननौ १२ किनान्देशे ममतुः। पेरसः सुतौ हिष्रोन् हामूल् च।

इषाखरः सुताः तोलय् पूय योव् शिम्रोन् च। १३

सिबूलूनः सुता सेरद् एलोन् यहलेल् च। १४

एते सर्व्वे दीणा कन्या च पद्दनरामि याकूबो जाता लेयाया वंशाः। १५ इमे सुतैः सुताभिश्च त्रयस्त्रिंशत् जना आसन्।

गादः सुताः सिफोन् हगि शूनी इष्बोन् एरिः अरोदी अरेली च। १६

आशेरः सुता यिम्ना यिश्वा यिश्वि विरिय तेषां भगिनी सेरहश्च; १७ विरियः सुतौ हेवर् मल्कीयेल् च।

लावन् निजकन्यालेयायै यां सिल्पानामिकां दासीं दत्तवान्, तस्या १८ उदरात् याकूबा जाता इमे षोडश प्राणिनः।

याकूबो जायाराहेलः सुतौ यूषफ् विन्यामीन् च।, १९

मिसर्देशे ओन्नगरस्य पोटीफेरा याजकस्य आसिनत्नामिकायाः २० कन्याया गर्भे यूषफो जातौ मिनशिरिफ्रयिम् च।

विन्यामीनः सुता बेला बेखर् असबेल् गेरा नामन् एही रोश् २१ सुप्पीम् हुप्पीम् अर्द च। एते चतुर्दश जना याकूब औरसा राहेलो २२ वंशाः।

दानः सुतो हूशीम्। २३

नप्तालेः पुत्त्रा यहसियेल् गूनि यत्सेर् शिल्लेम् च। २४

लावन् निजकन्यायै राहेले यां विल्हानामिकां दासीं दत्तवान्, २५ तस्या गर्भे याकूबो जाता एते सप्त जनाः॥

पुत्त्रबधू र्विहाय याकूब औरसाः सन्तानाः षटषष्टि र्जनास्तेन सार्द्धं २६ मिसर्देशं जग्मुः। तदन्याभ्यां यूषफो मिसरि जाताभ्यां द्वाभ्यां पुत्त्राभ्यां २७ सह मिसरं गता याकूबः परिजनाः साकल्यतः सप्तति र्जना आसन्।

अनन्तरं याकूब् गोशनप्रदेशे यूषफं साक्षात् कर्त्तुं तस्य समीपं स्वस्याग्रे २८ यिहूदां प्राहिणोत्। तदानीं तेषु गोशन्प्रदेशं उत्तीर्णवत्सु, यूषफ् निज- २९ रथं सज्जयित्वा गोशन्प्रदेशे निजपितरम् इस्रायेलं साक्षात् कर्त्तुं जगाम; ततस्तस्य सन्निधिम् उपस्थितस्य तस्य पिता तस्य कण्ठं धृत्वा

२० बहुत्वणं रोदा। तदा इस्रायेल् यूषफे कथयामास, त्वम् अद्य यावत् जीवन् असि, त्वदीयं मुखमहं दृष्टवान्, इदानीं स्वच्छन्दं मरिष्यामि।
२१ अनन्तरं यूषफ् निजसहजान् पितुः परिवारांश्च बभाषे अहं गत्वा फिरौणे सम्वादं दत्त्वा कथयिष्यामि, किनान्देशात् मम सहजाः पितुः
२२ सर्व्वपरिजनाश्च मम समीपम् आगच्छन्। ते पशुपालकाः पशुवाणिज्य-
२३ काराश्च तस्मात् ते निजगोमेषव्रजादि सर्व्वस्वम् आनयन्। ततः फिरौन्
२४ युष्मान् आहूय युष्माकं का वृत्तिरिति यदि पृच्छति, तर्हि तवैते दासेया आ यौवनात् अद्य यावत् पुरुषपरम्परातः पशुपालनवृत्तिका इति वाचं कथयिष्यथ; तेन यूयं गोशन्प्रदेशे वस्तुं प्राप्स्यथ, यतः सर्व्वे पशु-पालका मिस्रीयाणां घृणास्पदं भवन्ति।

---

## ४७ सप्तचत्वारिंशोऽध्यायः।

१ यूषफः पितृपञ्चभ्रातॄणां फिरौणः साक्षात्करणं १३ मन्वन्तरे लोकानां रौप्यपशु-प्रभृतेर्मूल्यदानं २१ फलानां पञ्चमभागाय बीजदानं २८ याकूबे यूषफाङ्गीकरणञ्च।

१ अनन्तरं यूषफ् गत्वा फिरौणे वार्त्तां कथयामास, मम जनकः सहजाश्च किनान्देशात् निजगोमेषादीनां व्रजान् तदन्यसर्व्वस्वञ्चादाय
२ समागता इदानीं गोशनप्रदेशे सन्ति। ततो यूषफ् निजान् पञ्च
३ सहजान् नीत्वा फिरौणं साक्षात् कारयामास; तदा फिरौन् तस्य भ्रातॄन् पप्रच्छ युष्माकं का वृत्तिः? ते फिरौणं प्रत्यवदन्, भवत एते दासेयाः
४ पूर्व्वपुरुषपरम्परया पशुपालकाः। ते फिरौणं पुनरूचुः, वयमस्मिन् देशे प्रवस्तुम् आगमाम, यतः किनान्देशे महादुर्भिक्षोऽभवत् तस्मात् तवैतद्दासेयानां पशुव्रजचारणस्थानं न भवति; ततो निवेदयामो
५ भवान् गोशन्प्रदेशे दासेयान् वासयतु। ततः फिरौन् यूषफम् आज्ञा-
६ पयामास, तव जनकः सहजाश्च तव समीपम् आगमन्। मिसर्देशश्च तव सम्मुखे विद्यते, देशस्योत्तमस्थाने निजजनकसहजान् वासय; तेभ्यो गोशन्प्रदेशे स्थानं देहि, तेषां मध्ये यं यं कर्म्मयोग्यं बुध्यसे, तान् मदी-
७ यपशुव्रजानाम् आधिपत्यपदे नियोजय। अनन्तरं यूषफ् निजजनकं याकूबम् आनीय फिरौणं साक्षात् कारयामास। याकूब् फिरौणं आशिषं
८ जगाद। तदानीं फिरौन् याकूबं पप्रच्छ, तव वयः कति वत्सरा अभवन्?
९ याकूब् फिरौणं जगाद, मम प्रवासकालाः त्रिंशदधिकशतं वत्सरा अभवन्; मदीयायुरल्पं क्लेशजनकञ्च मदीयपूर्व्वपुरुषाणां प्रवासकालस्यायुषां

समं नहि। अनन्तरं याकूब् फिरौणमाशिषं गदित्वा तस्य साक्षाद् १० विरुद्धो ऽभवत्। तदानीं यूषफ् फिरौण आज्ञानुसारेण मिसर्देशस्य ११ मध्ये रामिषेष्नामके उत्तमस्थाने ऽधिकारं दत्त्वा निजपितरं सहजांश्च स्थापयामास। अपरं यूषफ् निजजनकं सहजान् पितुः परिजनांश्च १२ परिवारानुसारतो भक्ष्यवस्तूनि दत्त्वा प्रतिपालयामास।

अनन्तरं सर्व्वस्मिन् देशेऽतिशयकठिनदुर्भिक्षस्य जातत्वात् खाद्य- १३ वस्तूनां योऽभावो जातस्तेन मिसर्देशीयाः किनान्देशीयाश्च जना मूर्च्छागतदेश्या अभवन्। अपरं लोका यूषफः समीपे यानि शस्यानि क्रीत- १४ वन्तस्तेषां मूल्यार्थं यूषफ् मिसर्देशस्य किनान्देशस्य च निःशेषरौप्याणि संगृह्य फिरौणः कोषम् आनीतवान्। इत्थं मिसर्देशे किनान्देशे च १५ रूप्याभावे सति मिस्रीयलोका यूषफो निकटम् आगत्य जगदुः, अस्मभ्यं खाद्यं देहि, अस्माकं रूप्याणां शेषत्वात् वयं किं तव सम्मुखे मरिष्यामः? ततो यूषफ् कथितवान्, यदि युष्माकं रूप्याणां शेषोऽभवत् तर्हि पशून् १६ दत्त, पशुमूल्यं युष्मभ्यं शस्यं दास्यामि। तदानीं ते यूषफः समीपं निज- १७ निजपशुष्वानीतेषु यूषफ् वाजिमेषगोगर्दभादिसम्पत्तीनां विनिमयत- स्तेभ्यः शस्यानि दातुम् आरभत; इत्थं यूषफ् तेषां पशून् गृहीत्वा तस्मिन् वत्सरे तेभ्यः खाद्यानि दत्तवान्। अपरं वत्सरे सम्पूर्णे परवत्सरे १८ ते यूषफः समीपम् आगत्य बभाषिरे, अस्माभिः सर्व्वाणि रूप्याणि व्ययितानि, अस्माकञ्च पशुव्रजाश्च प्रभोरेवाभवन्, तत् प्रभुतो न गोपायिष्यते; अस्माकं कायान् भूमींश्च विना प्रभोः साक्षात् किमपि न विद्यते। अतो वयम् अस्माकं भूम्यश्च एते उभे तव गोचरे कुतो १९ विनंक्ष्यतः? भवान् खाद्यशस्यानि दत्त्वा अस्मान् अस्माकं सर्व्वा भूमीश्च क्रीत्वा गृह्णातु; वयं स्वस्वभूम्या सार्द्धं फिरौणोऽधीना भविष्यामः, तथा बीजानि ददातु, तेन वयं न मृत्वा जीवन्तः स्थास्यामः, अस्माकं भूम्यश्च निःशेषं न विनंक्ष्यन्ति। अनन्तरं दुर्भिक्षे तेषाम् अतीवासह्ये सति २० मिस्रियाः स्वस्वा भूमी र्व्यक्रीणन्; ततो यूषफ् फिरौणः कृते मिसरीयाणां सर्व्वा भूमीः क्रीतवान्; इत्थं सर्व्वासु भूमिषु फिरौणो ऽधिकारो जातः। ततः स मिसर एकसीमातोऽन्यसीमां यावत् नगरे नगरे लोकान् २१ स्थानान्तरीचकार। केवलं याजकानां भूमी र्नाक्रीणत्, यतः फिरौन् २२ तेभ्यस्ता वृत्तित्वेन दत्तवान, तस्मात् तेषां भूमी र्न विक्रीतायां फिरौणा दत्ता या वृत्तिः सा तेषां भोगार्थमेव स्थितवती।

२३ अनन्तरं यूषफ् प्रजाभ्यः कथयामास, पश्यताहं फिरौणः कृते युष्मान् युष्माकं सर्व्वा भूमीश्च क्रीतवान्; इदानीं एतानि वीजानि गृहीत्वा भूमौ
२४ वपत ; तत्र यद्यत् उत्पत्स्यते तस्य पञ्चमांशं फिरौणे दास्यथ, तदन्य-चतुरोऽंशान् भूमेर्वीजकृते निजपरिजनानां बालकानाञ्च खाद्यकृते
२५ स्थापयिष्यथ। ततस्ते प्रत्यूचुः, भवान् अस्माकं प्राणान् रक्षितवान्; भवतः
२६ कृपादृष्टौ सत्यां वयं फिरौणो दासेया भविष्यामः। अपरं याजकानां यस्यां भूमौ फिरौणो नाधिकारो जातस्तदितरासां मिसर्देशस्य सर्व्वासां भूमीनां पञ्चमांशं फिरौण् प्राप्स्यति, यूषफा स्थापितैषा व्यवस्था सर्व्व-मिसर्देशेऽद्य यावत् वर्त्तते।

२७ अपरम् इस्रायेल् मिसरो गोशन्प्रदेशे न्युवास, तत्र चाधिकारं प्राप्य
२८ क्रमशो वर्द्धिष्णुरतिबहुवंशो बभूव। स याकूब् मिसर्देशे सप्तदश वत्स-रान् यापयामास तदा तस्य वयः सप्तचत्वारिंशदधिकशतं वत्सरा बभूव।
२९ अत इस्रायेल् निजं मरणदिनं सविधं विज्ञाय निजसुतं यूषफं समाहूय गदितवान्, अहं यदि तव साक्षात् अनुगृहीतोऽभवं, तर्हि विनये मिसर्देशे श्मशाने मां न निधाय मम पूर्व्वपुरुषाणां समीपे मां श्मशाने
३० निधातुम् एतस्मात् मिसर्देशात् नीत्वा तेषां श्मशानवेश्मनि मां शाययिष्यसि, मां प्रतीमम् अनुग्रहं सत्यतया व्यवहरिष्यसीति मम जंघाधो हस्तं दत्त्वांगीकुरु; ततो यूषफ् कथयामास, त्वदीयाज्ञा-
३१ नुसारेणैव करिष्यामि। तथापि शपथं कर्त्तुं यूषफि याकूबा भाषिते यूषफ् तस्य समीपे शपथं चकार, तदानीम् इस्रायेल् शय्यायाः शिरःस्थानदिशि प्रणनाम।

---

## ४८ अष्टचत्वारिंशोऽध्यायः।

१ यूषफस्तस्य सुतयोश्च पीडितस्य याकूबः साक्षात्करणं तान् प्रति याकूबः कथनं ८ यूषफः सुतद्वयायाशिषं दत्त्वा कनिष्ठस्य प्रधानत्वकरणं १५ यूषफा सार्द्धं तस्य संलपनञ्च।

१ एतासु घटनासु गतासु, पश्य तव पिता पीडितोऽभवत्, इति वार्त्ता यूषफे कथिता ; ततः स निजौ द्वौ सुतौ मिनशीफ्रयिमौ नीत्वा जगाम।
२ तदानीं केनचिद् याकूबे कथितं, पश्य तव सुतो यूषफ् आगमत्, तत
३ इस्रायेल् आत्मानं सबलं कृत्वा शय्यायां उत्तिष्ठन् उपविवेश; अपरं यूषफे कथयामास, किनान्देशस्य लूस्नगरे सर्व्वशक्तिमान् ईश्वरो मां

दर्शनं दत्त्वा इत्याशिषं गदित्वा कथयामास ; पश्य, त्वामहं फलवन्तं ४
बहुवंशं करिष्यामि, त्वत्तो जननिवह उत्पत्स्यते, तव भाविवंशाय
चिरमधिकर्त्तुम् इमं देशं दास्यामि च । अत इफ्रयिम् मिनशिनामानौ ५
तव यौ द्वौ पुत्त्रौ मम मिसरागमनात् पूर्व्वं मिसरदेशे जातौ तौ मम सुतौ
भविष्यतः, तौ रूवेन् शिमियोनाविव मम भविष्यतः। किन्त्वितः परं ६
तव ये ये सन्ताना भविष्यन्ति, ते तव भविष्यन्ति, अपरं ज्येष्ठभ्रातृणां
नाम्ना स्वस्वाधिकारे विख्यास्यन्ति। तथा पद्नरामागमनकाले किनान्- ७
देशस्य इफ्राथातः किञ्चिद् दूरे तिष्ठति मयि राहेल् मार्ग एव मम
समीपे मृता ; ततोऽहम् इफ्राथा अर्थात् बैत्लेहमः पदवीपार्श्वे तस्याः
श्मशानस्थानं कृतवान्।

अनन्तरम् इस्रायेल् यूषफः पुत्त्रौ विलोक्य पप्रच्छ, एतौ कौ? ततो ८
यूषफ् पितरं जगाद, ईश्वर एतस्मिन् देशे मह्यं पुत्त्रावेतौ दत्तवान्। ९
तदानीम् इस्रायेल् कथितवान्, अहं विनये, एतौ मम समीपम् आनय,
तावहम् आशिषं वदामि। किन्तु वार्द्धक्यकारणात् क्षीणदृष्टिरिस्रायेल् १०
सुस्पष्टं द्रष्टुं न शशाक ; ततो यूषफ् तस्य समीपं तावानीतवान्, स तौ
चुम्बितवान् आलिङ्गितवांश्च । अपरं इस्रायेल् यूषफं बभाषे, अहं ११
तव वदनं पुनर्द्रष्टुं न प्राप्स्यामीति, चिन्तितवान्, किन्तु पश्य, तव वंश-
मपीश्वरो माम् अदर्शयत्। तदा यूषफ् जानुद्वयमध्यात् तौ नीत्वा भूमिष्ठः १२
सन् प्रणनाम। पश्चात् यूषफ् तौ द्वौ पितुः समीपं नीत्वा निजदक्षिण- १३
करेण इस्रायेलो वामे इफ्रयिमं, वामकरेण इस्रायेलो दक्षिणे मिनशिं
धृत्वा स्थापितवान्। तत इस्रायेल् विविच्य दक्षिणकरं प्रसार्य्य कनिष्ठस्य १४
इफ्रयिमो मस्तकोपरि दत्तवान्, ज्येष्ठस्य मिनशे मस्तकोपरि च वामं
करं दत्तवान्।

अनन्तरं स यूषफम् आशिषं निगद्य भाषितवान्, मम पूर्व्वपुरुषौ इब्रा- १५
हीमिस्हाकौ यस्य पन्थानम् अवलम्बितवन्तौ यश्चेश्वरोऽद्य यावत् मां
यावज्जीवनं प्रतिपालितवान्; यश्च दूतः सर्व्वापद्भ्यो मां रक्षितवान्, १६
स एतौ बालकौ स्वाशिषं ब्रूयात्; आभ्यां मम नाम मदीयपूर्व्वपुरुषयोः
इब्राहीम् इस्हाकोश्च नाम तिष्ठतु, एतौ पृथिव्यां बहुवंशौ भवताम्।
तदानीं इफ्रयिमः शिरसि पितु र्दक्षिणं हस्तं दृष्ट्वा यूषफ् असन्तुष्टोऽ- १७
भवत्, तत इफ्रयिमो मस्तकात् मिनशेः शिरसि तं स्थापयितुं जनकस्य
करं उत्थाप्य जगाद, हे तात इत्थं नहि, एष ज्येष्ठ एतस्य शिरसि दक्षिणं १८

१९ करं देहि। किन्तु तस्य पिता अनङ्गीकृत्य कथितवान्, हे पुत्त्र, तदहं जानामि, जानाम्यहं; सोऽपि महती जाति र्भविष्यति, इति सत्यं, किन्तु तस्य कनिष्ठो भ्राता तस्मादपि महती जाति र्भविष्यति, एतस्य वंशो
२० बहुजनो भविष्यति। तद्दिनं स तावाशिषं प्रभाष्य कथयामास, इस्रा- येल्वंशीया आशीर्व्वचनार्थं युवयो र्नाम्नी प्रभाष्य वदिष्यन्ति, ईश्वर- स्त्वाम् इफ्रयिमो मिनशिस्य तुल्यं करोतु, इत्थं स मिनशेरिफ्रयिमम् अग्र-
२१ गण्यं कृतवान्। अपरम् इस्रायेल् यूषफं कथयामास, पश्य मम मृत्युकाल उपस्थितवान्; किन्तु ईश्वरो युष्माकं सहायो भूत्वा युष्मान् पुनः पैतृकं
२२ देशं नेष्यति। अहं यमंशं निजासिधनुषो र्बलात् इमोरीयाणां करात् प्राप्तवान् तव भ्रातृगणात् तमधिकमंशं तुभ्यम् अदाम्।

---

## ४९ ऊनपञ्चाशत्तमोऽध्यायः।

१ याकूबः सर्व्वेषां पुत्त्राणामाह्वानं कृत्वा तेभ्यः २ एकैकमधि तस्य कथनं भविष्यद्वाक्यञ्च २९ निजश्मशानस्थानमाज्ञापनञ्च।

१ अनन्तरं याकूब् निजपुत्त्रान् आहूय कथयामास,
यूयं मिलत हे पुत्त्रा यद् युष्मान् प्रति शेषतः।
घटिष्यते तदेवाहं युष्मभ्यं कथयामि हि।
२ हे याकूबः सुता यूयं निशामयत मद्वचः।
पित्रिस्रायेल्कथायां वः स्वमनांसि निधत्त च॥
३ रूवेन् ज्येष्ठसुतस्त्वं मे सामर्थ्यं प्रथमं बलं।
पराक्रमेण मुख्योऽसि महिम्ना त्वं निजेन च।
४ त्वं स्रोतइव वेगी हि न स्थाता मुख्यता तव।
यतस्त्वं निजतातस्य शयनीयं गतः पुरा।
गत्वा च शयनीयं मे तदशुद्धं कृतं त्वया॥
५ शिमियोन् लेविनामानौ विद्येते सोदरावुभौ।
भवतो निर्दये अस्त्रे तयो र्द्वौ चन्द्रहासकौ।
६ तयो र्गूढपरामर्शे मन्मनो न प्रवर्त्ततां।
समज्यायां तयो र्नौ मे सम्मानमुपतिष्ठतु।
अहन्यन्त पुरा ताभ्यां मनुजा निजकोपतः।
एकश्च भूपतिस्ताभ्याम् अनाश्यत निजेच्छया।
७ तयोः क्रोधोऽभिशप्येत यतः स ज्वलितोऽभवत्।

तयोः कोपोऽभिशप्येत यतः स निष्ठुरोऽभवत्।
याकूबीयजनेष्वेतौ करिष्यामि पृथक् पृथक्।
इस्रायेलीयमध्ये तौ विकिरिष्यामि निश्चितं॥
यिहूदाः सहजास्ते त्वां प्रशंसिष्यन्ति सर्व्वशः। ८
भविष्यन्ति त्वदीयाश्च रिपवस्तव हस्तगाः।
त्वदीयपितृसन्तानास्त्वां प्रणंस्यन्ति दण्डवत्।
सिंहानां शावकेस्तुल्यो यिहूदा भवति स्वयं। ९
हे वत्स मृगयाद्रव्यं भुक्त्वा त्वम् आगमिष्यसि।
सिंहीवत् सिंहवद्वा त्वां सुप्तं को बोधयिष्यति।
यत्समीपे च लोकानां भविष्यति हि संग्रहः। १०
स शीलोः सान्वको यावद् आगमं न करिष्यति।
नहि तावद् यिहूदातो राजदण्डो गमिष्यति।
चिराधिपतिता तस्य वंशान्नापगमिष्यति।
द्राक्षालतासमीपे स गर्द्दभं भन्त्स्यति स्वयं। ११
सुगोस्तनीसमीपे च बद्धा गर्द्दभशावकान्।
रञ्जयिष्यति गोस्तन्या रसेन चोत्तरीयकं।
द्राक्षारक्तरसे रक्तं परिधेयं करिष्यति।
द्राक्षारसेन तस्यापि नेत्रे रक्ते भविष्यतः। १२
शुक्लास्तस्य भविष्यन्ति दुग्धेन सकला रदाः॥
सरित्पतेः प्रतीरे हि सिबूलून् संनिवत्स्यति। १३
पोतीयाब्धितटे तस्य निवासश्च भविष्यति।
तस्याधिकारसीमा च सीदोनन्ता भविष्यति॥
यावासमध्यतः शायी बलवानपि यो भवेत्। १४
गर्द्दभस्तेन सङ्काश इषाखर् संभविष्यति।
विश्राममुत्तमं बुद्ध्वा रम्यं बुद्ध्वा च नीवृतं। १५
भारं वोढुं नमन् स्कन्धं करं राज्ञः स दास्यति॥
इस्रायेलोऽन्यवंशानां सदृशत्वं गतोहि दान्। १६
स्वकीयानां मनुष्याणां सुविचारं करिष्यति।
पथि संस्थाय यः सर्पो दष्ट्वा च वाजिनः पदं। १७
तदारूढं पातयेच्च तत्तुल्यो दान् भविष्यति॥
परेश त्वत्परित्राणं समवेक्ष्य स्थितोस्म्यहं॥ १८

१९ कश्चित् सैन्यसमूहश्चेत् गादं जयति कर्हिचित्।
तर्हि गादपि तत्सैन्यं पराजेष्यति निश्चितं॥
२० आशेर उत्तमं खाद्यं तस्मात् राजापि भोक्ष्यते॥
२१ मनोहृतष्टङ्गशाखाभिः कुरङ्गो योऽस्ति सुन्दरः।
मृगेन तेन सङ्काशो नप्तालिः संभविष्यति॥
२२ यूषफ् प्रस्रुतेः समीपस्था प्राचीरपारगामिनी।
फलयुक्ता च या शाखा तद्युक्तशाखिनः समः।
२३ चापभृद्भिर्मृगयित आविद्धश्च शिलीमुखैः।
अतिक्लिष्टस्य येनास्य गाढीकृतं शरासनं।
२४ तदीयदोः कराग्राश्च येनाभूद्बलवत्तता।
इस्रायेलः सहि त्राता मूलपाषाणरूपकः।
ईश्वरः स च याकूबो विद्यते सर्व्वशक्तिमान्।
२५ त्वत्तातेश्वरसाहाय्यात् दत्तस्शक्तयाशिषस्तथा।
ऊर्द्धस्थाद्वियतो यद्यत् कुशलं परिजायते।
अधोगम्भीरनीराब्धेः कुशलं यच्च जायते।
मङ्गलं जायते यच्च गर्भतश्च पयोधरात्।
त्वदीयानि भविष्यन्ति तानि सर्व्वाणि निश्चितं।
२६ त्वत्पितुः फलदाशीः स्यान्मदादिपुरुषाशिषः।
सा चिरन्तनशैलीयां सीमां यावत् समेधिता।
भ्रात्रापसारितस्यैव यूषफो मस्तकोपरि।
सातिबाहुल्यमासाद्य सुतरां संभविष्यति॥
२७ प्रगे संधृतभक्ष्याशी सन्ध्याखेटात्तवण्टकः।
योऽदकस्तेन सङ्काशो विन्यामीन् संभविष्यति॥

२८ एत इस्रायेलो द्वादश वंशाः, तेषां जनकस्तान् प्रत्येतानि आशिर्व्वचनानि कथयित्वा तेषाम् एकैकं विशेषं आशिषं जगाद।
२९ अनन्तरं याकूब् तान् अवदत्, अहं निजजनैः सार्द्धं संगृहीतो
३० भविष्यामि। अतः किनान्देशे मम्रुाः पूर्व्वस्थितं मक्पेलाया यत्
३१ क्षेत्रम् इब्राहीम् श्मशानाधिकर्त्तुं हेतीयइफ्रोणः क्रीतवान्, यत्र स्थान इब्राहीमस्तस्य जायायाः सारायाश्च इस्हाकस्तस्य भार्य्याया रिब्कायाश्च श्मशानम् अभवत् यत्र चाहं लेयायाः श्मशानम् अकरवं, तत्रैव हेतीय-
३२ इफ्रोणः क्षेत्रस्थितायां गुहायां पितृलोकानां समीपे मम श्मशानं करि-

अथ, यतस्तत् चेत्रं तन्मध्यस्था गुहाच हेतीयसन्तानेभ्यः क्रीता। इत्थं ३३ याकूब् निजसुतान् प्रत्याज्ञापनं समाप्य शयनीये पादौ मेलयित्वा प्राणान् त्यक्त्वा निजजनानां समीपे समगच्छत।

---

## ५० पञ्चाशत्तमोऽध्यायः।

१ याकूबः कृते शोचनं ७ याकूबः श्मशानगमनं १५ यूषफो भ्रातृणां सान्त्वनं २२ यूषफो वंशस्य कथनं शपथाज्ञा मरणञ्च।

तदानीं यूषफ् निजपितु र्वदनं प्रति शिरः संनम्य रोदित्वा चुचुम्ब। १ अपरं यूषफ् स्वपितृदेहं सुगन्धिद्रव्ययुक्तं कर्त्तुं निजभृत्यचिकित्सकान् २ आज्ञापयामास; ततश्चिकित्सका इस्रायेलो वपुः सुगन्धिद्रव्यै र्योजयामासुः। ते च तत्र तत्कर्म्मकरणाय प्रयोजनीयानि चत्वारिंशत् दिनानि ३ यापयामासुः, मिस्रीयलोकाश्च तत्कृते सप्ततिदिनानि यावत् शुशुचुः। शोकीयदिनेषु गतेषु यूषफ् फिरौणः परिजनान् अवदत्, यदि मां प्रति ४ युष्माकम् अनुग्रह आस्ते, तर्हि फिरौणः कर्णगोचरे कथामेतां कथयत। मम पिता मां शपथं कारयित्वा गदितवान्, पश्य किनान्देशे स्वस्य ५ कृते मया यत् श्मशानं खातं मयि मृते त्वं मां तत्र निधास्यसि; तस्मात् इदानीं मां यातुम् आज्ञापयतु; पितरं श्मशाने निधायाहं पुनरागमिष्यामि। ततः फिरौण् उक्तवान्, याहि, तव पिता त्वां यथा शपथं ६ कारितवान् तथैव त्वं तं श्मशाने स्थापय।

तदा यूषफ् स्वपितरं श्मशाने निधातुं यात्रां चकार; ततः फिरौणो ७ गृहस्याधिपतयो भृत्या मिसर्देशीयाधिपतयो यूषफः सर्व्वे परिवारा- ८ स्तस्य भ्रातरस्तस्य पितुः परिवाराश्च तेन सार्द्धं जग्मुः; गोशन् प्रदेशे केवलं बालका गोमेषव्रजाश्च ते निहिताः। तेन सार्द्धं रथारूढा ९ अश्वारूढाश्च जग्मुः; तेनातीव जनसमागमो बभूव। पश्चात् ते यर्द्दन्- १० तटिन्याः पारे स्थितम् आटदः शस्यमर्द्दनस्थानम् उपस्थाय तत्र महारवेण रुरुदुः; पश्चात् तत्र स्थाने यूषफो पितुः कृते सप्त दिनानि यावत् शुशुचे। अतः किनान्देशीया आटदः शस्यमर्द्दनस्थाने तेषाम् ईदृक् शोकं ११ विलोक्य कथयामासुः; मिस्रीयाणाम् अयं महान् शोकः। तस्मात् यर्द्दन्- पारस्थं तत्स्थानम् आवेल्मिसर् (मिस्रीयशोकः) इति नाम्ना विख्यातो बभूव। अनन्तरं याकूब् निजपुत्रान् यथाज्ञापयत्, तस्य पुत्रास्तदनुसा- १२ रेण कर्म्म चक्रुः। फलतस्तस्य पुत्रास्तं किनान्देशं नीत्वा हेतीयेफ्रोणः १३

समीपात् श्मशानस्थानार्थम् इब्राहीमा क्रीता मम्याः पूर्व्वस्थमक्पेला-
१४ क्षेत्रस्य या गुहा तन्मध्ये तस्य श्मशानं कृतवन्तः। स्वस्य तातस्य श्मशाने
जाते यूषफ् तस्य पितुः श्मशानं कर्त्तुं गतवन्तस्तस्य भ्रात्रादयः सह-
गामिनश्च मिसर्देशं प्रत्यागतवन्तः।

१५ अपरं स्वेषां पिता मृत इति दृष्ट्वा यूषफो भ्रातरः कथयामासुः, यदि
यूषफ् अस्मान् ऋतीयते तर्हि वयं तस्य यद्यत् अहितम् अकुर्म्म तत्प्रति-
१६ फलम् अस्मभ्यं दास्यति। तस्मात् ते यूषफं प्रति कथामेतां लोकद्वारा कथ-
यामासुः, तव भ्रातृभिस्त्वां प्रति दोषे कृतेपि त्वम् अनुगृह्य तेषां दोषम्
१७ अपराधञ्च मार्ज्यसि, कथामेतां यूषफे कथयिष्यथेति तव पिता मरणात्
पूर्व्वं अस्मान् गदितवान्, अतो वयम् इदानीं प्रार्थयामहे, तव
पितुरीश्वरस्य दासेयानां दोषं मृष्धि, किन्तु यूषफ् तेषां कथामेतां श्रुत्वा
१८ रोदितुम् आरभत। अनन्तरं तस्य भ्रातरस्तदग्रं गत्वा प्रणिपत्य कथया-
१९ मासुः, पश्य, वयं तव दासाः। ततो यूषफ् तेभ्यः कथितवान्, मा
२० भैष्ट, किमहम् ईश्वरस्य प्रतिनिधिस्वरूपः? यूयं मद्विरुद्धां कुमन्त्रणां
कृतवन्त इति सत्यं, किन्त्वीश्वरस्तामेव सुमन्त्रणां कृतवान्, फलत इदानीं
२१ यादृशं पश्यथ, तथैव स बहूनां मनुष्याणां प्राणान् अरक्षत्। अतो
यूयम् इदानीं मा भैष्ट, युष्मान् युष्माकं बालकांश्च प्रतिपालयिष्येहम्।
इत्थं मधुरवाक्यं कथयित्वा स तान् सान्त्वयामास।

२२ अनन्तरं यूषफ् तस्य पितुः परिवाराश्च मिसर्देशे वसन्तस्तस्थुः।
२३ अपरं यूषफ् दशाधिकं शतं वत्सरान् जीवन् इफ्रयिमः पौत्त्रं यावत्
२४ ददर्श, स मिनशे माखीर्न्नाम्नः पुत्त्रस्य सन्तानानपि क्रोडे चकार। ततो
यूषफ् सहजान् अवदत्, अहं मुमूर्षुः, किन्त्वीश्वरो युष्मान् प्रति नितान्तं
दृष्टिं कृत्वा इब्राहीम इस्हाको याकूबश्च समीपे यं देशं दातुं शपथं
२५ कृतवान् अस्माद् देशात् तं देशं नेष्यति। ततो यूषफ् इमं शपथं कार-
यित्वा इस्रायेलः सन्तानान् बभाषे, ईश्वरो युष्मान् प्रत्यवश्यं दृष्टिं
करिष्यति, तदानीञ्च यूयं एतस्मात् स्थानात् मदीयास्थीनि नेष्यथ।
२६ इत्थं यूषफ् दशाधिकशतवत्सरवयसि ममार, ततः सुगन्धिद्रव्ययुक्त-
स्तस्य देहो मिसर्देशे काष्ठाधारे स्थापितः।

इत्यादिपुस्तकं समाप्तं।

---

# यात्रापुस्तकम्

अर्थात्

# मूसालिखितं द्वितीयपुस्तकं।

## १ प्रथमोऽध्यायः।

१ यूषफस्तस्य भ्रातृणाञ्च मरणात् परं तेषां वंशवृद्धिः ८ फिरौणा तेषामुपद्रवः १५ तेषु धात्रीणां दया २२ तेषां पुत्त्राणां बधश्च।

रूबेन् शिमियोन् लेवि यिहूदा इषाखर् सिबूलून् बिन्यामीन् १ दान् नप्तालि गाद् आशेर् एतन्नामका इस्रायेलः सुताः सर्व्वे स्वस्वपरिजनानादाय याकूबा सार्द्धं मिसर्देशम् आजग्मुः। तदा याकूबो वंशीयाः ५ साकल्येन सप्ततिजना आसन्, किन्तु यूषफ् पुरैव मिसरि स्थितवान्। अनन्तरं यूषफ् तस्य भ्रातरस्तत्कालीयलोकाश्च मम्रुः। तथापि इस्रायेलो ६ वंशा बहुप्रजा वर्द्धिष्णवो बहुसन्तानाः सन्तोऽतीवप्रबला ऽभवन्; ७ देशस्तैः परिपूर्णो बभूव।

ततः परं यूषफं यो न जानाति, तादृश एको मिसरि नवीनो राजा ८ भूत्वा निजलोकेभ्यः कथयामास, पश्यत, इस्रायेलीयलोका बलेन संख्यया ९ च अस्मत्तोऽधिका अभवन्। यथा ते वर्द्धिष्णवो भूत्वा युद्ध उपस्थिते १० अस्माकं शत्रुपक्षाः सन्तोऽस्माभिः सार्द्धं न युध्येयुः, अस्माद् देशाद् वा न वहि र्गच्छेयुः, तन्निमित्तं वयं तैः सार्द्धं सावधाना व्यवहराम। अन- ११ न्तरं ते भारवाहनेन तान् क्लेष्टुं तेषामुपरि कार्य्यशासकान् नियोजयामासुः; अपरं तैः फिरौणः कृते भाण्डागारनगराण्यर्थात् पिथोमं रामिषेषञ्च निचाययाञ्चक्रुः। किन्तु ते तै र्यावतः क्लेशान् लेभिरे, तावतीं १२ वृद्धिम् उन्नतिञ्च गन्तुम् आरेभिरे; तस्मात् ते इस्रायेलो वंशकारणात् अतीवोद्विविजुः। पश्चात् मिस्रीयलोका निर्द्दयत्वेन तान् दास्यकर्म्माणि १३ कारयामासुः। फलतः कठोरदास्येन पङ्केष्टकक्षेत्रकर्म्मभिश्च तेषां १४ प्राणान् विरञ्जयाञ्चक्रुः; ते तान् यावन्ति दास्यकर्म्माणि कारितवन्तस्तावन्ति महोपद्रवेणाकारयन्।

१५ अनन्तरं मिस्रीयो भूपतिरिब्रीयलोकानां शिफ्रानामिकां पूयाना-
१६ मिकाञ्च धात्र्यावाहूय वचनमिदं बभाषे, यदा युवाम् इब्रीययोषितां धात्रीकार्य्यं करिष्यथस्तदा तासाम् अपत्यानां कोषान् परीक्ष्य पुमपत्यानि
१७ हनिष्यथे, स्त्र्यपत्यानि जीवन्ति स्थापयिष्यथे। किन्तु धात्र्यौ ईश्वरात् भीत्वा मिस्रीयराजस्य निदेशानुसारात् अकृत्वा पुमपत्यानि जीवन्ति
१८ रक्षितुम् आरेभाते। अतो मिसरो राजा धात्र्यावाहूय बभाषे युवाम्
१९ एतादृशं कर्म्म कुतः कुरुथः? पुमपत्यानि कुतो जीवन्ति स्थापयथः? ततो धात्र्यौ फिरौणं प्रतिजगदतुः, इब्रीयाणां योषितो मिस्रीयाणां योषित इव न भवन्ति; ता बलवत्यस्तासां समीपे धात्रीणाम् आगमनात् पुरैव
२० ताः प्रसूयन्ते। अत ईश्वरस्तयो र्धात्र्योः कुशलं चकार, ततस्ते वंशा अति-
२१ शयमेधमाना महाबलवन्तो बभूवुः। धात्र्यावीश्वरात् बिभयाञ्चक्रतुः, तस्मात् स तयोरपि वंशान् एधयाञ्चकार।
२२ अनन्तरं फिरौन् निजान् सर्व्वलोकान् इत्याज्ञापयामास, यूयं सर्व्वाणि सद्योजातानि पुमपत्यानि स्रोतस्विन्यां निक्षेप्स्यथ, किन्तु सर्व्वाः कन्या जीवन्तीः रक्षिष्यथ।

---

# २ द्वितीयोऽध्यायः।

१ मूसाजननं तस्य नदीतटे पेटके स्थापनं ५ फिरौणः कन्यया गृहीतत्वं ११ तेन मिस्रीयलोकस्य बधः १५ फिरौणः क्रोधात् मिदियन्देशं प्रति तस्य पलायनं २३ इस्रायेल् लोकान् प्रतीश्वरस्य दया च।

१ अनन्तरं लेविवंशजातस्य कस्यचिन्मनुष्यस्य लेविवंशस्य कन्यया
२ विवाहे जाते सा नारी गर्भं धृत्वा पुत्रमेकं प्रसुषुवे; ततः सा तं बाल-
३ कम् अतीव सुन्दरं दृष्ट्वा तं मासत्रयपर्य्यन्तं गोपयामास। ततो गोप-यितुम् असमर्था सती नलनिर्म्मितं पेटकम् आनीय पङ्कसर्जरसाभ्यां संलिप्य तन्मध्ये बालकं निधाय तटिनीतीरस्थनलवने स्थापयामास।
४ ततस्तस्य का दशा घटेतेति दर्शनार्थं तस्य भगिनी दूरे स्थितवती।
५ अनन्तरं फिरौणः कन्या नद्यां स्नातुम् आगच्छत् तस्या दास्यो नदीतटे भ्रमन्ति, तदा सा नलवनमध्ये पेटकं विलोक्य तमानेतुं निजदासीं प्रेषया-
६ मास। पश्चात् सा पेटकं मोचयित्वा तं बालकं ददर्श, तस्मिन् बालके
७ क्रन्दति सा सदया सती जगाद, एष इब्रीयाणां बालकः। तदानीं तस्य

भगिनी फिरौणः कन्यां बभाषे, त्वत्कृते बालकमेनं दुग्धं पाययितुम् अहं गत्वा इब्रीयां धात्रीमेकां आहूय किमानेष्यामि? ततः फिरौणः कन्या ८ कथयामास, याहि। तदानीं सा कन्या गत्वा तद्बालकस्य मातरम् आहूयानयत्। ततः फिरौणः कन्या तामवदत् त्वमेनं बालकं गृहीत्वा ९ मदर्थं पयः पायय, तव वेतनमहं दास्यामि; तदा सा योषित् बालकमादाय पयः पाययामास। ततो बालक एधिते सा तमादाय फिरौणः कन्यायै १० ददौ, ततो बालकस्तस्या एव पुत्रोऽभवत् तदानीं सा तस्य नाम मूसाम् (आकर्षितं) चकार, यतः सा कथयामास तोयादहमिमम् आकार्षम्।

इत्थं मूसा एधितः सन् एकदा निजभ्रातृणां समीपं गत्वातीव भारं ११ वहतस्तान् ददर्श; तस्य भ्रातृणाम् एक इब्रीयः केनचिन् मिस्रियेण प्रहार्य्यते इत्यपि ददर्श। अतः स चतुर्दिशो वीक्षमाणः कमपि न पश्यन् तं मिस्रीयं १२ हत्वा सिकतामध्ये गोपयामास। अपरं द्वितीयदिने स वहिर्गत्वा द्वा- १३ विब्रीयौ विवदमानौ वीक्ष्य दोषिणं कथयामास, त्वं निजभ्रातरं कथं प्रहरसि? ततः स उक्तवान् अस्माकमुपरि कस्त्वां राजानं विचारयि- १४ तारं वा नियुक्तवान्? त्वं यथा मिस्रीयलोकं हतवान्, तथा किं मामपि हन्तुमिच्छसि? ततो मूसा भीतः सन् उक्तवान् तत् कर्म्मावश्यं प्रकाशितं।

ततः फिरौन् कथामेतां श्रुत्वा मूसां हन्तुं मृगयाञ्चक्रे। तस्मात् मूसा १५ फिरौणः सम्मुखात् पलायमानो मिदियन्देशे वस्तुं गत्वा कस्यचित् प्रहेः समीपे समुपविवेश। एतस्मिन्नन्तरे मिदियनीययाजकस्य सप्त कन्यास्त- १६ त्रागत्य पितुर्मेषव्रजं तोयं पाययितुं तोयमुत्तोल्य तोयपात्रं पूरयामासुः। किन्तु मेषपालका आगत्य तास्ताडयामासुः; ततो मूसा उत्थाय ता १७ उपचकार, तासां मेषव्रजञ्च पयांसि पाययाञ्चकार। अनन्तरं तासु १८ निजपितू रूयेलः समीपं गतासु स ताः पप्रच्छ, यूयमद्य कथं शीघ्रमागताः? ततस्ताः कथयाञ्चक्रुः, एको मिस्री मेषपालकानां करेभ्योऽस्मान् १९ उद्धृत्य अस्मत्कृते यथेष्टाप उदतोलयत्, अस्माकं मेषव्रजञ्च तोयं पायितवान्। तदानीं स निजकन्या अवदत्, स कुत्र? यूयं तं कुतस्त्यक्त्वा- २० गमत? यूयं तं भोक्तुम् आह्वयत। अनन्तरं मूसास्तेन मनुष्येण सार्द्धं २१ वस्तुं सममन्यत, तदा स मूसां निजां सिप्पोरां कन्यां विवाहयामास। ततस्तया योषिता पुत्रे प्रसूते स तस्य नाम गेर्शोम् (अत्र विदेशीति) २२ कृतवान्, यतः स उक्तवान्, अहं विदेशे विदेशी तिष्ठामि।

२३ बहुकालात् परं मिस्रीयराजस्य मृत्यु र्बभूव; अपरं इस्रायेलः सन्ताना दासत्वकारणात् कातरोक्तिं क्रन्दनञ्च चक्रुः, तदा तेषां दासत्वकारणात्
२४ तत्कातरत्वशब्द ईश्वरस्य समीपम् उपतस्थौ। तत ईश्वरस्तेषामार्त्तस्वरं
२५ निशम्य इब्राहीम्-इस्हाक्-याकूब्भिः सार्द्धं स्वकृतपूर्व्वनियमं स्मृत्वा इस्रायेल्वंशान् प्रति निरीक्ष्य तान् अनुजग्राह।

---

# ३ तृतीयोऽध्यायः।

१ प्रज्वलिते स्तम्बे मूसासमीप ईश्वरप्रकाशनं ७ मूसां प्रतीश्वरकथनं ११ ईश्वरेण सार्द्धं मूसालपनञ्च।

१ अपरं मूसा मिदियन्निवासियाजकस्य निजश्वशुरस्य यिथ्रस्य मेषव्रजं चारयितुम् आरभत; एकदा स मेषव्रजं गृहीत्वा कान्तारस्य पश्चात्
२ होरेब्नामानम् ईश्वरस्य पर्व्वतम् आजगाम, तदा स्तम्बमध्यस्थिताग्नि-शिखायाम् ईश्वरस्य दूतस्तस्य सन्निधौ प्रत्यक्षोऽभवत्; तदानीं स दृष्ट्वा
३ ददर्श, स्तम्बो वह्निना प्रज्वलति, तथापि स्तम्बो न नश्यति। अतो मूसाः कथितवान् स्तम्बः कुतो न दह्यते? अहमेकपार्श्वेन गत्वा तन्महाश्चर्यं
४ वीक्षिष्ये। पश्चात् स द्रष्टुम् एकपार्श्वेन याति, इति विलोक्य परमेश्वरः स्तम्बमध्यात् तमाहूय जगाद, हे मूसा हे मूसाः, ततः सोवदत् एषोहम्
५ उपतिष्ठामि। तदानीं स कथितवान्, एतस्य स्थानस्य समीपं मागच्छ, तव पदाभ्याम् उपानहौ मोचय, त्वं यत्र स्थाने तिष्ठसि, सा मेध्या भूः।
६ सोपरमपि कथयामास, तव पूर्व्वपुरुषाणाम् ईश्वरः, फलत इब्राहीम ईश्वरः, इस्हाक ईश्वरो, याकूब ईश्वरश्चाहं, ततो मूसा ईश्वरं प्रति वीक्षितुं बिभ्यत् निजास्यम् आचच्छाद।

७ अनन्तरं परमेश्वरः कथयाञ्चकार, अहं मिसरस्थितानां निजलोका-नाम् अतिशयक्लेशं दृष्टवान्, कार्य्यशासकैः कारितं तेषां रोदनञ्च श्रुतवान्,
८ तेषां यातनाञ्च ज्ञातवान्। अतो मिस्रीणां करेभ्यस्तान् उद्धर्त्तुम् अस्मात् देशात् उत्तमं विस्तृतं देशम् अर्थात् किनानीय-हित्तीय-इमोरीय-पिरिषीय-हिव्वीय-यिवूषीयाणां दुग्धमधुप्रवाहिदेशं तान् नेतुम् अव-
९ रूढवान्। पश्य, इस्रायेलो वंशानाम् आर्त्तस्वरो मम कर्णगोचरी-
१० भूतः, यमुपद्रवं मिस्रीयास्तान् प्रति कुर्व्वन्ति, तमप्यहं दृष्टवान्। अत इदानीम् आगच्छ, त्वामहं फिरौणः समीपं प्रेषयामि, त्वं मिसरदेशात् मम इस्रायेल्लोकान् वहिः करिष्यसि।

ततो मूसा ईश्वराय कथितवान्, कोहम् यत् फिरौणः समीपं गत्वा ११ मिसर्देशात् इस्रायेल्वंशं वहिः कर्त्तुं शक्नोमि? तदा स कथितवान्, १२ अहं तव सहायो भविष्यामि, ततो मिसरो लोकनिवहं वहिरानीय यूयम् अस्मिन् गिरावीश्वरभजनं करिष्यथ; इति मम त्वत्प्रेषणस्य लक्ष्म भविष्यति। पश्चात् मूसा ईश्वराय कथयामास, पश्चाहं इस्रायेल्वंशानां १३ समीपं गत्वा तान् इति वाचं वदामि, युष्माकं पूर्व्वपुरुषाणाम् ईश्वरो युष्माकं समीपं मां प्रेषितवान्; किन्तु तस्य किन्नामेति चेत् ते पृच्छन्ति, तर्हि किमहं प्रतिवदिष्यामि? तत ईश्वरो मूसामवदत् अहं योस्मि सो- १४ स्मि; पुनः कथितवान्, इस्रायेल्वंशम् इति वद, स्वयम्भु र्युष्माकं समीपं मां प्रेरितवान्। तत ईश्वरः पुन र्मूसां बभाषे, त्वम् इस्रायेल्वंशम् इति १५ वक्ष्यसि, युष्माकं पूर्व्वपुरुषाणां प्रभु र्यिहोवाः (परमेश्वरः) अर्थात् इब्राहीम ईश्वर, इस्हाक ईश्वरो, याकूब ईश्वरो युष्माकं समीपं मां प्रेरितवान्; मम नामैतत्; एतच्च चिरकालं पुरुषानुसारेण स्मरणाय भविष्यति। त्वं गत्वा इस्रायेल्वंशस्य प्राचीनानां सभां कारयित्वा कथामिमां १६ कथय, युष्माकं पूर्व्वपुरुषाणां प्रभुः परमेश्वरो ऽर्थात् इब्राहीम इस्हाको याकूबश्चेश्वरो मां दर्शनं दत्त्वा गदितवान्, अहं युष्मान्, मिसर्देशे युष्मान् प्रति कृतान् सकलान् व्यवहारांश्च दृष्टवान्। अतोहं पूर्व्वोक्त- १७ वाक्यानुसारात् मिसरः क्लेशात् युष्मान् वहिरानीय किनानीयानां हित्तीयानां इमोरीयानां पिरिषीयानां हिव्वीयानां यिवूषीयानां दुग्धमधुप्रवाहिदेशं नेष्यामि; तेन ते तव कथां श्रोष्यन्ति। तदा त्वम् १८ इस्रायेल्वंशस्य प्राचीनाश्च मिसरो राज्ञः समीपं गत्वा कथामेतां कथयिष्यथ, इब्रीणां प्रभुः परमेश्वरोऽस्माकं साक्षात् अभवत्; अतो विनयेहं, अस्माकं प्रभुं परमेश्वरम् उद्दिश्य बलिं दातुम इदानीं दिनत्रयमार्गं प्रान्तरं यातुम् अस्मान् आदिशतु। किन्त्वहं निश्चयं जानामि, १९ मिस्रीयराजं प्रति पराक्रान्तहस्ते न प्रकाशिते स युष्मान् यातुं वारयिष्यति। ततो निजहस्तं विस्तार्य्य मया कृताश्चर्य्यकर्म्मभि र्मिसर्देशे २० आहते स युष्मान् यातुम् आदेक्ष्यति। अपरं मिस्रीणां साक्षात् २१ एतान् जनान् प्रासदयान् करिष्यामि, तेन गमनकाले यूयं रिक्तकरा न यास्यथ। किन्तु सर्व्वा योषितः स्वस्वसमीपवासिनीनां योषितां २२ समीपे स्वस्वगृहस्थानां प्रवासिनीनाञ्च समीपे सुवर्णदुर्वर्णभूषणानि वसनानि च याचित्वा ग्रहीष्यन्ति; तान्यपि यूयं स्वस्वपुत्त्राणां

स्वस्वकन्यानाञ्च गात्रेषु परिधापयिष्यथ। इत्थं मिस्रीयाणां द्रव्याणि हरिष्यथ।

---

## ४ चतुर्थोऽध्यायः।

१ मूसायष्टेः सर्पत्वं ६ तत्करस्य कुष्ठित्वं १० मूसा गन्तुमनङ्गीकारात् तेन सार्द्धं यातुं हारोणो नियुक्तत्वं १८ मिदियनो मूसागमनं २१ फिरौणः सन्निधौ वक्तव्यवचः २४ मूसासुतस्य त्वक्छेदः २७ हारोणो मूसासाक्षात् करणं २९ इस्रायेल्वंशसन्निधिं गत्वेश्वरकथाप्रकाशनञ्च।

१ अनन्तरं मूसाः प्रत्युवाच ते मां न प्रत्येष्यन्ति, मम कथायां न मनांसि च निधास्यन्ति; किन्तु ते वदिष्यन्ति, परमेश्वरस्त्वां दर्शनं न दत्तवान्।
२ तदानीं परमेश्वरस्तं पप्रच्छ, तव करे किमिदं? स उक्तवान् यष्टिः। ततः
३ स उवाच, तां भूमौ निक्षिप। तेन तस्यां यष्ट्यां भूमौ निक्षिप्तायां साहि
४ र्बभूव, ततो मूसास्तस्य सम्मुखात् पलायितः। तदा परमेश्वरो मूसां जगाद, करं प्रसार्य्य तस्य पुच्छं धारय; ततः स करं प्रसार्य्य पुच्छं
५ धृतवान् तदा स तस्य करे यष्टि र्बभूव। अत्राहं तेषां पूर्व्वपुरुषाणां प्रभुः परमेश्वर इब्राहीम इस्हाको याकूबश्चेश्वरस्तव समीपे प्रकाशितोऽभवम्, इति ते सर्व्वे प्रत्येष्यन्ति।
६ अपरं परमेश्वरः पुनस्तं जगाद, तव करं वक्षसि देहि; ततः स वक्षसि करं दत्त्वा बहिः कृतवान् तस्य करः कुष्ठयुक्तो हिमवर्णो बभूव।
७ पश्चात् स उदितवान् त्वं पुन र्वक्षसि निजकरं निधेहि, ततस्तेन पुन र्वक्षसि करं दत्त्वा बहिः कृतः; तेन तस्य करः प्रकृतमांसो बभूव।
८ ते यदि त्वां न प्रत्येष्यन्ति, तव प्रथमलक्ष्मणि च न मनांसि निधास्यन्ति,
९ तर्हि द्वितीयचिह्नात् प्रत्येष्यन्ति। द्वाभ्यां चिह्नाभ्यामपि यदि न प्रत्येष्यन्ति, तव कथायाञ्च न मनो निधास्यन्ति, तर्हि तटिन्याः किञ्चित् तोयमादाय शुष्कभूमौ पातय; तत्र तटिन्योद्धृतं तोयं शुष्कभूमौ शोणितं भविष्यति।
१० अनन्तरं मूसाः परमेश्वरं बभाषे, हे मम प्रभो, एतत्कालात् प्राक् वा निजदासस्य निकटे भवतः कथाकथनात् परमपि नाहं वाक्पटुः, किन्तु
११ धीरवक्ताहं जडजिह्वश्चास्मि। पश्चात् परमेश्वरस्तं प्रत्युक्तवान्, मानुषाणां वक्तृनिर्म्माता कः? तथा मूकं बधिरं द्रष्टारं अन्धञ्च को निर्म्मिमीते?
१२ अहं परमेश्वरः किं तन् न करोमि? अत इदानीं याहि, तव वदने

तिष्ठन्नहं वक्तव्यां वाचं त्वां शिक्षयिष्यामि। ततः स कथितवान्, हे मम १३ प्रभो, विनयेहं, यः प्रेषयितव्यः स प्रेष्यतां। ततो मूसां प्रति परमेश्वरस्य १४ कोपे ज्वलिते स कथितवान्, लेवीयो हारोन् किं तव भ्राता न भवति? स सुवक्ता तमहं जानामि, स त्वां साक्षात् कर्त्तुम् आगच्छति, त्वां पश्यन् हृष्टचित्तो भविष्यति। त्वं तेन सार्द्धं संलपिष्यसि, तस्य वदने वाक्यं १५ दास्यसि; अहं तव वदने तस्य च वदने तिष्ठन् करणीयं कर्म्म युवां शिक्षयिष्यामि। स लोकानां समीपे तव वाचं वदिष्यति, स तव वदन- १६ स्वरूपो भविष्यति। त्वञ्च तस्येश्वरस्वरूपो भविष्यसि। अपरं त्वं स्वक- १७ रेण यष्टिं गृह्णन् तयैतानि चिह्नानि दर्शयिष्यसि।

अनन्तरं मूसा निजश्वशुरस्य यिथ्रस्य समीपं गत्वा बभाषे, विनयेहं, १८ मिसरि स्थिता मम भ्रातरोऽद्य यावत् जीवन्तः सन्ति नवेति ज्ञातुम् इदानीं तेषां समीपं पुन र्यातुं माम् अनुजानीहि; ततो यिथ्रो मूसामवदत्, कुशलं गच्छ। अपरं परमेश्वरो मिदियनि मूसे १९ कथितवान्, ये जनास्त्वां हन्तुम् ऐच्छन्, ते सर्व्वेऽम्रियन्त, तस्मात् त्वं मिसरं व्याघुट्य गच्छ। तदानीं मूसा निजजायां सुतौ च गर्द्दभम् २० आरोह्य मिसर्देशं व्याहृत्य गतवान्, अपरं स स्वकरेण ताम् ईश्वरीयां यष्टिं जग्राह।

अपरं परमेश्वरो मूसां जगाद, त्वयि मिसरं पुन र्गन्तुम् उद्यते तव २१ करेणाहं यान्यद्भुतानि कर्म्माणि कर्त्तुं दत्तवान्, तानि विविच्य फिरौणः समक्षं कुरु; किन्त्वहं तदन्तःकरणं कठिनीकरिष्यामि, तेन स लोकान् न त्यक्ष्यति। अपरं त्वं फिरौणं कथयिष्यसि, परमेश्वरः कथयति, इस्रा- २२ येल्वंशो मम सुतः, अर्थात् मम ज्येष्ठपुत्त्रस्वरूपः। अतोहं तुभ्यं कथयामि, २३ मां सेवितुं मम पुत्त्रं परित्यज; तेन यदि तं त्यक्तुं नेच्छसि, तर्हि तव पुत्त्रम् अर्थात् तव ज्येष्ठपुत्त्रमहं हनिष्यामि।

अनन्तरं मार्ग उत्तरणीयगेहे परमेश्वरस्तं दर्शनं दत्त्वा हन्तुम् उद्य- २४ तवान्। तदानीं सिप्पोरा तीक्ष्णास्त्रं गृहीत्वा निजपुत्त्रस्य त्वचं छित्त्वा तां २५ तस्य चरणसन्निधौ निधाय कथितवान्, त्वं निश्चितं मम शोणितपाती वरः। अनन्तरम् ईश्वरेण तस्मिन् त्यक्ते सा योषित् त्वक्छेदकारणात् २६ तस्मै कथितवती, त्वं मम शोणितपाती वरोसि।

अनन्तरं परमेश्वरो हारोणं बभाषे, त्वं मूसां साक्षात् कर्त्तुं प्रान्तरं २७ व्रज। ततः स गत्वा ईश्वरस्य पर्व्वते तेन सार्द्धं मिलित्वा तं चुम्बितवान्।

१८ तदानीं मूसाः परमेश्वरेणादिष्टं सर्व्ववाक्यं निरूपितं सकलचिह्नञ्च हारोणं ज्ञापयामास।

२९ अनन्तरं मूसोहारोणौ गत्वा इस्रायेल्वंशानां प्राचीनानां सभां ३० कारयामासतुः; ततो मूससं प्रति परमेश्वरेण कथिता याः कथास्ता हारोणस्तेभ्यः कथयामास; अपरं लोकानां दृष्टिगोचरे तानि सर्व्व- ३१ लक्ष्माणि प्रकाशयामास। तेन लोकाः प्रतीतवन्तः, ततः परमेश्वर इस्रायेल्वंशान् निरीक्ष्य तेषां दुःखानि दृष्टवान्, इति विज्ञाय ते तं प्रणम्य समाराधयामासुः।

---

## ५ पञ्चमोऽध्यायः।

१ मूसोहारोणयोः फिरौणः समीपगमनं, तौ प्रति फिरौणः कथनं ६ लोकेषु बहुकर्म्मणां भारार्पणं १० तेभ्यः पलालादानं १५ राज्ञः समीपे कार्य्यशासकानां काकूक्तिः २० मूसोहारोणौ प्रति भर्त्सनकथनं ईश्वरं प्रति मूससो निवेदनञ्च।

१ ततो मूसोहारोणौ प्रविश्य फिरौणं कथयामासतुः, इस्रायेलः प्रभुः परमेश्वरः कथयति, प्रान्तरे मामुद्दिश्य महचरणार्थं मम लोकान् २ गन्तुम् अनुजानीहि। तदा फिरौन् कथयामास, परमेश्वरः को यत् तस्य कथां मानित्वा इस्रायेलो वंशान् यातुम् आदेक्ष्यामि? नाहं पर- ३ मेश्वरं परिचिनोमि नेस्रायेलो वंशञ्च यातुम् आदेक्ष्यामि। तौ जगदतुः इब्रीयाणाम् ईश्वर आवां दर्शनं दत्तवान्; अत आवां विनयावहे, अस्माकं प्रभुं परमेश्वरम् उद्दिश्य बलिं होतुं दिनत्रयपथं प्रान्तरं यातुम् आदिश; नो चेत्सोऽस्मान् महामार्य्या चन्द्रहासेन वा निपातयिष्यति। ४ ततो मिस्रीयो राजा तौ जगाद, हे मूसो हे हारोण, युवां कार्य्यात् ५ लोकान् कुतो निवारयथः? युवां निजं निजं भारं वोढुं यातं। फिरौन् पुनर्बभाषे, पश्यतं, एतस्मिन् देशे मनुष्या एते इदानीं बहवः, युवाञ्च तान् भारवहनकर्म्मणो निवर्त्तयितुम् इच्छथः।

६ अपरं फिरौन् तस्मिन् दिने लोकानां कर्म्मशासकान् अध्यक्षांश्चा- ७ ज्ञापयामास, यूयम् इष्टकादि निर्म्माणार्थं पूर्व्ववत् एतेभ्यः पलालान् ८ मा दत्त; त एव गत्वा स्वार्थं पलालान् संगृह्णन्तु। अपरं पुरा यतीष्टकनिर्म्माणभार आसीत्, इदानीं तमेव भारमर्पयत; तस्मात् न्यूनं मा कार्ष्ट; यतस्तेऽलसाः, अत उच्चैरुवन्तः कथयन्ति, ईश्वरमुद्दिश्य ९ होतुं अस्मान् यातुम् आज्ञापय। तस्मात् तेषामुपरि पुनरधिक-

कर्म्मणां भारमर्पयत; तेन ते परिश्रमं कुर्व्वन्तोऽनर्थकवाक्ये मनांसि न निधास्यन्ति।

अनन्तरं कार्य्यशासका अध्यक्षाश्च वहि र्गत्वा तेभ्योऽकथयन् फिरौण् १० इमां कथां कथयति, इतः परमहं युष्मभ्यं पलालान् न प्रदास्यामि। यूयं यत्र प्राप्नुथ, तत्रैव पलालान् संगृह्णीत; किन्तु युष्माकं कार्य्यं किञ्चि- ११ दपि न्यूनं न भविष्यति। ततो लोकाः पलालानां विनिमयेन नालान् १२ संग्रहीतुं कृत्स्नं मिसर्देशं बभ्रमुः। ततः कार्य्यशासकाः क्षिप्रं कर्त्तुं कथ- १३ यामासुः, पलालप्राप्तिकाले यूयं यानि दैवसिकानि कर्म्माणि कृतवन्तः, इदानीमपि तान्येव सम्पूर्णानि कुरुत। फिरौणः कार्य्यशासकै र्ये ये १४ अध्यक्षा इस्रायेल्वंशीयपरि नियुक्तास्तेपि प्रहृताः सन्त इमां कथाम् अपृच्छ्यन्त, यूयं पूर्व्ववत् इष्टकनिर्म्माणस्य निरूपितानि कार्य्याणि कुतो- ऽद्यश्वः सम्पूर्णानि न कारयथ?

तत इस्रायेलो वंशीयाध्यक्षा आगत्य फिरौणः समीपे प्रोच्चैरुवन्तो १५ निवेदयामासुः, कुतस्त्वं निजदासेयैः सार्द्धं एतादृग् व्यवहरसि? तव १६ दासेभ्यः कोपि पलालान् न ददाति, तथापि ते कथयन्ति इष्टकानि निर्म्मातेति; अपरं तव दासेयाः प्रहृता भवन्ति, किन्तु तव लोकानां दोषाः। ततः स कथयामास, यूयमलसा यूयमलसा इति हेतो र्वदथ, १७ परमेश्वरम् उद्दिश्य होतुम् अस्मान् यातुम् आज्ञापय। इदानीं गच्छत, १८ कर्म्माणि कुरुत, युष्मभ्यं पलाला न दास्यन्ते; तथापि युष्माभिरिष्टकानां सम्पूर्णसंख्या दातव्या। तस्माद् युष्माकं दैवसिकनिरूपितेष्टकानां किञ्चि- १९ दपि न्यूनत्वं न भविष्यतीति तेन कथिते इस्रायेलो वंशानाम् अध्यक्षा दृष्ट्वा वयमतीव दुर्दशायाम् अपताम।

अनन्तरं ते फिरौणः समीपात् निर्गत्य पथि स्वसम्मुखे मूससं हारो- २० णञ्च साक्षात् चक्रुः। तदानीं ते ताभ्यां कथयामासुः, परमेश्वरो युवां २१ प्रति निरीक्ष्य विचारयतु, यतो युवां फिरौणस्तस्य दासानाञ्च समक्षम् अस्मान् दुर्गन्धरूपान् कृत्वा हन्तुं तेषां करेषु चन्द्रहासान् दत्तवन्तौ। ततो मूसाः परमेश्वरस्य समीपं परावृत्य गत्वा तस्मै कथयाञ्चकार, हे २२ प्रभो, त्वमेतेषां लोकानां कुतोऽमङ्गलम् अकार्षीः? माञ्च कुतः प्रहित- वान्? यदारभ्य तव नाम्ना फिरौणः समीपे कथयितुम् आगच्छं, २३ तदारभ्य स एतेषां लोकानाम् अमङ्गलं करोति, त्वन्तु निजलोकानां कमप्युद्धारं न कृतवान्।

# ६ षष्ठोऽध्यायः।

१ मूसःसमीप ईश्वरस्य पुनः प्रतिज्ञानं १० फिरौणः समीपे मूसःप्रेरणं १४ रूबेन-शिमियोनो वंशश्रेणी १६ लेवे वंशश्रेणी २८ मूससं प्रति परमेश्वरस्याज्ञा।

१ अनन्तरं परमेश्वरो मूससमवदत्, अहं फिरौणं प्रति यत् करिष्यामि तत् त्वम् इदानीमेव द्रक्ष्यसि; दोर्बले प्रकाशिते स लोकान् यातुम् अनु-
२ ज्ञास्यति; दोर्बले प्रकाशिते स निजदेशात् तान् दूरीकरिष्यति। ईश्वरो
३ मूससा सार्द्धम् आलप्य पुनः कथयामास, अहं यिहोवाः, अहम् इब्राहीम इस्हाको याकूबस्य समीपे यिहोवानाम्ना न विख्याय सर्व्वशक्तिमान्
४ ईश्वरनाम्ना विख्यातोऽभवम्। अपरं किनान्देशम् अर्थात् तेषां प्रवासीयदेशम् अहं तेभ्यो दास्यामि, तैः सार्द्धम् एतं नियमं निर्णीतवान्।
५ इदानीं मिस्रीयाणां समीपे दास्ये नियुक्तानाम् इस्रायेलो वंशानां
६ कातर्य्योक्तिं श्रुत्वा निजं तं नियमं स्मृतवान्। अत इस्रायेलो वंशान् वद, परमेश्वरोऽहं मिस्रीयाणां भारवहनात् युष्मान् उद्धरिष्यामि, दास्याच्च युष्मान् मोचयिष्यामि; अपरं विस्तीर्णदोर्भ्यां महादण्डैश्च युष्मान्
७ उद्धरिष्यामि। अहं युष्मान् निजजनीकृत्य युष्माकमीश्वरो भविष्यामि; तेनाहं मिस्रीयाणां भारवहनात् युष्माकं वहिष्कर्त्ता प्रभुः परमेश्वर इति
८ ज्ञास्यथ। इब्राहीमे इस्हाके याकूबे च यं देशं दातुमहम् अङ्गीकृतवान्, तं देशं युष्मान् नीत्वा युष्मभ्यम् अधिकारं दास्यामि; यतोऽहमेव परमे-
९ श्वरः। अनन्तरं मूसा इस्रायेलो वंशान् तदनुसारेण भाषितवान्; किन्तु ते मनोदुःखकठिनदास्ययोः कारणात् मूससः कथायां मनांसि न निदधिरे।

१० अनन्तरं परमेश्वरो मूससे कथितवान्, त्वं गत्वा मिसरो राजानं
११ फिरौणं वद, त्वम् इस्रायेलो वंशान् निजदेशात् विसृज। ततो मूसाः परमेश्वराय कथयामास, पश्य, इस्रायेल्वंशा अपि मम कथायां न मनांसि न्यदधत, तथात्वे अव्यक्तवाचो मम वाक्यं फिरौन् कथं श्रोष्यति?
१३ तदा परमेश्वरो मूससा हारोणेन च सार्द्धं संलप्य इस्रायेलो वंशं मिसर्देशात् वहिष्कर्त्तुं मिसरो भूपस्य फिरौणः समीप इस्रायेलः समीपे च कथयितुम् तावाज्ञापयामास।

१४ एते लोकाः स्वस्वपितृवंशानां मुख्याः। इस्रायेलो ज्येष्ठसुतो रूबेन् तस्य सुतो हनोक् पल्लू हिष्रोन् कर्म्मिस्च, एते रूबेनो वंशाः।

१५ शिमियोनः सुता यिमूयेल् यामीन् ओहद् याखीन् सोहर् किनानीयजायायाः सुतः शौल् च, इमे शिमियोनो वंशाः।

वंशानुसारतो लेविवंशस्य नामानि। गेर्शोन् किहात् मिरारिः। १६
लेविरायुः सप्तत्रिंशाधिकशतं वत्सरा आसन्। वंशानुसारतो गेर्शोनः १७
सुतौ लिब्निः शिमियिश्च। किहातः सुताः अम्रम् यिष्हर् हिब्रोन् १८
उषीयेल् च, तस्य किहातस्त्रयस्त्रिंशदधिकशतं वत्सरा आयुरासीत्।
मिरारेः सुतौ मह्लि मूशिश्च, इमे पुरुषानुसारात् लेवे वंशाः। अपरम् १९
अम्रमा स्वपितृस्वसरि योकेवदि समूढायां सा नारी तस्मात् हारोणं २०
मूससञ्च प्रसुषुवे; तस्याम्रम आयुः सप्तत्रिंशदधिकाः शतवत्सरा आसन्।
यिष्हरः सुताः कोरहो नेफग् सिक्रिश्च, उषीयेलः सुतो मीशायेल् इली- २१
षाफन् सिथ्रिश्च। हारोणो ऽम्मीनादवः सुतां नहशोनो भगिनीं इली- २२
शेवाम् उदुवाह; ततः सा स्त्री तदर्थं नादवम् अवीहूम् इलियासरम् २३
ईथामरञ्च प्रसुषुवे। कोरहस्य सुता असीर् इल्काना अवीयासफ् च, एते २४
कोरहस्य वंशाः। अपरं हारोणस्य सुत इलियासरः पुटीयेलः कन्याम् २५
उदुवाह, सा तदर्थं पीनिहसं प्रसुषुवे; एते लेवीयपूर्व्वपुरुषाणां मध्ये
वंशानुसारतो मुख्या आसन्। मिसर्देशात् सैन्यैः सार्द्धम् इस्रायेलो वंशम् २६
नयतम्, इत्याज्ञां परमेश्वरो यौ प्रति दत्तवान्, तावेतौ हारोण-
मूससौ। अपरं यौ मिसर्देशात् इस्रायेल्वंशं प्रेरयितुं फिरौणं समा- २७
दिष्टवन्तौ, एतौ तौ मूसाहारोणौ।

अपरं यदा परमेश्वरो मिसर्देशे मूससमवदत्, तदेमां कथां जगाद, २८
परमेश्वरोऽहं तुभ्यं यत् कथयामि तत् त्वं मिस्रीयराजं फिरौणं वद, ततो २९
मूसाः परमेश्वरस्य समक्षं कथितवान्, अव्यक्तवागहं मम कथां फिरौन् ३०
कथं श्रोष्यति?

---

## ७ सप्तमोऽध्यायः।

१ फिरौणः समीपं यातुं परमेश्वरस्य मूससाज्ञापनं ८ यष्टेः सर्पत्वकथनं १४ फिरौणं प्रति पुनर्मूसःप्रेरणं १९ जलस्य शोणितत्वकथनञ्च।

अपरं परमेश्वरो मूससं जगाद, पश्य त्वामहं फिरौणः समीपम् ईश्व- १
रस्वरूपं नियुक्तवान्, तव भ्राता हारोणस्त्वत्प्रचारको भविष्यति। अहं २
त्वां याः कथा आज्ञापयामि, ताः सर्व्वास्त्वं कथयिष्यसि; इस्रायेलो वंशं
देशात् प्रेषयितुं तव भ्राता हारोणः फिरौणे ताः कथयिष्यति। किन्त्वहं ३
फिरौणो हृदयं कठिनीकरिष्यामि, मिसर्देशे बाहुल्येन मम चिह्नानि
आश्चर्य्यकर्म्माणि च करिष्यामि; तथापि फिरौन् युवयो र्वाचि न मनो ४

निधास्यति, अतोऽहं मिसर्देशं प्रति हस्तं प्रसार्य्य महादण्डैर् मिसरः
५ स्वसैन्यम् अर्थात् निजलोकान् इस्रायेल्वंशान् वहिः करिष्यामि। मिस्री-
यान् प्रति स्वकरं प्रसार्य्य तेषां मध्याद् इस्रायेल्वंशे मया वहिरानीते
६ परमेश्वरोऽहमेवेति ते ज्ञास्यन्ति। ततो मूसोहारोणौ परमेश्वरीयाज्ञा-
७ नुसारात् कर्म्माणि कृतवन्तौ। फिरौणा सार्द्धं कथाकथनकाले मूससो
ऽशीतिवत्सरा हारोणस्य त्र्यशीतिवत्सरा वय आसीत्।

८ अपरं परमेश्वरो मूसोहारोणौ जगाद, युवां किञ्चन लक्ष्म दर्शयतम्,
९ इति वाचं यदि फिरौन् युवां गदति, तर्हि त्वं हारोणं वदिष्यसि, त्वं
यष्टिमादाय फिरौणः सम्मुखे निक्षिप, तदा सा यष्टिः सर्पो भविष्यति।
१० तदा मूसोहारोणौ फिरौणः समीपं गत्वा परमेश्वरस्याज्ञानुसारात् कर्म्म
कृतवन्तौ; अपरं फिरौणस्तस्य दासानाञ्च सम्मुखे हारोणेन यष्ट्यां
११ निक्षिप्तायां सा सर्पो बभूव। तदा फिरौन् निजान् विदुषो गुणिनश्चा-
हूतवान्; ततो मिस्रीया मायाविलोका निजमायया तथैव चक्रुः।
१२ फलतस्ते स्वां स्वां यष्टिं निचिक्षिपुः, ताश्च सर्व्वा भुजगा बभूवुः; किन्तु
१३ हारोणस्य यष्टिस्तेषां यष्टी जग्रास। ततः परमेश्वरो यथा कथितवान्
तदनुसारेण फिरौणो हृदये कठिनीभूते स तयोः कथायां न मनो
निदधे।

१४ अनन्तरं परमेश्वरो मूससं जगाद, फिरौणो हृदयं कठिनम् अभवत्,
१५ तेन स लोकान् यातुं नादिशति। अतस्त्वं प्रातः फिरौणः समीपं याहि,
पश्य, तस्मिन् तोयसमीपं गते तस्यागमनपर्य्यन्तं त्वं तटिनीतीरे तिष्ठ;
१६ या च यष्टिः सर्पोऽभवत्, तामपि करेण गृहाण। फिरौणे कथय,
प्रान्तरे माम् आराधयितुं मम लोकान् त्वं यातुम् अनुजानीहि; इब्री-
याणां प्रभुः परमेश्वर एतां कथां कथयितुं तव समीपं मां प्रहितवान्,
१७ किन्तु पश्य, त्वम् अस्यां कथायां नाद्यापि मनो निधत्तवान्। परमेश्वर
इत्थं कथयति, पश्चाहं स्वकरस्थया यष्ट्या तटिनीतोयं प्रहरिष्यामि,
१८ तदा तटिनीतोयं शोणितं भविष्यति। तटिन्याञ्च ये मत्स्याः सन्ति तेपि
मरिष्यन्ति, तटिनी च दुर्गन्धा भविष्यति; ततो मिस्रीया लोकास्तटि-
नीतोयं पातुं विरंजिष्यन्ति, तेनाहमेव परमेश्वर इति त्वं ज्ञास्यसि।

१९ अनन्तरं परमेश्वरो मूससं बभाषे, हारोणाय कथामेतां कथय, त्वं
निजयष्टिं गृहीत्वा मिसर्देशस्य तोयानामुपरि अर्थात् तस्य स्रोतस्तटि-
नीसरोवरान्यजलाशयानाम् उपरि निजकरं प्रसारय, तेन तानि शोणि-

तानि भविष्यन्ति, मिसर्देशस्य सर्व्वत्र काष्ठमयप्रस्तरमयपात्रेषु च शोणितं भविष्यति। तदानीं मूसोहारोणौ परमेश्वराज्ञया तादृशं कृतवन्तौ; २० फलतो यष्टिमादाय फिरौणस्तस्य दासानाञ्च सम्मुखे तटिन्यास्तोयोपरि प्रहृतवन्तौ, तेन तटिन्याः सर्व्वतोयं शोणितं बभूव। तटिन्याः २१ सर्व्वमीनेषु मृतेषु तटिनी दुर्गन्धा बभूव च; तेन मिस्रीयास्तटिनीतोयं पातुं न शेकुः, सर्व्वस्मिन् मिसर्देशे शोणितम् अभवत्। तदानीं मिस्रीया २२ मायाविलोका अपि निजमायया तादृशं चक्रुः, तत ईश्वरीयवचनानुसारात् फिरौणो हृदये कठिनीभूते स तयोः कथायां न मनो निदधे। पश्चात् फिरौन् परावृत्य निजगेहं जगाम, तत्रापि न मनो निदधे। २३ किन्तु सर्व्वे मिस्रीयलोकास्तटिनीतोयं पातुं न पारयन्तः पेयतोयार्थं २४ तटिनीचतुर्दिक्षु भुवं चख्नुः।

---

## ८ अष्टमोऽध्यायः।

१ मण्डूककथनं ८ मूससः समीपे फिरौणो निवेदनं १६ धूलितो यूकाभवनं तेन मायाविनां पराजितत्वं २० मशककथनं २५ फिरौणो मनसः काठिन्यञ्च।

परमेश्वरेण तटिन्याघातात् परं सप्तसु दिनेषु समाप्तेषु परमेश्वरो १ मूससं गदितवान्, त्वं फिरौणः समीपं गत्वा तस्मै कथामिमां कथय, परमेश्वरः कथामिमां कथयति, मां सेवितुं मदीयलोकान् यातुम् अनुजानीहि। यदि यातुं नादेक्ष्यसि, तर्हि मण्डूकैस्तव सर्व्वप्रदेशान् नाश- २ यिष्यामि। तटिन्यां बहुमण्डूकान् उत्पादयिष्यामि; ततः सर्व्वे ते मण्डूका ३ उत्थाय तव गृहं शयनगेहं शयनीयञ्च तव दासानां गेहानि तव लोकानां गेहानि तव चूल्ली गोधूमचूर्णनपात्राणि च प्रवेक्ष्यन्ति। तवो- ४ परि तव लोकानां दासानाञ्चोपरि आरोक्ष्यन्ति। ततः परमेश्वरो मूससं ५ जगाद, हारोणाय कथय, त्वं स्रोतसां तटिनीनां जलाधाराणाञ्चोपरि यष्टिविशिष्टहस्तं प्रसारय, मिसर्देशोपरि मण्डूकान् आगमय। ततो ६ हारोणेन मिसर्देशीयानां सर्व्वतोयानाम् उपरि करे प्रसारिते मण्डूका उत्थाय मिसर्देशं व्यानशिरे। तदानीं मायाविनोऽपि तथा कृत्वा मिस- ७ र्देशोपरि मण्डूकान् आनयन्।

अनन्तरं फिरौन् मूससं हारोणञ्चाहूय बभाषे, मत्तो मम लोकेभ्यश्च ८ मण्डूकान् इमान् दूरयितुं परमेश्वरं प्रार्थयेथां; ततोऽहं परमेश्वरम् उद्दिश्य होतुं लोकान् यातुम् आदेक्ष्यामि। तदा मूसाः फिरौणे कथ- ९

यामास, मण्डूका यथा त्वत्तस्तव गृहाच्च दूरीभूय केवलं तटिन्यां तिष्ठन्तीति तव त्वदीयदासेयानां लोकानाञ्च कृते परमेश्वरस्य समीपे
१० कदा प्रार्थयिष्ये, तत् समयं निश्चित्य मां वद। स कथितवान्, श्वः करिष्यसि; तदा मूसा भाषितवान् अस्माकं प्रभोः परमेश्वरस्य समः कोपि
११ नास्तीति त्वं यथा ज्ञास्यसि तदर्थं तव वाक्यानुसारादेव भवतु। मण्डूकास्त्वत्तस्तव गृहाद् दासेभ्यो लोकेभ्यश्च दूरीभूय केवलतटिन्यां स्थास्यन्ति।
१२ ततो मूसोहारोणौ फिरौणः समीपाद् वहिर्गतवन्तौ, पश्चात् मूसाः फिरौणो विरुद्धम् उत्पादितानां मण्डूकानां निवारणार्थम् ईश्वरं प्रार्थ-
१३ यामासे। ततः परमेश्वरेण मूससः प्रार्थनायां साधितायां गृहेषु ग्रामेषु
१४ क्षेत्रेषु च सर्व्वे मण्डूका अम्रियन्त। ततो लोकैः संगृह्य तेषु राशी-
१५ कृतेषु देशे दुर्गन्धो बभूव। किन्तु फिरौन् विपदो निवृत्तिं निरीक्ष्य परमेश्वरीयवाक्यानुसारात् पुनरपि स्वान्तःकरणं कठिनीकृत्य तयोः कथायां न मनो निदधे।

१६ तस्मात् परमेश्वरो मूससं जगाद, हारोणाय कथय, सर्व्वस्मिन् मिसरदेशे यथा यूका भवन्ति, तदर्थं त्वं निजयष्टिं उत्थाप्य भूमे धूलिं प्रहर।
१७ ततस्तौ तादृशं चक्रतुः फलतो हारोणो निजयष्टिविशिष्टं करम् उत्थाप्य भूमे धूलिं प्रहृतवान्; तदा मानुषेषु पशुषु च यूका अभवन् मिसर्द-
१८ शस्य सर्व्वा धूल्यश्च यूका अभवन्। तदानीं मायाविनो निजमायया तथा कृत्वा यूका उत्पादयितुं यतितवन्तः; किन्तु किमपि न शेकुः।
१९ मानुषेषु पशुषु च यूकासु जातासु मायाविनः फिरौणे कथयामासुः, कर्म्मेदम् ईश्वरस्याङ्गुलिकृतं; तथापि फिरौन् परमेश्वरस्य वाक्यानुसाराद् अन्तःकरणं कठिनीकृत्य तयोः कथायां न मनो निदधे।

२० अनन्तरं परमेश्वरो मूससं जगाद, त्वं प्रत्यूषएव उत्थाय फिरौणः सम्मुखे तिष्ठ; पश्य, तस्मिन् तोयसमीपम् आगते तस्मै कथामिमां कथय, परमेश्वरः कथयति, मां सेवितुं मम लोकान् यातुम् आदिश।
२१ किन्तु यदि मम लोकान् यातुं नाज्ञापयिष्यसि, तर्हि त्वां तव दासेयान् लोकान् गृहाणिच प्रति मशकानहं प्रेषयिष्यामि, ते मिस्रीयाणां गृहाणि
२२ ग्रामाश्च परिपूरयिष्यन्ते। किन्तु जगतो मध्ये केवलोहं परमेश्वर इति त्वां ज्ञापयितुं तस्मिन् दिने मम लोकानां निवासस्थानं गोशन्प्रदेशं पृथक्
२३ करिष्यामि, तत्स्थानं मशकसंघो न यास्यति। अहं स्वः स्वीयलोकानां
२४ युष्माकञ्च भेदं करिष्यामि, श्व इदं चिह्नञ्च भविष्यति। पश्चात् परमेश्वरः

तथैव कृतवान्, तेन फिरौणस्तस्य दासानाञ्च गृहेषु कृत्स्नमिसर्देशे च वृहन्तो मशकनिवहा आगच्छन्, तेषु देशो विनष्टुम् आरभ्यत।

तदानीं फिरौन् मूससं हारोणञ्चाहूय कथयामास, युवां गत्वा देशस्य २५ मध्ये युवयोरीश्वरम् उद्दिश्य जुहुतं। ततो मूसा जगाद, तद् अस्माकं न २६ युक्तं, यतोऽस्माकं प्रभुं परमेश्वरम् उद्दिश्य मिस्रीयाणां घृण्यवस्तुना होतव्यम्, इदानीं मिस्रीयाणां घृण्यवस्तुना तेषां समक्षं हुते लोकाः किमस्मान् पाषाणान् निक्षिप्य न मारयिष्यन्ति? तस्माद् वयं दिनत्रयपथं प्रान्तरं २७ गत्वा निजप्रभोः परमेश्वरस्य निदेशानुसारेण तमुद्दिश्य होष्यामः। पश्चात् फिरौन् कथयामास, युष्मानहं यातुम् आज्ञापयामि, यूयं प्रान्तरं २८ गत्वा निजप्रभुं परमेश्वरम् उद्दिश्य जुहुत; किन्तु बहुदूरं मा गच्छत मदर्थञ्च प्रार्थयध्वं। तदानीं मूसा बभाषे, पश्य, त्वत्तस्तव दासानां २९ लोकानाञ्च समीपात् श्वः सर्व्वान् मशकान् दवयितुमहं तव समीपात् प्रयाय प्रार्थनामेतां ईश्वरसन्निधौ करिष्यामि, किन्तु परमेश्वरम् उद्दिश्य होतुं लोकान् प्रस्थापयितुं फिरौन् पुनरपि न वञ्चयतु। ततो ३० मूसाः फिरौणः समीपाद् वहिर्गत्य परमेश्वरं प्रार्थितवान्। तदा ३१ परमेश्वरो मूससः प्रार्थनानुसारेण फिरौणस्तस्य दासेभ्यो लोकेभ्यश्च सर्व्वमशकनिवहान् दवयामास, तेषामेकोपि शेषो नातिष्ठत्। तदानीं ३२ फिरौन् स्वान्तःकरणं कठिनीकृत्य लोकान् गन्तुं न्यवारयत्।

---

## ९ नवमोऽध्यायः।

१ मारीकथनं ८ मानुषाणां पशूनाञ्च विस्फोटककथनं १३ शिलावर्षणकथनं २२ शिलावृष्टिभवनं २७ मूससः समीपे फिरौणो निवेदनं तस्य मनसः काठिन्यञ्च।

अनन्तरं परमेश्वरो मूससं भाषितवान्, त्वं फिरौणः सन्निधिं गत्वा १ तं ब्रूहि, इब्रीयाणां प्रभुः परमेश्वर इति कथयति, मां सेवितुं त्वं मम लोकान् यातुम् आदिश। किन्तु यदि यातुं आदेष्टुम् असंमन्य, इदानी- २ मपि बाधको भवसि, तर्हि तव क्षेत्रस्थानां हयगर्दभमहाङ्गगोमेषादि- ३ पशूनाम् उपरि परमेश्वरो हस्तं प्रसारयिष्यति, तेन तेषां मध्येऽतीव महामारी भविष्यति। किन्तु परमेश्वर इस्रायेल्वंशानां पशुभ्यो ४ मिस्रीयाणां पशूनां भेदं करिष्यति; तत इस्रायेल्वंशानां कोपि पशु र्न मरिष्यति। परमेश्वरः समयं निरूप्य कथितवान्, अहं श्वो देशे ५ कर्म्मैतत् करिष्यामि। परेऽहनि परमेश्वरेण तथैव कृते मिस्रीयाणां सर्व्वे ६

७ पशवो मृताः, किन्त्विस्रायेल्वंशस्य पशूनाम् एकोपि न मृतः। तदानीं फिरौन् लोकं प्रहित्य इस्रायेल्वंशस्य पशुरेकोपि न मृत इति दृष्टवान्, तथापि फिरौणोऽन्तःकरणे कठिने सति स लोकान् यातुं न्यवारयत्।

८ अपरं परमेश्वरो मूसाहारोणौ जगाद, युवां मुष्टिं पूरयित्वा चुल्ल्या भस्म गृह्णीतं; ततो मूसाः फिरौणः समक्षं तद् आकाशं प्रति ९ विकिरतु। तेन सर्व्वमिसर्देशोपरि धूलि र्भविष्यति, मिसरः सर्व्वमनु-१० ष्याणां पशूनाञ्च गात्रेषु क्षतयुक्तविस्फोटका भविष्यन्ति। तदानीं तौ चुल्ल्या भस्म गृहीत्वा फिरौणः संमुखे स्थितवन्तौ; ततो मूसा गगणं प्रति तद् विकीर्णवान्, तदा मनुष्याणां पशूनाञ्च गात्रेषु क्षतयुक्तविस्फो-११ टका बभूवुः। तदानीं सर्व्वेषां मिस्रीयाणां मायाविलोकानाञ्च गात्रेषु विस्फोटकेषु जातेषु तत्कृते मायाविनो मूससः समक्षमपि स्थातुं न १२ शेकुः। ततः परमेश्वरः फिरौणो मनः कठिनीकृतवान्, ततः स मूससा भाषितस्य परमेश्वरीयवाक्यस्यानुसारात् तयोः कथायां न मनो निदधे।

१३ अनन्तरं परमेश्वरो मूससं गदितवान्, त्वं प्रत्यूष उत्थाय फिरौणः सम्मुखे तिष्ठन् तस्मै कथामेतां कथय, इब्रीयाणां प्रभुः परमेश्वरः कथयति, मां १४ सेवितुं त्वं मम लोकान् यातुं आज्ञापय। नो चेत् इदानीमहं तवात्मन उपरि तव दासानां लोकानाञ्चोपरि सर्व्वथा महामारीं प्रेषयिष्यामि, १५ तेन सर्व्वजगति मम समः कोपि नास्तीति त्वं ज्ञास्यसि। इदानीमहं निजकरं प्रसार्य्य महामार्य्या त्वां तव प्रजाश्च प्रहरिष्यामि, तेन त्वं १६ पृथिव्या उच्छिन्नो भविष्यसि। अहं त्वद्द्वारा पराक्रमं दर्शयितुं सर्व्व-१७ पृथिव्यां निजनाम प्रकाशयितुञ्च त्वां स्थापितवान्। किन्तु त्वम् इदानी-१८ मपि मम लोकान् यातुं निषिध्य निजदर्पं प्रकाशयसि। पश्य, मिसरो निर्म्माणकालाद् अद्यपर्य्यन्तं यादृशी कदापि नाभवत् तादृशीं महा-१९ शिलावृष्टिम् अहं श्वो मिसर्देशे कारयिष्यामि। इदानीं लोकान् प्रहित्य क्षेत्रे तव पश्वादयो ये ये सन्ति तान् संगृहाण; यतो यो मनुजो यश्च पशु र्गेहं नानीतः क्षेत्रे स्थास्यति, तेषामुपरि शिलावृष्टौ सत्यां ते २० प्राणान् त्यक्ष्यन्ति। तदा फिरौणो दासानां मध्ये ये केचित् परमेश्वरीय-२१ कथातो बिभ्युस्ते तूर्णं निजान् दासान् पशूंश्च गृहम् आनिन्युः। ये च केचित् परमेश्वरस्य वाक्ये मनांसि न निदधिरे, ते निजान् दासान् पशूंश्च क्षेत्रे तत्यजुः।

२२ अनन्तरं परमेश्वरो मूससमवदत्, त्वं गगणं प्रति स्वकरं प्रसारय, तेन

मिसर्द्देशस्य सर्व्वत्र मनुजपशुक्षेत्रस्थतृणानां सर्व्वेषाम् उपरि शिलावृष्टि र्भविष्यति। ततो मूससा निजयष्ट्यां गगणं प्रति प्रसारितायां पर- २३ मेश्वरो मेघगर्जनं शिलावृष्टिञ्च चकार, विद्युच्च भूम्युपरि वेगेन जगाम, इत्थं परमेश्वरो मिसर्द्देशे शिलावृष्टिं चकार। ततोऽतीवासह्यनीया २४ शिलामिश्रिताग्निवृष्टि र्बभूव, ईदृशी शिलावृष्टि र्मिसर्द्देशे तस्य स्थापनम् आरभ्य कदापि नाभवत्। तेन सर्व्वमिसर्द्देशस्य क्षेत्रस्था २५ मनुजाः पशवश्च सर्व्वे शिलाभि र्हताः, क्षेत्रस्य च सर्व्वतृणानि शिलावृष्टे र्नष्टानि क्षेत्रस्य सर्व्वे पादपा भग्नाः। किन्त्विस्रायेल्वंशस्य वास- २६ स्थाने गोशन्प्रदेशे शिलावृष्टि र्नाभवत्।

ततः फिरौन् लोकं प्रहित्य मूससं हारोणञ्चाहूय बभाषे, अहमेक- २७ कृत्व इदं पापं कृतवान् परमेश्वरस्तु न्यायवानेव; किन्त्वहं मदीयलोकाश्च दुष्कर्म्मिणः। घोरमेघगर्जनं शिलावृष्टिश्च यथा पुनरधिकं न जायते, २८ तदर्थं युवां परमेश्वरं प्रति प्रार्थयेथाम्, यतो यदभूत् तदेव प्रचुरं; ततोऽहं युष्मान् यातुम् आदेक्ष्यामि, युष्माकं पुनर्विलम्बो न भविष्यति। मूसास्तमवदत्, अहं इदानीमेव नगराद् वहिर्गत्य परमेश्वरं प्रति करौ २९ प्रसारयिष्यामि, तेन मेघगर्जनं निवर्त्तिष्यते शिलावृष्टिश्च पुन र्न भविष्यति, पृथिवीयं परमेश्वरस्येति च त्वं ज्ञास्यसि। किन्तु त्वं तव दासाश्च ३० यूयं इदानीमपि परमेश्वरात् प्रभो र्न बिभीथ, इत्यहं जानामि। अतस्तो ३१ यवाश्च सर्व्वे विनष्टाः, यतो यवाः कनिशयुक्ता अतस्यः पुष्पयुक्ता आसन्। किन्तु गोधूमा जनराश्च बाल्यत्वात् न नष्टाः। पश्चात् मूसाः फिरौणः समी- ३२ पात् नगराद् वहि र्गत्वा परमेश्वरं प्रति करौ प्रसारितवान्; ततो मेघ- ३३ गर्जनं शिलावृष्टिश्च निवृत्तौ भूमौ पुन र्न वृष्टि र्बभूव। तदानीं फिरौन् ३४ वृष्टिशिलावृष्टिमेघगर्जनानां निवृत्तिं विलोक्य पुनः पापं कृतवान्, स तस्य दासाश्च स्वमनांसि कठिनानि चक्रुः। इत्थं मूससोक्तस्य परमेश्वरीय- ३५ वाक्यस्यानुसारात् फिरौणान्तःकरणे कठिने सति स इस्रायेलो वंशान् यातुं न्यवारयत्।

---

## १० दशमोऽध्यायः।

१ स्थूककीटकथनं ७ फिरौणं प्रति दासानां कथनं १२ स्थूककीटागमनं १६ मूससं प्रति फिरौणो निवेदनं २१ घोरान्धकारकथनं २४ मूससं प्रति फिरौणः क्षेपकथनञ्च।

अनन्तरं परमेश्वरो मूससं जगाद, त्वं फिरौणो निकटं याहि, यतोऽहं १

तस्य समक्षं निजचिह्नानि प्रकाशयितुं फिरौणस्तस्य दासानाञ्च मनांसि
२ कठिनानि कृतवान्। तस्मादहं मिसरि यद् यत् कर्म्म तेषां समक्षं यद्
यत् चिह्नञ्च कृतवान्, तत् सर्व्वं यूयं निजपुत्रपौत्त्राणां कर्णेषु कथ-
३ यिष्यथ, अहमेव परमेश्वर इति च ज्ञास्यथ। तदा मूसाहारोणौ
फिरौणः समीपं गत्वा जगदतुः, इब्रीयाणां प्रभुः परमेश्वरः कथयति,
त्वं मम समक्षं नम्रो भवितुं कति कालान् न संमंस्यसे? मां सेवितुं
४ मम लोकान् यातुम् अनुजानीहि। किन्तु यातुं यदि नानुजानासि,
५ तर्हि पश्य, श्वः सूककीटान् तव देशम् आनेष्यामि। तैश्च तव सर्व्वासु
भूमिष्वाच्छन्नासु भूमिरदृश्या भविष्यति, यच्च शिलावृष्टे रक्षितम-
वशिष्टम् अस्ति तत् सर्व्वं ते खादिष्यन्ति, क्षेत्रोत्पन्नान् युष्माकं सर्व्वान्
६ वृक्षांश्च ते खादिष्यन्ति। अपरं तैस्तव गेहानि तव दासानां गेहानि मि-
स्रीयलोकानाञ्च गेहानि पूरयिष्यन्ते, तादृशाः कीटा एतस्मिन् जनपदे
तव पित्रादीनां तत्पित्रादीनाञ्च आजन्मतोऽद्य यावत् केनापि न दृष्टाः;
तदा मूसा मुखं परावर्त्त्य फिरौणः समीपात् वहि र्जगाम।

७ अनन्तरं फिरौणो दासास्तस्मै कथयामास, मानुषोयं कति कालम्
अस्माकं उन्मायरूपः स्यास्यति? स्वीयं प्रभुं परमेश्वरं सेवितुम् एतान्
यातुम् अनुमन्यस्व, मिसर्देशोऽनश्यत् तत् त्वं किमिदानीमपि न बुध्यसे?
८ तदानीं मूसाहारोणौ फिरौणः समीपम् पुनरानीतौ; ततः स ताभ्यां
कथितवान्, यूयं निजप्रभुं परमेश्वरं सेवितुं गच्छत; किन्तु के के
९ गमिष्यन्ति? ततो मूसाः कथयामास, वयं सबालवृद्धा गमिष्यामः;
अस्माकं पुत्रान् कन्याश्च गवादीन् मेषव्रजांश्च गृहीत्वा गमिष्यामः, यतः
१० परमेश्वरम् उद्दिश्य महः कर्त्तव्यः। तदानीं फिरौन् ताभ्याम् उक्तवान्
परमेश्वरो यदि युष्माकं सहायोस्ति, तथाप्यहं युष्मान् सबालकान्
११ यातुं नानुज्ञास्यामि; पश्यत, युष्माकं मनोगतं कर्म्म सदोषं। इत्थं नहि,
युष्माकं पुरुषा गत्वा परमेश्वरम् आराधयन्तु, युष्माभिरपि पूर्व्वमेवं
प्रार्थितं; ततस्तौ फिरौणः सम्मुखात् दूरीकृतावभवतां।

१२ अनन्तरं परमेश्वरो मूससं गदितवान् त्वं मिसर्देशे सूककीटार्थं स्वकरं
प्रसारय, तेन ते मिसर्देशम् आगत्य शिलावृष्टे रक्षितानि भूमेस्तृणादीनि
१३ सर्व्वाणि भक्षिष्यन्ति। तदा मूसा मिसर्देशोपरि निजयष्टिं प्रसारित-
वान्, ततः परमेश्वरः कृत्स्नम् अहर्निशं देशे पूर्व्वीयवायुं वाहयामास,
१४ पश्चात् प्रातःकाले पूर्व्वीयवायुना सूककीटा उपानीताः। ततः सकल-

मिसर्देशं सूककीटा व्याप्नवन्तः, मिसरः सकलप्रदेशे सूकखीटाः पेतुः, तादृशा भयानकाः सूककीटाः पुरा कदापि नासन्, पश्चादपि कदापि न भविष्यन्ति। तैः सकला भूमिराच्छन्ना देशश्चान्धकारावृतो बभूव, १५ पृथिव्यां शिलावृष्टेरच्छितानि यानि यानि भूमेस्तृणानि पादपानां फलानि चासन्, तानि सर्व्वाणि ते बभक्षुः, तेन मिसरः सर्व्वप्रदेशे कस्मिन्नपि पादपे क्षेत्रस्य तृणेषु किञ्चिन्मात्रोपि हरिद्वर्णो नातिष्ठत्।

तदानीं फिरौन् मूससं हारोणञ्च त्वरितमाहूय बभाषे, युष्माकं प्रभोः १६ परमेश्वरस्य विरुद्धम् अहं पापं कृतवान्। विनयेहं केवलमेतद्वारं मम १७ पापं विमोच्य मत्त इमं मृत्युस्वरूपं दूरयितुं निजप्रभोः परमेश्वरस्य समक्षं प्रार्थयेथां। ततः स फिरौणः समीपाद् वहि र्गत्वा परमेश्वरस्य साक्षात् १८ प्रार्थयाञ्चक्रे। परमेश्वरः प्रबलं पाश्चात्यवायुम् आनाय्य देशात् सूककी- १९ टान् उत्थाप्य सूफ्सागरे निचिक्षेप; ततो मिसरः कस्मिंश्चिदपि प्रदेशे सूककीटानाम् एकोपि न तस्थौ। किन्तु परमेश्वरेण फिरौणो हृदये २० कठिनीकृते स इस्रायेलो वंशान् यातुं न्यवारयत्।

अपरं परमेश्वरो मूससं जगाद, त्वं गगणं प्रति हस्तं प्रसारय, तेन २१ मिसर्देशे ध्वान्तं भविष्यति, ध्वान्तकारणात् लोका हस्तामर्षं करिष्यन्ति। पश्चात् मूससा गगणं प्रति करः प्रसारितः; ततो दिनत्रयं यावत् मिस- २२ र्देशस्य सर्व्वत्र तथान्धतमसं जातं, येन कश्चिदन्यजनं नापश्यत् दिन- २३ त्रयं यावत् कोपि निजस्थानात् उत्थातुं न शशाक, किन्त्विस्रायेलो वंशानां वासस्थानेषु आलोकरवासीत्।

तदानीं फिरौन् मूससमाहूय बभाषे, यूयं परमेश्वरं सेवितुं यात, २४ युष्माभिः सार्द्धं बालकाश्च यान्तु केवलमत्र युष्माकं मेषगवादीनां व्रजा स्तिष्ठन्तु। ततो मूसाः कथितवान्, वयम् अस्माकं प्रभुं परमेश्वरम् उद्दिश्य २५ यानि बलिहोमीयद्रव्याणि दास्यामः, तान्यस्माकं हस्तेषु भवता दातव्यानि। अस्माभिः सार्द्धम् अस्माकं पशवो यास्यन्ति, तेषाम् एकः खुरोपि २६ नावशेक्ष्यते, यतोस्माकं प्रभुं परमेश्वरं सेवितुं तेषां मध्यात् पशवो ग्रहीतव्याः किन्तु केन बलिना परमेश्वरः सेवितव्य इति तत्र स्थान उपस्थितेः प्रागस्माभि र्न ज्ञायते।

अनन्तरं परमेश्वरेण फिरौणो मनसि कठिने कृते स तेषां गमनं २७ नानुजानात्। पश्चात् फिरौन् तस्मै कथितवान्, मम समीपात् दूरीभव, २८ किन्तु सावधानो भव मन्मुखं पुनः कदापि न वीक्षस्व; यद्दिने मन्मुखं

२९ द्रक्ष्यसि, तद्दिनएव मरिष्यसि। ततो मूसाः कथितवान्, त्वया भद्रमुक्तं तव वदनं पुनः कदापि नैव वीक्षिष्येहम्।

---

## ११ एकादशोऽध्यायः।

१ मिस्रीयेभ्यो द्रव्यं याचित्वा ग्रहीतुम् इस्रायेलो वंशं प्रतीश्वरस्याज्ञा ४ प्रथमजातापत्यानां हननप्रतिज्ञा ९ फिरौणो मनसः कठिनताकथनञ्च।

१ परमेश्वरो मूससम् अवदत्, अहं फिरौणो मिसरस्योपरि अपरम् एकमुत्पातम् आनेष्यामि; ततः स युष्मान् इतो यातुम् आदेक्ष्यति, यातुम् २ आदेशकाले युष्मान् ससर्व्वान् वहिः करिष्यति च। तस्मात् इदानीं लोकानां कर्णगोचरे कथय, एकैकः पुमान् निजप्रतिवासित एकैका योषिच्च निजप्रतिवासिनीतः स्वर्णरूप्याभरणानि याचित्वा गृह्णातु। ३ अनन्तरं परमेश्वरो मिस्रीयाणां दृष्टौ लोकान् दयाभाजनानि चकार, तथा मिसर्देशे फिरौणो दासानां लोकानाञ्च दृष्टौ मूसा अतीव मान्यः पुरुष आसीत्।

४ अनन्तरं मूसा अवदत् परमेश्वरो वदति, अहं मध्यरात्रौ मिसरो ५ मध्येन यास्यामि, तेन सिंहासनस्थफिरौणः प्रथमजातम् आरभ्य पिषन्त्या दास्याः प्रथमजातं यावत् मिसर्देशस्थिताः सर्व्वे प्रथमजाता मरिष्यन्ति, ६ पशूनामपि सर्व्वे प्रथमजा मरिष्यन्ति। तेन यादृशं कदापि नाभवत् ७ न भविष्यति च, तादृशं महारोदनं सर्व्वमिसर्देशे भविष्यति। किन्तु परमेश्वरो मिस्रीयलोकेभ्य इस्रायेलीयलोकान् भिन्नान् करोतीति यथा यूयं जानीथ, तदर्थं इस्रायेल्वंशस्य मानुषान् पशूंश्च प्रति कोपि ८ कुक्कुरो जिह्वां न दोलायिष्यते। तेन तवैते दासा अवरुह्य मत्समीपम् आगमिष्यन्ति, मां प्रणम्य च कथयिष्यन्ति, त्वं त्वत्पार्श्वग्राहिलोकाश्च वहिर्भवत; तत् पश्चाद् अहं वहिर्भविष्यामि। ततः परं स महाक्रुद्धस्य फिरौणः समीपात् वहि र्जगाम।

९ परमेश्वरो मूससम् अवादीत् फिरौन् युष्माकं वाक्ये न मनो १० निधास्यति, तेनाहं मिसर्देशे स्वस्याश्चर्य्यकर्म्मणां वृद्धिं करिष्यामि। अपरं मूसोहारोणौ फिरौणः समक्षं एतानि चित्रकार्य्याणि कृतवन्तौ; किन्तु परमेश्वरः फिरौणो हृदयं कठिनं कृतवान्, तस्मात् स स्वदेशात् इस्रायेलो वंशान् यातुं नानुज्ञातवान्।

---

# १२ द्वादशोऽध्यायः।

१ वत्सरस्य प्रथममासनिर्णयः ३ निस्तारपर्व्वणो निरूपणं ११ निस्तारपर्व्वणो विवरणं १८ निस्तारपर्व्वणि किण्वशून्यपूपभक्षणं २१ प्राचीनान् प्रति मूसस आज्ञापनं २९ मिस्रीयाणां प्रथमजातापत्यानां बधः ३१ इस्रायेलीयानां वहिर्गमनं ३७ तेषां संख्या ४० मिसरि वासस्य कालनिर्णयः ४३ निस्तारपर्व्वणि भोजनविधे र्निर्णयश्च।

अपरं मिसर्देशे परमेश्वरो मूससं हारोणञ्च जगाद, मासोयं युष्माकं १ प्रधानमासो वत्सरस्य प्रथममासो भविष्यति। २

इस्रायेलो वंशीयसर्व्वसमाजायेमां कथां कथय, मासस्यास्य दशमे ३ दिने युष्माकम् एकैको गृहस्थः स्वीयपरिवारार्थम् एकैकं मेषशावकं गृह्णातु। मेषं भोक्तुं यस्य परिजना अल्पा भवन्ति, स तस्य निकटस्थः ४ प्रतिवासी च मेषशावकमेकं गृह्णीतां, यूयं लोकानां संख्यां भोजनशक्त्यनुसारतो मेषशावकमधि गणयिष्यथ। यूयं मेषव्रजात् छागव्रजाद् वा ५ निर्दोषम् एकवत्सरवयस्कं पुंशावकं गृहीत्वा तस्य मासस्य चतुर्दशदिनं यावत् स्थापयिष्यथ। पश्चाद् यूयं इस्रायेलो वंशीयसमाजभुक्ताः सर्व्वे ६ सन्ध्यायां तं शावकं बलिं दास्यथ। अपरं तस्य किञ्चित् शोणितं गृहीत्वा ७ तन्मेषस्य भोजनगेहद्वाराणां पार्श्वद्वयकाष्ठेषु नासासु च तत् शोणितं स्रक्षयिष्यथ। तस्यां रात्रौ तस्य वह्निदग्धं पललं तिक्तशाकमिश्रितान् ८ किण्वशून्यान् पूपांश्च भोक्ष्यध्वे। तत्पललम् अपक्कं तोयसिद्धं वा न ९ भोक्ष्यध्वे, किन्तु तस्य मुण्डजंघावपूंषि वह्निना दग्ध्वा भोक्ष्यध्वे। अपरं १० प्रातःकालं यावत् तस्य किमपि नावशेक्ष्यध्वे; यदि प्रातःकालं यावत् किञ्चिदवशिष्यते तर्हि तदग्निना भस्मसात् करिष्यथ।

यूयं कटिबन्धनं विधाय पादयोः पादुके दत्त्वा हस्तेन यष्टिं गृहीत्वा ११ तद् भोक्ष्यध्वे; एतत् परमेश्वरस्य निस्तारपर्व्व भविष्यति, तस्माद् यूयं त्वरितं तद् भोक्ष्यध्वे। यतोऽहमद्य रात्रौ मिसर्देशस्य मध्येन गत्वा मिस- १२ र्देशस्य मनुजानां पश्वादीनाञ्च सर्व्वान् प्रथमजातान् प्रहरिष्यामि, मिस्रीयान् देवांश्च दण्डयिष्यामि, परमेश्वरोऽहमेव। किन्तु यूयं यस्मिन् १३ यस्मिन् गेहे तिष्ठथ, तच्छोणितं तस्य तस्य गेहस्य चिह्नं भविष्यति, यदाहं मिसर्देशं दण्डयिष्यामि,तदानीं तच्छोणितं विलोक्य युष्मान् विहाय गमिष्यामि, स च दण्डो युष्मान् नाशयितुं युष्मान् प्रति नोपस्थास्यति। स १४ दिवसो युष्माकं स्मरणविषयो भविष्यति, तदर्थं यूयं पुरुषपरम्परया तद्दिनं परमेश्वरस्य पर्व्वत्वेन पालयिष्यध्वे, इदं पर्व्व नित्यविधिना पाल-

१५ यिष्यध्वे। अपरं यूयं सप्तदिनानि यावत् किण्वशून्यान् पूपान् खादिष्यथ, किन्तु प्रथमे दिने निजगेहेभ्यः किण्वम् अपसारयत; यतो यो जनः आ प्रथमदिनात् सप्तमदिनं यावत् किण्वमिश्रितपूपं भोक्ष्यते स
१६ इस्रायेलो वंशाद् उच्छेत्स्यते। अपरं प्रथमे दिने युष्माकं पवित्रसमारोहो भविष्यति, सप्तमे दिनेऽपि युष्माकं पवित्रसमारोहो भविष्यति, तस्मिन् दिनद्वये प्रतिप्राणिभक्ष्यायोजनं विनान्यत् कर्म्म न करिष्यथ,
१७ केवलं तदेव युष्माभिः साध्यताम्। इत्थं युष्माभिः किण्वशून्यपूपीयं पर्व्व पालनीयं, यतस्तस्मिन्नेव दिनेऽहं मिसर्देशाद् युष्मन्निवहान् उद्धरिष्यामि, तस्माद् यूयं पुरुषपरम्परां यावत् विधिवत् तत् पर्व्व पालयिष्यथ।

१८ यूयं प्रथममासस्य चतुर्दशदिनस्य सायंकालमारभ्य एकविंशतितम-
१९ दिनस्य सायंकालं यावत् किण्वशून्यपूपान् भोक्ष्यध्वे। सप्ताहं युष्माकं गृहेषु किण्वाभावो भूयात्, यतो विदेशी स्वदेशी वा यो जनोऽत्र किण्वमिश्रितं पूपं भुंक्ते, स इस्रायेलो वंशस्य समाजाद् उच्छेत्स्यते।
२० यूयं किण्वयुक्तं किमपि द्रव्यं मा भक्षत, किन्तु स्वस्वसर्व्वगृहेषु किण्वशून्यपूपान् भक्षत।

२१ तदानीं मूसा इस्रायेलो वंशस्य सर्व्वान् प्राचीनलोकान् आहूय बभाषे यूयं निजार्थं स्वस्वपरिजनानुसाराद् एकैकं मेषशावकं गृहीत्वा निस्ता-
२२ रपर्व्वणि बलिं छेदयत। अपरम् एकमुष्टिम् एसोबतृणानि गृहीत्वा पात्रस्थिते शोणितेऽवगाहयित्वा द्वारस्य नासायां पार्श्वकाष्ठयोश्च पात्रस्थितशोणितविन्दून् प्रक्षिप्य प्रभातं यावत् युष्माकं कोपि गृहद्वाराद्
२३ वहि र्मा गच्छतु। यतः परमेश्वरो मिस्रीयान् हन्तुं तेषां मध्येन गमिष्यति, तेन युष्माकं द्वारनासासु पार्श्वकाष्ठेषु च शोणितचिह्नं दृष्ट्वा परमेश्वरः स्थानान्तरं गत्वा युष्माकं गेहं हन्तारं प्रवेष्टुं वारयिष्यति।
२४ अपरं यूयं युष्माकं सन्तानाश्च विधिवत् एतत् पर्व्व पालयिष्यथ।
२५ परमेश्वरो निजप्रतिज्ञानुसारेण युष्मभ्यं यं देशं दास्यति तत्र प्रविष्टै-
२६ रपि युष्माभिः पर्व्वैतत् पालयितव्यं। अपरं युष्माकं सन्तानैरेतत्पर्व्व-
२७ णोऽभिप्रायः कः? इति पृष्टे यूयं कथयिष्यथ, मिस्रीयाणाम् आघातकाले अस्माकं गृहरक्षणकाले च परमेश्वरो मिसरि प्रवासिन इस्रायेलो
२८ वंशस्य गृहाणि परित्यज्य गतवान्, तस्येदं निस्तारपर्व्व। तदानीं लोका दण्डवत् प्रणेमुः, अनन्तरम् इस्रायेलः सन्ताना गच्छन्तो मूसाहारोणौ प्रति कथितस्येश्वरवाक्यस्यानुसारात् कर्म्म कृतवन्तः।

ततः परं परमेश्वरो मध्यरात्रौ सिंहासनस्थितस्य फिरौणः प्रथमजातं २९ सन्तानम् आरभ्य कारास्थितलोकानां प्रथमजातसन्तानान् यावत् मिसर्देशस्थितान् सर्व्वान् प्रथमजातसन्तानान् पशूनां प्रथमजातशावकांश्च आजघान। ततः फिरौन् रजन्याम् उत्तस्थौ तस्य दासा मिस्रीयलोकाश्च ३० मिसरि भृशं रुरुदुः, यतो यस्मिन् गृहे नैको मृतस्तादृशं गृहं नासीत्।

तदानीं रजन्यामेव फिरौन् मूससं हारोणञ्चाहूय जगाद, यूयम् ३१ इस्रायेलः सर्व्वे वंशा उत्थाय मम लोकानां मध्याद् वहिर्भवत, वहि र्भूत्वा च युष्माकं वाक्यानुसारतः परमेश्वरं सेवध्वम्। अपरं युष्माकं वाक्यानु- ३२ सारात् मेषव्रजान् सर्व्वान् गवादिव्रजांश्च आदाय गच्छत, माञ्चाशिषं गदत। तदानीं इस्रायेल्वंशो यथा तूर्णं देशाद् याति, मिस्रीयैरित्यु- ३३ द्योगश्चक्रे, यतस्तैरुक्तम् वयमपि सर्व्वे मृतकल्पाः। ततो लोकाः किण्व- ३४ मिश्रणात् पूर्व्वं, निजं निजं तोयमिश्रितं गोधूमचूर्णं वसनै र्बद्ध्वा स्कन्धे जगृहुः। अपरं इस्रायेलो वंशो मूससो वाक्यानुसारात् मिस्रीयेभ्यः ३५ स्वर्णरूप्याभरणानि वसनानि च याचित्वा जगृहुः। परमेश्वरो मिस्री- ३६ याणां दृष्टौ तान् अनुग्रहभाजनानि कृतवान्, तस्मात् ते तेषां प्रार्थनानुसारात् तेभ्यस्तानि ददुः। इत्थं ते मिस्रीयाणां धनादि जहुः।

तदानीम् इस्रायेलो वंशा बालकान् विहाय षट्लक्षाणि पुमांसः ३७ पद्व्रजेन रामिषेषः सुक्कोतं प्रति यात्रां चक्रुः। तेन विदेशीया बहवो ३८ लोका मेषगवादयो बहुपशवश्च तैः सार्द्धं प्रतस्थिरे। अनन्तरं ते मिसर्दे- ३९ शाद् आनीतै र्मिश्रितगोधूमचूर्णैः किण्वशून्यपिष्टकान् चक्रुः, तन्मध्ये किण्वाभाव आसीत्, यतस्ते मिसरो दूरीभवनकाले विलम्बकरणाशक्तेः स्वेषां कृते किञ्चिदपि खाद्यम् आसादयितुं न शेकुः।

इस्रायेलो वंशस्त्रिंशदधिकचतुःशतवत्सरान् यावत् मिसर्देशे न्यव- ४० सत्। अनन्तरं त्रिंशदधिकचतुःशतवत्सरेषु व्यतीतेषु तस्मिन् दिने ४१ परमेश्वरस्य सैन्यानि मिसरो वहि र्बभूवुः। परमेश्वरेण मिसरस्तेषां ४२ वहिष्करणकृते सा यामिनी तान् प्रति महामान्या बभूव, परमेश्वरस्य सा यामिनी च इस्रायल्वंशस्य पुरुषपरम्परां यावत् अतीव मान्या भवति।

अपरं परमेश्वरो मूससं हारोणञ्च बभाषे, निस्तारबलिन एष विधिः, ४३ कोपि विदेशी जनस्तं न भक्षिष्यति। किन्तु रूप्येण क्रीतः सर्व्वो दासो ४४ यदि त्वक्छेदी भवति, तर्हि भोक्तुं शक्ष्यति। नो चेत् विदेशी वेतन- ४५

४६ जोवी दासो वा तद् भोक्तुं न प्राप्स्यति। एकस्मिन् गृहे तद् भोक्ष्यध्वे, तस्य मांसस्य किञ्चिदपि गृहस्य वहि र्न नेष्यथ, तदीयैकं कीकसमपि
४७ मा भज्यतां। इस्रायेलः समाजीयाः सर्व्वे इदं पर्व्व करिष्यन्ति।
४८ अपरं त्वया सार्द्धं प्रवासी कोपि विदेशी जनो यदि परमेश्वरस्य निस्तारपर्व्व पालयितुम् इच्छति, तर्हि स पुंपरिवारेण सार्द्धं त्वक्छेदी सन् पर्व्व कर्त्तुम् आगच्छतु, तेन स देशीयलोकस्य सदृशो
४९ भविष्यति; किन्तु कोप्यच्छिन्नत्वक् तन्न भुंक्तां। अपरं देशजातं लोकं युष्माकं मध्ये प्रवसद्विदेशीयलोकांश्च प्रति विधिरेक एव भविष्यति।
५० तत इस्रायेल्वंशीयाः सर्व्वे तथैव कृतवन्तः, अर्थात् मूसोहारोणौ
५१ प्रति परमेश्वरस्य याज्ञासीत्, तदनुसारतएव चक्रुः। इत्थं परमेश्वरस्तस्मिन् दिने सेनाश्रेणीनिवद्धान् इस्रायेलीयवंशान् मिसरो देशाद् वहिः कृत्वानयत्।

---

# १३ त्रयोदशोध्यायः।

१ ईश्वरम् उद्दिश्य प्रथमजातस्य पवित्रीकरणं ३ मिसरो मोचनस्मरणार्थचिह्नं ११ ईश्वरम् उद्दिश्य प्रथमजातस्य पवित्रीकरणविवरणं १७ मिसरो यात्राकरणकाले यूषफः कीकसस्य सहनयनं २० दिवा मेघस्तम्भेन रात्रौ वह्निस्तम्भेन परमेश्वरस्य तेषां मार्गदर्शनञ्च।

१ अनन्तरं परमेश्वरो मूससं गदितवान्, इस्रायेलो वंशमध्ये प्रथम-
२ जातान् सर्व्वजातीयान् सन्तानान् मामुद्दिश्य पवित्रान् कुरु, यतो मनुजपशुजात्योः प्रथमगर्भस्य सन्ताना मदीया भविष्यन्ति।
३ अनन्तरं मूसा लोकेभ्यः कथितवान्, यस्मिन् दिने यूयं मिसरो दासत्वरूपगृहात् मुक्ता अभवत, अर्थात् यस्मिन् दिने परमेश्वरस्तस्मात् स्थानात् निजवाहुबलेन युष्मान् वहिः कृतवान्, तद्दिनं स्मर-
४ णीयं, तत्र किण्वयुक्ताः पूपा न भोक्तव्याः। यूयम् आवीव्मासस्य दिने-
५ ऽस्मिन् वहिरभवत। किनानीय-हित्तीय-इमोरीय-हिव्वीय-यिवूषीयानां यं देशं तुभ्यं दातुं तव पूर्व्वपुरुषाणां समीपे परमेश्वरेण शपथोऽकारि, तं दुग्धमधुप्रवाहिनं देशं यदा स त्वाम् आनेष्यति,
६ तदापि त्वं मासेऽस्मिन् इदं पर्व्व पालयिष्यसि। सप्ताहं यावत् किण्वशून्यपूपान् खादिष्यसि, सप्तमे दिने परमेश्वरम् उद्दिश्य महं करिष्यसि।
७ सप्ताहं किण्वशून्यपूपा भोक्तव्याः, तव समीपे किण्वयुक्तपूपश्च दृष्टो

मा भवेत्, तव सर्व्वप्रदेशमध्ये किण्वदर्शनं न भवेत्। तस्मिन् दिने ८ त्वं निजपुत्रम् इति ज्ञापय, मिसरो मम वहिर्भवनकाले परमेश्वरो मां प्रति यद् यत् कर्म्म कृतवान्, तस्य स्मरणार्थम् अयं व्यवहारो भवति। अपरम् अयं विधिस्तव करस्य चिह्नस्वरूपः स्मरणार्थं नयन- ९ द्वयमध्यस्थानस्य भूषणस्वरूपो भविष्यति; परमेश्वरस्य च व्यवस्था तव वदने स्थास्यति, यतः परमेश्वरः पराक्रमिकरेण मिसरस्त्वां वहिः- कृतवान्। अतस्त्वं प्रतिवत्सरम् स्वसमय एतं विधिं पालयिष्यसि। १०

परमेश्वरस्तव त्वत्पूर्व्वपुरुषाणाञ्च समीपे यादृशं शपथं कृतवान् ११ तदनुसारेण यदा किनानीयदेशे त्वां प्रवेश्य तुभ्यं तं दास्यति, तदानीं १२ त्वं प्रथमजातसन्तानान् परमेश्वरार्थं पृथक् करिष्यसि, तव पशू- नामपि प्रथमजाताः पुंसन्तानाः परमेश्वरस्य भविष्यन्ति। अपरं १३ गर्द्दभानां सर्व्वेषां प्रथमजातानां विनिमयेन मेषशावका दातव्याः, यस्य विनिमयं न करोषि, तस्य ग्रीवां भंच्यसि; किन्तु तव सन्तानानां मध्ये मनुजानां सर्व्वेषां प्रथमजातानां विनिमयः कर्त्तव्यः।

पश्चात् किमिदम्? इति भविष्यति काले तव पुत्रेण पृष्टे त्वं १४ वदिष्यसि, यदा परमेश्वरो निजपराक्रमिकरेणास्मान् मिसरोऽर्थात् दासत्वरूपगृहाद् वहिः कृतवान् फिरौणश्च अस्मान् यातुं न सम- मन्यत; तदानीं परमेश्वरो मिसर्देशे मनुजानां पश्वादीनाञ्च सर्व्वान् १५ प्रथमजातसन्तानान् अवधीत्, एतत्कारणाद् अहं पुल्लिङ्गसकलप्रथम- जातान् परमेश्वराय बलीन् ददामि; किन्तु मम वंशस्य प्रथम- जातान् सर्व्वसन्तानान् मोचयामि। अयं विधिस्तव हस्तस्य चिह्नस्वरूपो १६ नेत्रद्वयमध्यस्थानस्य भूषणस्वरूपश्च भविष्यति, यतः परमेश्वरो बाहु- बलेनास्मान् मिसर्देशात् वहिरानयत्।

अपरं फिरौणा लोकेषु परित्यक्तेषु पिलेष्टीयदेशेन यातुं लोकमार्गे १७ स्थितेऽपि ईश्वरस्तेन मार्गेण तान् न गमयामास, यत ईश्वरो गदितवान्, तथा सति लोका रणं विलोक्यानुतप्य मिसरं परावृत्य यास्यन्ति। अत १८ ईश्वरः सूफ्सागरस्य प्रान्तरे तान् वक्रवर्त्मना गमयामास; तत इस्रायेलो वंशाः शृङ्खलवत् मिसरो वहिरभवन्। अपरं मूसा यूषफः १९ कीकसानि सह निनाय, यतः स इस्रायेलो वंशं भृशं शपथं कार- यित्वा जगाद, ईश्वरोऽवश्यं युष्मान् साक्षात् करिष्यति; यूयञ्च स्वैः सार्द्धं मम कीकसानि स्थानादस्मात् नेष्यथ।

२० अनन्तरं ते सुक्कोतो यात्रां विधाय, एथमि अर्थात् काननपार्श्वे
२१ शिविरं स्थापयामासुः। परमेश्वरो दिवा पथा नेतुं मेघस्तम्भे रजन्यां दीपनार्थं वह्निस्तम्भे स्थित्वा तेषाम् अग्रेऽग्रे गतवान्, इत्थं दिवानिशं
२२ तान् गमितवान्। स लोकानां सम्मुखात् दिवा मेघस्तम्भं रजन्यां वह्निस्तम्भञ्च न दूरयामास।

---

## १४ चतुर्दशोऽध्यायः।

१ इस्रायेलीयलोकान् प्रति परमेश्वरेण पथदर्शनं ५ फिरौणस्तेषां पश्चाद् गमनं १० इस्रायेलीयलोकानां विलपनं १३ मूससः सान्त्वनावाक्यं १५ परमेश्वरेण मूसःशिक्षणं १९ दूतमेघस्तम्भयोः पश्चाद्वर्त्तित्वं २१ मूससः समुद्रद्विधाकरणं २३ इस्रायेल् लोकानां पश्चात् मिस्रीयाणां गमनं २६ सागरे मिस्रीयाणां विनाशश्च।

१ अनन्तरं परमेश्वरो मूससं बभाषे, त्वं इस्रायेलीयवंशाय कथय, यूयं
२ परावृत्य पीहहीरोतः सम्मुखे मिग्दोलः सागरस्य च मध्ये बाल्सिफोनः सम्मुखे शिविरं स्थापयत; यूयं तस्याग्रभूमौ सागरस्य समीपएव
३ शिविरं स्थापयत। यतः फिरौन् इस्रायेलो वंशान् उद्दिश्य कथयिष्यति,
४ ते देशस्य मध्ये बद्धाः सन्ति काननेन च रुद्धाः सन्ति। अपरं मया फिरौणो हृदये कठिने कृते स युष्माकं पश्चात् धाविष्यति, ततः फिरौणा तदीयसैन्यैश्च सम्मानम् प्राप्स्यामि, तेन परमेश्वरोऽहमेवेति मिस्रीया ज्ञास्यन्ति, तदा ते तथैव कृतवन्तः।

५ ततो लोकाः पलायिता इति वार्त्तायां मिस्रीयराजे विज्ञापितायां फिरौणस्तस्य दासानाञ्च मनांसि लोकेष्वनुतापितानि बभूवुः, ते च कथयामासुः, कुतो वयम् एतादृशं कृतवन्तः? दासत्वात् मुक्तं इस्रायेल्-
६ वंशं कुतस्त्यक्तवन्तः? तदानीं राजा निजरथं सज्जयामास, निजलोकान्
७ सङ्गिनः कृतवान्। अपरं मनोनीताः षट्शतानि रथा मिस्रीयाणां
८ सर्व्वे रथाः प्रतिरथं योद्धून् जग्राह। तदा परमेश्वरेण मिस्रीयराजस्य फिरौणो हृदये कठिने कृते स इस्रायेल्वंशस्य पश्चाद् अधावत्,
९ अपरम् इस्रायेलः सन्ताना महाबलेन गतवन्तः। किन्तु मिस्रीया अर्थात् फिरौणः सर्व्वहया रथा अश्वारूढाः सैन्यानि च तेषां पश्चाद् जग्मुः, तदा ते सागरस्य तीरे बाल्सिफोनः सम्मुखे पीहहीरोतः समीपे शिविरं स्थापयन्ति, तदानीं ते तेषां समीप उपतस्थुः।
१० तत इस्रायेलो वंशाश्चक्षुरुन्मील्य फिरौन् निकटमेति मिस्रीयाः

लोकाश्च पश्चाद् आगच्छन्तीति विलोक्यातीव बिभ्युः, इस्रायेलो वंशैः परमेश्वरम् प्रति प्रार्थितं। अपरं ते मूससं भाषितवन्तश्च मिसरि किं ११ श्मशानाभावस्तत्कारणात् किमस्मान् प्रान्तरे मारयितुम् आनीतवान्? अस्माभिः सार्द्धम् ईदृग् व्यवहृत्य अस्मान् मिसरः कुतो वहिः कृतवान्? अस्मान् स्थातुम् आदिश, वयं मिस्रीयान् सेवामहे, यतः प्रान्तरे १२ मरणात् मिस्रीयाणां सेवनम् अस्माकं मङ्गलम्, एतां कथां वयं किं मिसरि तुभ्यं न कथितवन्तः?

अनन्तरं मूसा लोकान् अवादीत्, यूयं मा बिभीत, स्थिरीभवत, १३ परमेश्वरो युष्मान् अद्य कथम् उद्धारयति, तत् पश्यत। यूयमद्य एतान् यान् मिस्रीयान् पश्यथ, तान् पुनः कदापि न द्रक्ष्यथ। परमेश्वरो १४ युष्मत्कृते योत्स्यति, यूयं स्थिरास्तिष्ठत।

अनन्तरं परमेश्वरो मूससं जगाद, त्वं मां कुत आक्रयसि? इस्रायेलो १५ वंशम् अग्रं गन्तुं वद। अपरं त्वं निजयष्टिं गृहीत्वा निजकरं सागरो- १६ परि प्रसार्य्य तं द्विभागं कुरु, तत इस्रायेलो वंशाः शुष्कमार्गेण सागर-मध्यं प्रवेक्ष्यन्ति। अपरं पश्याहं मिस्रीयाणाम् अन्तःकरणानि कठि- १७ नानि करिष्यामि, ते च तेषां पश्चात् प्रवेक्ष्यन्ति, ततोऽहं फिरौणस्तस्य सर्व्वसैन्यानां रथानां हयारूढानां समक्षं सम्मानं प्राप्स्यामि। फिरौणस्तस्य रथानां हयारूढानाञ्च समक्षं मया सम्माने प्राप्ते परमे- १८ श्वरोऽहमेवेति मिस्रीयाः सर्व्वे लोका ज्ञास्यन्ति।

तदानीम् इस्रायेलीयसैन्याग्रगामी य ईश्वरस्य दूतः स तेषां पश्चात् १९ जगाम, मेघस्तम्भस्तेषां सम्मुखात् गत्वा तेषां पश्चात् स्थितवान्। स २० मेघस्तम्भो मिस्रीयलोकानाम् इस्रायेलो वंशस्य चोभयशिविरमध्ये तस्थौ, तेन स एकस्मिन् पार्श्वे मेघोऽन्धकारस्वरूपो बभूव; किन्त्वन्यस्मिन् पार्श्वे रजन्यां दीप्तिं दत्तवान्, इति कारणात् कृत्स्नायां रजन्यां एको निवहोऽन्यनिवहस्य समीपं गन्तुं न शशाक।

अनन्तरं मूसाः सागरोपरि स्वकरं प्रसारयामास, ततः परमेश्वरः २१ तस्यां कृत्स्नायां यामिन्यां प्रबलेन पूर्व्वीयवायुना सागरतोयानि चालयामास, तेन सागरः शुष्कीभूय तोयानि द्विभागी बभूवुः। तत इस्रायेलो २२ वंशाः शुष्केण पथा सागरमध्यं प्रविष्टाः, अपरं तेषां दक्षिणे वामे च तोयं प्राचीररूपं बभूव।

अनन्तरं मिस्रीया अर्थात् फिरौणः सर्व्वे हया रथा हयारोहाश्च २३

२४ धावन्तस्तेषां पश्चात् सागरस्य मध्यं प्रविविशुः। अपरं रजन्याः शेष-प्रहरे परमेश्वरो वह्निमेघयोस्तम्भाभ्याम् मिस्रीयसैन्यम् अवलोक्य मिस्री-
२५ यान् व्याकुलान् चकार। तेषां रथचक्रेषु मोचितेषु तेऽतिकष्टेन रथान् चालयामासुः; ततो मिस्रीयलोका उक्तवन्तो वयम् इस्रायेलो वंशात् पलायामहे, यतः परमेश्वरो मिस्रीयाणां प्रतिकूलं तेषां पक्षे युध्यति।

२६ अनन्तरं परमेश्वरो मूससं जगाद, त्वं सागरोपरि निजकरं प्रसा-रय, तेनाहं मिस्रीयाणां तेषां हयानां हयारोहाणाञ्चोपरि पुनरपि
२७ तोयम् आगमिष्यति। तदा मूसाः सागरोपरि स्वकरं प्रसारितवान्; ततः प्रातःकाले जाते सागरः समानो भवितुम् आरभत, तेन मिस्री-यास्तस्य सम्मुखाद् अपलायन्त; तथापि परमेश्वरः सागरस्य मध्ये
२८ तान् निरक्षिपत्। फलत आपः परावृत्य तेषां रथान् हयारोहांश्च छादयामास, तेन फिरौणो यानि सैन्यानि तेषां पश्चात् सागरं
२९ प्रविष्टानि, तेषाम् एकोपि नावशिष्टः। किन्त्विस्रायेलो वंशः शुष्कपथेन सागरस्य मध्येन गतवान्, जलन्तु तेषां वामे दक्षिणे च प्राचीर-
३० रूपं बभूव। इत्थं तद्दिने परमेश्वरो मिस्रीयाणां करेभ्य इस्रायेलो वंशं रक्षितवान्, इस्रायेलो वंशो मिस्रीयान् सागरस्य तटे मृतान्
३१ ददृशुः। परमेश्वरो मिस्रीयाणां मध्ये यदाश्चर्यपराक्रमं प्रकाशयामास, तद् इस्रायेलो वंशो ददर्श, तेन लोकाः परमेश्वरात् परिभीय परमेश्वरे तस्य दासे मूससि च व्यश्वसन्।

---

## १५ पञ्चदशोऽध्यायः।

१ मूससो गीतं २० तस्य गानं २२ तोयाभावः २३ माराख्याने तिक्ततोयप्राप्तिः काष्ठेन तस्य मिष्टत्वं २७ एलीमस्थाने शिविरस्थापनञ्च।

१ अनन्तरं मूसा इस्रायेलो वंशाश्च परमेश्वरमुद्दिश्य गीतमिदं गीत्वा जगदुः।

अहं गीतं प्रगायामि समुद्दिश्य परेश्वरं।
स्वकीयो महिमा तेन स्वयमेव प्रकाशितः।
हयारोहा हयाश्चैव निक्षिप्ताः सागराम्भसि।
२ परेशो मे बलं गीतं परित्राता च मेऽभवत्।
मदीश्वरः स तस्मात्तं प्रशंसिष्याम्यहं ध्रुवम्।
स ईशो मम तातस्य तद् वदिष्यामि तद्गुणान्।

यिहोवाः परमेशो यः सएव कुरुते रणम्। ३
फिरौणो रथसैन्यानि सागरे क्षिप्तवान् स हि। ४
तन्मनोनीतसेनान्यो निमग्नाः सूफि सागरे।
आच्छादितेषु लोकेषु गम्भीरतोयराशिना। ५
पाषाणाइव ते सर्व्वे तोयानामगमन् तलम्।
बलात्ते दक्षिणो हस्तः परेश गौरवं गतः। ६
परेश दक्षिणो हस्तोऽचूर्णयत्ते रिपून् भृशं।
त्वद्विरुद्धगतान् लोकान् सुमहिम्ना व्यनाशयः। ७
त्वत्सम्प्रेषितकोपाग्नै र्नालवत् भक्षिताश्च ते।
त्वन्नासारन्ध्रवातेन तोयं गाढ़मजायत। ८
अतिष्ठत् सेतुवत् स्रोतो घनीभूतमधोऽम्बु च।
तैरुक्तं रिपुभि र्वेगात् धरिष्यामो हि तान् वयं। ९
कामान्नः पूरयिष्यामो विभज्यादाय लोठितम्।
खड्गान् निष्कोष्य नो हस्ता नाशयिष्यन्ति तान् जनान्।
सिन्ध्वम्बुच्छादितास्तेतु त्वया निश्वासफूंकृते। १०
सीसकानीव ते सर्व्वे गम्भीराम्बुतलं गताः।
मध्ये देवगणं कोऽस्ति त्वत्समः परमेश्वर। ११
आदर्त्तव्यः पवित्रत्वात् स्तव्यश्च भीतिदानतः।
आश्चर्य्यकर्म्मकारी च त्वत्समः कोत्र विद्यते।
स्वकीयदक्षिणे हस्ते त्वया शीघ्रं प्रसारिते। १२
सर्व्वं रिपुगणं तूर्णं जग्रास मेदिनी स्वयम्।
त्वं लोकान् परिमोच्य स्वान् कृपया गमयस्यपि। १३
त्वत्पवित्रनिवासाय स्वबलात् तान् नयस्यपि।
इति श्रुत्वेतरे लोकाः परियास्यन्ति साध्वसं। १४
उद्विग्नत्वे पिलेष्टीया जना मंक्ष्यन्ति निश्चितं।
चमत्कृता भविष्यन्ति नृपाः सर्व्वे इदोमियाः। १५
कम्पग्रस्ता भविष्यन्ति मोयावो बलवन्नराः।
द्रवत्वं परियास्यन्ति किनान्देशनिवासिनः।
त्रासकम्पौ ततस्तेषु सर्व्वेषु निपतिष्यतः। १६
तव दोर्बलतस्ते हि स्थास्यन्ति ग्राववत् स्थिराः।
तान् विहाय प्रयास्यन्ति परमेश्वर ते जनाः।

तान् सन्त्यज्य गमिष्यन्ति त्वत्क्रीतसर्व्वमानुषाः।
१७ परेश ते स्वयं वस्तुं यत् स्थानं निर्म्मितं पुरा।
यच्च स्थानं पवित्रं ते कराभ्यां स्थापितं भुवि।
तत्राधिकृतशैले त्वं तान् जनान् वासयिष्यसि।
१८ सर्व्वकाले परेशेन राजत्वं प्रकरिष्यते।
१९ फिरौणोऽश्वा रथाः सिन्धुं प्राविशन् सादिनस्तथा।
तेषामुपरि सामुद्रं परेशस्तोयमानयत्।
इस्रायेलीयसन्ताना ये ते शुष्केण वर्त्मना।
पारावारस्य मध्येन गमनं चक्रिरे पदैः।

२० अनन्तरं हारोणस्य भगिनी मरियम्भविष्यद्वक्त्री कराभ्यां मृदङ्गं गृहीतवती, ततोन्या योषितश्च सर्व्वा मृदङ्गान् गृहीत्वा नृत्यं कुर्व्व-
२१ त्यस्तस्याः पश्चाद् वहि र्बभूवुः। तदानीं मरियम् ताभ्य इदं गीतं गातुं कथयामास,

परेश्वरं समुद्दिश्य यूयं गीतं प्रगायत।
स्वकीयो महिमा तेन स्वयमेव प्रकाशितः।
हयारोहा हयाश्चैव निक्षिप्ताः सागराम्भसि।

२२ अनन्तरं मूसा इस्रायेलो वंशान् सूफसागराद् आनीतवान्, ततस्ते शूर्‌प्रान्तरस्य दिशं गतवन्तः; प्रायेण दिनत्रयं प्रान्तरं गत्वा पानीयं न प्रापुः।

२३ पश्चात् तेषु माराम् उपस्थितेषु तिक्तताकारणात् मारायाः पानीयं
२४ पातुं न शेकुः, तत्कारणात् तस्य नाम मारा (तिक्तेति) चक्रुः। अतो
२५ लोकै र्मूससो विरुद्धं वाग्युद्धं कृत्वा कथितं, वयं किं पास्यामः? तेन स परमेश्वरम् उद्दिश्य प्रार्थितवान्, तदा परमेश्वर एकजातीयं काष्ठं तं दर्शयामास, तदादाय मूसा जले निक्षिप्तवान्, ततस्तोयं मधुरं बभूव। तत्र स्थाने परमेश्वरस्तेषां कृते विधिं व्यवस्थाञ्च निरूपयामास,
२६ पुनस्तान् परीक्ष्य गदितवान्, यदि यूयं निजप्रभोः परमेश्वरस्य कथायां मनांसि निधद्धे, तस्य दृष्टौ यदुचितं तदेव कुरुथ, तस्याज्ञायां मनांसि निधद्धे, तदीयां सकलव्यवस्थाञ्च पालयथ, तर्हि मिस्रीयलोकान् अहं यान् यान् रोगान् भोजितवान्, तान् युष्मान् न भोजयिष्यामि, परमेश्वरोहमेव युष्माकम् आरोग्यकारः।

२७ अनन्तरम् एलीमं तेषूपस्थितेषु तत्र द्वादश प्रस्रवणानि सप्ततिः

खर्ज्जूरपादपास्तासन्, तस्मात् ते तोयप्रस्रवणसमीपे शिविराणि स्थापयामासुः।

---

## १६ षोडशोध्यायः।

१ खाद्याभावाद् इस्रायेलो वंशस्य कलहः ४ खाद्यं वर्ष्टुम् ईश्वरस्य प्रतिज्ञानं ६ लोकान् प्रति मूसस आज्ञापनम् ईश्वरस्य तेजःप्रकाशनं ११ वर्त्तकपक्षिणां प्रेषणं मान्नावर्षणं १६ खाद्यस्य परिमाणनिरूपणं २२ षष्ठदिनाय विशेष निरूपणं २७ सप्तमदिने खाद्यवर्षणाभावः ३२ पात्रेषु मान्नारक्षणञ्च।

१ अपरं मिसर्देशत्यागानन्तरं द्वितीयमासस्य पञ्चदशदिने इस्रायेल् वंशीयसमाजस्य सर्व्वलोका एलीमो यात्रां विधाय एलीम्सीनयोरुभयो र्मध्यवर्त्तिनं सीनप्रान्तरम् उपस्थितवन्तः। २ तदानीम् इस्रायेल् वंशीयसमाजस्य सर्व्वे लोका मूसोहारोणयोः प्रतिकूलं प्रान्तरे व्यवदन्त। ३ अपरम् इस्रायेलो वंशास्ताभ्यां कथयामासुः, वयं यदा मांसानां पाकपात्रनिकटे समुपविशन्तस्तृप्तिं यावत् अन्नम अभुज्महि, हाहा तदा यदि वयं मिसर्देशे परमेश्वरस्य हस्तेन अम्रियामहि; युवाम् एतत्समाजस्य सर्व्वलोकान् अस्मान् क्षुधया मारयितुम् वहिः प्रान्तरम् आनयतम्।

४ तदा परमेश्वरो मूससमवदत्, पश्याहं युष्मत्कृते आकाशाद् भक्ष्यद्रव्याणि वर्क्ष्यामि, ततो लोका वहिर्गत्य दैवसिकनिरूपितपरिमाणानुसारेण भक्ष्याणि संग्रहीष्यन्ति, तेन ते मम व्यवस्थयाचरिष्यन्ति न वेति तान् परीक्षिष्ये। ५ षष्ठदिने ते यद् आनेष्यन्ति, तस्मिन् पक्के दिनं दिनं यत् संग्रहीष्यन्ति, तस्य द्विगुणं भविष्यति। ६ ततो मूसोहारोणौ इस्रायेलः सर्व्ववंशं जगदतुः, परमेश्वरो यत् युष्मान् मिसरो वहिरानयत्, तत् युष्माभिः सायंकाले ज्ञायिष्यते। ७ अपरं प्रातःकाले यूयं परमेश्वरस्य महिमानं द्रक्ष्यथ, परमेश्वरं प्रति युष्माकं यद् वाग्युद्धं स तदश्रौषीत्, आवां कौ यत् यूयम् आवयोर्विरुद्धं वाग्युद्धं कुरुथ? ८ पश्चात् मूसाः कथितवान् परमेश्वरः सायंकाले भोजनार्थं युष्मभ्यं मांसानि दास्यति, प्रातःकाले तृप्तिपर्य्यन्तं भक्ष्याणि च दास्यति, परमेश्वरं प्रति युष्माकं यो वाक्कलहः स तं श्रुतवान्, आवां कौ? आवयो र्विपरीतं नहि, किन्तु परमेश्वरस्य विपरीतं युष्माकं वाक्कलहो भवति।

९ अपरं मूसा हारोणं बभाषे, त्वम् इस्रायेल्वंशीयसमाजस्य निखिल-

लोकान् वद, यूयं परमेश्वरस्य सम्मुखम् आगच्छत, स युष्माकं वाक्कलहं
१० श्रुतवान्। इस्रायेल्वंशस्य समाजम् हारोणो यदा तद्वाक्यं वदति,
तदा तैः प्रान्तरं प्रति दृष्टिरकारि, मेघस्तम्भस्य मध्ये परमेश्वरस्य
तेजोऽदर्शि च।

११ परमेश्वरो मूससं गदितवान्, अहम् इस्रायेलो वंशानां वाक्कलहम्
१२ अश्रौषम्। त्वं तेभ्यः कथय, यूयं सायंकाले मांसानि भक्षिष्यथ, प्रातः-
काले भक्ष्यद्रव्यैस्तृप्तिं यास्यथ. तेनाहं युष्माकं प्रभुः परमेश्वर इति
१३ ज्ञास्यथ। अनन्तरं सन्ध्यायां वर्त्तकपक्षिण उपस्थाय शिविरस्थानं
१४ व्याप्तवन्तः, प्रातःकाले च सैन्यस्थानस्य चतुर्दिक्षु तुषाराः पेतुः। अन-
न्तरं पतिततुषारेषूर्द्ध्वं गतेषु प्रान्तरभूमौ क्षुद्रा वर्त्तुला नीहाराइव
१५ क्षुद्रद्रव्याणि पतितान्यतिष्ठन्। ततः परम् इस्रायेलः सन्तानास्तानि
विलोक्य परस्परं जगदुः, मान् हू? (किमेतत्?) यतः किं तदिति ते न
विविदुः। ततो मूसाः कथितवान् परमेश्वरो युष्मभ्यं द्रव्यमेतत् भोक्तुं
दत्तवान्।

१६ अत्र परमेश्वरस्येयमाज्ञा, युष्माकम् एकैको जनो निजभोजन-
शक्तिं विज्ञाय तत् संगृह्णातु, अर्थत एकजनकृते एकम् ओमरं
युष्माकं प्राणिनां संख्यानुसारेण निजनिजतम्बे स्थितानां लोकानां कृते
१७ तत् संगृह्णीत। तत इस्रायेलो वंशास्तथैव कृतवन्तः, कश्चिद् अधिकं,
१८ कश्चिद् अल्पं समचिनोत्। पश्चात् तै जनैरोमरेण तस्मिन् परिमिते,
येनाधिकं संगृहीतं तस्याधिकं नाभवत्, येन चाल्पं संगृहीतं तस्याल्पं
१९ नाभवत्, इत्थं ते स्वस्वभोजनशक्त्यनुसारेण संजगृहुः। अनन्तरं मूसाः
कथितवान्, युष्माकं कोपि प्रातःकालं यावत् तस्य किञ्चिदपि न स्थापयतु।
२० किन्तु मूससोवाक्यं न गृहीत्वा केचित् प्रातःकालं यावत् किञ्चित् किञ्चित्
स्थापयामासुः; तदा तत्र कीटा जज्ञिरे, दुर्गन्धश्च बभूव; ततो मूसा-
२१ स्तेभ्यः क्रुद्धवान्। इत्थं प्रत्यहं प्रातःकाले ते स्वस्वभोजनशक्त्यनुसारेण
तत् संगृहीतवन्तः, किन्तु प्रखरे रौद्रे सति तद् द्रवीबभूव।

२२ अनन्तरं षष्ठदिने ते द्विगुणम् अर्थत एकैकजनकृते ओमरद्वय-
परिमितानि द्रव्याणि संगृहीतानि; तदा समाजस्य अधिपतय आगत्य
२३ मूससं ज्ञापयामासुः। ततो मूसास्तेभ्यः कथितवान्, परमेश्वर इत्याज्ञाप-
यत्, श्वः परमेश्वरस्य पवित्रो विश्रामवारो भविष्यति, तस्मात् युष्माकं
यद् भर्ज्जनीयं तद् भर्ज्जत, यच्च पचनीयं तत् पचत, अवशिष्टद्रव्यञ्च

प्रातःकालार्थं स्थापयत। तेन ते मूससः आज्ञानुसारेण प्रातःकालपर्य्यन्तं २४
तत् स्थापयामासुः; किन्तु तत्र दुर्गन्धो न बभूव, कीटाश्च न जज्ञिरे।
पश्चात् मूसाः कथयामास, यूयमद्य तत् भुङ्ग्ध्वं, यतोद्य परमेश्वरस्य २५
विश्रामवारः, अद्य प्रान्तरे किञ्चित् न लप्स्यध्वे। यूयं षट् दिनानि तत् २६
संग्रहीष्यथ; किन्तु सप्तमे दिने, अर्थतो विश्रामवारे तन्न जनिष्यते।
तथापि कश्चित् कश्चित् सप्तमदिनेपि तत् संग्रहीतुं जगाम; किन्तु २७
किञ्चिदपि न प्राप्तवान्। ततः परमेश्वरो मूससं जगाद, यूयं मदीयाज्ञां २८
विधिञ्च पालयितुं कतिकालान् न मतिं करिष्यथ? पश्यत यः परमेश्वरो २९
युष्मभ्यं विश्रामदिनं दत्तवान्, स षष्ठदिने दिनद्वयोपयुक्तं खाद्यं ददाति;
तस्माद् यूयं स्वस्वस्थाने तिष्ठत, युष्माकं कोपि जनः सप्तमदिने स्वस्वस्था-
नात् न बहिर्भवतु। तदानीं लोकाः सप्तमदिने विश्रान्तवन्तः। अपरम् ३०
इस्रायेलः सन्तानास्तस्य भक्ष्यस्य नाम मान्नां कृतवन्तः, सा मान्ना धन्या- ३१
काकृतिः शुक्लवर्णा तस्या रसो मधुमिश्रितपिष्टकवत् आसीत्।

ततः परं मूसा गदितवान्, परमेश्वर एतद् आज्ञापितवान्, मिसरो ३२
युष्मदानयनकाले प्रान्तरस्य मध्ये यदन्नमहं युष्मान् भोजितवान्, तद्
यथा युष्माकं पुरुषपरम्परया दर्शिष्यते, तदर्थं त्वं तेषां कृते ओमरैक-
परिमाणां मान्नां स्थापय। तदानीं मूसा हारोणम् अवादीत्, त्वम् ३३
पात्रमेकं गृहीत्वा एकोमरपरिमाणां मान्नां पूरयित्वा परमेश्वरस्य
सम्मुखे निधेहि, सा युष्माकं भाविपुरुषाणां निमित्तं स्थापयिष्यते।
तदानीं हारोणो मूससं प्रति कथितायाः परमेश्वरस्याज्ञाया अनुसारेण ३४
साक्षिपेटकस्य समीपे स्थातुं तां स्थापितवान्। इस्रायेलो वंशा निवास- ३५
देशोपस्थितिं यावत् चत्वारिंशत् वत्सरान् तां मान्नां भुक्तवन्तः,
किनान्देशस्य सीमोपस्थितिं यावत् तां खादितवन्तः। एक ओमर ३६
एफादशमांशः।

---

## १७ सप्तदशोध्यायः।

१ रिफीदीमि तोयाभावात् लोकानां कलहः ८ अमालेक् लोकानां पराजयः १४ परमेश्वरमुद्दिश्य मूसावेदिनिर्म्माणं।

अनन्तरम् इस्रायेल्वंशीयसमाजस्य सर्व्वे लोका परमेश्वरस्याज्ञानु- १
सारेण निरूपितपथेन सीन्प्रान्तरात् यात्रां कृत्वा रिफीदीमं गत्वा
शिविरं स्थापयामासुः; किन्तु तत्र स्थाने लोकानां पानार्थं तोयाभाव

२ आसीत्। अतो लोका मूससा सार्द्धं वाक्कलहं कृत्वा कथयामासुः, अस्मभ्यं पानीयं देहि तद् वयं पास्यामः; ततो मूसाः कथितवान् यूयं
२ कुतो मया सार्द्धं वाग्मि युध्यथ? कुतः परमेश्वरं परीक्षध्वे? तदानीं लोकास्तत्र स्थाने पानीयाभावात् तृषार्त्ताः सन्तो वाग्युद्धं कृत्वा मूससे कथितवन्तः, त्वम् अस्मान् अस्माकं सन्तानान् पशूंश्च पिपासया मार-
४ यितुं मिसर्देशात् कुत आनीतवान्? ततो मूसाः परमेश्वरं प्रार्थयमानः कथितवान्, एतेषां लोकानां कृते किमहं करिष्यामि? ते मां प्रायेण
५ पाषाणै र्मारयितुम् उद्यताः। तदानीं परमेश्वरो मूससं बभाषे, त्वं यया यष्ट्या तटिनीम् आहनः, तां करेण गृहीत्वा इस्रायेल्वंशानां
६ प्राचीनान् सङ्गिनः कुर्व्वन् लोकानाम् अग्रे याहि। पश्चाहं होरेब्-पर्व्वतस्योपरि तव सम्मुखे स्थास्यामि, त्वं तं शैलम् आहनिष्यसि, तेन तस्मात् तोयं निर्गते लोकास्तत् पास्यन्ति। तदानीं मूसा इस्रायेलो
७ वंशस्य प्राचीनानां दृष्टौ तथैव कृतवान्। अपरं परमेश्वरोऽस्माकं मध्ये विद्यते नवेति कथनेन इस्रायेलो वंशानां विवादकारणात् परमेश्वरपरीक्षणकारणाच्च तस्य स्थानस्य नाम मसामिरीबे (परीक्षणविवादाविति) कृतवान्।

८ तदानीम् अमालेक्लोका आगत्य रिफीदीम्स्थान इस्रायेलो वंशै
९ सार्द्धम् अयुध्यन्, तदा मूसा यिहोशूयं गदितवान्, त्वम् अस्माकं मध्यात् मनोनीतान् मानुषान् गृहीत्वा अमालेको लोकैः सार्द्धं योद्धुं याहि; अहम् ईश्वरीयां यष्टिं करेण गृहीत्वा पर्व्वतस्य शिखरे
१० स्थास्यामि। तदा यिहोशूयो मूसस आज्ञानुसारात् अमालेको लोकैः सार्द्धम् अयुध्यत्, मूसा हारोणो हूरश्च पर्व्वतस्य शृङ्गोपरि समारुहन्।
११ किन्तु यदा यदा मूसा निजकरौ ऊर्द्धीकरोति, तदा तदेस्रायेलो वंशो जयति, किन्तु निजकरयोरवरोहितयोरमालेको लोका जयन्ति।
१२ अपरं मूससः करयो र्गुर्व्वी भूतयोः, तैरेकं पाषाणम् आनीय तस्याधःस्थापितः; तदा मूसास्तस्योपरि समुपविष्टवान्, ततो हारोणहूरयोरेको जन एकदिशि तदन्यजनोऽन्यदिशि तस्य करावुत्थाप्य धृतवन्तौ
१३ तेन रवेरस्तगतिपर्य्यन्तं तस्य करौ स्थिरीभूय स्थितवन्तौ। अतएव यिहोशूयोऽमालेकं तस्य लोकांश्च खड्गेन पराजितवान्।
१४ अनन्तरं परमेश्वरो मूससं गदितवान्, एतां कथां स्मरणार्थं पुस्तके लिख, यिहोशूयस्य कर्णगोचरे तत् पठ च; अहम् आकाशस्याधो-

भागात् अमालेकः स्मरणं लोप्स्यामि। अनन्तरं मूसा एकां वेदिं १५ निर्म्माय तस्या नाम यिहोवा-निषि (परमेश्वरो मम ध्वजस्वरूपः) इति कृतवान्। अपरं पुरुषपरम्परां यावत् अमालेका सार्द्धं परमेश्वरस्य १६ संग्रामो भविष्यतीमां कथां ध्वजे लेखितुं आज्ञापयामास।

---

## १८ अष्टादशोऽध्यायः।

१ मूसःसमीपं तस्य भार्य्यापुत्त्रश्वशुराणामागमनं ७ तेषां साक्षात्कारः तेषां ग्रहणञ्च १३ मूससं प्रति यिथ्रस्य सुमन्त्रणा तस्य स्वदेशगमनञ्च।

ईश्वरो मूससं प्रति निजलोकम् इस्रायेलो वंशं प्रति च कर्म्माण्येतानि १ कृतवान्, अपरं मिसरो देशाच्च इस्रायेलो वंशं वहिः कुर्व्वन् आनीत-वान्, एताः सकलाः कथाः श्रुत्वा मूससः श्वशुरो मिदीयनो याजको २ यिथ्रो निजगेहं प्रहितां मूससो जायां सिप्पोरां तस्या द्वौ पुत्त्रौ च सङ्गे गृहीतवान्। एतयो द्वयोः पुत्त्रयोरेकस्य नाम गेर्शोम् (अत्रस्थाने विदेशी) ३ यतः स कथितवान्, अहमितरस्मिन् देशे विदेशी भूतवान्। अन्यस्य ४ नामधेयम् इलीयेषर् (ईश्वरो ममोपकर्त्ता) यतः स कथितवान्, मम पितुरीश्वरो ममोपकर्त्ता भवन् फिरौणः खड्गात् माम् उद्धृतवान्। पश्चात् मूससः श्वशुरो यिथ्रो मूससः सुतौ तौ द्वौ जायाञ्च सङ्गे गृह्णन् ५ प्रान्तरे यस्मिन् स्थाने मूसाः शिविरं स्थापितवान्, तत्र स्थाने ऽर्थात् ईश्वरस्य पर्व्वते तस्य समीपम् आजगाम। अपरञ्च मूससे कथितवान्, ६ अहं तव श्वशुरो यिथ्रस्तव जाया च तया सार्द्धं तव द्वौ सुतौ च तव समीपम् आगतवन्तः।

तदानीं मूसा निजश्वशुरं साक्षात् कर्त्तुं वहि र्गत्वा तं प्रणम्य चुचुम्बे; ७ ततः परस्परं मङ्गलं पृष्ट्वा ते दूष्यं प्रविविशुः। अनन्तरं परमेश्वर ८ इस्रायेलो वंशकारणात् फिरौणं प्रति मिस्रीयान् प्रति च किं किं कृत-वान्, वर्त्मनि तान् प्रति कीदृक् परिश्रमोऽभूत्, परमेश्वरश्च केन प्रकारेण तान् उद्धृतवान्, एताः सकलाः कथा मूसा निजश्वशुरं ज्ञापयामास। तत्र परमेश्वरो मिस्रीयाणां करेभ्य इस्रायेलो वंशम् ९ उद्धृत्य तेषां मङ्गलं कृतवान्, एतेषां कृते यिथ्रो ऽतीवाह्लादितो बभूव। अपरं स कथितवान् यः परमेश्वरो मिस्रीयाणां फिरौणश्च करेभ्यो युष्मान् १० उद्धृतवान् स धन्यः। मिस्रीयाणां करेभ्यः स्वकीयलोकानाम् उद्धारयिता परमेश्वरः सर्व्वदेवताभ्यो महान् इत्यहम् इदानीं ज्ञातवान्; यतस्ते ११

यस्मिन् अभिमानं कृतवन्तस्तस्मिन् स तेषाम् उपरि जयी बभूव।
१२ अनन्तरं मूससः श्वशुरो यिथ्र ईश्वरम् उद्दिश्य होमं नैवेद्यञ्च कृतवान्; अपरं हारोण इस्रायेलो वंशस्य प्राचीनलोकाश्च आगत्य ईश्वरस्य सम्मुखे मूससः श्वशुरेण सार्द्धं भोजनं चक्रुः।
१३ परेऽहनि मूसा लोकानां विचारं कर्त्तुम् उपविवेश, तदा लोकाः
१४ प्रातःकालम् आरभ्य सन्ध्यां यावत् तस्य सम्मुखे स्थितवन्तः। ततो मूससः श्वशुरो लोकान् प्रति तस्य सर्व्वं व्यवहारं विलोक्य कथयामास, त्वं लोकैः सार्द्धं कीदृक् व्यवहरसि? त्वं कुत एकाकी उपविशसि? सर्व्वे
१५ लोका आ प्रातःकालात् सन्ध्यां यावत् तव समीपे कुतस्तिष्ठन्ति? ततो मूसा निजं श्वशुरं कथितवान्, लोका ईश्वरस्य विचारं प्रष्टुं मम
१६ सन्निधिम् आगच्छन्ति, तेषां कस्मिंश्चित् विवाद जाते मम समीपम् आगच्छन्ति; ततो वादिप्रतिवादिनो विचारयाम्यहम्, अपरम् ईश्व-
१७ रस्य सर्व्वा विधिव्यवस्थास्तानहं ज्ञापयामि। अनन्तरं मूससः श्वशुरः
१८ कथयामास, त्वं यत् करोषि, तद् भद्रं नहि। त्वं तव सङ्गिनो लोका-श्चोभये क्षीणा भविष्यथ, यत इदं कार्य्यं त्वदीयशक्तितो गुरुतरं;
१९ एतत् त्वम् एकाकी कर्त्तुम् अशक्तोसि। अतएव मम कथायां मनो निधेहि, त्वामहं बुद्धिं दर्शयामि, तत ईश्वरस्तव सहायो भविष्यति, अपरम् ईश्वरस्य सम्मुखे त्वं लोकानां प्रतिनिधिः सन् तेषां कथा ईश्वरं
२० ज्ञापय। त्वन्तु तान् विधिं व्यवस्थाञ्च समुपदिश, तेषां गन्तव्यमार्गं
२१ कर्त्तव्यं कर्म्म च तान् दर्शय। अपरं त्वं सर्व्वेषां मध्यात् कर्म्मकुशलमान-वान् अर्थात् ईश्वराद् भीरून् सत्यवादिनो लोभत्यागिनो लोकान् मनोनीतान् कृत्वा तेषामुपरि सहस्रपतीन् शतपतीन् पञ्चाशत्पतीन्
२२ दशपतीन् कुर्व्वन् नियोजय। अपरं ते सर्व्वदा लोकान् विचारयिष्यन्ति; किन्तु कस्मिंश्चित् महाविचार उपस्थिते तं तव समीपम् आनेष्यन्ति, क्षुद्रान् सर्व्वविचारान् ते करिष्यन्ति, तेन ते त्वया सह भारं वक्ष्यन्ति,
२३ तेन तव कर्म्म लघु भविष्यति। यदि त्वम् ईदृशं करोषि, ईश्वरश्च तादृशं कर्त्तुं त्वामादिशति, तर्हि त्वं सोढुं शक्ष्यसि; अपरम् एते सर्व्वे
२४ मानुषाश्च क्षेमेण निजस्थानं गमिष्यन्ति। ततो मूसाः श्वशुरस्य वचने
२५ मनो निधाय तस्य वाक्यानुसारेण कर्म्म कृतवान्। ततः परं मूसाः सर्व्वेभ्य इस्रायेलो वंशेभ्यः कर्म्मकुशलान् मानवान् मनोनीतान् कृत्वा मनुजानां मध्ये मुख्यान् अर्थतः सहस्रपतीन् शतपतीन् पञ्चाशत्-

पतीन् दशपतीन् कृत्वा नियोजयामास। तेन ते सर्व्वदा लोकानां २६ विचारान् कुर्व्वन्ति; दुर्ब्बोध्यविचारान् मूससः समीपम् आनयन्ति; किन्तु स्वयं क्षुद्रक्षुद्रकथानां विचारान् कुर्व्वन्ति। अनन्तरं मूससा २७ निजश्वशुरे विसृष्टे स निजस्थानं प्रति प्रतस्थे।

---

## १९ ऊनविंशोऽध्यायः।

१ मनुजेषु सीनयपर्व्वतम् उपगतेषु तान् प्रतीश्वरस्य संवादः ७ जनानां कृते मूसस ईश्वरं प्रति उत्तरं १० मानुषान् पवित्रान् कर्त्तुं पर्व्वतं न स्पृष्टुञ्च आज्ञापनं १४ मानवानां समक्षं पर्व्वतोपरीश्वरागमनञ्च।

मिसरो देशाद् प्रस्थानकरणात् परं तृतीयस्य मासस्य प्रथम- १ दिने इस्रायेलो वंशाः सीनयप्रान्तरम् उपस्थितवन्तः। ते रिफीदीमो २ यात्रां कृत्वा सीनयप्रान्तरम् प्राप्य तत्र प्रान्तरे शिविरं स्थापयामासुः; इस्रायेलो वंशास्तस्य पर्व्वतस्य सम्मुख एव शिविरं स्थापयामासुः। ततः परं मूससीश्वरस्य समीपम् आरूढे, परमेश्वरः पर्व्वतात् तमा- ३ हूय जगाद, त्वं याकूबः सन्तानान् इदं वाक्यं वद, इस्रायेलो वंशान् इति ज्ञापय। अहं मिस्रीयान् प्रति यत् यत् कृतवान्, यथा ४ चोत्क्रोशः पक्षी पक्षाभ्यां, तथा युष्मान् वहन् निजसमीपम् आनी- तवान् तद् यूयं दृष्टवन्तः। इदानीं यदि यूयं मम कथां शृणुथ, मम ५ नियमञ्च पालयथ, तदा सर्व्वस्यां पृथिव्यां मम सत्यामपि यूयं सर्व्वेभ्यो लोकेभ्यो मम विशेषाधिकृता भविष्यथ, मम निमित्तं याजकानाम् एको ६ राजवंशः पवित्रजातिश्च भविष्यथ, एताः सर्व्वाः कथा इस्रायेलो वंशाय त्वं कथय।

तदानीं मूसा आगत्य लोकानां प्राचीनान् आहूय परमेश्वराज्ञानुसा- ७ रेण ताः सर्व्वाः कथास्तेषां समक्षं प्रस्तुतवान्। ततः सर्व्वे लोका युगपद् ८ अङ्गीकृत्य कथयामासुः, परमेश्वरो यानि वाक्यानि कथितवान्, तानि वयम् आचरिष्यामः। मूसाः परमेश्वरस्य समीपे तेषां वचनानि निवे- ९ दयामास, तदा परमेश्वरो मूससे कथितवान्, अहं निविडपयोदेन तव समीपम् आगत्य त्वया सार्द्धं वाक्यं वदिष्यामि, ततो ते मानवास्त्वया सार्द्धं मम संलापस्य श्रोतारो भूत्वा सर्व्वदा त्वयि प्रत्येष्यन्ति; पश्चात् मूसा मानवानां वाक्यानि परमेश्वरं ज्ञापयाञ्चकार।

तदानीं परमेश्वरो मूससं व्याहृतवान्, त्वं मनुजानां समीपं गत्वाद्य १०

परदिनञ्च यावत् तान सर्व्वान् पवित्रीकुरु ते च वसनानि धौतानि
११ कृत्वा तृतीयदिननिमित्तं सर्व्वे सुसज्जा भवन्तु; यस्मात् तृतीये दिने
परमेश्वरः सकलमानवानां समक्षं सीनयधराधरस्योपरि समवरोच्यति।
१२ तस्मात् त्वं मानवानां चतुर्दिक्षु सीमानं निरूप्य वचनमिदं व्याहर, यूयं
धराधरम् आरोढुं तस्य सीमां स्प्रष्टुञ्च सावहिता भवत, यतो यः
१३ कश्चित् धराधरं स्प्रक्ष्यति सोऽवश्यं हतो भविष्यति। तस्मात् कोपि तं
करेण न स्पृशतु यदि स्पृशति तर्हि स पाषाणाघातेनावश्यं मरि-
ष्यति, यद्वा वाणेन विद्धो भविष्यति, पशु र्भवेत् मानुषो वा भवेत्, स
कदाचन न जीविष्यति; तूर्य्यां वादितायां ते धराधरस्य समीपम्
आगमिष्यन्ति।

१४ अनन्तरं मूसा धराधराद् अवरुह्य मानवानां समीपम् आगत्य तान्
१५ पवित्रीकृतवान्; ते च निजवसनानि धौतानि कृतवन्तः। पश्चात् स
मनुजान् व्याहृतवान् यूयं तृतीयदिनकृते सुसज्जा भवत, निजनिज-
१६ भार्य्यायाः समीपं मा व्रजत। ततः परं तृतीयदिनस्य प्रातःकाले जाते
तडित्वत्स्तनितं तडित् धराधरोपरि निविडजीमूता अतीवोच्चैःस्वरेण
तूरीनिर्घोषश्च भवितुम् आरेभिरे, तेन शिविरस्थिताः सर्व्वे मनुजा
१७ वेपमाना अभवन्। तदानीं मूसा ईश्वरं साक्षात् कारयितुं मानवान्
१८ शिविरात् वहिः कृतवान् ते च भूधरस्याधः स्थितवन्तः। तदा सीनय-
धराधरो धूममयो बभूव; यतः परमेश्वरस्तच्छिखरे वह्निनावरूढवान्;
अपरं चुल्लीधूमइव तस्मात् धूम उदगच्छत् तेन कृत्स्नो भूधरोऽतीव कम्पि-
१९ तुम् आरभत। पश्चात् क्रमात् तूरीनिर्घोषोऽतीव वृद्धिमेतुम् आरेभे;
तदानीं मूसया कथायां कथितायाम् ईश्वर आकाशवाचा तदुत्तरं व्याज-
२० हार। अनन्तरं परमेश्वरे सीनयधराधरम् अर्थतो भूधरस्य शिखरम्
अवरूढे, तत्र स्थाने स मूसम् आहूतवान्; ततो मूसा आरुरोह।
२१ तदानीं परमेश्वरो मूसं गदितवान्, मनुजानां बहवो यथा न विन-
श्यन्ति, एतदर्थं त्वम् अवरुह्य परमेश्वरदर्शनाय सीमानं लङ्घितुं तान्
२२ निवारय। ये याजकाः परमेश्वरसमक्षम् आगमिष्यन्ति, तेषाम्
उपरि यथा स नाक्रामति, तन्निमित्तं तेऽपि स्वान् पवित्रान् कुर्व्वन्तु।
२३ ततो मूसाः परमेश्वरं व्याजहार मानवाः सीनयधराधरम् आरोढुं
न शक्नुवन्ति; यतो भूधरस्य सीमां निरूपयत तां पवित्रां कुरुतेति
२४ त्वमस्मान् आज्ञापयः। तदा परमेश्वरस्तस्मै कथितवान्, याहि त्वमव-

रोह, पश्चात् त्वम् हारोणेन सार्द्धम् आरोह ; किन्तु याजकानां मनु-
जानाञ्चोपरि परमेश्वरो यथा नाक्रामति, तदर्थं ते तस्य समीपम् आगन्तुं
सीमानं नातिक्रामन्तु। तदा मूसा मानुषाणां समीपम् अवरुह्य तान् २५
तादृग् आज्ञापयामास।

---

## २० विंशोऽध्यायः।

१ दशानाम् आज्ञानां प्रथमो भागः १२ तासां द्वितीयो भागः १८ मानुषाणां भयं
तान् प्रति मूससः सान्त्वनावाक्यं २२ देवपूजानिषेधः २४ वेदिनिर्म्माणे विधिश्च।

अनन्तरम् ईश्वर एताः कथाः कथयामास, दास्यगेहाद् अर्थतो १
मिसर्देशाद् त्वदीयोद्धारयिताहमेव तव प्रभुः परमेश्वरः। २
मम साक्षात् तव काचिदन्या देवता न तिष्ठतु। निजार्थं काञ्चित् ३
तक्षितप्रतिमाम् अर्थात् उपरिस्थे स्वर्गे वा नीचस्थायां पृथिव्यां वा धरण्या ४
अधःस्थे तोये स्थितस्य कस्यचित् वस्तुनो मूर्त्तिं मा निर्म्माहि। ता न नम, ५
ता न सेवस्व, यतोहं तव प्रभुः परमेश्वरः स्वगौरवरक्षी, ये पितृलोका
माम् ऋतीयन्ते, तृतीयचतुर्थपुरुषान् यावत् तेषां सन्तानेभ्योऽधर्म्म-
फलदाता; किन्तु ये मयि प्रीयन्ते ममाज्ञाश्च पालयन्ति तेषां सहस्र- ६
पुरुषान् यावत् दयाकृदहं। त्वं निजप्रभोः परमेश्वरस्य नाम निर- ७
र्थकं मा गृहाण, यतो यः कश्चित् तस्य नाम निष्प्रयोजनं गृह्णाति,
परमेश्वरस्तं निरपराधीति न गणयति। विश्रामदिनं स्मरन् पवित्रीकुरु। ८
षड्दिनानि श्रमित्वा तव वाणिज्यादि सर्व्वं कर्म्म कुरु; किन्तु सप्तमदिनं ९
तव प्रभोः परमेश्वरस्य विश्रामदिनमेव, तस्मिन् त्वया वा तव पुत्त्रेण वा १०
तव दुहित्रा वा तव दासेन वा दास्या वा पशुना वा द्वारवर्त्तिना
विदेशिना केनापि किमपि कार्य्यं मा क्रियतां। यतः परमेश्वर आकाशं ११
पृथिवीं सागरं तन्मध्यस्थानि सकलवस्तूनि च षड्भि र्दिनै र्निर्म्माय
सप्तमे दिने विश्रान्तवान् एतत्कारणात् परमेश्वरो विश्रामदिनं वरं
दत्त्वा पवित्रीकृतवान्।

त्वं निजपितरं मातरञ्च सम्मन्यस्व, तेन तव प्रभुः परमेश्वरो यं देशं १२
तुभ्यं दास्यति, तस्मिन् देशे तव दीर्घकालम् आयु र्भविष्यति। नरहत्यां १३
मा कार्षीः। परदारान् मा गच्छ। चौर्य्यं मा कार्षीः। स्वस्य समीप- १४
वासिनो विरुद्धं मिथ्यासाक्ष्यं मा देहि। स्वस्य समीपवासिनो गेहे १५

१७ लोभं मा कार्षीः; स्वस्य समीपवासिनो जायायां वा दासे वा दास्यां वा गवि वा गर्द्दभे वा कस्मिंश्चित् वस्तुनि लोभं मा कार्षीः।

१८ तदानीं सर्व्वे मानवा जीमूतस्तनितं तडितं तूरीनिस्वनं धूमयुक्तं
१९ धराधरञ्च दृष्टवन्तः, दृष्ट्वा च पृथग् भूत्वा दूरे स्थितवन्तः; ततो मूससे कथितवन्तः, त्वम् अस्माभिः सार्द्धं कथां कथय, तां वयं श्रोष्यामः, किन्त्वीश्वरोऽस्माभिः सार्द्धं कथां न कथयतु, नो चेत् वयं मरिष्यामः।
२० ततो मूसा मानुषान् अवदत्, मा भैष्ट, युष्मान् परीक्षितुं, युष्माभि र्यत् पापं न क्रियते तदर्थं स्वीयं भयानकत्वं युष्माकं चक्षुर्गोचरीकर्त्तुञ्चेश्वरः
२१ स्वयमागतवान्। तदानीं लोका दूरे तिष्ठन्त आसन्, किन्तु यत्र स्थान ईश्वर आसीत्, तस्य घोरान्धकारस्य समीपं मूसा जगाम।

२२ अनन्तरं परमेश्वरो मूससं जगाद, त्वम् इस्रायेलो वंशान् वाचमिमां ब्रूहि, अहं गगणे तिष्ठन् युष्माभिः सार्द्धम् आलपम् इति यूयं स्वयं
२३ दृष्टवन्तः। अतो युष्माभि र्मत्समक्षं दुर्व्वर्णमूर्त्तयो मा क्रियन्तां, स्वाथ सुवर्णमूर्त्तयो वा मा क्रियन्तां।

२४ त्वं मदर्थं मृण्मयीम् एकां वेदिं निर्म्माहि तदुपरि हव्यस्य मङ्गलस्य च नैवेद्यं निधेहि मेषगवादीन् उत्सृज च। अहं यत्र यत्र स्थाने स्वनाम स्मारयिष्यामि तत्र तत्र स्थाने त्वत्समीपमागत्य त्वामाशिषं
२५ वदिष्यामि। अपरं यदि त्वं मन्निमित्तं पाषाणमयीं वेदिं निर्म्माया- स्तर्हि तक्षितपाषाणैस्तां मा निर्म्माहि यस्मात् तेष्वस्त्राघाते कृते वेदि-
२६ रपवित्रा भविष्यति। मम वेद्युपरि यत् तव नग्नत्वं न दृश्यते तदर्थं त्वया तदुपरि सोपानेन नारुह्यतां।

---

## २१ एकविंशोऽध्यायः।

१ दासानधि व्यवस्था ७ दासीरधि व्यवस्था १२ नरहत्याकथनं १६ नरचौर्य्यकथनं १७ पितृमातृशपनकथनं १८ आघातमधि व्यवस्था २० दण्डेन दासदास्योः प्रत्याघातस्य व्यवस्था २२ गर्भिणीं प्रत्याघातस्य व्यवस्था २६ दासदास्योः प्रति प्रहारस्य व्यवस्था २८ गोराघातस्य व्यवस्था ३३ खातमधि व्यवस्था ३५ गां प्रत्याघातस्य व्यवस्था च।

१ अपरं त्वं तान् एता व्यवस्था आदिश। केनचित् क्रीत इब्रीयदासः षट्
२ वत्सरान् यावत् सेवित्वा सप्तमवत्सरे विना मूल्यं मुक्तीभूय गन्तुं
३ प्राप्स्यति। यदि स एकाक्यागतोऽस्ति तर्ह्येकाकी गमिष्यति; यदि च व्यूढ़-
४ भार्य्य आगतोऽस्ति तर्हि तस्य जायापि तेन साकं बहिर्गमिष्यति। किन्तु

यदि स स्वप्रभुना विवाहितोऽस्ति तस्या जायायाः पुत्रकन्याश्च जाताः सन्ति, तर्हि तस्यां योषिति तस्या बालकेषु च तस्य प्रभोरधिकारो भविष्यति, दास एकाकी वहिर्गमिष्यति। यद्वा निजप्रभौ स्वजायायां बालकेषु ५ चाहमतीव प्रीये मुक्तीभूय न यास्यामि वाचमेतादृशीं स दासो यदि स्पष्टं वदेत्, तर्हि स प्रभुस्तं विचारयितुः समक्षं नयेत्, तत्र तस्मिन् द्वारस्य ६ पार्श्वस्थकाष्ठस्य वा समीपे स्थापिते तस्य प्रभुः सूचिद्वारा तस्य कर्णं छिद्रं करिष्यति ततः स तेन चिरकालं सेवितव्यः।

अपरञ्च यदि केनचित् दासी भवितुं निजकन्या विक्रीयेत तर्हि सा ७ दासाइव न विसर्ज्जनीया। तस्याः प्रभौ तां विवोढुं प्रतिज्ञातेऽपि तां ८ प्रति यदि स न सन्तुष्येत् तर्हि सा मुक्तीभवतु, तां प्रति प्रवञ्चनाकरणात् स अन्यजातिषु तद्विक्रयाधिकारी न भविष्यति। यद्वा स ९ प्रभु र्यदि निजात्मजं तां विवाहयितुं प्रतिजानीयात्, तर्हि स तां कन्यावत् व्यवहरिष्यति। यद्वा स यद्यन्यां स्त्रियमपि तं विवाहयेत् १० तथापि तस्या अन्नवसनयोषित्पुरुषव्यवहाराणामन्यथा कर्त्तुं न शक्ष्यति। यदि तेषां त्रयाणां कर्म्मणामन्यथा कुर्य्यात् तर्हि सा दासी विना मूल्यं ११ मुक्तीभूय गमिष्यति।

यदि कश्चिन् प्रहारेण कञ्चन मनुजं हन्ति तर्हि स बध्यो भविष्यति। १२ यदि तं मारयितुं न यतेत किन्तु तस्य करेण दैवात् स म्रियेत तर्हि १३ यत् स्थानं पलायितुं त्वं शक्ष्यसि तादृशं स्थानं त्वत्कृते निरूपयिष्यामि। किन्तु कश्चित् कपटं विधाय निजसमीपवासिनं प्रहर्त्तुं दुःसाहसं चेत् १४ कुर्य्यात् तर्हि तं हन्तुं स मम वेद्याः समीपादपि त्वया नेतव्यः। यदि १५ कश्चिन् निजं पितरं मातरं वा प्रहरेत् तर्हि स बध्यो भविष्यति।

यः कश्चित् मानुषं चोरयित्वा विक्रीणाति, यस्य चाधिकारे स मानुषः १६ प्राप्यते, द्वावेतौ जनौ बध्यौ भविष्यतः।

यो निजपितरं मातरं वा शपेत स बध्यो भविष्यति। १७

अपरञ्च कश्चित् विवादसमये यं कञ्चन पाषाणेन मुष्टिना वा समा- १८ हन्ति स यदि न मृत्वा शय्यागतः सन् पश्चाद् उत्तिष्ठन् यष्टिमवलम्ब्य १९ वहिश्चलेत् तर्हि स प्रहर्त्ता निर्दोषो भविष्यति किन्तु तस्य कर्म्महानेश्चिकित्सायाश्च व्ययस्तेन दातव्यः।

यः स्वदासं दासीं वा यष्ट्या प्रहरति तत्प्रहारसमये स दासो यदि २० म्रियेत तर्हि सोऽवश्यं दण्डनीयो भविष्यति। किन्तु दिनमेकं द्वयं वा स २१

दासो यदि जीवेत् तर्हि स दण्डनीयो न भविष्यति यतः स मूल्येनाक्रीयत।

२२ विवदमानेन केनचित् गर्भिण्यां प्रहृतायां यदि तस्या गर्भः पतेत् किन्तु तदन्या काचित् आपन्न जायेत तर्हि स तस्याः स्त्रियाः पत्युर्वाक्यानुसारेण दण्डितः सन् विचारकानां समक्षं दण्डस्य धनं दास्यति।

२३ यद्दा काचित् आपत्ति र्घटेत तर्हि प्राणानां विनिमयेन प्राणा लोचनस्य
२४ विनिमयेन लोचनं दन्तस्य विनिमयेन दन्तः करस्य विनिमयेन करः
२५ पादस्य विनिमयेन पादस्तेन त्यक्तव्याः, तथा दाहनस्य विनिमयेन दाहनं क्षतस्य विनिमयेन क्षतं ताड़नस्य विनिमयेन ताड़नं तेन भोक्तव्यानि।

२६ केनचित् निजदासस्य दास्या वा लोचन आहते यदि तत् नश्येत
२७ तर्हि तस्य लोचननाशात् स मोचयितव्यः। आघातेन स्वदासस्य दास्या वा दन्ते भग्ने तद्दन्तभंगकारणात् स मोचयितव्यः।

२८ गवा नरे नार्य्यां वा शृङ्गेणाहते स यदि म्रियेत तर्हि सा गौः पाषाणाघातेन बध्या भविष्यति तस्याः पललनभक्ष्यं भविष्यति, किन्तु गोस्वामी
२९ दण्ड्यो न भविष्यति। सा गौः प्राक् शृङ्गेणाहन्तीति यदि तस्याः स्वामिने प्रमाणमस्य दीयेत तेनाबद्धया तया कश्चित् नरो नारी वाहन्येत तर्हि सा गौः पाषाणै र्बध्या भविष्यति तस्याः स्वामी च बध्यो भविष्यति।
३० यदि तस्य प्राणहते प्रायश्चित्तं निरूप्येत तर्हि स प्राणमुक्तये निरू-
३१ पितं सर्व्वं मूल्यं दास्यति। तया गवा यदि कस्यचित् सुतो दुहिता वा
३२ शृङ्गेणाहन्येत तर्हि तद्विधेरनुसारात् तस्या दण्डो भविष्यति। यदि तया गवा कस्यचित् दासो दासी वा शृङ्गेणाहन्येत तर्हि गोस्वामी तदीयप्रभवे त्रिंशत् शेकलरूप्यं दास्यति किन्तु गौः पाषाणै र्बध्या भविष्यति।

३३ यदि कश्चित् स्वगर्त्तम् अनाच्छादितं कुर्य्यात् खनित्वा वा तं नाच्छादयेत्
३४ तदा तत्र गवि गर्द्दभे वा पतिते तद्गर्त्तस्य स्वामी पशुस्वामिने रूप्यमूल्यं दास्यति किन्तु स मृतपशुस्तस्य भविष्यति।

३५ एकस्य नरस्य गवान्यस्य गौः शृङ्गेणाहता यदि म्रियेत तर्हि तौ जीवन्तीं गां विक्रीय तन्मूल्यं अंशद्वयं करिष्यतः तां मृतगाञ्च द्व्यंशेन
३६ विभज्य ग्रहीष्यतः। किन्तु गौः प्राक् शृङ्गेणाहन्तीति यदि प्रमाणं भवेत् तथा तत्स्वामी तां न बध्नीयात् तर्हि स तस्या विनिमयेनान्यां गां दास्यति किन्तु सा मृता गौस्तस्य भविष्यति।

# २२ द्वाविंशोऽध्यायः।

१ चौर्य्यमधि व्यवस्था ५ हानिमधि व्यवस्था ७ समर्पितवस्त्वधि व्यवस्था १० समर्पितपश्वमधि व्यवस्था १४ ऋणमधि व्यवस्था १६ व्यभिचारिणमधि व्यवस्था १८ डाकिनीमधि व्यवस्था १९ पश्वृङ्गारमधि व्यवस्था २० देवार्चामधि व्यवस्था २१ विदेशिविधवापितृहीनानधि व्यवस्था २५ ऋणबन्धकावधि व्यवस्था २८ विचारकानधि व्यवस्था २९ प्रथमजातफलमधि व्यवस्था ३१ छिन्नक्रव्यभोजनस्य निषेधश्च।

केनचित् चौर्य्यं कृत्वा गवि मेषे वा हते विक्रीते वा गोरेकाया १ विनिमयेन पञ्च गावः मेषस्यैकस्य विनिमयेन चत्वारो मेषास्तेन दातव्याः। सन्धिं कुर्व्वन् धृतः स्तेनः केनचित् यदि हन्येत तर्हि स नरबधपापी २ न भविष्यति। किन्तु यदि रवावुदिते तं हन्यात् तर्हि स नरबधजपापी ३ भविष्यति; तस्करेण चौर्य्यद्रव्यं परिशोधनीयं, किन्तु यदि तस्य करे किमपि न तिष्ठेत् तर्हि चौर्य्यहेतोः स विक्रायिष्यते। गोगर्द्दभमेषादिचौर्य्यवस्तु ४ यदि चौरस्य स्थाने जीवल्लभ्येत तर्हि तेन तद्द्विगुणं दातव्यं।

क्षेत्रं द्राक्षाक्षेत्रं वा भोजयितुं केनचित् त्यक्तः पशु र्यद्यन्यस्य क्षेत्रे ५ चरेत् तर्हि तद्विनिमयेन स्वक्षेत्रस्योत्तमं शस्यं वा निजद्राक्षाक्षेत्रस्योत्तमं फलं तेन दातव्यं।

केनचित् कण्टकवने वह्नौ दत्ते यदि कस्यचित् धान्यराशि र्वा ६ वर्द्धमानं शस्यं क्षेत्रं वा तेन वह्निना दह्येत, तर्हि सोऽग्निदातावश्यं तन्मूल्यं दास्यति।

निजसमीपवासिनः स्थाने निक्षिप्तानि परभूषणानि मुद्रा वा यदि ७ तस्य गृहात् केनचित् चोर्य्येरन् स च चौरो धार्य्येत तदा स तद्द्विगुणं दास्यति। यदि चौरो न धार्य्येत तर्हि गृहस्वामिना समीपवासिनो ८ वस्तूनि प्रति करः प्रसारितो नवेति ज्ञातुं स विचारयितुः समक्षम् आनायिष्यते। तथा विश्वासघातमधि फलतो गोगर्द्दभमेषवस्त्रादि यत् ९ किञ्चन हारितं वस्त्वधि यदि कश्चित् कथयेत् ममेदमिति तर्हि द्वयो र्वाक्ये विचारयितुः समीपमुपस्थिते विचारयिता यमेव दोषिणं कुर्य्यात् स स्वसमीपवासिने तद्द्विगुणं प्रदास्यति।

केनचित् स्वगर्द्दभे गवि मेषेऽन्यस्मिन् पशौ वा समीपवासिनः स्थाने १० पालनार्थम् अर्पिते यदि सर्व्वेषाम् असमक्षं स पशु र्म्रियेत हिंस्येत ताड्येत वा, तर्हि समीपवासिनो वस्तुनि मया हस्तो नार्पित इत्युक्त्वा एकोन्यस्य ११ समक्षं परमेश्वरनाम्ना शपथं करिष्यति, तदा पशुस्वामी तं शपथं ग्रही-

१२ ष्यति परिशोधं न लप्स्यते। किन्तु यदि तस्य समीपात् कश्चित् चोर-
१३ येत् तदा स तस्य स्वामिने तन्मूल्यं दास्यति। यदि पशु र्विदीर्य्येत तर्हि
स तत् प्रमाणी कृत्य तस्य विदीर्णस्य पशो मूल्यं न दास्यति।

१४ यदा कश्चित् स्वसमीपवासिनः पशुं याचित्वा गृह्णाति, तदा तस्य
स्वामिनि तेन सार्कं न तिष्ठति यदि तस्य हानि र्मृत्यु र्वा जायेत तर्हि स
१५ तस्य मूल्यमवश्यं दास्यति। किन्तु यदि तस्य स्वामी तस्य समीपे तिष्ठेत्
तदा तस्य मूल्यं स न दास्यति, यदि स पशु र्भाटकार्थम् आनीत-
स्तर्हि भाटको दातव्यः।

१६ यदि कश्चित् अवाग्दत्तां कन्यां प्रतार्य्य तया सह शयेत तर्हि स तस्याः
१७ कन्यायाः शुल्कं दत्त्वा तां विवक्ष्यति। यदि तां तं विवाहयितुं तस्याः पिता
नानुमतिं कुर्य्यात् तर्हि कन्याशुल्कस्य व्यवस्थानुसारात् स रूप्यं दास्यति।

१८ डाकिनीं जीवन्तीं न स्थापय।

१९ पशुना सह शृङ्गारकृदवश्यं बध्यो भविष्यति।

२० यः कश्चित् केवलं परमेश्वरं विना कस्मैचित् देवाय वलिं ददाति स
उग्रदण्डं प्राप्स्यति।

२१ त्वं विदेशिनं मा क्लिश्नीयास्तं नोपद्रुह्याः यस्मात् यूयमपि मिसर्देशे
२२ विदेशिन आस्त। त्वं काञ्चन विधवां पितृहीनबालकं वा मा क्लिश्नीयाः।
२३ केनापि प्रकारेण तस्मिन् क्लिष्टे स यदि मत्सन्निधौ प्रार्थयेत तदाहं तस्य
२४ प्रार्थनामवश्यं श्रोष्यामि। मम क्रोधे प्रज्वलिते युष्मानहं खड्गेन मारयि-
ष्यामि च तेन युष्माकं जाया विधवा भविष्यन्ति सन्तानाश्च पितृहीना
भविष्यन्ति।

२५ मदीयलोकानां मध्ये तव समीपवासिने कस्मैचित् दरिद्राय यदि
त्वम् ऋणं दद्यास्तर्हि तम्प्रति कुसीदग्राहीव मा भवेः, तस्मात् कुसीदं
२६ मा गृहाण। यदि त्वं स्वसमीपवासिनो वसनं बन्धकत्वेन गृह्णीया-
२७ स्तर्हि सूर्य्यास्तगमनात् प्राक् तस्मै तद्वसनं पुन र्देहि। यस्मात् तत् तस्या-
द्वितीयम् आच्छादनं नग्नतारोधकञ्च, स कस्मिन् शेष्यते? स यदि मत्-
सन्निधौ प्रार्थयेत तर्हि मम दयालुत्वात् तत् श्रोष्याम्यहं।

२८ विचारयितारं मा निन्द, स्वीयलोकानां मुख्यं मा शपस्व।

२९ तव प्रथमं पक्वफलं द्राक्षारसञ्च निवेदयितुं मा विलम्बस्व, तव
३० प्रथमजातपुत्त्रान् मह्यं देहि च। स्वगोमेषवत्सान् प्रति तथा कुरु ते सप्त-
दिनानि मात्रा सह स्थास्यन्ति अष्टमदिने त्वं तान् मह्यं देहि।

यूयं मम पवित्रलोका भविष्यथ क्षेत्रे विदीर्णं पिशितं मा भुङ्ध्वं तत् २१ सारमेयाणां समीपे निक्षिपत।

---

## २३ त्रयोविंशोऽध्यायः।

१ अपवादकथनं २ अन्यायकथनं ४ उपकारकथनं ६ न्यायकरणकथनं ८ उत्कोचकथनं ९ विदेशिनः कथनं १० भूमिसधि कथनं १२ विश्रामवारकथनं १३ देवार्चाकथनं १४ वार्षिकोत्सवत्रयकथनं १८ बलिदानकथनं २० अग्रगदूतकथनं २६ आशीःकथनञ्च।

त्वं कस्यापि मृषापवादं न गृहाण मृषा साक्षी भवन् दुष्टस्य १ साहाय्यं मा कुरु च।

त्वमसत् कर्म्म कर्त्तुं बहुलोकानां पश्चात् मा गच्छ विचारे ऽन्यायं २ कर्त्तुञ्च बहुलोकानां पक्षो भवन् मा प्रतिवद। दरिद्रस्य छतेऽपि विचारे ३ पक्षपातं मा कार्षीः।

त्वं रिपो र्गां गर्द्दभं वान्यत्र भ्रमन्तं विलोक्य तत्समीपम् अवश्यं ४ नेष्यसि। त्वं स्वर्त्तीयिनो गर्द्दभं भाराधः पतन्तं निरीक्ष्य तं विहाय मा ५ गाः, अवश्यं तेन साकं तमुपकरिष्यसि।

विचारे दरिद्राय मान्यायं कार्षीः। मृषा विवादाद् दूरे तिष्ठ, निर्दोषं ६ धार्म्मिकञ्च मा नाशय, यतोऽहं दुष्टं निर्दोषं न करिष्यामि। ७

त्वमुत्कोचं मा ग्रहीः यत उत्कोचेन ज्ञानिनोऽप्यन्धी भवन्ति धार्म्मि- ८ काणामपि वागन्यथा भवति।

विदेशिनं नोपद्रव यतो यूयं मिसर्द्देशे विदेशिन आस्त तेन विदेशि- ९ नामन्तःकरणभावं जानीथ।

त्वं स्वीयभूमौ षट् वत्सरान् यावत् वीजं वप तस्मात् शस्यादि संगृ- १० हाण। किन्तु सप्तमवत्सरे तां विश्रामय निष्कर्षणां निधेहि तदुत्पन्न- ११ द्रव्याणि तव दरिद्राणां भक्ष्याणि भविष्यन्ति तेषां भोजनावशिष्टं वन्य- पशवः खादिष्यन्ति, तव गोस्तनीक्षेत्रं जितद्रुमं प्रति च तथैव कुरु।

त्वं षट् दिनानि कर्म्म कृत्वा सप्तमे दिने विश्राम्य, तेन तव गोगर्द्दभाः १२ सर्व्वे विश्रमिष्यन्ति तव दासीपुत्रा विदेशिनश्च विश्रमिष्यन्ति।

अहं युष्मभ्यं यद्यद् अकथयं तदधि सावधाना भवत ; अन्यदेवानां १३ नाम मा स्मारयत, युष्माकं वदनैरपि तदुच्चारणं मा भवेत्।

त्वं वत्सरमध्ये वारत्रयं मामुद्दिश्य महं कुरु। किण्वशून्यपूपोत्सवं १४

१५ पालयित्वा ममाज्ञानुसाराद् आबीब्मासस्य निरूपितसमये सप्तदिनानि किण्वशून्यपूपान् अशान, यस्मात् तत्काले त्वं मिसर्देशाद् अमोच्यथाः,
१६ कोऽपि रिक्तहस्तो मत्समीपं नोपतिष्ठतु। क्षेत्रे यद्यद् अवपस्तस्य प्रथमसंगृहीतफलोत्सवं कुरु; तथा वत्सरस्य शेषभागे क्षेत्रात् फलानि
१७ संगृह्य फलसञ्चयोत्सवञ्च कुरु। तव सर्व्वे पुरुषा वत्सरमध्ये त्रिः प्रभोः साक्षात् समायान्तु।

१८ त्वं मां प्रति किण्वयुक्तपूपेन साकं बलेः शोणितं मा निवेदय, बलेर्मे-
१९ दश्च प्रातःकालं यावत् न तिष्ठतु। तव क्षेत्रे प्रथमजातोत्तमफलं त्वत्प्रभु-परमेश्वरस्य भवनमानय; छागवत्सस्य पिशितं तन्मातृदुग्धे न पचेः।

२० पश्य त्वां वर्त्मन्यवितुं स्वासादितस्थानमानेतुञ्च त्वदग्रेऽग्रे दूतमेक-
२१ महं प्रेषयिष्यामि। किन्तु तत्रावधत्त तद्वचो निशामय तं मा क्रोधय
२२ च यस्मात् तस्मिन् मन्नामस्थितेः स युष्माकमपराधं न क्षमिष्यते। यदि त्वं तस्य वाक्यं नितान्तं शृणुया यद्यत् कथयामि तच्च कुर्य्यास्तर्ह्यहं
२३ तव रिपूणां रिपुर्वैरिणां वैरी च भविष्यामि। ततो मम दूतस्त्वदग्रेऽग्रे व्रजन् इमोरीय-हित्तीय-पिरिषीय-किनानीय-हिव्वीय-यिवूषीयानां
२४ देशं त्वामानेष्यति तांश्चाहम् उच्छेत्स्यामि। त्वं तेषां देवान् मा प्रणम तान् मा सेवस्व तान् उद्दिश्य कृत्यं मा कुरु किन्तु तान् निर्मूलमुत्पाटय
२५ तेषां प्रतिमा भंग्धि। यूयं स्वप्रभुपरमेश्वरं सेवध्वं ततः स युष्माकमन्न-तोये प्रत्याशिषं वक्ष्यति किञ्च युष्मत्तोऽहं व्याधीनपसारयिष्यामि।

२६ तव जनपदे कस्याश्चिदपि गर्भो न पतिष्यति कापि बन्ध्या च न
२७ भविष्यति तवायुःपरिमाणमहं पूरयिष्यामि। त्वदग्रे मत्तो भयं प्रेषयिष्यामि; त्वं येषां जनानां विपरीतं यास्यसि तानहं व्याकुली करिष्यामि
२८ तव रिपून् पराङ्मुखी करिष्यामि। मया त्वदग्रेऽग्रे नीलाक्षिषु प्रेषितेषु ते
२९ हिव्वीय-किनानीय-हित्तीयान् तव सम्मुखात् अपसारयिष्यन्ति। किन्तु जनपदो यत् शून्यो न भवेत् तव प्रतिकूलाः प्रभूतवन्यपशवश्च न भवेयुः
३० तत्कृतेऽहम् एकवत्सरेण तव सम्मुखात् तान् नापसारयिष्यामि। त्वं यावत् प्रफुल्लः सन् जनपदं नाधिकुर्व्वीयास्तावत् तव सम्मुखात् तान्
३१ क्रमशोऽपसारयिष्यामि। आ सूफ्सागरात् पिलेष्टीयसमुद्रपर्य्यन्तां आ प्रान्तरात् फरात्नदीपर्य्यन्ताञ्च तव सीमां निरूपयिष्यामि तद्देशनिवासिषु
३२ मया तव करे समर्पितेषु त्वं स्वसम्मुखात् तान् दूरयिष्यसि। किन्तु तैः
३३ साकं तेषां देवैश्च साकं कमपि नियमं न निर्द्धारयिष्यसि। ते तव नीवृति

न वत्स्यन्ति नोचेत् ते मद्विरुद्धं त्वां कलुषं कारयिष्यन्ति यतस्त्वया यदि तेषां देवाः सेव्यन्ते तर्हि तेऽवश्यं तवोन्मायरूपा भविष्यन्ति।

---

## २४ चतुर्व्विंशोऽध्यायः।

१ गिरिमारोढुं मूससाह्वानं ३ आज्ञां ग्रहीतुं प्रजानामङ्गीकारः मूससो वेदिद्वादशस्तम्भानां निर्म्माणं ९ ईश्वरस्य तेजःप्रकाशनं १२ मूसोहारोणहूराणां नियोजनं गिरिमारुह्य चत्वारिंशदहोरात्रस्थितिः।

अनन्तरं परमेश्वरो मूससमवदत् त्वं हारोणो नादब अवीहूरिस्रा- १ येलीयवंशस्य प्राचां सप्ततिर्जनाश्च यूयमुत्थाय परमेश्वरस्य समीपमागत्य दूरे तिष्ठन्तस्तं भजध्वं। केवलो मूसाः परमेश्वरस्य सन्निधिमागमिष्यति २ किन्तु ते सन्निधिं नागमिष्यन्ति लोकास्तेन साकं गिरिं नारोक्ष्यन्ति च।

तदानीं मूसा आगत्य परमेश्वरस्य ताः सर्व्वा गिरो विधींश्च लोकान् ३ आदिदेश ततः सर्व्वे जना एकवाक्यीभूय प्रत्यवोचन् परमेश्वरेण याः गिरो गदिता वयं ताः पालयिष्यामः। ततो मूसाः परमेश्वरस्य सर्व्वाः ४ वाचो लिलेख प्रत्यूषस्येवोत्थाय गिरेरध एकां यज्ञवेदिं इस्रायेलो द्वादश वंशानुसारेण द्वादश स्तम्भांश्च निर्ममे। स इस्रायेल्वंशस्य यूनः प्रेषित- ५ वान् ते च परमेश्वरमुद्दिश्य जुहवाम्बभूवुः मङ्गलार्थं गोबलींश्च ददुः। तदा मूसाः शोणितमादाय तदर्द्धं पात्रेषु निदधेऽर्द्धं वेद्युपरि सिषेच। ६ नियमपुस्तकं गृहीत्वा लोकानां श्रुतिगोचरे पपाठ ते तु जगदुः परमेश्व- ७ रेण यद्यदादिष्टं तत्तद्वयं पालयिष्यामो मंस्यामश्च। ततो मूसास्तत् शोणितं ८ गृहीत्वा प्रजानामुपर्य्यभिषिच्य जगाद पश्यत एतानि वाक्यान्यधि परमेश्वरो युष्माभिः साकं यं नियमं कृतवान् तन्नियमस्येदं शोणितम्।

तदानीं मूसा हारोणो नादब अवीहूरिस्रायेलो वंशीयाः सप्ततिप्रा- ९ चीनमानवाश्चोर्द्धं गत्वा इस्रायेल ईश्वरं ददृशुः। तस्य चरणाधःस्थानं १० नीलकान्तमणिखचितमिव निर्म्मलतया गगणसमानञ्चासीत्। तथापि ११ स इस्रायेल्वंशीयाधिपतीनां विरुद्धं करौ न विस्तारयामास, किन्तु त ईश्वरं दृष्ट्वा बुभुजिरे पपुश्च।

ततः परमेश्वरो मूससमवदत् त्वं गिरिमारुह्य मम समीपे तत्र स्थाने १२ तिष्ठ लोकानां शिक्षार्थं मया यस्मिन् व्यवस्थाज्ञे लिखिते, तत्पाषाण- फलकद्वयमहं तुभ्यं दास्यामि। ततो मूसस्तत्सेवकयिहोशूययोरुत्थि- १३

१४ तयो मूसा ईश्वरस्य गिरिं समारुरोह। प्राचीनानवदच्च यावदावां युष्माकं समीपं परावृत्य नागच्छावस्तावद् यूयं तत्रैव तिष्ठत, पश्यत हारोणहूरौ युष्माकं सविधे स्तः कस्यापि कस्याश्चित् विवादकथायामुप-
१५ स्थितायां स तयोः समीपमागच्छतु। ततो मूससि गिरिमारूढे मेघेन
१६ गिरिराच्छादितः। तेन सीनयगिरेरुपरि परमेश्वरीयं तेजस्तस्थौ तत्र षड्दिनानि गिरौ मेघाच्छन्ने स्थिते सप्तमे दिने स मेघमध्यात् मूससं
१७ आहूतवान्। तत इस्रायेल्वंशस्य दृष्ट्यां गिरिशृङ्गे परमेश्वरीयतेजो
१८ ज्वलदग्नीव प्रचकाशे। मूसा मेघमध्यं प्रविश्य गिरिमारुह्य तत्र गिरौ चत्वारिंशद्दिवारात्रीरुवास।

---

# २५ पञ्चविंशोऽध्यायः।

१ आवासं निर्म्मातुं परमेश्वराज्ञा १० मञ्जूषाकथनं १७ पापाच्छादनकथनं २३ भोजनासनदर्शनीयपूपयोः कथनं ३१ दीपपादपकथनञ्च।

१ अनन्तरं परमेश्वरो मूससं बभाषे त्वमिस्रायेलीयवंशान् तेषां मध्याद्
२ मत्कृते नैवेद्यं संग्रहीतुं वद, ततो यो जनः स्वेच्छया मनसा समं
३ यत् प्रयच्छति तस्मात् ते तन् मदीयं नैवेद्यं गृह्णन्तु। सुवर्णं दुर्व्वर्णं पित्तलं
५ नीलधूम्रसिन्दूरवर्णं सूक्ष्मवसनं छागरोमाणि रक्तीकृतमेषचर्म्माणि तहस्-
६ शीयचर्म्माणि शिटीमकाष्ठानि दीपार्थतैलं अभिषेकार्थतैलाय सुगन्धि-
७ धूपाय च गन्धद्रव्याणि एफोदे वक्षःपट्टे च सूर्य्यकान्तमण्यादिखचनीय-
८ ग्रावा एतानि नैवेद्यानि ते गृह्णन्तां। ते मदर्थं पवित्रस्थानमेकं निर्म्मान्तु
९ ततोऽहं तेषां मध्ये निवत्स्यामि। आवासस्याकारं तदीयसकलपात्राणाञ्चाकारादि यत् यदहं त्वां दर्शयामि तदनुसारेण यूयं तत्सर्व्वाणि निर्मास्यथ।

१० अपरं ते सार्द्धद्विहस्तदीर्घां सार्द्धहस्तविस्तृतां सार्द्धहस्तोच्चां शिटीम्-
११ काष्ठीयां मञ्जूषामेकां निर्मास्यन्ति। पश्चात् त्वं निर्मलसुवर्णेन तां मण्डयिष्यसि तस्या वहिरभ्यन्तरञ्च मण्डयिष्यसि तदुपरि चतुर्दिक्षु
१२ सुवर्णस्य कर्णिकां करिष्यसि। तदर्थं सुवर्णस्य चतुरो बलयाग्रान् कीलकान् सिक्त्वा चतुर्षु कोणेषु दास्यसि तस्यैकपार्श्वे द्वौ बलयावन्यपार्श्वे च
१३ द्वौ बलयौ स्थास्यतः। शिटीम्काष्ठस्य वहनदण्डौ कृत्वा तौ सुवर्णेन
१४ मण्डयिष्यसि। मञ्जूषां वोढुं मञ्जूषायाः पार्श्वद्वयस्थवलयेषु वहनदण्डौ
१५ प्रवेशयिष्यसि। तौ दण्डौ मञ्जूषाया बलयेषु स्थास्यतः, ततो न मोच-

यिष्यतः। अहं यत् साक्ष्यपत्रं तुभ्यं दास्यामि तत् तन्मञ्जूषाया मध्ये १६ निधास्यसि।

पश्चात् निर्मलसुवर्णेन सार्द्धद्विहस्तदीर्घं सार्द्धहस्तविस्तृतम् पापाच्छा- १७ दनं निर्म्मास्यसि। तस्याच्छादनस्य द्वयोरन्तयोः स्वर्णेन द्वौ किरूवौ १८ निर्मास्यसि। एकं किरूवम् एकस्मिन् अन्ते तदन्यकिरूवम् अन्यस्मिन् १९ अन्ते निधास्यसि, तदन्तस्थितौ किरूवौ तदाच्छादनसंयुक्तौ भवेतां। किरूवयोः पक्षा ऊर्द्धे विस्तारिता भविष्यन्ति, तैस्ताच्छादनम् आच्छा- २० दयिष्यते तयो वंदने परस्परं सम्मुखे स्यास्यतः किन्तु तयो वंदनयो दृष्टि- राच्छादनं प्रति भविष्यति। त्वं तदाच्छादनं मञ्जूषाया उपरि निधास्यसि २१ यत् साक्ष्यपत्रम् अहं तुभ्यं दास्यामि तत् तस्या मञ्जूषाया मध्ये निधा- स्यसि। अहं तत्र स्थाने त्वां साक्षात् करिष्यामि तस्य पापाच्छादनस्यो- २२ परिभागात् साक्ष्यमञ्जूषाया उपरिस्थितयो द्वयोः किरूवयो मध्यात् त्वया साकमालपन् इस्रायेलो वंशं प्रति त्वाम् आज्ञापयिष्यामि।

तदनन्तरं त्वं शिटीम्काष्ठेन द्विहस्तदीर्घम् एकहस्तविस्तृतं सार्द्ध- २३ हस्तोच्चम् एकं भोजनासनं निर्माय निर्मलस्वर्णेन मण्डयिष्यसि तस्य २४ चतुर्दिक्षु स्वर्णस्य कर्णिकां करिष्यसि। तच्चतुर्दिक्षु चतुरङ्गुलविस्तृतम् २५ एकं पार्श्वकाष्ठं करिष्यसि तस्य चतुर्दिक्षु स्वर्णकर्णिकां करिष्यसि। स्वर्ण- २६ निर्मितान् चतुर्वलयाग्रकीलकान् कृत्वा तस्य चतुर्णां पदानां चतुर्षु कोणेषु निधास्यसि। तदासनस्य वहनदण्डौ स्थापयितुं ते वलयाः पार्श्वकाष्ठान्तिके २७ स्यास्यन्ति। तदासनस्य वहनदण्डौ शिटीम्काष्ठेन निर्म्माय तौ स्वर्णेन २८ मण्डयिष्यसि। भोजनपात्रचमसाच्छादनपात्राणि सेक्तुं पात्राणि च २९ निर्मास्यसि एतानि सर्व्वाणि निर्मलस्वर्णेन निर्मास्यसि। त्वम् आसनो- ३० परि मम सम्मुखे नित्यं दर्शनीयपूपान् निधास्यसि।

पश्चात् त्वम् आहतस्वर्णेन दीपवृक्षं कुरु तत्र प्रकाण्डशाखावर्त्तुला- ३१ कारकलिकापुष्पाणि स्यास्यन्ति फलतः तत्पार्श्वैकतस्तिस्रः शाखाः ३२ अन्यतश्च तिस्र इमाः षट्शाखास्तस्मात् निर्गमिष्यन्ति। तदेकशा- ३३ खायां वादामपुष्पाकृतयस्त्रयो वर्त्तुलाकारा एका कलिका पुष्पैकञ्च स्यास्यन्ति तदन्यशाखायाञ्च वादामपुष्पाकृतयस्त्रयो वर्तुलाकारा एका कलिका पुष्पैकञ्च स्यास्यन्ति इत्थं तस्मात् दीपवृक्षात् षट् शाखा निर्गमि- ष्यन्ति। तत्र दीपवृक्षे वादामपुष्पाकृतिचतुर्वर्त्तुलाकारकलिकापुष्पाणि ३४ स्यास्यन्ति। तस्य दीपवृक्षस्य याः षट् शाखा निर्गच्छन्ति तासां द्वयोः ३५

शाखयोरध एका कलिका तदन्यशाखयोरधश्चैका कलिका तदन्यशाख-
३६ योरधश्चैका कलिका स्थास्यति। कलिकाशाखे तदंशौ भविष्यतः सर्व्वा-
३७ ण्याहतनिर्मलस्वर्णैं र्निर्माविष्यन्ते। तस्य सप्त प्रदीपांश्च निर्मास्यसि ततो
३८ लोकैस्तेषु प्रदीपेषु ज्वालितेषु तत्सम्मुखे आलोको भविष्यति। निर्मल-
३९ सुवर्णेन वर्त्तिकाच्छेदनकर्त्तनीं तस्याः पात्रञ्च निर्मास्यसि। किन्तु स
४० दीपवृक्षः साकल्येन एकतालान्तपरिमितस्वर्णैं र्निर्माविष्यते। अवधेहि
गिरौ त्वां यद्यन्निदर्शनं दर्शितं तद्वत् सर्व्वाणि त्वया क्रियन्ताम्।

---

## २६ षड्विंशोऽध्यायः।

१ आवासस्य यवनिकाकथनं ७ आवासाच्छादनाय छागरोमजवस्त्रकथनं १५ आवासस्य फलककथनं २६ अर्गलकथनं ३१ आवासभेदकविच्छेदवसनस्य कथनञ्च।

१ पश्चात् त्वं वर्त्तितनीलधूम्ररक्तवर्णसूत्रीयाभि र्दशभि र्यवनिकाभिरेक-
२ मावासं निर्माहि तत्र विचित्रकिरूवाकाराः स्थास्यन्ति। तासां यवनि-
कानाम् एकैका अष्टाविंशहस्तदीर्घा चतुर्हस्तविस्तृता भविष्यति सर्व्वासां
३ परिमाणं समानं भविष्यति। एकत्र पञ्च यवनिका युक्ताः स्थास्यन्ति
४ अन्यपञ्च यवनिकाश्च परस्परं युक्ताः स्थास्यन्ति। संयोक्तव्ययोः शेषयव-
निकयोरेकस्या अन्ते नीलसूत्रपुटिका निर्मास्यसि, तद्वत् द्वितीयस्याः
५ प्रान्तेऽपि करिष्यसि। एकस्या अन्ते पञ्चाशत् पुटिकाः करिष्यसि
तद्वदन्यस्या अन्ते पञ्चाशत् पुटिकाः करिष्यसि, उभयपङ्क्तिपुटिकाः
६ समवर्त्तिन्यो भविष्यन्ति। पञ्चाशत् स्वर्णग्रन्थीन् कृत्वा तद्ग्रन्थिभि र्द्वे यव-
निके भंत्स्यसि तेनैक आवासो भविष्यति।

७ तदावासोपर्य्याच्छादनार्थं छागरोमजैकादश यवनिकाः करिष्यसि।
८ तासामेकैका त्रिंशद्धस्तदीर्घा चतुर्हस्तविस्तृता, एकादशयवनिकानां
९ परिमाणं समानं भविष्यति। पञ्च यवनिकाः परस्परं संयोज्य एकत्र
निधास्यसि षडन्यास्तद्वत् संयोज्य निधास्यसि, तासां षष्ठीं द्विगुणीकृत्य
१० दूष्यद्वारसम्मुखे निधास्यसि। संयोक्तव्ययोः शेषयवनिकयोरेकस्या अन्ते
पञ्चाशत् पुटिकाः करिष्यसि, तद्वत् द्वितीयस्या अन्ते पञ्चाशत् पुटिकाः
११ करिष्यसि। पित्तलस्य पञ्चाशत् ग्रन्थीन् कृत्वा पुटिकाः प्रवेश्य संयोज-
१२ यिष्यसि तेनैकदूष्यं भविष्यति। तद्दूष्ययवनिकानां योंशो ऽर्थात् यार्द्ध-
१३ यवनिकातिरिक्ता स्थास्यति सा पश्चादवलम्बिष्यते। दूष्ययवनिका-
दैर्घ्यस्य योंश एकपार्श्वे एकहस्तोऽन्यपार्श्वे एकहस्तोऽतिरिच्यते स आवास-

पार्श्वद्वयाच्छादनाय लम्बिष्यते। त्वं रक्तीकृतमेषचर्म्मभि र्दूष्याच्छादन- १४
मेकं करिष्यसि, तदुपरि तहशचर्म्मभिराच्छादनमेकं करिष्यसि।

त्वम् आवासार्थं शिटीम्काष्ठीयोच्चफलकानि करिष्यसि। तानि १५
फलकानि दशहस्तदीर्घाणि सार्द्धहस्तविस्तृतानि भविष्यन्ति। एकैकस्य १६
फलकस्य समानाकारौ द्वौ पादौ करिष्यसि इत्थम् आवासफलकानि १७
करिष्यसि। आवासाय यानि फलकानि करिष्यसि तेषां विंशतिफल- १८
कानि दक्षिणे दक्षिणपार्श्वाय भविष्यन्ति। तेषां फलकानामधश्चत्वा- १९
रिंशत् रूप्यपदाधारान् करिष्यसि फलकैकाधस्तत्पादद्वयाय द्वौ
पदाधारौ अन्यफलकानामधश्च तेषां द्वयोर्द्वयोः पदयोः कृते द्वौ द्वौ
पदाधारौ करिष्यसि। उत्तरे आवासान्यपार्श्वाय विंशतिफलकानि २०
भविष्यन्ति। फलकैकाधो द्वौ पदाधारावन्यफलकानामधश्च द्वौ द्वौ २१
पदाधारौ तेन चत्वारिंशत् रूप्यपदाधारा भविष्यन्ति। आवासपश्चिम- २२
पार्श्वाय षट् फलकानि दास्यसि। आवासस्य पश्चाद्भागस्य कोणद्वये २३
द्वे द्वे फलके दास्यसि। ते अधो योजयिष्यसि तद्वत् तच्छिरसी प्रथम- २४
वलयेन योजयिष्येते इत्थं उभयार्थं करिष्यते, ते कोणद्वये स्थास्यतः। तेन २५
तत्फलकान्यष्टौ भविष्यन्ति रूप्यपदाधाराः षोडश भविष्यन्ति एकैक-
फलकस्य द्वौ द्वौ पदाधारौ भविष्यतः।

त्वं शिटीम्काष्ठस्य दीर्घार्गलानि कृत्वा आवासैकपार्श्वफलकेषु पञ्च २६
दीर्घार्गलानि अन्यपार्श्वफलकेषु पञ्च दीर्घार्गलानि आवासपश्चाद्भा- २७
गस्यार्थतः पश्चिमपार्श्वस्य फलकेषु पञ्च दीर्घार्गलानि निधास्यसि।
फलकानां मध्यदेशस्थितं यत् मध्यार्गलं, तद् अग्रमारभ्यान्तं यावत् २८
यास्यति। तत्फलकानि स्वर्णेन मण्डयिष्यसि अर्गलानि निधातुं २९
स्वर्णवलयान् करिष्यसि अर्गलानि स्वर्णेन मण्डयिष्यसि। इत्थं ३०
गिरौ त्वां आवासाकारो यो दर्शितस्तदनुसारात् तम् आवासं
स्थापयिष्यसि।

त्वं नीलधूम्ररक्तवर्णवर्त्तितसूत्रै र्विच्छेदकवस्त्रं करिष्यसि तत्र विचित्र ३१
किरूवाणामाकृतयः स्थास्यन्ति। तत् शिटीम्काष्ठस्य चतुर्षां स्वर्णमण्डि- ३२
तस्तम्भानामुपरि लम्बयिष्यसि तेषामधो रूप्यचतुःपदाधारा उपरि च
स्वर्णकीलकाः स्थास्यन्ति। ग्रन्थिषु विच्छेदकवस्त्रसम्बन्ध्य तद्वस्त्राभ्यान्तरं ३३
साक्ष्यमञ्जूषामानेष्यसि तेन तद्विच्छेदकवस्त्रं पवित्रस्थानातिपवित्रस्थान-
योर्मध्ये भेदकं भविष्यति। महापवित्रस्थाने साक्ष्यमञ्जूषोपरि पापाच्छादनं ३४

२५ स्थापयिष्यसि। विच्छेदवस्त्रस्य वहि र्भोजनासनं निधास्यसि आवास-
दक्षिणे भोजनासनसम्मुखे दीपवृक्षं निधास्यसि उत्तरे भोजनासनं
२६ निधास्यसि। आवासद्वारार्थं नीलधूम्ररक्तवर्णवर्त्तितसूत्रै र्निर्म्मितं चित्र-
२७ विचित्रमेकमाच्छादकवस्त्रं करिष्यसि। तदाच्छादकवस्त्राय शिटीम्-
काष्ठस्य पञ्च स्तम्भान् निर्मास्यसि तान् स्वर्णेन मण्डयित्वा स्वर्णेन तेषां
कीलकान् करिष्यसि तदर्थं पित्तलस्य पञ्च पदाधारान् करिष्यसि।

---

## २७ सप्तविंशोऽध्यायः।

१ वेदिनिर्म्माणविधिः ९ आवासचत्वरकथनं १८ चत्वरपरिमाणं २० तैलस्य विधिश्च।

१ त्वं शिटीम्काष्ठेन पञ्चहस्तदैर्घ्यां पञ्चहस्तविस्तारां त्रिहस्तोच्चां चतुष्कोणां
२ वेदिमेकां निर्मास्यसि। तस्याश्चतुष्कोणानामुपरि शृङ्गाणि करिष्यसि
तानि शृङ्गाणि वेद्या अंशा भविष्यन्ति तानि च पित्तलेन मण्डयिष्यसि।
३ भस्मनिधानाय भस्माधारान् करिष्यसि तथा दर्व्वीकुण्डत्रिशूलाग्नि-
४ पात्राणि च करिष्यसि एतत्सर्व्वाणि पित्तलेन करिष्यसि। जालवत्
पित्तलीयामेकां झर्झरीं करिष्यसि तदुपरि चतुष्कोणेषु चतुरो बलयान्
५ करिष्यसि। तां झर्झरीं वेद्या वारणाधो निधास्यसि सा नीचतो
६ अर्द्धवेदिं यावत् स्थास्यति। वेदिं वोढुं शिटीम्काष्ठस्य वहनदण्डौ
७ करिष्यसि पित्तलेन च मण्डयिष्यसि। वेदिं वोढुं तत्पार्श्वयो र्बलयमध्ये
८ वहनदण्डौ दास्यसि। वेदिं फलकनिर्म्मितामन्तःशून्याञ्च करिष्यसि
गिरावत्र त्वां यद्वदर्शि तद्वत् करिष्यसि।

९ आवासचत्वरं कृत्वा तद्दक्षिणे वर्त्तितसूत्रनिर्म्मितयवनिका दास्यसि
१० तत्पार्श्वस्य दैर्घ्यं शतहस्तं भविष्यति। तस्य विंशतिः स्तम्भाः पित्तलस्य
विंशतिः पदाधारा भविष्यन्ति स्तम्भानां कीलकाः शलाकाश्च रूप्यस्य
११ भविष्यन्ति। तथोत्तरपार्श्वस्य यवनिकाः शतहस्तदीर्घा भविष्यन्ति तासां
विंशतिः स्तम्भाः पित्तलस्य विंशतिः पदाधारा भविष्यन्ति स्तम्भकीलक-
१२ शलाका रूप्यस्य भविष्यन्ति। चत्वरविस्तारमापकस्य पश्चिमपार्श्वस्य
१३ पञ्चाशद्धस्तयवनिका दश स्तम्भा दश पदाधारा भविष्यन्ति। पूर्व्वपार्श्वे
१४ चत्वरविस्तारः पञ्चाशद्धस्तः। एकतः पञ्चदशहस्तपर्य्यन्ता यवनिकास्त्रय-
१५ स्तम्भास्त्रयः पदाधाराश्च भविष्यन्ति। अन्यतोपि पञ्चदशहस्ता यवनिका-
१६ स्त्रयः स्तम्भास्त्रयः पदाधाराश्च भविष्यन्ति। मध्ये चत्वरद्वारार्थं नीलधूम्र-

रक्तवर्णवर्त्तितसूत्रैः शिल्पकार्य्यान्वितं विंशहस्तमाच्छादनवस्त्रं चतुःस्तम्भाः
चतुःपदाधारा भविष्यन्ति। चत्वरचतुर्दिक्स्थस्तम्भा रूप्यशलाकाभि १७
र्बद्धा तेषां कीलका रूप्यमयाः पदाधाराः पित्तलमया भविष्यन्ति।

चत्वरं शतहस्तदैर्घ्यं सर्व्वत्र पञ्चाशद्धस्तविस्तारं पञ्चहस्तोच्चं वर्त्ति- १८
तसूत्रकृतं तस्य पदाधाराः पित्तलस्य भविष्यन्ति। आवासस्य सेवार्थपा- १९
त्राणि कीलाः प्राङ्गणस्य सर्व्वकीलाश्च पित्तलमया भविष्यन्ति।

प्रत्यहमालोकं कर्त्तुं त्वदन्तिकं दीपस्थार्थं निर्म्मलालोडितजिततै- २०
लमानेतुं इस्रायेल् सन्तानान् आदेच्यसि। समाजावासमध्ये साक्ष्य- २१
मञ्जूषायाः सम्मुखस्थविच्छेदकवस्त्राद् वहि र्हारोणतत्पुत्रा आ सन्ध्यातः
प्रातर्यावत् परमेश्वरसम्मुखे तन्निरूपयिष्यन्ति इस्रायेल्वंशस्य पुरुष-
परम्परां यावद् एष विधिः स्थास्यति।

---

## २८ अष्टाविंशोऽध्यायः।

१ हारोणतत्पुत्त्रानधि याजकत्वपदनिरूपणं २ तेषां कृते पवित्रवासोनिरूपणं ५
एफोद्वस्त्रकथनं १५ विचारवक्षःपटीकथनं ३० ऊरीमतुम्मीभाः कथनं ३१ एफो-
दो नीलवस्त्रकथनं ३६ उष्णीषकथनं ३९ उत्तरासङ्गोष्णीषकटिबन्धनकथनं ४५
हारोणतत्सन्तानानां वासःकथनं।

त्वमिस्रायेल्वंशमध्यात् त्वदीयभ्रातरं हारोणं तत्सुतान् अर्थात् १
नादवं अवीहूं इलीयासरं इथामरञ्च मम सम्मुखे याजयितुं स्वान्तिकम्
आनेष्यसि।

स्वभ्रातुर्हारोणस्य ऐश्वर्य्यशोभार्थं मेध्यवासांसि करिष्यसि। यानहं २
बोधशक्त्या पूरितवान् तान् बुद्धिमल्लोकान् आदिश, मम याजकत्व- ३
कर्म्मार्थं हारोणं पवित्रं कर्त्तुं ते तद्वासांसि समासादयन्तु। वक्षः- ४
पटी एफोद् परिधेयविचित्रोत्तरासङ्गोष्णीषकटिबन्धा एतानि वासांसि
कुर्व्वन्तु ते मत्साक्षात् याजनाय त्वद्भ्रातृहारोणस्य तत्सुतानाञ्च मेध्य-
वासांसि करिष्यन्ति; तदर्थं ते स्वर्णनीलधूम्ररक्तवर्त्तितसूत्राणि च ५
ग्रहीष्यन्ति।

ते स्वर्णेन नीलधूम्ररक्तवर्त्तितसूत्रैश्च शिल्पकर्म्मणा एफोदवासः करि- ६
ष्यन्ति। स्कन्धाच्छादकौ तस्याग्रीयांशौ संयुज्येतां। एफोदो बन्धनाय यद् ७
विचित्रं कर्म स्थास्यति तदपि तद्वस्त्रानुसाराद् भविष्यति, फलतः ८
स्वर्णेन नीलधूम्ररक्तवर्त्तितसूत्रै र्भविष्यति। त्वं द्वौ हरिन्मणी समादाय ९

१० तत्रेखायेल्वंशानां नामानि खनिष्यसि। तेषां जात्यनुसारात् एकमणौ
११ षन्नामानि तदन्यमणौ शेषषन्नामानि खनिष्यसि। तन्मण्योः शिल्पकर्म्मणा
मुद्रावत् इस्रायेलो नामानि खनिष्यसि त्वं स्वर्णस्थालीभ्यां तौ भंत्स्यसि।
१२ इस्रायेल्वंशानां स्मरणाय तौ द्वौ मणी एफोद उपरि निधास्यसि तेन
हारोणः स्मर्त्तुं तेषां नामानि परमेश्वरसमक्षं स्वस्कन्धाभ्यां वक्ष्यति।
१३ त्वं ये स्वर्णस्थाल्यौ करिष्यसि तदग्रे निर्मलस्वर्णेन वर्त्तिते द्वे शृङ्खले हात्वा
१४ ते स्थालीभ्यां भंत्स्यसि।

१५ शिल्पकर्मणा विचारवक्षःपटीं करिष्यसि अर्थात् एफोदः कर्मानुसा-
१६ रात् स्वर्णनीलधूम्ररक्तावर्त्तितसूत्रैस्तां करिष्यसि। सा चतुरस्रा द्विगुणा
१७ भविष्यति तस्या दैर्घ्यं विस्तारश्च वितस्तिमात्रौ भविष्यतः। मणिचतुः-
१८ पंक्तिषु तां खचिष्यसि प्रथमपंक्तौ चुणीपद्मरागताम्रमणयः। द्वितीयायां
१९ मरकतनीलकान्तहीरकानि। तृतीयायां लश्रूनीयपिम्भाकटाहेलाः।
२० चतुर्थ्यां गोदन्तवैदूर्य्यसूर्य्यकान्ता एते स्वर्णेन स्वस्वपंक्तौ भन्त्स्यन्ते। एते
२१ प्रस्तरा इस्रायेल्वंशनामार्थं तेषां नामानुसारात् द्वादश भविष्यन्ति
२२ मुद्रायामिव प्रतिप्रस्तरं द्वादशवंशानामेकैकं नाम स्थास्यति। निर्मल-
२३ स्वर्णेन वक्षःपटीकृते वर्त्तितशृङ्खले निर्मास्यसि। वक्षःपट्युपरि द्वौ स्वर्ण-
२४ बलयौ करिष्यसि वक्षःपटीकोणयोस्तौ बलयौ भन्त्स्यसि। तयोर्बलयोर्मध्ये
२५ वर्त्तितस्वर्णस्य द्वे शृङ्खले निधास्यसि। शृङ्खलयोर्द्वे मुखे स्थाल्यौ बद्ध्वा
२६ एफोदः सम्मुखस्थयोः स्कन्धाच्छादकांशयोरुपरि निधास्यसि। स्वर्णस्य द्वौ
बलयौ निर्माय वक्षःपटीकोणयोरेफोदः सम्मुखस्थाभ्यन्तरे निधास्यसि।
२७ अपरं स्वर्णस्य द्वौ बलयौ कृत्वा एफोदः पार्श्वयोरधः सम्मुखे योजनस्थाने
२८ एफोदो विचित्रबन्धनोपरि च निधास्यसि। एफोदो विचित्र कटिबन्धनो-
परि तिष्ठन्ती वक्षःपटी यदेफोदः स्खलित्वा न पतेत् तदर्थं वक्षःपटी
२९ स्वबलयद्वये एफोदो बलयद्वये च नीलसूत्रेण बन्धनीया। यदा हारोणः
पवित्रस्थानं प्रवेक्ष्यति तदा परमेश्वरस्य समक्षं नित्यं स्मारयितुं स स्वहृ-
दये विचारवक्षःपट्यां नित्यमिस्रायेल्वंशानां नामानि वक्ष्यति।

३० त्वं विचारवक्षःपट्याम् ऊरीम्तुम्मीमौ (दीप्तिसिद्धी) स्थापयिष्यसि,
यदा हारोणः परमेश्वरसम्मुखं प्रवेक्ष्यति तदा हारोणस्य हृदये तत्
स्थास्यति हारोणो नित्यं परमेश्वरसम्मुखे इस्रायेल्वंशस्य विचारं
स्वहृदये वक्ष्यति।

३१ त्वम् एफोदः कृत्स्नपरिधेयवासो नीलं करिष्यसि। तन्मध्यस्थले

शिरःप्रवेशार्थमेकं छिद्रं करिष्यसि वर्मछिद्रवत् तच्छिद्राग्रं चतुर्दिक्षु ३२ तन्तुवायेन वीतं भविष्यति, तन्न छेत्स्यते। तद्वस्त्रोपरि चतुर्दिक्षु नील- ३३ धूम्ररक्तदाडिमानि करिष्यसि स्वर्णकिङ्किनीश्च तन्मध्ये स्थापयिष्यसि। तद्वस्त्रदशोपरि चतुर्दिक्षु एकैका स्वर्णकिङ्किनी एकैकं दाड़िमफलञ्च ३४ स्थास्यति। ईश्वरसेवनकाले हारोणस्तत् परिधास्यति यदा स परमे- ३५ श्वरसम्मुखं पवित्रस्थानं प्रवेक्ष्यति यदा च तस्मात् वहि र्भविष्यति तदा तच्छब्दः श्रोष्यते तेन स न मरिष्यति।

त्वं निर्मलस्वर्णेन पत्रमेकं करिष्यसि तदुपरि परमेश्वरमुद्दिश्य पवि- ३६ त्रेति पदं खनिष्यसि। मुकुटोपरि स्थातुं तन्नीलसूत्रेण बद्धा मुकुटस्या- ३७ ग्रभागे निधास्यसि। तत् हारोणस्य भाले स्थास्यति इस्रायेलः सन्तानाः ३८ स्वमेध्यकर्मसु दानेषु च यदपराध्यन्ति तद् हारोणो वक्ष्यति, यत् ते पर- मेश्वरेण नित्यम् अनुगृह्यन्ते तदर्थं तस्य भाले स्थास्यति।

त्वं कार्पाससूत्रैरुत्तरासङ्गोष्णीषौ करिष्यसि किन्तु कटिबन्धनं ३९ सूचिना चित्री करिष्यसि।

हारोणस्य सुतानां कृते कटिबन्धनोत्तरासङ्गौ करिष्यसि तेषां सौन्दर्य- ४० शोभार्थं उष्णीषान् करिष्यसि। हारोणस्य तत्सुतानाञ्च गात्रेषु तानि ४१ वासांसि परिधापयिष्यसि तानभिषिच्य पदे नियुक्तान् मेध्यांश्च करि- ष्यसि तेन ते याजकत्वपदे न मां सेविष्यन्ते। तेषां नग्नत्वाच्छादनाय ४२ कटितो जङ्घां यावत् कटिबन्धनानि परिधापयिष्यसि। यदा हारोण- ४३ स्तत्सुताश्च समाजावासं प्रविश्य पवित्रस्थाने सेवितुं वेद्या अन्तिकं यास्यन्ति तदा यत् तेऽपराध्य न म्रियन्ते तदर्थं तद्वासांसि परिधा- स्यन्ति हारोणतद्वंशार्थं एष नित्यविधि र्भविष्यति।

---

## २९ ऊनत्रिंशोऽध्यायः।

१ याजकपावनबलिदानविधिः ३८ नित्यं मेषशावकद्वयबलिदानं ४३ इस्रायेलीयैः समं वस्तुं तान् पावयितुं ईश्वरप्रतिज्ञानञ्च।

याजनपदे मां सेवितुं तेषां पूतत्वाय तान् प्रति त्वमेतानि कर्माणि १ करिष्यसि एकं निर्दोषवत्सं मेषौ च ग्रहीष्यसि। किण्वशून्यपूपान् तैल- २ मिश्रितान् किण्वशून्यान् पिष्टकांश्च तैलाक्तान् किण्वशून्यान् सूक्ष्म- पिष्टकान् गोधूमचूर्णैः करिष्यसि। परन्तु तान् एकस्मिन् डल्लके स्थाप- ३ यित्वा डल्लकेन सार्द्धं वत्सं मेषौ चानेष्यसि। समाजावासद्वारान्तिके ४

५ हारोणं तत्सुतांश्चानीय जलैः स्नपयिष्यसि। अपरं त्वं तानि वासांसि गृहीत्वा तनुत्तरासङ्गम् एफोदो वस्त्रं एफोदं वक्षःपटीञ्च हारोणं परि-
६ धापयिष्यसि एफोदो विचित्रकटिबन्धनेन तं भन्त्स्यसि। तच्छिरस्युष्णीषं
७ दत्त्वा तदुपरि पूतमुकुटं दास्यसि। अभिषेकार्थं तैलं गृहीत्वा तच्छिरो-
८ ऽभिषेक्ष्यसि। अपरं हारोणस्य सुतानानीय तान् उत्तरासङ्गान् परि-
९ धापयिष्यसि। हारोणं तत्पुत्रांश्च कटिबन्धनानि परिधापयिष्यसि, तेषां शिरःसूष्णीषान् दास्यसि तेन ते नित्यं याजनं करिष्यन्ति, इत्थं हारोणं
१० ससुतं त्वं पूतं करिष्यसि। ततस्त्वं समाजावाससम्मुखे वत्समानेष्यसि
११ हारोणस्तत्सुताश्च तद्वत्सशिरसि हस्तान् दास्यन्ति। त्वं समाजावा-
१२ सद्वारान्तिके परमेश्वरसम्मुखे तं वत्सं छेत्स्यसि। तस्य किञ्चित् शोणितं गृहीत्वा स्वाङ्गुल्या वेद्याः शृङ्गेषु दास्यसि वेदिमूले सर्व्वशोणितं निषेक्ष्यसि।
१३ तदन्त्रोपरिस्थितमेदो यकृदुपरिस्थान्त्राच्छादकं द्वौ मेदग्रन्थी तन्मेदश्चा-
१४ दाय वेद्यां होष्यसि। वत्सपललं चर्म गोमयञ्च शिविरस्य वहिर्वह्नौ दाहयिष्यसि, एष प्रायश्चित्तार्थको बलिः।

१५ अनन्तरं त्वं मेषयोरेकमानेष्यसि हारोणतत्सुतैस्तन्मेषशिरसि करे-
१६ ष्वर्पितेषु त्वं तं मेषं छित्त्वा तच्छोणितं गृहीत्वा वेद्युपरि चतुर्दिक्षु
१७ विकरिष्यसि। मेषं खण्डं खण्डं कृत्वा तदन्त्रं पदानि च प्रक्षाल्य खण्डशिर-
१८ सोरुपरि निधास्यसि। इत्थं त्वया वेद्यां कृत्स्नमेषे हुते तत् परमेश्वरस्य होमसुगन्धिद्रव्यम् अर्थात् परमेश्वरोद्देश्यं वह्निकृतनैवेद्यं भविष्यति।
१९ अपरं त्वं द्वितीयं मेषमादास्यसि हारोणतत्सुतैस्तन्मेषशिरसि करेष्वर्पि-
२० तेषु त्वं तं मेषं छित्त्वा तस्य किञ्चित् शोणितं गृहीत्वा हारोणस्य दक्षिण- कर्णप्रान्ते तत्सुतानां दक्षिणकर्णप्रान्तेषु दक्षिणहस्ताङ्गुष्ठोपरि दक्षि- णपदाङ्गुष्ठोपरि च दास्यसि वेद्युपरि चतुर्दिक्षु शोणितं विकरिष्यसि।
२१ वेद्युपरिस्थशोणितस्याभिषेकार्थतैलस्य च किञ्चित् गृहीत्वा हारोणस्य तद्वाससाञ्चोपरि तेन सार्कं तस्य पुत्राणां तेषां वाससामुपरि च तद् विकरिष्यसि तेन स तद्वासांसि तत्सुतास्तेषां वासांसि च पवित्री
२२ भविष्यन्ति। पश्चात् त्वं तन्मेषस्य मेदो लाङ्गूलमन्त्रोपरिस्थमेदो यकृदु- परिस्थान्त्राच्छादकं द्वौ मेदग्रन्थी तदुपरिस्थमेदो दक्षिणस्कन्धञ्च ग्रहीष्यसि
२३ यतः स पदनियोगार्थावि भवति। ततः परमेश्वरसम्मुखस्थकिण्वशून्यपूप-
२४ डल्लकात् पूपमेकं तैलाक्तपिष्टकं सूक्ष्मपिष्टकञ्च गृहीत्वा हारोणतत्-
२५ सुतानां हस्तेषु दत्त्वा निवेदयितुं परमेश्वरसम्मुखे तानि दोलयिष्यसि। त्वं

तेषां करेभ्यस्तान्यादाय परमेश्वरसम्मुखे सुगन्धिद्रव्यार्थं होमवेद्युपरि तदन्तिके होष्यसि तत् परमेश्वरोद्देश्यमग्निकृतनैवेद्यं भविष्यति।

पश्चात् त्वं हारोणस्य पदनियोगार्थमेषवक्ष आदाय परमेश्वरसम्मुखे २६ दोलयिष्यसि तत् खण्डं तवांशो भविष्यति। ततो हारोणस्य तत्सुतानाञ्च २७ पदनियोगकाले दोलितं मेषवक्ष उत्तोलितः स्कन्धश्च त्वया पावयितव्यौ। ततो नित्यविधिना इस्रायेल्वंशात् तद् हारोणतत्सन्ताना अधिकरि- २८ ष्यन्ति यतस्तद् इस्रायेलीयै र्दातव्यम् उत्तोलनीयनैवेद्यम् अर्थात् तेषां मङ्गलार्थकबलीनां मध्यात् परमेश्वराय दातव्यं उत्तोलनीयनैवेद्यं।

हारोणे मृते तन्मेध्यवासांसि तत्सुतानां भविष्यन्ति तानि परिधाय २९ तेऽभिषिक्ताः पदनियुक्ताश्च भविष्यन्ति। तत्सुतानां मध्ये यो जनस्तत्पदेन ३० याजकः सन् समाजावासमध्ये पवित्रस्थाने सेवितुं प्रविशेत् स तद्वासांसि सप्तदिनानि परिधास्यति।

त्वया तत् पदनियोगार्थमेषं गृहीत्वा तन्मांसे पवित्रस्थाने पक्वे हारोण- ३१ तत्सुताः समाजावासद्वारे तन्मेषमांसं डल्लकस्थान् तत्पूपांश्च भोक्ष्यन्ते। ३२ तेषां पदनियोगार्थं शौचार्थञ्च यैः प्रायश्चित्तं कृतं तानि ते भोक्ष्यन्ते किन्तु ३३ कोप्यन्यजाति र्जनस्तानि न भोक्ष्यते यस्मात् तत् सर्व्वं पवित्रं वस्तु। तत्- ३४ पदनियोगार्थमांसपूपयो र्यदि प्रातःपर्य्यन्तं किञ्चिदवशिष्टं तिष्ठति तर्हि तद् वह्निना दाहयिष्यसि तत् केनापि न भोक्ष्यते यस्मात् तत् पवित्रं वस्तु। अहं यद्यत् त्वामाज्ञापयामि तद्वत् कृत्वा त्वं हारोणं तत्सुतांश्च ३५ सप्तदिनानि पदे नियोक्ष्यसि। तेन त्वं प्रायश्चित्तार्थं प्रतिदिनं पापार्थं ३६ वृषमेकं होष्यसि वेद्यर्थं प्रायश्चित्ते कृते तां परिष्करिष्यसि पावयितुं अभिषेक्ष्यसि च। वेदिकृते सप्तदिनानि प्रायश्चित्तं कृत्वा तां पावयिष्यसि ३७ तेन वेदिरतिपवित्रा भविष्यति वेद्या च यस्य स्पर्शो भवति सोपि पवित्रो भविष्यति।

त्वं नित्यमेकवर्षीयमेषशावकद्वयं वेद्यां होष्यसि प्रतिदिनं तदेकं प्रात- ३८ रुत्स्रक्ष्यसि सन्ध्यायामन्यमुत्स्रक्ष्यसि। एकमेषशावकेन साकं हिन्पात्र- ४० चतुर्थांशेनालोडिततैलेन मिश्रितं एफापात्रदशमांशगोधूमचूर्णं पानी- यवस्त्वर्थं हिनचतुर्थांशं द्राक्षारसञ्च दास्यसि। द्वितीयं मेषवत्सं सन्ध्यायां ४१ उत्सृज्य प्रातःकर्त्तव्यानुसारात् नैवेद्येन पानीयवस्तुना च सहितं तमुत्स्र- क्ष्यसि, तेन तत् परमेश्वरान्तिके वह्निकृतसुगन्धिनैवेद्यं भविष्यति। अहं ४२ यत्र त्वया साकं संलपितुं युष्मान् साक्षात् करिष्यामि तत्र समाजावास-

द्वारान्तिके युष्माकं पुरुषपरम्परा परमेश्वरम् उद्दिश्य नित्यमित्थं होमबलिं दास्यति।

४३ तत्राहमिस्रायेल्वंशं साक्षात् करिष्यामि मन्महिम्नावासः पवित्रो ४४ भविष्यति। अहं समाजावासं वेदिञ्च पावयिष्यामि मां सेवितुं हारोणं ४५ तत्सुतांश्च पावयिष्यामि। इस्रायेल्वंशमध्ये वसन् तेषामीश्वरो भवि- ४६ ष्यामि। तेनाहमेव तेषां प्रभुः परमेश्वरस्तेषां मध्ये वस्तुं मिसर्देशात् तान् वहिरानयमिति ते ज्ञास्यन्ति तेषां प्रभुरहमेव परमेश्वरः।

---

## ३० त्रिंशोऽध्यायः।

१ धूपवेदिकथनं ११ जनगणनकाले प्रायश्चित्तकथनं १७ पित्तलीयप्रक्षालनपात्र- कथनं २२ पवित्रतैलकथनं ३४ सुगन्धिद्रव्यकथनं।

१ त्वं धूपं ज्वालयितुं शिटीम्काष्ठस्य वेदिं निर्म्मास्यसि। सा हस्तैकदीर्घा २ हस्तैकविस्तृता चतुष्कोणा हस्तद्वयोच्चा च भविष्यति तदुपरि शृङ्गाणि च ३ भविष्यन्ति। तस्याः पृष्ठं चतुःपार्श्वं शृङ्गाणि च निर्म्मलस्वर्णेन मण्डयिष्यसि ४ तच्चतुर्दिक्षु स्वर्णकर्णिकां करिष्यसि। तद्वहनदण्डयोराधारार्थं त्वं तस्य कर्णिकाधः पार्श्वयोरुभयोः कोणयोरन्तिके स्वर्णस्य द्वौ वलयाग्रकीलकौ ५ करिष्यसि, तौ दण्डौ शिटीम्काष्ठेन निर्म्माय स्वर्णेन मण्डयिष्यसि। यत्राहं ६ त्वां साक्षात् करिष्यामि तत्साक्ष्योपरिस्थपापाच्छादनसम्मुखे साक्ष्यमञ्जू- ७ षायाः समीपस्थविच्छेदवस्त्राग्रभागे तां निधास्यसि। हारोणस्तदुपरि सुगन्धिधूपं ज्वालयिष्यति प्रतिप्रभातं प्रदीपपरिष्कारणकाले तं धूपं ८ ज्वालयिष्यति। सन्ध्यायां प्रदीपज्वालनकाले च हारोणो धूपं ज्वालयिष्यति तेन युष्माकं पुरुषपरम्परां यावत् परमेश्वरसम्मुखे नित्यं धूपो ९ ज्वालयिष्यते। यूयं तदुपरीतरधूपं वा हवनीयवस्तु वान्यनैवेद्यं १० नोत्सक्ष्यथ तदुपरि पानीयनैवेद्यं न सेक्ष्यथ। वर्षमध्ये हारोण एकवारं तत्शृङ्गोपरि पापार्थप्रायश्चित्तस्य रक्तं दत्त्वा प्रायश्चित्तं करिष्यति, युष्माकं पुरुषपरम्परां यावत् वर्षमध्ये तन्निमित्तं दारैकं प्रायश्चित्तं कारिष्यते, वेदिरियं परमेश्वरस्यातिपूता।

११ परमेश्वरो मूससमिदं वाचं बभाषे, इस्रायेल्वंशस्य संख्यां ज्ञातुं तेषां १२ गणनकाले यथा कापि बाधा न जायते तदर्थं गणनकाल एकैको जनः १३ परमेश्वरान्तिके स्वस्वप्राणार्थं प्रायश्चित्तं करिष्यति। तत्र यः कश्चिद् गणितानां मध्ये पतिष्यति स पवित्रस्थानीयशेकलानुसाराद् अर्द्धशेकलं

दास्यति विंशतिगेराभिरेकशेकलं भवति तदर्द्धशेकलं परमेश्वरीयनैवेद्यं भविष्यति। विंशतिवत्सरवयस्कः तदधिकवयस्को वा यः कश्चिद् १४ गणितानां मध्यमागच्छति स परमेश्वरमुद्दिश्य तन्नैवेद्यं दास्यति। युष्माकं १५ प्राणार्थं प्रायश्चित्तं कर्त्तुं धनवान् परमेश्वरमुद्दिश्य अर्द्धशेकलाधिकं नैवेद्यं न दास्यति दरिद्रस्तन्न्यूनं न दास्यति। त्वमिस्रायेलवंशात् १६ प्रायश्चित्तीयरूप्याणि गृहीत्वा समाजावासकर्म्मार्थं निरूपयिष्यसि, तन्नैवेद्यं परमेश्वरसम्मुखे युष्माकं प्राणानां प्रायश्चित्तार्थं इस्रायेलवंशस्य स्मरणार्थञ्च भविष्यति।

परमेश्वरो मूससमवदत् त्वं प्रक्षालयितुं पित्तलेन पदयुक्तां प्रक्षालन- १७ पात्रमेकं करिष्यसि तच्च समाजावासवेद्योर्मध्ये निधाय तत्र पयो १८ दास्यसि। हारोणस्तत्सुतास्च तत्र हस्तपादान् प्रक्षालयिष्यन्ति। यदा ते २० समाजावासं प्रवेक्ष्यन्ति वा वह्निकृतै र्नैवेद्यादिभिः परमेश्वरं सेवितुं वेदिसमीपमागमिष्यन्ति तदा ते यन्न म्रियन्ते तदर्थं तोयैः स्वान् धौतान् करिष्यन्ति। इत्थं यत्ते न म्रियन्ते तदर्थं निजहस्तपादान् २१ क्षालयिष्यन्ति विधिरयं तस्य तत्सुतानाञ्च पुरुषपरम्परां यावत् स्थास्यति।

परमेश्वरो मूससमवदत् त्वं उत्तमानि सुगन्धिवस्तूनि, अर्थात् पवित्र- २२ शेकलानुसारेण पञ्चशतानि शेकलानि निर्म्मलगन्धरसान् तदर्द्धं अर्थात् २३ सार्द्धशतद्वयशेकलानि गुडत्वचः सार्द्धशतद्वयशेकलानि सुगन्धिवचाः पञ्च २४ शतशेकलानि सूक्ष्मगुडत्वचा हिनैकं जिततैलं स्वसमीपम् आनेष्यसि। एतैस्त्वं २५ मर्द्दनार्थं पवित्रतैलम् अर्थात् गन्धवणिजां क्रियया कृतं तैलं करिष्यसि तदभिषेकार्थं पवित्रं भविष्यति। तेन त्वं समाजावासं साक्ष्यमञ्जूषाञ्चा- २६ भिषेक्ष्यसि भोजनासनं तदीयं सर्व्वपात्राणि दीपवृक्षं तदीयसर्व्वपात्राणि २७ च धूपवेदिं होमवेदिं तदीयसर्व्वपात्राणि च प्रक्षालनपात्रं तत्पदञ्चा- २८ भिषेक्ष्यसि। सर्व्वाण्येतानि वस्तून्यपि त्वया पवित्री करिष्यन्ते, तेन तान्य- २९ तिपवित्राणि भविष्यन्ति तेषु च यद्वस्तुनः स्पर्शो जायते तदेव पूतं भविष्यति। त्वं हारोणं तत्सुतांश्चाभिषिच्य याजनपदेन मां सेवितुं ३० पावयिष्यसि। त्वं इस्रायेल्वंशं वदिष्यसि युष्माकं पुरुषपरम्परां यावत् ३१ मदर्थं तद् अभिषेकाय पवित्रं तैलं भविष्यति। मानुषशरीरं तेन ३२ नाभिषेक्ष्यते तन्निर्म्माणानुरूपं किमपि तैलं न करिष्यते तदेव पूतं युष्मा- कमन्तिके तत् पूतं भविष्यति। किन्तु यः कश्चित् तत्सदृशं तैलं कुर्य्यात् ३३

यश्च तस्मात् किञ्चित् नीत्वान्यजातिजनगात्रे दद्यात् स स्वलोकेभ्य उच्छिद्येत।

२४ परमेश्वरो मूससं जगाद त्वं सुगन्धिवस्तूनि गृहाण अर्थात् गुग्गुलु नखी कुन्दुरु निर्म्मलसिह्लं एतानि सुगन्धिवस्तूनि समांशानि कृत्वा

२५ गृहाण। तेन गन्धवणिजां क्रियया कृतं लवणाक्तं निर्म्मलं पूतं सुगन्धिधूपं

२६ करिष्यसि। तस्य किञ्चित् चूर्णं कृत्वा यत्राहं त्वां साक्षात् करिष्यामि तत्र अर्थात् समाजावासे साक्षिमञ्जूषासम्मुखे निधास्यसि सएव युष्माक-

२७ मतिपवित्रो भविष्यति। त्वं यं सुगन्धिधूपं करिष्यसि तन्निर्म्माणव्यवस्था-नुरूपो धूपः स्वार्थं युष्माभि र्न करिष्यते स युष्माभिः परमेश्वराय पूतो

२८ गणिष्यते। यः स्वयं घ्रातुं तत्समं धूपं कुर्य्यात् स स्वलोकेभ्य उच्छिद्येत।

---

## ३१ एकत्रिंशोऽध्यायः।

१ आवासकर्म्म कर्त्तुं वित्सलेलाहलीयावयो र्नियोजनं १२ विश्रामवारं पवित्रत्वेन मन्तुमाज्ञा १८ मूससे व्यवस्थायाः प्रस्तरद्वयदानं।

१ परमेश्वरो मूससमिदं जगाद पश्याहं यिहूदावंशीयं हूरस्य पौत्त्रं

२ ऊरेः पुत्त्रं वित्सलेलं नाम्नाहूतवान्। शिल्पकर्म्मणि नैपुण्यं अर्थात्

४ सुवर्णरूप्यपित्तलतक्षणखचनार्थमणिकर्त्तनकाष्ठतक्षणादिसर्व्वप्रकारशिल्प-

५ कर्म्म कर्त्तुं तं बुद्धिविद्याज्ञानकर्म्मकुशलत्वदायकेनेश्वरस्यात्मना पूर्णम-

६ कार्षम्। पश्य दान्वंशजाताहीषामकस्य सुतमहलीयावं तत्सहकारि-णमकार्षं तदन्येषां ज्ञानिनां हृदये ज्ञानमदां ततोहं त्वां यान्याज्ञापयं

७ तानि ते निर्म्मास्यन्ति। फलतः समाजावासं साक्ष्यमञ्जूषां तदुपरिस्थ-

८ पापाच्छादनं आवासस्य सर्व्वपात्राणि भोजनासनं तत्पात्राणि निर्म्मल-

९ दीपवृक्षं तत्पात्राणि धूपवेदिं होमवेदिं तत्पात्राणि प्रक्षालनपात्रं

१० तत्पादं याजनपदेन सेवनाय हारोणयाजकस्य तत्सुतानाञ्च सेवार्थकानि

११ पवित्रवासांस्यभिषेकार्थतैलं पूतस्थानाय सुगन्धिधूपञ्च यथा त्वामाज्ञापयं तदनुरूपं तौ निर्म्मास्यतः।

१२ ततः परमेश्वरो मूससमवदत् त्वमिस्रायेल्वंशाय कथामिमां कथय

१३ यूयं मम विश्रामदिनमवश्यं पालयिष्यथ यतः परमेश्वरोहं युष्माकं पाव-कोस्मीति ज्ञापनार्थं तदेव मम युष्मत्पुरुषपरम्परायाश्च मध्ये चिह्नं

१४ भविष्यति। अतो यूयं विश्रामदिनं पालयिष्यथ तत् युष्मभ्यं पूतं भवि-ष्यति किन्तु यस्तद् अपूतं करिष्यति स नितान्तं घानिष्यते यः प्राणी

तद्दिने कर्म्म कुर्य्यात् स स्वलोकेभ्य उच्छिद्येत। षड्दिनानि कर्म्म करि- १५
ष्यते, किन्तु सप्तमदिनं परमेश्वरस्य पूतं विश्रामदिनं, तद्विश्रामदिने
यः कर्म्म कुर्य्यात् सोऽवश्यं हन्येत। इस्रायेल्वंशा नित्यनियमार्थं १६
पुरुषपरम्परायां मन्तुं विश्रामदिनं पालयिष्यन्ति। तन्मदिस्रायेल्वंश- १७
मध्ये नित्यचिह्नरूपं भविष्यति यतः परमेश्वरः षड्दिनै नभःपृथिव्यौ
सृष्ट्वा सप्तमेह्नि विश्रम्याप्यायितवान्।

पश्चात् स तेन सार्कं कथनं समाप्य सीनयाद्रौ साक्ष्यप्रस्तरद्वयम् १८
अर्थात् ईश्वराङ्गुल्या लिखितफलकौ मूससेऽदात्।

---

# ३२ द्वात्रिंशोऽध्यायः।

१ मूससोऽसमक्षं लोकानां हारोणेन स्वर्णप्रतिमानिर्म्माणं ७ ईश्वरस्य क्रोधे मूसानिवेदनञ्च १५ प्रस्तरद्वयकरस्य मूससो ऽद्रेरवरोहणं १९ प्रस्तरद्वयभञ्जनं वत्सनाशनं २१ हारोणस्य निवेदनं २५ देवार्चकहननं ३० परमेश्वराय मूससो निवेदनं परमेश्वरोत्तरञ्च।

अद्रेरवरोहणे मूससो विलम्बं विलोक्य लोका, हारोणस्य समीपे १
मिलित्वा तमवदन् उत्तिष्ठास्माकं कृते अस्मदग्रगामिनो देवान् निर्म्माहि
यतो मिसर्देशाद् अस्मान् बहिरानयत् यो मूसास्तस्य किं जातमिति
वयं नो विद्मः। हारोणस्तानुवाच तर्हि यूयं स्वस्वजायासुतकन्यानां २
कर्णेभ्यः स्वर्णकुण्डलानि प्रमोच्य मदन्तिकमानयत। ततो लोकास्तेषां ३
कर्णेभ्यः सुवर्णकुण्डलान्यवमोच्य हारोणान्तिकम् आनिन्युः स तेषां करेभ्य- ४
स्तान्यादाय मूषया निषिच्य शिल्पास्त्रेण तक्षित्वा वत्समेकं निर्म्ममे, तदा
लोकैरवादि हे इस्रायेल् वंश तव यो देवो मिसरदेशात् त्वां बहिरान-
यत् सोयं। इति विलोक्य हारोणस्तत्सम्मुखे वेदिमेकां निर्म्ममे श्वः ५
परमेश्वरोद्देशको महामहो भविष्यतीति घोषयामास च। परेहनि ६
लोकाः प्रत्यूष उत्थाय होमबलीन् मङ्गलार्थबलींश्च ददुः ततो लोका
भोक्तुं पातुञ्चोपविविशुः ततः क्रीडितुम् उत्थिताः।

तदा परमेश्वरो मूससमुवाच त्वमवरुह्य याहि यस्मात् मिसर्- ७
देशात् त्वयानीता लोका भ्रष्टाः। अहं तान् यन्मार्गमधि समादिशं ८
तस्मात् ते तूर्णं बहिर्भूताः यतस्ते स्वार्थमेकं निषिक्तवत्सं निर्म्माय तम-
पूपुजन् तस्मै बलीन् दत्त्वा कथितवन्तश्च हे इस्रायेल्वंश तव यो देवस्त्वां
मिसरो बहिरानयत् सोयम्। परमेश्वरो मूससमपरमवदत् अहं जना- ९

१० नैतान् अपश्यं पश्येमेऽतीवाबाध्याः। तस्मात् त्वया क्षम्यतां अहं तेषां
प्रतिकूलं क्रोधं प्रज्वाल्य तान् विनाशयिष्यामि, किन्तु त्वां महाजातिं मूलं
११ करिष्यामि। ततो मूसा निजप्रभोः परमेश्वरस्य सन्निधौ विनीय कथित-
वान् हे परमेश्वर त्वं यान् स्वलोकान् महापराक्रमेण बाहुबलेन च
मिसरो देशात् बहिरानयस्तेषां प्रतिकूलं त्वया क्रोधः कुतः प्रज्वालयिष्यते?
१२ सोऽशुभाय गिरिषु तान् नाशयितुं मर्त्त्यलोकाद् दवयितुञ्च बहिरानयत्
इति मिस्रीयाः कुतो वदेयुः? भवान् प्रचण्डकोपात् परावर्त्ततां स्वलोका-
१३ नाममङ्गलकरणात् विरमतु। त्वं येषां समक्षं स्वनाम्ना शपथं कुर्व्वन्
व्योमतारका इव युष्माकं वंशं वर्द्धयिष्यामि यं देशमधि च कथितवान् तं
युष्मद्वंशेभ्यो दास्यामि ते तं सदाधिकरिष्यन्तीति कथयामासिथ तव
१४ तान् दासान् इब्राहीम्-इस्हाक्-इस्रायेलः स्मर। अतः परमेश्वरः
स्वलोकान् प्रति यां दुर्गतिं घटयितुं मतिं कृतवान् तस्मात् व्यरमत्।

१५ तदा मूसाः साक्ष्यप्रस्तरद्वयं गृहीत्वा परावृत्य गिरेरवारोहत् तयोः
१६ प्रस्तरयोरुभययोः पृष्ठयो र्लिपिरासीत्। तौ प्रस्तरफलकावीश्वरनि-
१७ र्म्मितौ तत्र खनित्वा लिपिरपि तस्य। ततो जनैरुच्चैः शब्दे कृते यिहो-
शूयस्तेषां कलरवान् श्रुत्वा मूससमवोचत् शिविरे रणनादो भवति।
१८ स उदितवान् एष जयध्वनेः शब्दो नहि पराजयध्वनेश्च शब्दो नहि
किन्तु मया गीतशब्दः श्रूयते।

१९ ततः स शिविरान्तिकं प्राप्य तं वत्सं लोकानां नृत्यञ्च ददर्श ततो
मूसाः क्रोधेन प्रज्वलितः स्वकरात् तौ प्रस्तरौ क्षिपन् गिरेर्मूले तौ
२० बभञ्ज। तैर्निर्म्मितं वत्सञ्चादाय वह्निना दाहयामास धूलिवत् पिष्ट्वा
जले विकीर्य्य इस्रायेल्वंशं पाययामास च।

२१ मूसा हारोणं जगाद त्वमेतान् यदेतत्पापं कारितवान् एते जनास्त्वां
२२ प्रति तादृशं किमकार्षुः? हारोणोऽवादीत् हे प्रभो क्रोधं मा प्रज्वालय
२३ जना इमे दुष्टत्वतत्परा इति भवता ज्ञायते। इमे मामवदन् अस्मत्कृते
अस्मदग्रगामिनो देवान् निर्म्माहि यस्मात् मिसरोऽस्मान् बहिरानयत्
२४ यो मूसास्तस्य किं जातमिति वयं न विद्मः। तदाहमुदितवान् युष्माकं
मध्ये यस्य यत्स्वर्णमस्ति स तद् विमोच्य ददातु, तदा ते मह्यं तददुः
तस्मिन् मया वह्नौ निक्षिप्ते तस्मात् वत्सोयं निरगात्।

२५ मूसा जनानां नग्नत्वं दृष्टवान् यतो हारोणस्तेषां रिपुमध्ये तान् अप-
२६ मानयितुं नग्नीचकार। तदा मूसाः शिविरद्वारे तिष्ठन् बभाषे परमेश्वर-

यत्नीयो यः स मामुपेयात् तदा लेविसन्तानास्तदन्तिके मिलिताः। स २७ तानवदत् इस्रायेलः प्रभुः परमेश्वर इति गदति युष्माकमेकैको नरः स्वखोरौ खङ्गं बद्धा मध्येशिविरम् एकस्माद् द्वाराद्न्यद्वारं यावत् यातायातं करोतु एकैको जनः स्वस्वभ्रातृमित्रसमीपवासिनो हन्तु। ततो लेवेः सन्ताना मूससो वाक्यात् तथा चक्रुः, तद्दिने लोकानां त्रिसह- २८ स्राणि विनेशुः। यतो मूसा अवदत् युष्माकमेकैको जनः स्वस्वपुत्रभ्रात्रादि २९ विपक्षः सन् अद्य परमेश्वरमुद्दिश्य स्वात्मानं पवित्रं करोतु तेन सोऽस्मिन् दिने युष्मान् आशीर्व्वदिष्यति।

परेऽहनि मूसा लोकानाचचक्षे यूयं महापापं कृतवन्त इदानीमहं ३० परमेश्वरान्तिकम् आरोहामि यदि भवेत् तर्हि युष्मत्पापस्य प्रायश्चित्तं करिष्यामि। मूसाः परमेश्वरान्तिकं प्रतिगत्यावादीत् हन्त जना एते ३१ महापापं कुर्व्वन्तः स्वार्थं स्वर्णदेवतां निर्ममिरे। यदि भवेत् तर्हि तेषां ३२ पापं क्षमस्व नो चेत् त्वल्लिखितपुस्तकात् मन्नाम कृन्तेति विनयेऽहं। परमेशो मूससं जगाद यो मत्प्रतिकूलं पापमकार्षीत् अहं स्वपुस्तकात् ३३ तन्नाम कर्त्तिष्यामि। अतो गच्छ यं देशमधि त्वां गदितवान् तं देशं ३४ लोकान् नय पश्य मद्दूतस्त्वदग्रे यास्यति किन्त्वहं दण्डदिवसे तान् दण्ड- यिष्यामि। लोका हारोणं वत्सं निरमापयन् तस्मात् परमेश्वरो ३५ लोकान् व्याजघान।

---

## ३३ त्रयस्त्रिंशोऽध्यायः।

१ जनैः सार्कं यातुं ईश्वरानिच्छा ४ जनानां दुःखं ७ शिविरबहिरावासनयनं ९ तत्रेश्वरोत्तरं १२ परमेश्वराय मूसोनिवेदनं १८ परमेश्वरपश्चाद्भागदर्शनञ्च।

ततः परमेश्वरो मूससमवादीत् गच्छाहं त्वद्वंशाय देशमिमं दास्या- १ मीति वाक्येनाहमिब्राहीम इस्हाको याकूबः समीपे यं देशमधि शपथं कृतवान् तं दुग्धमधुप्रवाहिदेशं गन्तुं मिसर्देशात् त्वयानीतजनान् इतो नय। त्वदग्रेऽहं दूतं प्रहित्य किनानीयइमोरीयहित्तीयपिरोषीयहिव्वी- २ ययिबूषीयान् दूरयिष्यामि। अहं युष्मन्मध्ये न यास्यामि यतो यूयम- ३ बाध्याः, चेदहं मार्गमध्ये युष्मान् संहरेयं।

इति दुर्व्वाक्यं श्रुत्वा लोका विलेपुः कोपि स्वशरीरेऽलङ्कारं न ४ परिदधौ। यतः परमेश्वरो मूससमुवाच त्वम् इस्रायेल्वंशान् इति ५ वद यूयमबाध्यास्चेदहमेकनिमेषेण युष्मन्मध्यं गत्वा युष्मान् संहरेयं

अतो यूयं स्वस्वदेहादाभरणानि मोचयत, पश्चात् युष्मान् प्रति यत्
६ कर्त्तव्यं तदहं विवेक्ष्यामि। इस्रायेल्वंशा आ होरेबद्रिसमीपात् स्वाभरणानि दवयामासुः।

७ ततो मूसा आवासमादाय शिविराद्बहिः शिविराद् दूरे च निदधे तन्नाम समाजावास इति चक्रे; तत्कालमारभ्य परमेश्वरान्वेषिणो
८ जनाः शिविराद्बहिः समाजावाससमीपं गच्छन्ति। ततो यदा यदा मूसा आवासान्तिकं गच्छति तदा सर्व्वे लोका उत्थाय स्वस्वदूष्यद्वारे तिष्ठन्ति यावच्च मूसा आवासं न प्रविशति तावत् ते तं समालोकन्ते।

९ मूसा यदा यदावासं प्रविशति तदा तदा मेघस्तम्भो ऽवरुह्या-
१० वासद्वारे ऽवतिष्ठते परमेश्वरो मूससा साकम् आलपति च। तत आवासद्वारे स्थितं मेघस्तम्भं दृष्ट्वा सर्व्वे लोका उत्थाय प्रत्येकशः स्वीय
११ दूष्यद्वारे तिष्ठन्तः प्रणमन्ति। मनुष्यो यथा मित्रेण समं संलपति तथा परमेश्वरः सम्मुखे तिष्ठन् मूससा साकं संलपति, ततो मूसाः शिविरं प्रत्यागच्छति, किन्तु तस्य सेवको नूनस्य पुत्रो युवा यिहोशूय आवासमध्यान्न बहिर्गच्छति।

१२ मूसाः परमेश्वरं जगाद पश्य त्वं लोकानेतान् नेतुम् मामाज्ञापयसि, किन्तु मम यं सहायं प्रेरयिष्यसि त्वया तत्परिचयो मह्यं न दत्तस्तथापि
१३ नाम्नाहं त्वां जानामि मम दृष्ट्या त्वमनुग्रहपात्रमिति कथयसि। भद्रं यदि तव दृष्ट्यानुग्रहपात्रं भवेयं तर्हि विनये यदहं त्वां ज्ञातुं शक्नोमि तव दृष्ट्यानुग्रहं प्राप्नोमि तदर्थं मां स्वमार्गं ज्ञापय, एवैव जातिस्तव
१४ लोका इति स्मर च। तदा स उक्तवान् यो ममैव वदनस्वरूपः स त्वया
१५ साकं गमिष्यति, त्वामहं विश्रामयिष्यामि। ततः स कथितवान् यदि तव वदनस्वरूपो मया साकं न गच्छति तर्हि त्वम् अस्मान् इतो मा नय।
१६ यतोऽहं तव लोकाश्च तव दृष्ट्यानुग्रहपात्राणीति केन ज्ञायते? किम् अस्माभिः सह तव गमनेन नहि? तथात्वे ऽहं तव लोकाश्च पृथिव्याः
१७ सर्व्वलोकेभ्यो विशेषलोका भवेम। परमेश्वरो मूससमवदत्, यामिमां वाचं त्वमकथयः, तामप्यवश्यं साधयिष्यामि यतस्त्वं मम दृष्ट्यानुग्रहपात्रम् अहं नाम्ना त्वां जानामि।

१८ ततः सोवदद् अहं विनये त्वं मां स्वमहिमानं दर्शय। परमेश्वरोवदद्
१९ अहं स्वसर्व्वोत्तमत्वं तव सम्मुखेन गमयिष्यामि त्वत्सम्मुखे परमेश्वरस्य नाम प्रचारयिष्यामि च; अहं यस्मिन् अनुग्रहं चिकीर्षामि तमेवानुग्र-

च्छामि यं दयितुम् इच्छामि तमेव दये। अपरमुक्तवान् मन्मुखं द्रष्टुं त्वया २०
न शक्यते मां दृष्ट्वा कोपि न जीवति। परमेश्वर उवाच पश्य ममान्तिके २१
स्थानमेकमस्ति त्वम् एतत्पर्व्वतोपरि तिष्ठ। तत्र त्वदन्तिकेन मन्महिम्नो २२
गमनकालेऽहं त्वां गिरिगह्वरे निधास्यामि मम गमनस्य शेषं यावत्
करेण त्वामाच्छादयिष्यामि। मया कर उत्तोलिते त्वं मत्पश्चाद्भागं २३
द्रक्ष्यसि किन्तु सन्मुखं कोपि द्रष्टुं न शक्नोति।

---

## ३४ चतुस्त्रिंशोऽध्यायः।

१ प्रस्तरद्वयमादाय मूससः पर्व्वतगमनं ४ परमेश्वरेण स्वनामप्रकाशनं ८ मूसोनिवेदनं १० परमेश्वरोत्तरं १८ नानाप्रकाराज्ञा २९ गिरेरवरोहणकाले मससास्यतेजःप्रकाशनञ्च।

ततः परमेश्वरो मूससमवदत् त्वं पूर्व्ववद् द्वौ प्रस्तरफलकौ खन, त्वया १
भग्नयोः प्रस्तरयो र्या या वाचो लिखिता आसन् ताः सर्व्वाः प्रस्तरयोरनयोरहं लेखिष्यामि। त्वं प्रातः सज्जमानः प्रभाते सीनयपर्व्वतमारुह्य २
तत्शृङ्गे मदन्तिकमुपस्थास्यसि। किन्तु त्वया सार्कं अपरः कोऽप्युपरि नागच्छतु एतत्कृत्स्नाद्रौ कोपि न दृश्येत गोमेषादयोऽप्येतदद्रिसम्मुखे न ३
चरेयुः।

मूसाः पूर्व्ववत् प्रस्तरद्वयं खनित्वा प्रातरुत्थाय कराभ्यां प्रस्तरद्वयं ४
गृहीत्वा परमेश्वराज्ञानुसारात् सीनयाद्र्युपरि गतवान्। परमेश्वरो ५
मेघेनावरुह्य तत्र तेन सार्कं स्थित्वा परमेश्वरस्य नाम प्रचारयामास।
परमेश्वरस्तस्य समक्षं गत्वा इदं प्राचारयत् परमेश्वरः प्रभुः परमेश्वरः ६
कृपालुरनुग्राहकश्चिरसहिष्णुश्च दयासत्याभ्यां परिपूर्णः। सहस्राणि ७
पूरुषान् प्रति दयाकारी अधर्म्माज्ञालङ्घनपापानां क्षमाकृत् किन्तु तद्दण्डकृत् तृतीयचतुर्थपुरुषान् यावत् पुत्रपौत्रान् प्रति पितृपुरुषाणां
पापफलदाता च।

ततो मूसाः शीघ्रं भूमौ पतन् तं प्रणमन् भजंश्च कथयामास हे प्रभो ८
यद्यहं तव दृष्ट्यानुग्रहं लभेयं तर्हि विनये हे मम प्रभो भवान् अस्मन्म- ९
ध्यमागच्छतु एतल्लोकेष्ववाध्येष्वप्यस्माकमधर्म्मपापे प्रमोच्य अस्मान् स्वाधिकृतानिवानुगृह्णातु।

तदा स उक्तवान् पश्याहं नियममेकं करोमि सर्व्वपृथिव्यां सर्व्वजग- १०
न्मध्ये यादृशानि कदापि नाक्रियन्त तादृगाश्चर्य्याणि कर्म्माणि तव सर्व्व-

लोकानां समक्षं करिष्यामि तेन येषां लोकानां मध्ये त्वमसि ते परमेश्वरीयां क्रियां द्रक्ष्यन्ति यस्मात् तवान्तिके यत् करिष्यामि तद् भयङ्करं।
११ अद्याहं त्वां यदाज्ञापयामि तत्र मनो निधेहि ; पश्चाहं इमोरीय-किनानीय-हित्तीय-पिरिषीय-हिव्वीय-यिवूषीयान् जनान् तव सम्मुखाद्
१२ अपसारयिष्यामि। किन्त्ववधेहि यं देशं त्वं यासि तद्देशवासिभिः सार्कं
१३ नियमं मा कार्षीः नो चेत् युष्मन्मध्ये स उन्माथरूपो भविष्यति। किन्तु त्वं तेषां वेदी भंक्ष्यसि तेषां प्रतिमा भंक्ष्यसि चैत्यवृक्षांश्च छेत्स्यसि।
१४ स्वगौरवरक्षीति नाम्ना विख्यातो यः परमेश्वरः सएव स्वगौरवं रक्षति
१५ तस्मात् त्वमन्यदेवं न प्रणंस्यसि। नो चेत् तद्देशवासिभिः सह त्वया नियमे कृते यदा ते स्वदेवैः सार्कं व्यभिचरन्ति देवेभ्यो वलिं ददति तदा केन-
१६ चिन्निमन्त्रितस्त्वं वलिं भक्षिष्यसि स्वपुत्राणां कृते तेषां कन्या ग्रहीष्यसि स्वदेवैः सार्कं व्यभिचरन्त्यस्तेषां कन्यास्तव सुतान् स्वदेवैः सार्कं व्यभि-
१७ चारयिष्यन्ति। त्वं स्वार्थं निषिक्तां कामपि प्रतिमां मा कार्षीः।

१८ त्वं किण्वशून्यपूपानां महं पालयिष्यसि आवीव्मासस्य यदा यत् कर्त्तुं आज्ञापयं तद्वत् सप्त दिनानि किण्वशून्यपूपान् खादिष्यसि, यत-
१९ स्तदावीव्मासे त्वं मिसर्देशाद् वहिरागमः। सर्व्वे प्रथमजाताः पुत्रा
२० गोमेषपुंवत्साश्च मम। किन्तु गर्द्दभवत्सं मेषवत्समूल्येन मोचयिष्यसि यदि न मोचयसि तर्हि तस्य गलं भंक्ष्यसि त्वदीयवंशप्रथमजान् सर्व्वान् सुतान् मोचयिष्यसि। कोपि रिक्तहस्तो मत्सम्मुखं नोपतिष्ठेत्।

२१ त्वं षड्दिनानि कर्म्म करिष्यसि किन्तु सप्तमे दिने विश्रमिष्यसि कर्षणशस्यकर्त्तनकालयोरपि विश्रमिष्यसि।

२२ त्वं सप्ताहमहम् अर्थात् गोधूमसंग्रहणस्य प्रथमफलमहं, तथा वर्षान्त्यभागे फलसंग्रहणस्य महं करिष्यसि।

२३ युष्माकं तावन्तः पुमांसो प्रति वर्षम् इस्रायेलीश्वरप्रभुपरमेश्वरस्य
२४ साक्षात् त्रिरुपस्थास्यन्ति। अहं त्वत्सम्मुखादन्यजातीं र्दवयिष्यामि त्वत्सीमां विस्तारयिष्यामि वर्षमध्ये त्रिः स्वप्रभोः परमेश्वरस्य सम्मुखं उपस्थातुं त्वयि गते त्वद्देशं प्रति कोपि न लोभं करिष्यति।

२५ त्वं किण्वेन समं वले रक्तं नोत्सक्ष्यसि निस्तारमहीयं वस्तु
२६ प्रातर्यावत् केनापि न रक्षिष्यते। भूम्याः प्रथमजातफलानि स्वप्रभुपरमेश्वरस्य गृहमानेष्यसि छागवत्समांसं तस्य मातृदुग्धेन समं न पक्ष्यसि।

२७ परमेश्वरो मूससमवदत् त्वमेतानि वचनानि लिख यत एतद्वचना-

नुसारात् त्वया इस्रायेल्लोकैश्च साकं मया नियमो निरनायि। मूसाः २८ परमेश्वरेण साकं तत्र चत्वारिंशत् दिवारात्रीरन्नं न भुक्त्वा तोयं न पीत्वा तस्थौ स प्रस्तरयो र्नियमवाक्यानि दशाज्ञा लिलेख।

पश्चात् सीनयगिरे र्मूससोऽवरोहणकाले स साक्षिप्रस्तरकरः सन् २९ गिरेरवरुरोह किन्तु परमेश्वरेण समं कथाकथनकाले स्वास्यं दीप्तिमद्भूदिति मूसा न विवेद। यदा हारोण इस्रायेलः सन्तानाश्च मूससं ३० ददृशुः, तदा तदास्यचर्म्म दीप्तिमदासीत् तेन ते तदन्तिकं यातुं विभ्युः। किन्तु मूससा तेष्वाहूतेषु हारोणः समाजाध्यक्षाश्च तदन्तिकं प्रत्यागताः ३१ ततो मूसास्तैः समं समलपत्। अपरम् इस्रायेलः सर्व्वेषु वंशेषु तद- ३२ न्तिकं गतेषु स सीनयाद्रौ परमेश्वरोक्ताज्ञास्तेभ्यो ददौ। तैः साकं ३३ मूससः संलपनस्य समाप्तौ सत्यां स स्वमुखमाच्छादयत्। तत्काल- ३४ मारभ्य स परमेश्वरेण साकं कथां कथयितुं प्रविश्य वहिरागमनपर्य्यन्तं तद्वस्त्रं मोचयति वहिरागत्य परमेश्वरस्य सर्व्वा आज्ञा इस्रायेल्वंशं वदति च। तेन मूसस आस्यचर्म्म दीप्तिमदभूदितीस्रायेल्वंशास्तस्यास्यं ३५ प्रति दृक्पातं कृत्वा पश्यन्ति ततो मूसाः परमेश्वरेण साकं संलपितुं यावदन्त र्न गच्छति तावत् स्वास्यं वाससा पुनराच्छादयति।

---

## ३५ पञ्चत्रिंशोऽध्यायः।

१ विश्रामवारकथनं ४ दूष्याय देयं वस्तु २० देयवस्तु दातुं जनानां प्रवृत्तिः ३० तत्कर्म्म कर्त्तुं वित्सलेलाहलीयावयो र्नियोजनं।

ततो मूसा इस्रायेलीयवंशानां कृत्स्नसमाजं मेलयित्वा जगाद, १ परमेश्वर एतानि वाक्यानि पालयितुं युष्मानादिशत्। यूयं षड्दिनानि २ कर्म्म करिष्यथ किन्तु सप्तमं दिनं युष्माकं पूतं परमेश्वरोद्देश्यं विश्रामदिनञ्च भविष्यति तद्दिने यः कश्चित् कर्म्म करिष्यति स घानिष्यते। ततो यूयं विश्रामदिने स्वस्ववासस्थाने वह्निं न ज्वालयिष्यथ। ३

मूसा इस्रायेल्वंशानां सर्व्वसमाजं पुनरवादीत् परमेश्वर इत्या- ४ दिशत्। यूयं परमेश्वराय स्वतो नैवेद्यं संगृह्णीत तद् दातुं य एषिष्यति ५ स परमेश्वराय स्वर्णं रूप्यं पित्तलं नीलधूम्ररक्तवर्णसूक्ष्मवस्त्राणि छागलो- ६ मानि रक्तीकृतमेषचर्म्माणि तहशचर्म्माणि शिटीम्काष्ठानि दीपार्थतैलं ७ अभिषेकार्थतैलार्थं सुगन्धिधूपार्थञ्च गन्धद्रव्याणि एफोद्वक्षःपद्यर्थं हरि- ९ न्मण्यादयः खचनीयमणय एतानि निवेदनीयानि वस्तून्यानेष्यति। युष्माकं १०

सर्व्वे विज्ञजना आगत्य परमेश्वरेणाज्ञापितानि सर्व्ववस्तूनि निर्म्मान्तु,
११ अर्थत आवासतद्दूष्याच्छादनग्रन्थिफलकवहनदण्डस्तम्भपदाधारा मञ्जू-
१२ षातद्वहनदण्डपापाच्छादनविच्छेदवसनानि भोजनासनतद्वहनदण्डना-
१४ नापात्रदर्शनपूपा दीप्त्यर्थदीपवृक्षतत्पात्रदीपदीपार्थतैलानि धूपवे-
१५ दितद्वहनदण्डावभिषेकार्थतैलसुगन्धिधूपावासप्रवेशद्वाराच्छादनवस्त्राणि
१६ होमवेदितत्पित्तलजालवहनदण्डनानापात्राणि प्रक्षालनपात्रतत्पादौ
१७ प्राङ्गणयवनिकातत्स्तम्भपदाधाराः प्राङ्गणद्वाराच्छादनवसनमावासप्राङ्-
१८ गणयो रज्जुकीलाः पवित्रस्थानीयसेवार्थवस्त्राणि चार्थतो हारोणया-
१९ जकार्थपूतवस्त्राणि याजनपदसेवार्थतत्सुतवासांसि च सर्व्वाण्येतानि तैः
क्रियन्तां।

२० अनन्तरं इस्रायेल्वंशानां समाजस्थाः सर्व्वे लोका मूससः सम्मुखात्
२१ प्रतस्थिरे। ततो येषां मनःसु प्रवृत्तिवाञ्छे अभूतां ते समाजावासस्य
निर्म्माणार्थं तत्सम्बन्धीयेश्वरसेवार्थं पवित्रवस्त्रार्थञ्च परमेश्वराय नैवे-
२२ द्यम् आनिन्युः। पुरुषस्त्रीणां यति प्रवृत्तमनस आसन् ते सर्व्वे समागत्य
वलयकुण्डलाङ्गुरीयकहारान् स्वर्णालङ्कारान् आनिन्युः ये परमेश्वराय
२३ नैवेद्यमानिन्युस्ते सर्व्वे स्वर्णमयं नैवेद्यं निवेदयामासुः। येषां नीलधूम्र-
रक्तवर्णसूक्ष्मवस्त्राणि छागलोमानि रक्तीकृतमेषचर्म्माणि तहशचर्म्माणि
२४ चासन् ते सर्व्वे तान्यानिन्युः। येन रूप्यपित्तलोपहार आनीतः स पर-
मेश्वराय तं निवेदयामास, यस्य चान्तिके शिटीम्काष्ठमासीत् स
२५ सेवनकर्म्मार्थं तदानीतवान्। बुद्धिमत्यो नार्य्यः स्वकरैः सूत्राणि निर्म्माय
२६ नीलधूम्ररक्तवर्णसूत्राणि सूक्ष्मवासांसि चानिन्युः। प्रवृत्तमनसो बुद्धिमत्यः
२७ स्त्रियश्छागलोम्ना सूत्राणि चक्रुः। एफोदो वक्षःपट्टस्य कृते ऽध्यक्षा
२८ हरिन्मण्यादीन् खचनार्थमणीन् दीपार्थमभिषेकतैलार्थं सुगन्धिधूपार्थञ्च
२९ गन्धद्रव्यतैले समानिन्युः। इस्रायेलो वंशा इच्छातः परमेश्वरमुद्दिश्य
नैवेद्यम् आनिन्युः फलतः परमेश्वरो मूसोद्वारा यद्यत् कर्त्तुमादिदेश
तत्सर्व्वेभ्यः कर्म्मभ्यो यस्य यस्य पुरुषस्य स्त्रिया वा मनोवाञ्छाभूत् ते
नैवेद्यम् आनिन्युः।

३० मूसा इस्रायेल्वंशं पुनरवादीत् पश्यत यिहूदावंशीयहूरस्य पौत्रम्
३१ ऊरेः पुत्रं वित्सलेलं परमेश्वरो नाम्नाकृत। विद्यया बुद्ध्या ज्ञानेन
३२ नानाशिल्पकर्म चित्रकर्म स्वर्णरूप्यपित्तलानां खननं खचनार्थमणिखननं
३३ नानाशिल्पार्थं काष्ठखननञ्चैतानि कर्माणि कर्त्तुम् ईश्वरीयात्मना तं पूर-

यामास। एतानि शिल्पयितुं तस्य दानवंशीयाहीषामकस्य सुताहली- ३४
यावस्यान्तःकरणं प्रावर्त्तयत्। खनितुं शिल्पकर्म च कर्त्तुं नीलधूम्ररक्त- ३५
वर्णसूक्ष्मसूत्रैः सूचिकर्म कर्त्तुं तन्तुवायस्य कर्म कर्त्तुं तदन्यशिल्पकर्म
चित्रकर्म च कर्त्तुं तेषामन्तःकरणानि विद्यया पर्य्यपूरयत्।

---

## ३६ षट्त्रिंशोऽध्यायः।

१ कर्म्मकर्त्तां कृतद्रव्यसमर्पणं ४ अन्यकर्म्म कर्त्तुं निवारणं ८ किरूबो यवनिका-
कथनं १४ छागलोमीययवनिकाकथनं २० फलककथनं ३१ अर्गलकथनं ३५
विच्छेदवासःकथनं ३७ दूष्यद्वाराच्छादनवसनकथनञ्च।

अनन्तरं परमेश्वरस्य सर्व्वाज्ञानुसारेण पवित्रस्थानस्य सेवनकर्म कर्त्तुं १
येभ्यः परमेश्वरो विद्याबुद्धी अदात् ते विल्सलेलाहलीयावादयः सर्व्वे
सद्विवेचका जना परमेश्वरस्य सर्व्वं कर्म कर्त्तुम् आरेभिरे। मूसा वित्- २
सलेलाहलीयावौ परमेश्वराद् अन्तःकरणप्राप्तविद्यान् जनान् येषाञ्च कर्म
करणायागन्तुं प्रवृत्ति र्जाता तांश्च सर्व्वान् आकृत। पूतस्थानस्य सेवार्थं ३
तन्निर्म्माणार्थञ्च इस्रायेल्वंशा यानि वस्तून्यानयन् तानि ते मूससोऽगृह्णन्,
तदा लोकैः प्रतिप्रभातं तदन्तिकं स्वेच्छया तदधिकानि द्रव्याण्यानीतानि।

अपरं पूतस्थानस्य सर्व्वकर्मकारिणो विज्ञलोकाः स्वस्वकर्म्मत आगत्य ४
मूससमवदन्, परमेश्वरो यद्यत् निर्मातुम् आदिशत् ततोधिकानि ५
सेवार्थद्रव्याणि लोकैरानीयन्ते। ततो मूसा आदिश्य शिविरस्य सर्व्वत्र ६
घोषयामास पुमान् स्त्री च पूतस्थानार्थं निवेदनीयं वस्तु पुन र्नासादयेत्
ततो लोका आनेतुं न्यवर्त्तन्त। यतः सर्व्वकर्मकरणाय प्रचुराणि ततोऽधि- ७
कानि च वस्तूनि तैरानीतानि।

कर्मकारिविज्ञा जना वर्त्तितसूक्ष्मसूत्रै र्नीलधूम्ररक्तवर्णसूत्रैश्च ८
आवासस्य दश यवनिकाश्चक्रुस्तत्र किरूबाकृतिशिल्पकर्म चक्रुः। प्रति- ९
यवनिकावस्त्रं अष्टाविंशहस्तदैर्घ्यं चतुर्हस्तविस्तारं सर्व्वाण्येकपरिमा-
णान्यासन्। तासां पञ्च यवनिका योजयामास तदन्याः पञ्च यवनिकाश्च १०
योजयामास। संयोक्तव्ययोः शेषयवनिकयोरेकस्या अन्ते नीलसूत्रपुटि- ११
काश्चकार, तद्वत् संयोक्तव्ययोः शेषयवनिकयो द्वितीयाया अन्तेऽपि
चकार। प्रथमयवनिकायां पञ्चाशत् पुटिकाश्चकार, संयोक्तव्यद्वितीय- १२
यवनिकाया अन्तेपि पञ्चाशत् पुटिकाश्चकार ताः पुटिकाः समवर्त्तिन्यः।

१३ ततः स स्वर्णस्य पञ्चाशत् ग्रन्थीन् निर्म्माय ते यवनिके समयोजयत् तेनैक आवासोभूत्।

१४ आवासोर्द्धमाच्छादयितुं छागरोम्नामेकादश यवनिकाश्चकार तासां
१५ एकैकयवनिका त्रिंशद्धस्तदैर्घ्या चतुर्हस्तविस्तृता ता एकादश यवनिकाः
१६ समपरिमाणा आसन्। स पञ्चयवनिकाः पृथकत्वेन षड्यवनिकाश्च
१७ पृथक्त्वेन समयोजयत्। संयोक्तव्ययोः शेषयवनिकयोरेकस्या अन्ते पञ्चाशत् सूत्रपुटिकाश्चकार तद्वत् संयोक्तव्यद्वितीययवनिकाया अन्तेऽपि
१८ पञ्चाशत् पुटिकाश्चकार। संयोज्य दूष्यमेकं कर्त्तुं पञ्चाशत् पित्तलग्रन्थीन्
१९ चकार। अपरं स रक्तीकृतमेषचर्म्मभि दूष्याच्छादनमेकं तदुपरि तहश्-चर्म्मभिरन्यदाच्छादनञ्च कृतवान्।

२० ततः स शिटीम्काष्ठेन आवासस्य दण्डायमानफलकानि निर्म्ममे।
२१ एकैकं फलकं दशहस्तदीर्घं सार्द्धहस्तविस्तृतं। प्रतिफलकं परस्परं सम-
२२ दूरे द्वौ द्वौ पादावास्ताम् इत्थं स चावासाय सर्व्वफलकानि निर्म्ममे। स
२४ दक्षिणदिक्स्थदक्षिणपार्श्वाय विंशतिफलकानि निर्म्ममे। तेषां विंशति-फलकानामधश्चत्वारिंशत् रूप्यपदाधारान् कृतवान् सर्व्वफलकाधो द्वयोर्द्वयोः पदयोः कृते द्वौ द्वौ पदाधारौ तदन्यफलकाधो द्वयो द्वयोः
२५ पदयोः कृते द्वौ द्वौ पदाधारौ चकार। आवासान्यपार्श्वार्थम् अर्थात्
२६ उत्तरपार्श्वार्थं विंशतिफलकानि निर्म्ममे। तेषां चत्वारिंशत् रूप्यपदा-धारा अर्थात् प्रतिफलकाधो द्वौ द्वौ पदाधारौ तदन्यफलकाधो द्वौ द्वौ
२७ पदाधारौ चकार। आवासपश्चिमपार्श्वार्थं षट् फलकानि चकार।
२८ आवासपश्चात् पार्श्वकोणद्वयार्थं द्वे द्वे फलके चकार। तयोरधोभागौ
२९ संयुक्तौ, तद्वत् ते शिरःस्थितं प्रथमवलयं यावत् संयुक्ते, द्वयोः कोणयो-
३० रिदं तेन कृतं। ततोऽष्टौ फलकानि, एकैकफलकाधो द्वौ द्वौ पदाधारौ, इत्थं रौप्याः षोडश पदाधारा आसन्।

३१ ततः स शिटीम्काष्ठेनार्गलान् निर्म्ममे आवासैकैकपार्श्वफलकेषु
३२ पञ्चार्गलान् अन्यपार्श्वफलकेषु च पञ्चार्गलान् पश्चिमदिक्स्थपश्चात्पार्श्वस्य
३३ फलकेषु पञ्चार्गलान् ददौ। फलकानामेकस्मादन्ततोन्यदिगन्तं यावत्
३४ मध्यवर्त्त्यर्गलं प्रवेशयामास। स सर्व्वफलकानि स्वर्णेनामण्डयत् अर्गल-स्थानाय स्वर्णवलयान् निर्म्मायार्गलानपि स्वर्णेनामण्डयत्।

३५ ततः परं स नीलधूम्ररक्तवर्त्तितसूत्रै निर्म्मितं किरूवाकृतिविचित्रितम्
३६ एकं विच्छेदवस्त्रं चकार। तदर्थं शिटीम्काष्ठस्य चतुरः स्तम्भान् कृत्वा

तान् स्वर्णैरमण्डयत् तदर्थं स्वर्णमयान् कीलकान् चकार रूप्येण तेषां चतुरः पदाधारान् कृतवान्।

स आवासद्वारार्थं नीलधूम्ररक्तवर्त्तितसूत्रैः सूचिकर्म्मवत् एकमाच्छादनवस्त्रं निर्म्ममे। तस्य पञ्च स्तम्भान् कीलकांश्च चकार तेषां मूर्द्धः शलाकाश्च स्वर्णै र्मण्डयामास किन्तु तेषां पञ्च पदाधारान् पित्तलेन चकार। २७ २८

---

## ३७ सप्तत्रिंशोऽध्यायः।

१ मञ्जूषाकथनं ६ पापाच्छादनकिरूवकथनं १० भोजनासनपात्रयोः कथनं १७ दीपवृक्षप्रदीपानां कथनं २५ धूपवेदिकथनं २९ पवित्रतैलकथनञ्च।

वितसलेल् शिटीम्काष्ठेन सार्द्धद्विहस्तदैर्घ्यां सार्द्धहस्तविस्तारां सार्द्धहस्तोच्चां मञ्जूषां निर्म्माय तदन्तर्वहिश्च निर्म्मलस्वर्णै र्मण्डयामास तच्चतुर्दिक्षु स्वर्णकर्णिकां निर्म्ममे। चतुरः स्वर्णवलयान् निषिच्य तच्चतुर्षु कोणेषु निदधे तदेकपार्श्वे द्वौ वलयौ तदन्यपार्श्वे च द्वौ वलयौ निदधे। शिटीमकाष्ठीयौ वहनदण्डौ कृत्वा तौ स्वर्णेन मण्डयामास। मञ्जूषां वोढुं मञ्जूषापार्श्वस्थवलयेषु तौ वहनदण्डौ प्रवेशयामास। १ २ ३ ४ ५

स निर्म्मलस्वर्णेन सार्द्धद्विहस्तदैर्घ्यं सार्द्धहस्तविस्तारम् पापाच्छादनं निर्म्ममे। एकखण्डस्वर्णम् आहृत्य तदाच्छादनान्तयो र्द्वौ किरूवौ निर्म्ममे। एकस्मिन् प्रान्ते किरूवैकं, अन्यस्मिन् प्रान्ते किरूवैकं निहितवान्, आच्छादनस्य प्रान्तद्वये तत्संयुक्तौ द्वौ किरूवौ निर्म्ममे। तौ किरूवौ पक्षान् ऊर्द्धं विस्तार्य्य तत्पक्षैराच्छादनमाच्छादयामासतुः परस्परं सम्मुखं कारयित्वा पापाच्छादनं प्रति मुखे निदधे। ६ ७ ८ ९

स शिटीम्काष्ठेन द्विहस्तदीर्घं हस्तैकविस्तृतं सार्द्धहस्तोच्चमेकं भोजनासनं निर्म्ममे। तन्निर्म्मलस्वर्णेन मण्डितवान् तच्चतुर्द्दिक्षु स्वर्णकर्णिकां चकार। तदर्थं चतुर्दिक्षु चतुरङ्गुलपरिमितं पार्श्वकाष्ठं चकार तत्पार्श्वकाष्ठस्य चतुर्दिक्षु स्वर्णकर्णिकां कृतवान्। तदर्थं स्वर्णस्य चतुरो वलयान् चकार तस्य चतुर्णां पादानां चतुष्कोणेषु वलयान् बबन्ध, आसनवहनदण्डाधारार्थं तान् पार्श्वकाष्ठस्य समीपे बबन्ध। भोजनासनं वोढुं शिटीमकाष्ठेन वहनदण्डौ कृत्वा तौ स्वर्णेन मण्डितवान्। आसनोपरिपात्राण्यर्पतस्तस्य पात्राणि चमसान् गोलाधारान् निषेक्तुं पात्राणि निर्म्मलस्वर्णेन निर्म्ममे। १० ११ १२ १३ १४ १५ १६

१७　स निर्म्मलं स्वर्णमाहृत्य दीपवृक्षं निर्म्ममे तस्य प्रकाण्डः शाखा वर्त्त-
१८ लाधाराः कलिकाः पुष्पाणि तदंशा अभवन्। दीपवृक्षस्यैकतः शाखात्रयं
१९ तदन्यतश्च शाखात्रयम् एताः षट् शाखास्तत्पार्श्वयो र्निरगमन्। एकशा-
खायां वादामपुष्पाकृतयस्त्रयो गोलाधारा एका कलिका पुष्पञ्चैकं तदन्य-
शाखायां वादामपुष्पाकृतयस्त्रयो गोलाधारा एका कलिका पुष्पञ्चैकं,
२० दीपवृक्षात् निर्गतासु षट्शाखास्वेतानि बभूवुः। दीपवृक्षस्य वादाम-
२१ पुष्पाकृतयश्चत्वारो गोलाधारास्तत्कलिकाः पुष्पाणि चासन्। तस्मात् याः
षट्शाखा निरगमन् तासां द्वयोः शाखयोरध एका कलिका अन्य-
शाखयोरध एका कलिका तदन्यशाखयोरध एका कलिका चासीत्।
२२ एताः कलिकाः शाखाश्च तदंशा आसन् कृत्स्नो दीपवृक्षो निर्म्मलस्वर्ण-
२३ निर्म्मितः। तस्य सप्त प्रदीपाः कर्त्तर्य्यस्तत्पात्राणि च निर्म्मलस्वर्णनिर्म्मि-
२४ तानि। स एकतालान्तमितस्वर्णेन तं तदीयपात्राणि च निर्म्ममे।

२५　स शिटीमकाष्ठेन हस्तैकदैर्घ्यां हस्तैकविस्तारां हस्तैकोच्चां चतुष्कोणां
२६ धूपवेदिं निर्म्ममे तत्र शृङ्गाणि चक्रे। तामर्थतस्तदूर्द्ध्वभूमिं तच्चतु-
ष्पार्श्वान् तच्छृङ्गाणि निर्म्मलस्वर्णेन मण्डितवान् तच्चतुर्दिक्षु स्वर्णकर्णिकां
२७ निर्म्ममे। तद्वहनदण्डस्थापनाय कर्णिकाधो द्वयोः पार्श्वयोः कोणयोः
२८ स्वर्णवलयद्वयं निदधे। शिटीमकाष्ठेन वहनदण्डौ चक्रे स्वर्णेन च
मण्डितवान्।

२९　अपरं स अभिषेकार्थं पूततैलं गन्धवणिजां क्रियानुसारात् शुचिं
सुगन्धिधूपञ्च चक्रे।

---

## ३८ अष्टत्रिंशोऽध्यायः।

१ होमवेदिकथनं ८ पित्तलस्य प्रक्षालनपात्रकथनं ९ प्राङ्गणकथनं २१ निवेदित-
मुख्यद्रव्यकथनञ्च।

१　स शिटीम्काष्ठेन पञ्चहस्तदैर्घ्यां पञ्चहस्तविस्तारां हस्तत्रयोच्चां चतु-
२ ष्कोणां होमवेदिं निर्म्ममे। तस्याश्चतुर्षु कोणेषु शृङ्गाणि निर्म्ममे शृङ्गाणि
३ तदंशा आसन् तां पित्तलेन मण्डितवान्। अपरं वेद्याः सर्व्वपात्रं अर्थात्
४ कटाहदर्वीचुल्लीत्रिशूलकुण्डानि च पित्तलेन निर्म्ममे। वेद्या वारण्यधो
५ मध्यं यावत् जालवत् कर्म्मणा पित्तलस्य जालं निर्म्ममे। वहनदण्डौ
६ निधातुं पित्तलीयजालस्य चतुर्षु कोणेषु चतुरो वलयान् निदधे।
७ शिटीम्काष्ठेन वहनदण्डौ निर्म्माय पित्तलेन मण्डयामास। वेदिं वोढुं

तत्पार्श्वयोस्तौ वहनदण्डौ बलयेषु निदधे, फलकै र्वेदिम् अन्तःशून्यां
निर्म्ममे।

या योषितो समाजावासद्वारान्तिके सिषेविरे तासां पित्तलनिर्म्मितै ८
र्दर्पणैः स प्रक्षालनपात्रं तत्पादञ्च निर्म्ममे।

स प्राङ्गणं चक्रे दक्षिणदिशि प्राङ्गणस्य दक्षिणपार्श्वीययवनिका वर्त्तित- ९
सूत्रेण शतहस्तास्तासां विंशतिस्तम्भान् पित्तलस्य विंशतिपदाधारान् १०
रूप्यस्य स्तम्भकीलकशलाकाश्च चक्रे। उत्तरदिशि यवनिकाः शतहस्ता- ११
स्तासां विंशतिस्तम्भान् पित्तलस्य विंशतिपदाधारान् रूप्यस्य शलाकाश्च
चक्रे। पश्चिमाया यवनिकाः पञ्चाशत्हस्ता दश स्तम्भान् दश पदाधारान् १२
रूप्यस्य शलाकाश्च चक्रे। पूर्व्वस्यां पूर्व्वपार्श्वस्य पञ्चाशद्धस्तदैर्घ्यं; प्राङ्गण- १३
द्वारस्यैकदिशोऽर्थं पञ्चदशहस्ता यवनिका स्तम्भत्रयं त्रीन् पदाधारान् १४
द्वारस्यान्यदिशोऽर्थञ्च पञ्चदशहस्ता यवनिका त्रीन् स्तम्भान् त्रीन् पदा- १५
धारान् निर्म्ममे। प्राङ्गणचतुर्दिशां यवनिका वर्त्तितसूत्रनिर्म्मिताः। १६
स्तम्भानां पदाधाराः पित्तलमयाः स्तम्भानां कीलकशलाका रूप्यमयाः १७
स्तम्भमस्तका रूप्यमण्डिताः प्राङ्गणस्य सर्व्वे स्तम्भा रूप्यशलाकाभिः
संयुक्ताः। प्राङ्गणद्वारस्याच्छादनवस्त्रं नीलधूम्ररक्तवर्त्तितसूत्रैः सूचि- १८
कर्म्मणा चकार तस्य दीर्घता विंशतिहस्ता, विस्तारो ऽर्थत उच्चत्वं
प्राङ्गणयवनिकावत् पञ्च हस्ताः। तस्य चतुरः स्तम्भान् पित्तलस्य चतुरः १९
पदाधारान् रूप्यकीलकान् रूप्यमण्डितमूर्द्धो रूप्यशलाकाश्च चक्रे।
आवासस्य प्राङ्गणचतुर्दिक्षु सर्व्वकीलान् पित्तलस्य चक्रे। २०

आवासस्यार्थात् साक्षिरूपावासस्य वस्तून्येतानि लेवीयलोकानां २१
सेवार्थं मूसस आज्ञानुसारात् हारोणयाजकस्य सुतेथामरेण गणितानि।
परमेश्वरो मूससं यदादिशत् तदनुसारेण यिहूदावंशजातो हूरस्य २२
पौत्र ऊरेः पुत्रो बित्सलेल् तानि निर्म्ममे। नीलधूम्ररक्तवर्त्तितसूत्रैः २३
शिल्पकारी खनको विज्ञतन्तुवायो यो दान्वंशजातोऽहीषामकस्य सुत
अहलीयावः स तत्सहकृद् आसीत्। पवित्रावासस्य सर्व्वत्र सर्व्व- २४
कर्म्मणि स्वर्णान्येतानि व्ययितानि अर्थात् पूतावासस्य शेकलानुसारात्
ऊनत्रिंशत् तालान्ताः सप्तशतानि त्रिंशत् शेकलानि परिमितानि
नैवेद्यस्य सर्व्वस्वर्णानि। तथा पवित्रावासस्य शेकलानुसारात् शतं २५
तालान्ताः सहस्रं सप्तशतानि पञ्चसप्तति शेकलानि च परिमितानि
समाजस्य गणितलोकानां रूप्याणि। विंशतिवर्षवयस्कास्तदधिकवयस्का २६

वा ये सार्द्धपञ्चशताधिकसहस्रत्रयाधिकषट्लक्ष सङ्ख्यका जनास्तेषामेकैकेन जनेनैकैका बेका अर्थात् पवित्रावासस्य शेकलानुसारात् अर्द्धं
२७ अर्द्धं शेकलं दातव्यं। तैः शततालान्तरूप्यैः पूतावासस्य विच्छेदकवस्त्रस्य च पदाधारा निर्म्मिताः शतपदाधारकृते शततालान्ता अर्थात् एकैकपदा-
२८ धारकृत एकैकतालान्तो व्ययितः। अवशिष्टैः पञ्चसप्ततिसप्तशताधिक-सहस्रशेकलरूप्यैः स स्तम्भकीलकान् निर्म्ममे स्तम्भमूर्द्धो मण्डितवान् तान्
२९ शलाकाभिः समयोजयच्च। नैवेद्यस्य पित्तलाः सप्ततितालान्ताश्चतुः-
३० शताधिकसहस्रद्वयशेकलान्यासन्। तैः समाजावासस्य द्वारपदाधारास्तस्य पित्तलमयी वेदिस्तस्याः पित्तलमयं जालं वेद्याः सर्व्वपात्राणि च निर्म्मि-
३१ तानि। प्राङ्गणस्य चतुर्द्दिशः पदाधारान् प्राङ्गणद्वारपदाधारान् आवासस्य सर्व्वकीलान् प्राङ्गणचतुर्द्दिशः सर्व्वकीलांश्च निर्म्ममे।

---

## ३९ ऊनचत्वारिंशोऽध्यायः।

१ पवित्रवस्त्राणामेफोदस्य कथनं ८ वक्षःपटीकथनं २२ एफोदो वस्त्रकथनं २७ उष्णीषादिकथनं ३० पवित्रमुकुटपत्रकथनं ३२ आवासस्य सर्व्वकर्म्मसमापनञ्च।

१ अपरं पूतस्थानसेवार्थं लोकै र्नीलधूम्ररक्तसूत्रै र्वासांसि कृतानि विशेषतो मूससं प्रति परमेश्वरस्य निदेशानुसाराद् हारोणार्थं पूतवा-
२ सांसि निर्म्मितानि। स्वर्णेन नीलधूम्ररक्तवर्त्तितसूत्रैश्च तैरेफोद् निर्म्ममे।
३ स्वर्णमाहत्य पत्रं कृत्वा विचित्रकर्म्मणा नीलधूम्ररक्तसूक्ष्मवस्त्रस्य मध्ये
४ वातुं सूत्राणि कृतानि। एफोदो योजनाय तैः स्कन्धपट्यौ कृते, तयोः
५ प्रान्तद्वयेन तत् समयोजि। मूससं प्रति परमेश्वराज्ञानुसारात् एफोद उपरिस्थं विचित्रकटिबन्धनं तत्कर्म्मानुसारात् स्वर्णेन नीलधूम्ररक्तवर्त्ति-
६ तसूत्रैश्च निर्म्मितं। ते खनितमुद्रावत् इस्रायेल्वंशानां नामभिः खनित-
७ हरिन्मणी स्वर्णस्थाल्यो र्बबन्धुः। एफोदः स्कन्धपट्योरुपरि तौ निवेशयामासुः मूससं प्रति परमेश्वराज्ञानुसाराद् इस्रायेल्वंशस्य स्मरणार्थं प्रस्तरावेतावभूतां।

८ एफोद्वत् स स्वर्णेन नीलधूम्ररक्तवर्त्तितसूत्रैश्च विचित्रकर्म्मणा वक्षः-
९ पटीं निर्म्ममे। सा चतुरस्रासीत् ताञ्च ते द्विगुणीकृत्य दैर्घ्ये विस्तारे च
१० प्रादेशप्रमाणां चक्रुः। चतुःपंक्तिमणिभिस्तां खचितवन्तः प्रथमपंक्तौ चुनि-
११ पद्मरागताम्रमणय आसन्। द्वितीयायां पंक्तौ मरकतनीलकान्तहीर-
१२ काणि ददौ। तृतीयायां पंक्तौ लशुनीयपिस्मकटाहेला ददौ। चतुर्थपंक्तौ

गोदन्तवैदूर्य्यसूर्य्यकान्तान् ददौ स्वर्णस्थाल्यो मणिभिरेतैः खचिताः। इमे १३
प्रस्तरा इस्रायेल्वंशार्थं तेषां नामानुसारात् द्वादशाभवन् मुद्रावत् १४
एकैकप्रस्तरे द्वादशवंशानामेकैकं नामाभूत्। वक्षःपट्ट्याः कोणयो निर्म्मल- १५
स्वर्णेन वर्त्तितौ शृङ्खलौ निर्म्ममे। द्वे स्वर्णस्थाल्यौ दौ स्वर्णबलयौ च १६
निर्म्माय वक्षःपट्ट्या द्वयोः कोणयोस्तौ बलयौ बबन्ध। वक्षःपट्ट्याः १७
कोणस्थयो र्बलययो र्मध्ये द्वे वर्त्तिते शृङ्खले निदधे। वर्त्तितशृङ्खलयो १८
र्द्वावग्रभागौ द्वाभ्यां स्थालीभ्यां बद्धा तावेफोदोऽग्रभागे स्कन्धपट्ट्योरुपरि
निदधे। स्वर्णबलयौ निर्म्माय वक्षःपट्ट्या अभ्यन्तरे द्वयोः कोणयोरेफोदः १९
सम्मुखे तौ निदधे। स्वर्णस्यापरौ बलयौ निर्म्माय एफोदः स्कन्धपट्ट्या २०
अधो यत्र संयोग आस्ते तस्याः श्रेण्याः सम्मुखे एफोदो विचित्रकटि-
बन्धनोपरि निदधे। मूससं प्रति परमेश्वरस्य निदेशानुसाराद् वक्षः- २१
पट्टी यदेफोदो न पतन्ती एफोदो विचित्रकटिबन्धनोपरि तिष्ठेत,
तदर्थं ते नीलसूत्रेण एफोदो बलयाभ्यां साकं वक्षःपट्ट्या बलयौ बद्धा
निदधिरे।

मूससं प्रतीश्वराज्ञानुसारात् स एफोदो नीलवसनं ववौ। तन्मध्ये २२
वर्म्मणश्छिद्रवत् छिद्रं चक्रे तच्छिद्रमच्छिन्नं तस्य प्रान्तश्चतुर्दिक्षु तेनावायि। २३
मूससं प्रति परमेश्वराज्ञानुसारात् ते तद्वसनस्य पार्श्वोपरि नीलधूम्र- २४
रक्तै र्वर्त्तितसूत्रै र्दाडिमफलानि निर्म्ममिरे। ते निर्म्मलस्वर्णेन किङ्किणीः २५
कृत्वा वस्त्राञ्चलस्य चतुर्दिक्षु दाडिमानां मध्येषु तत्किङ्किणीः स्थापया-
मासुः। अर्थात् एका किङ्किणी तत एको दाडिमस्तत एका किङ्किणी २६
तत एको दाडिम इत्थं सेवनार्थवस्त्रस्याञ्चलचतुर्दिक्षु चक्रुः।

मूससं प्रति परमेश्वराज्ञानुसारात् ते हारोणस्य तत्पुत्राणाञ्च कृते २७
सूत्रनिर्म्मितानुत्तरासङ्गान् सूक्ष्मवस्त्रकिरीटं सूक्ष्मसूत्रनिर्म्मितान् उष्णी- २८
षान् वर्त्तितसूत्रमयकटिवस्त्राणि च चक्रिरे। नीलधूम्ररक्तै र्वर्त्तितसूत्रैः २९
सूचिकर्म्मणा कटिबन्धनमेकं चक्रिरे।

मूससं प्रति परमेश्वरस्य निदेशानुरूपं ते निर्म्मलस्वर्णेन पूतकिरीटस्य ३०
पत्रं निर्म्माय खनितमुद्रावत् तदुपरि परमेश्वरम् उद्दिश्य पवित्रतेति
लिलिखुः। ऊर्द्ध्वे बद्धुं किरीटोपरि तन्नीलसूत्रै र्बबन्धुः। ३१

इत्थं समाजावासस्य दूष्यीयं सर्व्वं कर्म्म समाप्तिमगात् मूससं प्रति ३२
परमेश्वरस्य निदेशानुसारात् इस्रायेल्वंशाः सर्व्वकर्म्माणि चक्रिरे। ततस्ते ३३
मूसान्तिकं तमावासं आनिन्युः तस्य दूष्यं सकलभाजनानि ग्रन्थयः

३४ फलकानि अर्गलाः स्तम्भाः पदाधारा रक्तीकृतमेषचर्म्मच्छागचर्म्माच्छादको
३५ विच्छेदकवासः साक्ष्यमञ्जूषा तद्वहनदण्डौ पापाच्छादनं भोजनासनं
३७ तदीयानि सर्व्वभाजनानि दर्शनीयपूपाः निर्म्मलो दीपवृक्षस्तदीयदीपा
३८ अर्थात् तस्य दीपावलिस्तदीयपात्राणि दीपार्थतैलं, स्वर्णमयी वेदिर-
३९ भिषेकार्थतैलं धूपार्थं सुगन्धिद्रव्याण्यावासद्वारस्याच्छादकवसनं पित्तल-
वेदिस्तत्पित्तलजालस्तद्वहनदण्डौ सर्व्वभाजनानि प्रक्षालनपात्रं तत्-
४० पादः प्राङ्गणस्य यवनिकास्तस्य स्तम्भाः पदाधाराः प्राङ्गणद्वाराच्छादन-
वस्त्रं तस्य रज्जवः कीलाश्च समाजदूष्यावासस्य सेवनार्थं सर्व्वभाज-
४१ नानि, पवित्रस्थान ईश्वरं सेवितुं वासांसि हारोणयाजकस्य पवित्र-
४२ वासांसि तत्सुतानां याजनपदेन सेवार्थवासांसि च इत्यादि यद्यत्
कर्म्म मूससं प्रति परमेश्वर आज्ञापयत् इस्रायेलवंशास्तानि सर्व्वाणि
४३ निर्म्ममे। मूसास्तानि कर्म्माणि पश्यन् तैः परमेश्वरीयादेशानुसारादेव
सर्व्वाणि कृतानीति ज्ञातवान् तदा मूसास्तान् आशिषं बभाषे।

---

## ४० चत्वारिंशोऽध्यायः।

१ आवासस्योत्थापनं अभिषेचनञ्च १२ हारोणतत्सुतानां पावनं १७ परमेश्वराज्ञया मूससः सर्व्वकर्म्मकरणं ३४ मेघवह्निरूपस्तम्भकथनञ्च।

१ ततः परमेश्वरो मूससं जगाद त्वं प्रथममासस्य प्रथमदिने समाजा-
२ वासस्य दूष्यं स्थापयिष्यसि। तन्मध्ये साक्ष्यमञ्जूषां निधाय विच्छेदक-
४ वाससा तां संगोपयिष्यसि। भोजनासनम् अभ्यन्तरमानीय तदुपर्य्यनुक्र-
मात् निरूपितानि वस्तूनि निधास्यसि, दीपवृक्षम् अभ्यन्तरम् आनीय
५ तस्य दीपान् ज्वालयिष्यसि। स्वर्णमयीं धूपवेदिं साक्ष्यमञ्जूषायाः
६ सम्मुखे निधास्यसि आवासद्वारस्य आच्छादकवस्त्रं निधास्यसि। समा-
७ जावासस्य द्वारस्य सम्मुखे होमवेदिं निधास्यसि। समाजदूष्यवेद्यो र्मध्ये
८ प्रक्षालनपात्रं निधाय तत्र जलं दास्यसि। चतुर्दिक्षु चत्वरं करिष्यसि
९ तद्द्वारे आच्छादनवस्त्रम् उल्लम्बयिष्यसि। अभिषेकार्थं तैलं गृहीत्वा
आवासं तदीयं सकलवस्तु चाभिषिच्य तत् तदीयसर्व्वं पावयिष्यसि
१० तस्मात् तत् सर्व्वं पवित्री भविष्यति। त्वं होमवेदिं तदीयं सकलपा-
त्रञ्चाभिषिच्य पवित्री करिष्यसि तेन सातीव पवित्रा वेदि र्भविष्यति।
११ प्रक्षालनपात्रं तदीयपादञ्चाभिषिच्य पवित्री करिष्यसि।
१२ पश्चात् त्वं हारोणं तत्सुतांश्च समाजावासस्य द्वारान्तिकम् आनीय

जलैः स्नपयिष्यसि। मामुद्दिश्य याजनकर्म कर्त्तुं हारोणं पूतवासांसि १३
परिधाप्याभिषिच्य पवित्री करिष्यसि। तदीयसुतान् आनीय उत्तरीय- १४
वसनानि परिधापयिष्यसि। तेषां पितरं यथाभिषिक्तवान् तथा १५
मामुद्दिश्य याजयितुं तानपि समभिषेक्ष्यसि यतः सोऽभिषेकस्तेषां
पुरुषपरम्परायां नित्ययाजकत्वस्य मूलं भविष्यति। मूसास्तादृशं चक्रे, १६
स परमेश्वराज्ञानुरूपं सर्व्वकर्म्माणि कृतवान्।

ततो मूससं प्रति परमेश्वराज्ञानुसारतः स द्वितीयवत्सरस्य प्रथम- १७
मासस्य प्रथमदिन आवासं स्थापयामास। मूसा आवासं स्थापयित्वा १८
तस्य पदाधारान् बद्धा तत्फलकानि स्थापितवान् अर्गलान् प्रवेश्य
तत्स्तम्भान् उदतोलयत्। स आवासोपरि दूष्यं स्थापितवान् दूष्योपर्य्या- १९
च्छादकं विस्तारितवान्।

मूससं प्रति परमेश्वराज्ञानुसारतः स साक्ष्यपुस्तकं गृहीत्वा २०
मञ्जूषामध्ये निदधे मञ्जूषावहनदण्डौ निधाय मञ्जूषोपर्य्यूर्द्धे पापाच्छादनं
निहितवान्। स आवासमध्यं मञ्जूषामानिनाय आच्छादनार्थं विच्छेद- २१
कवसनम् उल्लम्ब्य साक्ष्यमञ्जूषां संगोपयामास।

मूससं प्रति परमेश्वराज्ञानुसारतः स आवासस्योत्तरे पार्श्वे विच्छेद- २२
कवस्त्रस्य वहिः समाजदूष्ये भोजनासनं निदधे, परमेश्वरस्य सम्मुखे २३
तदुपरि विधिवत् पूपान् निदधे च।

मूससं प्रति परमेश्वराज्ञानुसारतः स भोजनासनस्य सम्मुख आवा- २४
सस्य दक्षिणपार्श्वे समाजदूष्ये दीपवृक्षं निदधे, परमेश्वरस्य सम्मुखे २५
दीपान् प्रज्वालयामास च।

मूससं प्रति परमेश्वरस्य निदेशानुसारतः स समाजदूष्ये विच्छेदक- २६
वस्त्रस्य सम्मुखे स्वर्णवेदिं निदधे, तदुपरि सुगन्धिधूपान् ज्वालया- २७
मास च।

मूससं प्रति परमेश्वरस्य निदेशानुसारतः स आवासद्वारे तदा- २८
च्छादकवसनं उल्लम्बयामास। समाजदूष्यस्यावासद्वारस्य समीपे २९
होमवेदिं संस्थाप्य तदुपरि होमवलिनैवेद्यान्युत्ससर्ज।

मूससं प्रति परमेश्वरस्य निदेशानुसारात् स समाजदूष्यवेद्योर्मध्ये ३०
प्रक्षालनपात्रं निधाय तत्र प्रक्षालनार्थं तोयं निदधे। तत्र मूसा ३१
हारोणस्तत्सुताश्च स्वस्वहस्तपादान् क्षालितवन्तः। यदा यदा ते ३२
समाजदूष्यं प्रविशन्ति वा वेद्याः समीपमागच्छन्ति तदा तान् क्षाल-

२३ यन्ति। स आवासस्य वेद्याश्च चतुर्दिक्षु चत्वरं चक्रे, चत्वरद्वारस्यावरणवासः स्थापितवान्। इत्थं मूसास्तत् कार्य्यं समापयामास।

२४ ततो जीमूतेन तत्समाजदूष्ये समाच्छादिते परमेश्वरीयं तेज आवासं २५ पर्य्यपूरयत्। मूसा समाजदूष्यं प्रवेष्टुं नाशक्नोत् यतो जीमूतस्तदुपर्य्य- २६ वातिष्ठत पारमेश्वरं तेज आवासम् अपूपुरत्। आवासोपरितो जीमूते २७ नीते इस्रायेल्वंशः स्वप्रतियात्रम् अग्रेऽसरत्। किन्तु यदि जीमूत ऊर्द्ध्वं २८ नानेष्यत तर्हि यावदूर्द्ध्वं नानेष्यत तावत् ते यात्रा ना करिष्यत। इस्रायेल्सर्व्ववंशगोचरे दिवा तेषां यात्रायां परमेश्वरीयजीमूतो रजन्यां वह्निरावासोपर्य्यवतस्थे।

---

# लेवीयपुस्तकम्

अर्थात्

# मूससा लिखितं तृतीयपुस्तकं।

## १ प्रथमोऽध्यायः।

१ होमविधिः ३ अर्थात् गोः १० मेषस्य १४ पक्षिणश्च होमस्य विधिः।

१ परमेश्वरो समाजावासात् मूससमाहूय कथामिमां बभाषे। त्वमि- २ स्रायेल्वंशान् वद युष्माकं कश्चिद् यदि परमेश्वरस्य समीपं पशुवलिमानिनीषति तर्हि स गोव्रजाद् मेषादिव्रजाद्वा तम् आनयतु, कथामिमां तेभ्यः कथय।

३ अपरं यदि होमार्थं व्रजात् गां जिघृक्षति, तर्हि निर्दोषं पुंपशुं ग्रहीष्यति, स परमेश्वरस्य सम्मुखे ग्राह्यार्थं समाजावासद्वारस्य समीपे ४ तमानीय होमवलेः शिरसि करमर्पयिष्यति, तेन स वलिस्तस्य प्राय- ५ श्चित्तरूपेण ग्राहिष्यते। ततः परमेश्वरस्य सम्मुखे तेन तस्मिन् वत्से हते हारोणस्य सुता याजकास्तस्य शोणितं गृहीत्वा समाजावासद्वारस्य ६ समीपस्थवेद्युपरि चतुर्दिक्षु विकरिष्यन्ति। स तस्य कृत्तिं निर्मोच्य तं

खण्डखण्डी करिष्यति। हारोणयाजकस्य सुता वेद्युपरि वह्निं निधास्यन्ति ७
वह्नेरुपरि दारूणि सज्जयिष्यन्ति। हारोणस्य सुता याजकास्तस्या वेद्या ८
उपरिस्थवह्नेरिन्धनोपरि तस्य खण्डानि शिरोमेदश्च निधास्यन्ति। किन्तु ९
याजकस्तस्य नाडीपदान् तोयेन प्रक्षाल्य वेद्या उपरि सर्व्वं दाहयिष्यति
तेन स परमेश्वरमुद्दिश्य वह्निकृतः सुगन्धिहोमवलि र्भविष्यति।

यदि होतुं ब्रजात् मेषं छागं वा जिहीर्षति तर्हि निर्दोषं पुंपशुं १०
गृहीत्वा वेद्याः पार्श्वे उत्तरस्यां दिशि परमेश्वरस्य सम्मुखे तं हनिष्यति ११
हारोणस्य पुत्रा याजका वेद्युपरि चतुर्दिक्षु तस्य शोणितं विकरिष्यन्ति।
तेन तस्मिन् खण्डखण्डीकृते याजको वेद्या उपरिस्थयो र्वह्निकाष्ठयोरुपरि १२
शिरसा मेदसा च सहितं तं सज्जयिष्यति। किन्तु याजकस्तस्य नाडी- १३
पादान् तोयेन प्रक्षाल्य सर्व्वं गृहीत्वा वेद्या उपरि दाहयिष्यति, तेन स
परमेश्वरमुद्दिश्य वह्निकृतः सुगन्धिहोमवलि र्भविष्यति।

यदि परमेश्वरमुद्दिश्य होतुं पक्षिणं जिहीर्षति तर्हि कपोतानां वा १४
युवपारावतानां मध्यात् तं ग्रहीष्यति। याजकस्तं वेद्याः समीपम् १५
आनीय तस्य शिरोऽवमर्द्य तं वेद्यां दाहयिष्यति तस्य शोणितं वेद्याः
पार्श्वे निष्पीडयिष्यति। ततः स तस्य मलेन साकम् आमाशयं गृहीत्वा १६
वेद्याः पूर्व्वपार्श्वे भस्मनः स्थाने तं निक्षेप्स्यति। ततः पक्षमूलं छेत्स्य- १७
ति किन्तु तं द्विभागं न करिष्यति, याजको वेद्या उपरिस्थितयो र्वह्नि-
काष्ठयोरुपरि तं दाहयिष्यति तेन स परमेश्वरमुद्दिश्य वह्निकृतः
सुगन्धिहोमवलि र्भविष्यति।

---

## २ द्वितीयोध्यायः।

१ नैवेद्यस्य विधिः ४ अर्थात् चुल्लीजातनैवेद्यकथनं ५ पात्रे भृष्टनैवेद्यकथनं ७ कटाहे भृष्टनैवेद्यकथनं १२ प्रथमफलकथनं १३ नैवेद्यासादनकथनञ्च।

केनचित् परमेश्वरमुद्दिश्य नैवेद्ये कृते स सूक्ष्मगोधूमचूर्णेन नैवेद्यं १
करिष्यति तदुपरि तैलमभिषिच्य कुन्दुरुं दत्त्वा हारोणस्य सुतानां याज- २
कानां सन्निधिम् आनेष्यति ततो याजकस्तस्मात् मुष्टिमेकं सूक्ष्मगोधूमचूर्णं
किञ्चित् तैलं सर्व्वकुन्दुरुञ्च गृहीत्वा परमेश्वरमुद्दिश्य स्मरणार्थं वेद्या
उपरि दाहयिष्यति, तेन तत्परमेश्वरम् उद्दिश्य वह्निकृतं सुगन्धिनैवेद्यं
भविष्यति। एतन्नैवेद्यावशिष्टांशो हारोणस्य तस्य सुतानाञ्च भविष्यति ३
परमेश्वरम् उद्दिश्य हवनीयद्रव्यमिदमतीव पवित्रं भवति।

४ चुल्लीपक्वद्रव्यनिवेदनकाले तैलमिश्रिताः किण्वशून्याः सूक्ष्मगोधूमचूर्णपिष्टका वा तैलाक्ताः किण्वशून्याः सूक्ष्मपिष्टका वा तव नैवेद्यं भविष्यन्ति।

५ भाजनभृष्टद्रव्यनिवेदनकाले किण्वशून्यतैलमिश्रितानि सूक्ष्मगोधूमचूर्णानि पक्त्वा तत् खण्डखण्डीकृत्य तदुपरि तैलम् निषेक्ष्यसि तदेव तव नैवेद्यं भविष्यति।

६

७ कटाहभृष्टद्रव्यनिवेदनकाले तैलपक्वानि सूक्ष्मगोधूमचूर्णानि तव नैवेद्यं भविष्यन्ति। त्वं तद्द्रव्यस्य नैवेद्यं परमेश्वरस्य समीपमानीय याजकाय दास्यसि, स तद् वेद्याः समीपम् आनेष्यति। स्मरणार्थं तन्नैवेद्यस्य किञ्चिद् आदाय वेद्यां दाहयिष्यति। तेन तत् परमेश्वरोद्देशकम् अग्निकृतं नैवेद्यं भविष्यति। तन्नैवेद्यावशिष्टांशं हारोणतत्सुतानां भविष्यति परमेश्वरमुद्दिश्य होतव्यद्रव्यमिदमतीव पूतं भवति। यूयं परमेश्वरम् उद्दिश्य किण्वयुक्तं नैवेद्यं नानेष्यथ तथा परमेश्वरम् उद्दिश्य होतव्यनैवेद्येन साकं किण्वं मधु च किञ्चिदपि न दाहयिष्यथ।

८

९

१०

११

१२ प्रथमफलीयनैवेद्यस्यायं विधिः, यूयं परमेश्वरम् उद्दिश्य तन्निवेदयिष्यथ किन्तु सुगन्धार्थं वेद्या उपरि तन्न ज्वालयिष्यथ।

१३ किञ्च नैवेद्यस्य सर्व्वद्रव्याणि लवणाक्तानि करिष्यथ, ईश्वरनियमितस्य लवणस्य न्यूनतां कृत्वा सर्व्वनैवेद्यैः साकं लवणं निवेदयिष्यथ। तव प्रथमफलस्य नैवेद्यं परमेश्वरमुद्दिश्य निवेदनकाले त्वं वह्निशुष्कस्य सम्पूर्णकणिशस्य मर्द्दितान् कोमलान् कणान् तव प्रथमफलस्य नैवेद्यार्थं निवेदयिष्यसि। तदुपरि तैलं दास्यसि कुन्दुरुञ्च निधास्यसि तदेव नैवेद्यमेकं भविष्यति। याजकः स्मरणार्थं तस्य किञ्चित् मर्द्दितं शस्यं किञ्चित् तैलं सर्व्वकुन्दुरुञ्च दाहयिष्यति तेन तत् परमेश्वरम् उद्दिश्य वह्निकृतं नैवेद्यं भविष्यति।

१४

१५

१६

---

# ३ तृतीयोऽध्यायः।

१ मङ्गलार्थबलौ विधिः ६ मङ्गलार्थबलये मेषशावकस्य १२ छागलस्य कथनं।

१ मङ्गलार्थबलिदानकाले गोवत्सृष्टा निर्दोषं पुरुषं स्त्रियं वा पशुम् परमेश्वरस्य सम्मुखम् आनेष्यति। स्वबलेः शिरसि करमर्पयित्वा समाजावासस्य द्वारे तं बलिं छेत्स्यति पश्चात् हारोणस्य सुता याजकास्तस्य

२

शोणितं वेद्युपरि चतुर्दिक्षु विकरिष्यन्ति। ततः परमेश्वरम् उद्दिश्य ३ मङ्गलार्थकस्य बले र्हवनीयम् उत्स्रक्ष्यति, अर्थतस्तस्य नाडीच्छादकं ४ मेदो ऽन्त्रोपरिस्थितं पार्श्वस्थमेदो द्वौ मेदग्रन्थी तदुपरिस्थितं पार्श्वस्थमेदो यकृत उपरिस्थम् अन्त्राप्लावकं मेदग्रन्थिभ्यां साकं विमोचयिष्यति। ततो हारोणस्य पुत्रा वेद्या उपरिस्थवह्निकाष्ठहव्योपरि तत् सर्व्वं दाहयिष्यन्ति तेन तत् परमेश्वरम् उद्दिश्य वह्निकृतं सुगन्धिहव्यं भविष्यति। ५

परमेश्वरम् उद्दिश्य मङ्गलार्थबलिदानकाले मेषादेरजादेर्वा निर्दोषं ६ पुरुषं वा स्त्रियं बलिम् उत्स्रक्ष्यति। मेषशावकस्योत्स्रष्टा स्वीयबलिं ७ परमेश्वरस्य समीपमानीय स्वीयबलेः शिरसि करमर्पयित्वा समाजावासस्य सम्मुखे तं बलिं छेत्स्यति हारोणस्य सुता वेद्या उपरि चतुर्दिक्षु तच्छोणितं विकरिष्यन्ति। परमेश्वरम् उद्दिश्य मङ्गलार्थकस्य ८ ९ बले र्हवनीयम् उत्स्रक्ष्यति, अर्थतस्तस्य लाङ्गूलस्य मेरुदण्डस्य समीपाद् विमोचयिष्यति नाडीछादकं मेदो नाड्या उपरिस्थं मेदो द्वौ १० मेदग्रन्थी तदुपरिस्थपार्श्वमेदो यकृत उपरिस्थान्त्राप्लावकं मेदग्रन्थिभ्यां समं विमोचयिष्यति। ततो याजकस्तत् वेद्या उपरि दाहयिष्यति ११ तेन तत् परमेश्वरमुद्दिश्य वह्निकृतं भक्ष्यं भविष्यति।

अजस्योत्स्रष्टा स्वीयबलिं परमेश्वरस्य सन्निधिम् आनीय तच्छिरसि करमर्पयित्वा समाजावासस्य सम्मुखे तं छेत्स्यति हारोणस्य सुता वेद्या उपरि चतुर्दिक्षु तस्य शोणितं विकरिष्यन्ति। पश्चात् स तस्य हवनीयद्रव्यं परमेश्वरम् उद्दिश्य उपहारं करिष्यति अर्थात् नाडीछादकमेदो नाड्युपरिस्थं सर्व्वमेदो द्वौ मेदग्रन्थी तदुपरिस्थपार्श्वस्थमेदो यकृत उपरिस्थान्त्राप्लावकं मेदग्रन्थिभ्यां साकं मोचयिष्यति। ततो याजको वेद्या उपरि तत् सर्व्वं दाहयिष्यति तेन तद् वह्निकृतं सुगन्धिभक्ष्यं भविष्यति कृत्स्नमेदः परमेश्वरस्य भविष्यति। युष्माकं पुरुषपरम्परायां सर्व्वनिवासेषु नित्यविधिरयमेको भविष्यति यूयं मेदः शोणितञ्च किञ्चिदपि न भोक्ष्यध्वे। १२ १३ १४ १५ १६ १७

---

## ४ चतुर्थोऽध्यायः।

१ याजकाज्ञातपापार्थं बलिदानकथनं १३ समाजाज्ञातपापार्थं बलिदानकथनं २२

अथवाज्ञातपापार्थं बलिदानकथनं २२ साधारणलोकानामज्ञातपापार्थं बलिदानकथनञ्च।

१ अनन्तरं परमेश्वरो मूससमवदत् त्वमिस्रायेलो वंशं वद यदि कश्चिन् २ न बुद्धा पापं करोत्यर्थतः परमेश्वरस्याज्ञाभि र्निषिद्धानां सर्व्वकर्म्मणां ३ किञ्चन कर्म्म करोति विशेषतोऽभिषिक्तो याजको यदि पापं कृत्वा लोकान् अपराधिनः करोति, तर्हि स स्वकृतपापात् परमेश्वरमुद्दिश्य ४ प्रायश्चित्तार्थं निर्दोषमेकं गोवत्सम् उत्स्रक्ष्यति। ततः समाजावासस्य द्वारसमीपे परमेश्वरस्य सम्मुखे तं गोवत्समानीय तस्य शिरसि करमर्प- ५ यित्वा परमेश्वरस्य सम्मुखे तं छेत्स्यति। अभिषिक्तो याजकस्तस्य गोवत्सस्य किञ्चित् शोणितं गृहीत्वा समाजावासमध्यम् आनेष्यति। ६ तच्छोणिते याजकः स्वाङ्गुलिं मज्जयित्वा परमेश्वरस्य सम्मुखे पवित्र- स्थानस्य विच्छेदवसनस्याग्रभागे तच्छोणितस्य किञ्चित् सप्तकृत्वो विक्ष- ७ रिष्यति। पश्चात् याजकस्तस्य शोणितस्य किञ्चिद् आदाय समाजा- वासस्य मध्यस्थितसुगन्धिधूपस्य वेद्याः शृङ्गेषु परमेश्वरस्य सम्मुखे दास्यति वत्सस्य कृत्स्नं शोणितं गृहीत्वा समाजावासस्य द्वारस्थिताया होम- १० वेद्या मूले निक्षेप्स्यति। मङ्गलार्थबलौ यथा कर्त्तव्यं, तथा प्रायश्चित्तीय वत्सस्यापि नाडीछादकमेदो ऽन्त्रोपरिस्थं मेदो द्वौ मेदग्रन्थी तदुप- रिस्थपार्श्वस्थमेदो यकृत उपरिस्थान्त्राच्छादकं मेदग्रन्थिभ्यां साकं मोच- ११ यिष्यति, याजको होमवेद्या उपरि तानि दाहयिष्यति। तस्य वत्सस्य १२ चर्म्मशिरःपदान्त्रगोमयैः सहितं सर्व्वमांसं गृहीत्वा शिबिरस्य बहिः शुचिस्थानम् अर्थात् भस्मक्षेपणस्थानम् आनीय काष्ठोपरि वह्निना दाहयिष्यति, यत्र स्थाने भस्म क्षिप्यते तत्र तं दाहयिष्यति।

१३ इस्रायेल्वंशस्य सर्व्वसमाजो यदि न बुद्धा समाजस्याज्ञातं पापं करोति परमेश्वरस्य कस्याश्चिदाज्ञाया विरुद्धम् अकर्त्तव्यं कर्म्म यदि तैः १४ क्रियते, तर्हि त अपराधिनो भविष्यन्ति। तै र्यत् पापं कृतं तस्मिन् पापे प्रकाशिते सति समाजस्तत्पापात् गोवत्समेकं समाजावाससमीप- १५ मानीय उत्स्रक्ष्यति। समाजस्य प्राचीनजनाः परमेश्वरस्य सम्मुखे तस्य शिरसि करान् अर्पयिष्यन्ति ततः स परमेश्वरस्य सम्मुखे १६ छेत्स्यते। पश्चाद् अभिषिक्तो याजकस्तस्य शोणितस्य किञ्चित् १७ समाजावासमध्यमानेष्यति। याजकस्तत्र शोणिते निजाङ्गुलिं मज्जयित्वा परमेश्वरस्य सम्मुखे विच्छेदवस्त्रस्याग्रभागे सप्तकृत्वस्तस्य किञ्चित् विक्ष-

रिष्यति। तच्छोणितस्य किञ्चिद् आदाय परमेश्वरस्य सम्मुखे समाजा- १८
वासस्य मध्यस्थितवेद्याः शृङ्गेषु दास्यति ततः समाजावासस्य द्वार-
समीपस्थाया होमवेद्या मूले सर्व्वं शोणितं निक्षेप्स्यति। तस्मात् तस्य १९
सकलमेद आदाय वेद्या उपरि दाहयिष्यति। स प्रायश्चित्तस्य वत्सं २०
यादृशं करोति एतमपि तादृशं करिष्यति, इत्थं याजकेन तेषां
प्रायश्चित्ते कृते तेषां पापक्षमा भविष्यति। ततः स याजकस्तं वत्सं २१
शिविरस्य वहि र्नीत्वा प्रथमवत्सवत् तमपि दाहयिष्यति। समाजस्य
प्रायश्चित्तमिति।

यदि कश्चिद् अध्यक्षो न ज्ञात्वा पापं करोति परमेश्वरस्याज्ञाया २२
विरुद्धं अकर्त्तव्यं कर्म्म च करोति तर्हि सोऽपराधी भविष्यति। यत् पापं २३
तेन कृतं तत्पापे तस्मै ज्ञापिते सति स बलिं दातुम् एकं निर्दोषं
पुंछागवत्सम् आनेष्यति। पश्चात् स तस्य छागवत्सस्य शिरसि करम् २४
अर्पयित्वा होमबलिच्छेदनस्य स्थाने परमेश्वरस्य सम्मुखे तं छेत्स्यति,
सएव प्रायश्चित्तबलि र्भविष्यति। ततो याजकः प्रायश्चित्तबलेः किञ्चिद् २५
शोणितं गृहीत्वा निजाङ्गुल्या होमवेद्याः शृङ्गेषु दास्यति तस्य सर्व्वरक्तं
होमवेदिमूले निक्षेप्स्यति। मङ्गलार्थबलेर्मेदोवत् तस्य सर्व्वमेदो गृहीत्वा २६
वेद्यां दाहयिष्यति इत्थं याजकेन तस्य पापस्य प्रायश्चित्ते कृते तस्य
पापक्षमा भविष्यति।

साधारणलोकानां मध्ये यदि कश्चिद् अज्ञात्वा परमेश्वरस्याज्ञाया २७
विरुद्धं अकर्त्तव्यं कर्म्म कुर्व्वन् पापं करोति, तर्हि सोऽपराधी भविष्यति।
यत् पापं तेन कृतं तत्पापे तस्मै ज्ञापिते सति स तत्पापात् बलिं २८
दातुं व्रजात् निर्दोषां छागवत्सामेकाम् आनेष्यति। तत्प्रायश्चित्तबलेः २९
शिरसि करमर्पयित्वा होमबलिदानस्य स्थाने तत्प्रायश्चित्तस्य बलिं
छेत्स्यति। याजकोऽङ्गुल्या तस्य किञ्चित् रक्तं गृहीत्वा होमवेद्याः ३०
शृङ्गेषु दास्यति, तस्य सर्व्वरक्तं वेद्या मूले निक्षेप्स्यति। मङ्गलार्थबलेर्नीत- ३१
मेदोवत् तस्य सकलमेदो मोचयिष्यति पश्चात् याजकः परमेश्वरम् उद्दिश्य
सुगन्ध्युपहारार्थं वेद्या उपरि तं दाहयिष्यति इत्थं याजकेन तदर्थं
प्रायश्चित्ते कृते तस्य पापक्षमा भविष्यति। यदि कश्चित् प्रायश्चित्तार्थं ३२
मेषशावकम् आनिनीषति तर्हि निर्दोषां मेषीम् आनेष्यति। तत्प्राय- ३३
श्चित्तबलेः शिरसि हस्तं दत्त्वा यत्र होमबलिश्छिद्यते तत्र प्रायश्चित्तबलिं
छेत्स्यति। ततो याजकोऽङ्गुल्या तस्य किञ्चिद् रक्तं गृहीत्वा होमवेद्याः ३४

२५ शृङ्गेषु दास्यति निःशेषं रक्तं वेदिमूले निक्षेप्स्यति। मङ्गलार्थबलेर्मेषशावकस्य मेदोवत् तस्य सर्व्वमेदो मोचयित्वा परमेश्वरम् उद्दिश्य सुगन्धिनैवेद्यस्य विधिवत् वेद्यां दाहयिष्यति इत्थं याजकेन तस्य पापस्य प्रायश्चित्ते कृते तस्य पापं क्षमिष्यते।

---

## ५ पञ्चमोऽध्यायः।

१ साक्ष्यदानादिदोषे मेषस्य छागवत्साया वा बलिदानं ७ तदभावे कपोतबलिदानं ११ कपोताभावे गोधूमचूर्णनैवेद्यदानं १४ अज्ञानकृतदोषे मेषबलिकथनं १७ अज्ञानकृतसाधारणदोषे मेषबलिश्च।

१ यदि कश्चित् साक्षी भूत्वा शपथं श्रुत्वापि स्वेन यद् दृष्टं विदितं वा २ तन्न प्रकाश्य पापं करोति तर्हि स स्वपापस्य शास्तिं भोक्ष्यति। यदि कश्चित् न ज्ञात्वा अशुचिद्रव्यम् अर्थात् अशुचिपशोः शवं वाऽशुचिगोमेषादीनां शवम् अशुचिकीटस्य शवं स्पृशति तर्हि सोऽशुचि दोषी ३ च भविष्यति। वा मानुषस्य किमप्यशौचकृत् द्रव्यम् अर्थात् येन मनुष्योऽशुचि भवति, तादृशं किञ्चित् यद्यज्ञानात् स्पृशति तर्हि तेन तस्मिन् ४ ज्ञाते सोऽपराधी भविष्यति। अपरं वाचालतया मनुष्यै र्यद्वत् शप्यते, तदनुसारात् सदसद्वा भवतु अहमिदं करिष्यामीति गदन् यदि कश्चित् न ज्ञात्वा वाचालतया शपति, तर्हि स तज्ज्ञात्वा तेन दोषी ५ भविष्यति। एतादृशे कस्मिंश्चित् दोषे भूते तद्दोषिणा स्वपापं स्वीकार्य्यं। ६ ततः स स्वकृतपापार्थं प्रायश्चित्तनिमित्तं व्रजात् मेषवत्सां छागवत्सां वा परमेश्वरस्य समीपं स्वदोषार्थं बलिम् आनेष्यति तेन याजकस्तस्य पापस्य प्रायश्चित्तं करिष्यति।

७ स यदि मेषवत्साम् आनेतुं न शक्नोति तर्हि स्वकृतदोषार्थं द्वौ कपोतौ द्वौ पारावतवत्सौ वा परमेश्वरस्य समीपम् आनेष्यति। तयोरेकं ८ प्रायश्चित्तार्थं एकं होमार्थं भविष्यति। स तौ याजकस्य समीपमानीय प्रायश्चित्तार्थं बलिमादावुत्सृज्य तस्य गलम् अवमर्द्दयिष्यति किन्तु न ९ छेत्स्यति। स प्रायश्चित्तबलेः किञ्चित् शोणितं गृहीत्वा वेद्याः पार्श्वे विकरिष्यति शेषं सर्व्वरक्तं वेद्या मूले निषेक्ष्यति तेन तत्र प्रायश्चित्तं १० भविष्यति। ततः स विधिना द्वितीयं होमार्थम् उत्स्रक्ष्यति, इत्थं याजकेन तस्य पापार्थं प्रायश्चित्ते कृते तस्य पापक्षमा भविष्यति।

११ कपोतवत्सद्वयस्य पारावतवत्सद्वयस्य वा दानमपि यदि तस्याशक्यं

भवति, तर्हि स स्वपापस्य प्रायश्चित्तार्थं ऐफादशमांशं गोधूमचूर्णोपहा-
रम् आनेष्यति तदुपरि तैलं न दास्यति कुन्दुरं न निधास्यति यस्मात्
तत् प्रायश्चित्तं भवति। तेन तस्मिन् याजकान्तिकम् आनीते याजकः १२
स्मरणार्थं तस्मात् मुष्टिमेकं गृहीत्वा परमेश्वरम् उद्दिश्य वह्निकृतोप-
हारवत् तं दाहयिष्यति तदेव प्रायश्चित्तं भविष्यति। याजकस्तत्कृत- १३
पापार्थं एतेषाम् एकेन प्रकारेण प्रायश्चित्तं करिष्यति तेन तस्य पापक्षमा
भविष्यति नैवेद्यस्य विध्यनुसारात् अवशिष्टद्रव्यं याजकस्य भविष्यति।

ततःपरं परमेश्वरो मूससमवदत् कश्चिद् यदि न बुद्धा परमेश्वर- १४
स्याज्ञां लङ्घित्वा तस्य पवित्रवस्तुनो न्यूनत्वं करोति तर्हि स परमेश्वरम् १५
उद्दिश्य दोषबलिदानाय पवित्रस्थानस्य शेकलानुसारात् भवन्निरूपित-
मूल्यलभ्यं निर्दोषमेकं मेषबलिं व्रजात् आनेष्यति। पवित्रवस्तुनि तेन १६
या क्षतिः कृता तामपि परिशोत्स्यति पञ्चमांशादधिकम् अपरमेकमंशं
याजकाय दास्यति याजकेन दोषार्थकमेषबलिना तत्प्रायश्चित्ते कृते
तस्य पापक्षमा भविष्यति।

यदि कश्चित् परमेश्वराज्ञया निषिद्धं किञ्चन कर्म्म कुर्व्वन् पापं १७
करोति तर्हि स तद् अज्ञात्वापि अपराधी भवन् निजपापं भोक्ष्यति।
स दोषार्थं त्वन्निरूपितमूल्यलभ्यं निर्दोषं मेषबलिं व्रजात् याजकसमीपं १८
आनेष्यति याजकेन तदज्ञानकृतदोषार्थं प्रायश्चित्ते कृते तस्य पापक्षमा
भविष्यति। यः परमेश्वरस्य विरुद्धं दोषं करोति तस्यैव दोषार्थम् १९
एष बलि र्भविष्यति।

---

# ६ षष्ठोऽध्यायः।

१ प्रतिवासिविरुद्धदोषे बलिदानं ८ याजकानां शिक्षार्थं प्रकाशितो बलिदानस्य विधिः १४ नैवेद्यस्य विधिः १९ याजकाभिषेकनैवेद्यविधिः २४ प्रायश्चित्तविधिः।

अनन्तरं परमेश्वरो मूससं जगाद यदि कश्चन दोषं करोति परमे- १
श्वरस्य विरुद्धमन्यायं करोति यदा निक्षिप्तं स्वीयहस्ते समर्पितं वा २
अपहृतं वा वस्त्वधि समीपवासिने मृषा कथयति यदा स्वप्रतिवासिनं ३
वञ्चयति यदान्येन हारितं वस्तु प्राप्य तदधि मृषावाचं वक्ति मृषा-
शपथञ्च करोति एतेषां किञ्चनाधि कश्चन यदि पापी भवति तर्हि स ४
तत्पापहेतोरपराधी भविष्यति, यत्तेन बलेनापहृतं कापट्येन वा लब्धं,
तस्य समीपे निक्षिप्तं अन्येन हारितं वा यद्वस्तु तेन लब्धं, यस्मिन्

५ कस्मिंश्चित् वस्तुनि वा तेन मृषा शपथः कृतस्तानि वस्तूनि स पुनर्दास्यति, तस्य दोषनिश्चयकाले द्रव्यस्वामिने मूलादधिकं पञ्चमांशं दास्यति च।
६ एतस्माद् दोषात् परमेश्वरम् उद्दिश्य व्रजात् त्वन्निरूपितमूल्यलभ्यं
७ निर्दोषं मेषबलिं याजकसमीपम् आनेष्यति। याजकः परमेश्वरस्य सम्मुखे तदर्थं प्रायश्चित्तं करिष्यति ततो यत्र कुत्रापि तेन दोषः कृतः स तस्मात् क्षमां प्राप्स्यति।
८ ततःपरं परमेश्वरो मूसां गदितवान् त्वं हारोणं तत्सुतांश्च इदमा-
९ ज्ञापय। होमस्यायं विधिः प्रभातं यावत् समस्तरात्रिं हवनीयं वस्तु वेद्यां
१० वह्निकुण्डे स्थास्यति वेद्यां वह्निश्च प्रज्वलन् स्थास्यति। याजको गात्रेऽतस्याः परिधेयकटिवस्त्रे परिधाय वेदिस्थितं वह्निकृतहोमस्य यद्भस्म तद्-
११ त्थाप्य वेद्याः पार्श्वे निधास्यति। ततः स तद् वस्त्रं विमोच्यान्यद् वस्त्रं
१२ परिधाय शिविरस्य बहिः शुचिस्थानं भस्म नेष्यति। किन्तु वेद्यां स्थितोऽग्निः सदा प्रज्वलितः स्थास्यति न निर्व्वास्यति याजकः प्रतिप्रातस्तत्र काष्ठं दास्यति तदुपरि होमबलिं निधास्यति मङ्गलार्थबलीनां मेद-
१३ स्तत्र दाहयिष्यति। सोऽग्नि र्वेद्यां सदा ज्वलिष्यति कदापि नहि निर्व्वास्यति।
१४ नैवेद्यस्यायं विधिः हारोणस्य सुताः परमेश्वरस्य सम्मुखे वेद्यग्रे तदुत्-
१५ स्रक्ष्यन्ति। अपरं याजकस्तस्मात् नैवेद्यस्य मुष्टिमेकं गोधूमचूर्णं किञ्चित् तैलं तदुपरिस्थं सर्व्वकुन्दुरुञ्च गृहीत्वा परमेश्वरम् उद्दिश्य स्मरणार्थं सौ-
१६ रभार्थञ्च वेद्यां दाहयिष्यति। हारोणस्तस्य सुताश्च तदवशिष्टांशं भोक्ष्यन्ते किन्तु किण्वशून्यपूपैः साकं पूतस्थाने तद् भोक्ष्यन्ते अर्थात् समाजा-
१७ वासस्य प्राङ्गणमध्ये तद् भोक्ष्यन्ते। किण्वेन समं तन्न भक्ष्यते यतोऽहं तेषामंशार्थं मम वह्निकृतोपहारेभ्यस्तद् अदाम् तत्प्रायश्चित्तबलिवत्
१८ दोषार्थबलिवच्चातिपूतं भविष्यति। हारोणवंशीयाः सर्व्वे पुरुषास्तद् भोक्ष्यन्ते युष्माकं पुरुषपरम्परायां वह्निकृतोपहाराणां नित्या विधिरयं यः कश्चित् तान् स्प्रक्ष्यति स पवित्रो भविष्यति।
१९ ततःपरं परमेश्वरो मूसां जगाद हारोणस्य तत्सुतानाञ्चाभिषेकदिने
२० परमेश्वरम् उद्दिश्य य उपहारस्तै र्दातव्यस्तस्यायं विधिः। ते नित्यनैवे-
२१ द्यार्थं एफादशमांशं सूक्ष्मगोधूमचूर्णं गृहीत्वार्द्धं प्रातःकालेऽर्द्धं सन्ध्यायां कटाहे तैलं दत्त्वा भक्ष्यन्ति भृष्टे सति त्वं तद् अभ्यन्तरम् आनीय तन्नैवेद्यस्य पक्वान्नानि खण्डीकृतानि सुगन्धिद्रव्यार्थं परमेश्वरम् उद्दिश्य

उत्स्रक्ष्यसि। हारोणस्य पुत्राणां मध्ये यो जनस्तत्पदेनाभिषिक्तो २२
याजको भवति स तद् उत्स्रक्ष्यति परमेश्वरम् उद्दिश्य नित्यविधिरेषः
तदखिलं दाहयिष्यते। यतो याजकस्य सर्व्वनैवेद्यं दाहयितव्यं तस्य २३
किमपि न भोक्तव्यं।

ततः परमेश्वरो मूससं जगाद त्वं हारोणं तत्सुतांश्च वद प्रायश्चित्त- २४
बलेरयं विधिः। यत्र होमबलिश्छिद्यते तत्र परमेश्वरस्य सम्मुखे प्राय- २५
श्चित्तबलिरपि छेदनीयः, सोऽति पवित्रो भविष्यति। यो याजकः पापार्थं २६
तद् उत्स्रक्ष्यति स एव तद् भोक्ष्यते पवित्रस्थाने समाजावासस्य प्राङ्गणे
तद् भोक्ष्यते। यः कश्चन तस्य मांसं स्प्रक्ष्यति स पवित्रो भविष्यति तस्य २७
रक्तं यदि कुत्रचित् वसने लगति तर्हि तद् रक्तम्लिप्तं वसनं पवित्र-
स्थाने क्षालयिष्यसि। यस्मिन् मृत्पात्रे तत् पच्यते तद् भंक्ष्यते यदि २८
पित्तलपात्रे तत् पच्यते तर्हि तन् मार्क्ष्यसि जलेन परिष्कारिष्यसि च।
याजकानां सर्व्वे पुरुषास्तद् भोक्ष्यन्ते तद् अतीव पवित्रं। किन्तु पूत- २९
स्थाने प्रायश्चित्तं कर्त्तुं यस्य कस्यचित् प्रायश्चित्तबले रक्तं समाजावास- ३०
स्याभ्यन्तरम् आनेष्यते तन्न भोक्ष्यते वह्निना दाहयिष्यते।

---

## ७ सप्तमोऽध्यायः।

१ दोषार्थबलेर्विधिः ११ मङ्गलार्थबलेर्विधिः २२ मेदरक्तयोर्निषेधः याजकानामंश-
निरूपणं ३५ विधिनिरूपणकालकथनञ्च।

दोषार्थबलेरयं विधिः सोऽतिपूतो भवति। यत्र होमबलिश्छिद्यते १
तत्रैव दोषार्थबलिश्छेदनीयो वेद्या उपरि चतुर्दिक्षु तस्य रक्तं निक्षेप्स्यति। २
तस्य सर्व्वमेदो लाङ्गूलं नाडीच्छादकमेदो द्वौ मेदग्रन्थी तदुपरिपार्श्वस्थ- ३
मेदो द्वाभ्यां मेदग्रन्थिभ्यां साकं यकृत उपरिस्थम् अन्त्रावरकं विमोच्य ४
उत्स्रक्ष्यति। याजकः परमेश्वरम् उद्दिश्य वह्निकृतोपहारं कर्त्तुं वेद्या ५
उपरि एतत्सर्व्वाणि दाहयिष्यति, दोषार्थबलिदानमिदं। याजकानां ६
सर्व्वे पुरुषास्तं भोक्ष्यन्ते पूतस्थाने तं भोक्ष्यन्ते सोऽतिपूतो भवति।
प्रायश्चित्तबलिदोषार्थकबल्योरेकएव विधिः यो याजकस्तेन प्रायश्चित्तं ७
करोति स तस्य भविष्यति। याजकेन कस्यचिद् होमबलावुत्सृष्टे ८
तदुत्सृष्टहोमबलेरजिनं स याजको ग्रहीष्यति। चुल्ल्यां कटाहे पात्रे ९
वा पक्वं सर्व्वप्रकारं नैवेद्यम् उत्स्रष्टा याजको लप्स्यते। किन्तु हारोणस्य १०

सर्व्वे पुत्रास्तैलमिश्रितानां शुष्काणां वा सर्व्वनैवेद्यानां समांशिनो भविष्यन्ति।

११ परमेश्वरोद्देशकस्य मङ्गलार्थकस्य बलेरयं विधिः। यदि कश्चित्
१२ प्रशंसाबलिम् आनयति तर्हि प्रशंसाबलिना साकं स तैलमिश्रितान् किण्वशून्यपूपान् तैलाक्तान् किण्वशून्यपिष्टकान् तैलमिश्रितान् भृष्टान्
१३ सूक्ष्मगोधूमचूर्णस्य पिष्टकांश्च निवेदयिष्यति। मङ्गलार्थकप्रशंसाबलिना साकं स तत्पिष्टकेभ्यो ऽन्यान् किण्वयुक्तान् पूपानपि निवेदयिष्यति।
१४ पश्चात् स उत्तोलनीयनैवेद्यार्थं परमेश्वरमुद्दिश्य तस्मादुपहारात् सर्व्वप्रकारपूपानाम् एकैकं पूपम् निवेदयिष्यति। मङ्गलार्थकस्य बले रक्तं
१५ येन याजकेन प्रक्षेप्स्यते तन्नैवेद्यं तस्यैव भविष्यति। मङ्गलार्थप्रशंसाबले मांसं निवेदनदिने भोक्तव्यं प्रातःकालं यावत् तस्य किमपि न निधा-
१६ तव्यं। कस्यचिद् उत्सर्जनीयो बलि र्यदि मानसबलिः स्वेच्छादत्तबलि र्वा भवति तर्हि तद्बलेरुत्सर्गदिने तस्य मांसं भोक्तव्यं परदिनेऽपि तदव-
१७ शिष्टं भोजनोपयुक्तं। किन्तु तृतीयदिने बलेरवशिष्टं मांसं वह्निना
१८ दाहिष्यते। यद्यपि तृतीयदिने तस्य मङ्गलार्थबले मांसस्य किञ्चित् केनचित् भुज्यते तर्हि तदग्राह्यं भविष्यति तदुत्सष्टुः फलं न भविष्यति तद् घृण्यं भविष्यति, तद् यो जनो भोक्ष्यते स स्वीयपापं स्वयं
१९ भोक्ष्यते। किञ्चनाशुचिवस्तुनि यदि मांसस्य स्पर्शो भवति तदा तद् अभक्ष्यं भविष्यति वह्निना दाहिष्यते किन्त्वन्यमांसानि सर्व्वशुचिलोकै
२० र्भक्ष्याणि। यः कश्चिद् अशुचि भूत्वा परमेश्वरायोत्सृष्टस्य मङ्गलार्थक-
२१ बले र्मांसं भुंक्ते स स्वलोकानां मध्याद् उच्छेत्स्यते। यः कश्चिद् अशुचिद्रव्यम् अर्थात् मानुषस्याशुचिवस्तु वा अशुचिपशुं वा किमप्यशुचिघृण्यास्पदं स्पृष्ट्वा परमेश्वरायोत्सृष्टस्य मङ्गलार्थकस्य बले र्मांसं भुंक्ते स निजलोकानां मध्याद् उच्छेत्स्यते।

२२ परमेश्वरो मूससं जगाद, त्वम् इस्रायेलो वंशान् वद यूयं गोमेषच्छा-
२४ गानां मेदो मा भुंग्ध्वं। स्वयं मृतस्य पशुना हतस्य वा पशो र्मेदो ऽन्य-
२५ कर्म्मणि व्ययिष्यध्वे किन्तु यूयं कदापि तन्न भुंग्ध्वं। यतो यः कश्चित् वह्नौ परमेश्वरायोत्सर्जनीयस्य कस्यचित् पशो र्मेदो भोक्ष्यते स भोक्ता
२६ स्वलोकेभ्य उच्छेत्स्यते। युष्माकम् आवासेषु यूयं कस्यापि पशुपक्षिणो
२७ रक्तं मा भुञ्जीध्वं। यो जनः केनापि प्रकारेण रक्तं भुंक्ते स स्वलोकेभ्य उच्छेत्स्यते।

ततःपरं परमेश्वरो मूससं बभाषे त्वम् इस्रायेलो वंशान् वद यः कश्चित् २८ परमेश्वरम् उद्दिश्य मङ्गलार्थकं बलिम् उत्सृजति स स्वमङ्गलार्थकबलिना २९ समं परमेश्वरोद्देशकं नैवेद्यम् उत्स्रक्ष्यति। स्वहस्तेन परमेश्वरम् उद्दिश्य ३० वह्निकृतमुपहारम् अर्थात् वक्षसा समं मेद आनेष्यते, ततो वक्षः परमेश्वरस्य समक्षम् आन्दोलयिष्यते। याजको वेद्या उपरि तन्मेदो ३१ दाहयिष्यति किन्तु तद् वक्षो हारोणतत्सुतानां भविष्यति। यूयं मङ्ग- ३२ लार्थबलेरुत्तोलनीयं दक्षिणस्कन्धं याजकाय दास्यथ। हारोणस्य सुतानां ३३ यो यस्य मङ्गलार्थबले रक्तमेदसी उत्सृजति स तस्य दक्षिणस्कन्धं स्वांशं प्राप्स्यति। यत इस्रायेल्वंशस्य मङ्गलार्थबलेरान्दोलनीयं वक्ष ३४ उत्तोलनीयं स्कन्धम् अहं इस्रायेलो वंशाद् आदाय नित्यविधिना हारोणाय तत्पुत्रेभ्यश्चादां।

यद्दिने ते परमेश्वरान्तिके याजनकर्म्म कर्त्तुं नियुक्तास्तद्दिनमारभ्य ३५ हारोणतत्सुता अभिषिक्तत्वात् परमेश्वरस्य वह्निकृतोपहाराद् एनमंशं प्राप्नुवन्ति। यतो ऽयमंश इस्रायेल्वंशस्य पुरुषपरम्परया तेभ्यो दातव्य ३६ इति नित्यो विधिस्तेषाम् अभिषेकदिने परमेश्वरेणाज्ञापितः। होमबले ३७ नैवेद्यस्य प्रायश्चित्तबले दोषार्थकबलेः पदनियोगस्य मङ्गलार्थकबलेश्चायं यो विधिः, स सीनयगिरौ परमेश्वरेण मूससं प्रत्याज्ञापितः, फलतः ३८ परमेश्वराय स्वीयनैवेद्यान्युत्स्रष्टुं लोका यद्दिने तेनादिष्टास्तद्दिने सीनय-प्रान्तरे विधिरयमदायि।

---

## ८ अष्टमोध्यायः।

१ हारोणतत्सुतानां पावनं १४ तत्कृते प्रायश्चित्तं १८ हवनं २२ पावनार्थं मेषबलि-दानं ३१ पावनकालः स्थाननिरूपणञ्च।

परमेश्वरो मूससं जगाद त्वं हारोणं तत्सुतान् तैः समं वसनानि १ अभिषेकार्थं तैलं प्रायश्चित्तार्थकगोवत्सं मेषौ किण्वशून्यपूपडल्लकञ्च २ गृहाण, समाजावासस्य द्वारान्तिके समाजस्य सर्व्वजनान् मेलय च। तदा ३ मूसाः परमेश्वराज्ञानुसारात् तथाकरोत् ततः समाजावासस्य द्वारा- ४ न्तिके निखिलसमाजा मिलिताः। तदा मूसाः समाजम् अवदत् परमेश्वर ५ इदं कर्म्म कर्त्तुम् आदिशत्। ततो मूसाः परमेश्वराज्ञानुसाराद् हारोणं ६ तस्य पुत्रांश्चानीय जलैः स्नपयामास हारोणम् उत्तरीयवसनं पर्य्यधापयत् ७ कटौ कटिबन्धनं बद्धा वपुष्युत्तरासङ्गं ददौ तदुपर्य्येफोदं ददौ एफोदो

८ विचित्ररज्ज्वा गात्रं संवेष्ट्य तदुपरि बबन्ध। तदुपरि वक्षःपटीं वक्षः-
९ पट्या उपरि ऊरीम्तुम्मीमौ बबन्ध। तस्य शिरस्युष्णीषं ददौ तदुपरि
१० तस्य भाले स्वर्णपत्रस्य किरीटं ददौ। मूसा अभिषेकार्थं तैलम् आदाय
११ आवासं तन्मध्यस्थितं सर्व्वपात्रञ्चाभिषिच्य पावितवान्। तस्य किञ्चिद्
आदाय वेद्या उपरि सप्त कृत्वः प्राक्षिपत् वेदिं तस्याः सर्व्वपात्राणि
१२ प्रक्षालनपात्रं तस्य पादं पावयितुं अभिषिक्तवान्। अभिषेकार्थं किञ्चि-
१३ त्तैलं हारोणस्य मूर्द्ध्नि निक्षिप्य तं पावयितुम् अभिषिक्तवान्। ततो
मूसाः परमेश्वरानुज्ञया हारोणस्य सुतान् आनीय तान् उत्तरीयवस-
नानि पर्य्यधापयत् कटिबन्धनैः कटी बबन्ध उष्णीषै र्भूषितवांश्च।

१४ ततःपरं परमेश्वरस्याज्ञानुसारात् मूससा प्रायश्चित्तार्थकगोवत्स
आनीते हारोणस्तस्य सुताश्च तस्य प्रायश्चित्तबले गोवत्सस्य शिरसि
१५ हस्तान् आर्पयन्। तदा मूसास्तं छित्त्वा तस्य रुधिरं गृह्णन् अङ्गुल्या
वेद्याश्चतुर्दिशां शृङ्गेषु दत्त्वा वेदिं पावयामास, रुधिरं वेद्या मूले
१६ निषिक्तवान् तदुपरि प्रायश्चित्तं कर्त्तुं तां पावितवान्। मूसास्तस्यान्त्रो-
परिस्थं सर्व्वं मेदो, यकृदुपरिस्थम् अन्त्राच्छादकं द्वौ मेरुग्रन्थी तयो र्मेदश्च
१७ गृहीत्वा वेद्या उपरि दाहयामास। तस्य वत्सस्य चर्म्ममांसगोमयानि
गृहीत्वा शिविरस्य बहि र्वह्निना दाहयामास।

१८ ततः परं परमेश्वरस्य निदेशानुसारात् मूससा होमार्थकमेष आनीते
१९ हारोणस्तत्सुताश्च मेषस्य शिरसि हस्तान् आर्पयन् मूसाश्च तं छित्त्वा
२० वेद्या उपरि चतुर्दिक्षु तस्य रुधिरं प्रचिक्षेप। मेषं खण्डं खण्डं कृत्वा
२१ तस्य शिरोमांसखण्डमेदांसि दाहयामास। तस्यान्त्रपदान् जलेन प्रक्षाल्य
निखिलमेषं वेद्यां दाहयामास एष परमेश्वरम् उद्दिश्य सुगन्धिहोमबलि
र्वह्निकृत उपहारश्च बभूव।

२२ ततः परं मूसाः परमेश्वरस्याज्ञानुसारतो द्वितीयं मेषं अर्थात् पद-
नियोगार्थकं मेषमानयत् तदा हारोणतत्सुतास्तस्य मेषस्य शिरसि
२३ हस्तान् आर्पयन् मूसास्तं छित्त्वा तस्य किञ्चिद् रक्तं गृहीत्वा हारोणस्य
२४ दक्षिणकर्णप्रान्ते दक्षिणहस्ताङ्गुष्ठे दक्षिणपादाङ्गुष्ठे च ददौ। स
हारोणस्य सुतान् आनीय तस्यास्रजः किञ्चिद् आदाय तेषां दक्षिणकर्ण-
प्रान्ते दक्षिणहस्ताङ्गुष्ठे दक्षिणपादाङ्गुष्ठे च ददौ सर्व्वरक्तं वेद्या उपरि
२५ चतुर्दिक्षु प्रचिक्षेप। स तस्य मेदो लाङ्गूलं अन्त्रोपरिस्थं सर्व्वमेदो यकृत
२६ उपरिस्थान्त्राच्छादकं द्वौ मेरुग्रन्थी तन्मेदो दक्षिणस्कन्धञ्च जग्राह। स

परमेश्वरस्य सम्मुखस्थितकिण्वशून्यपूपडल्लकात् किण्वशून्यं पिष्टक-
मेकं तैलपक्वपिष्टकं सूक्ष्मपिष्टकञ्च गृहीत्वा मेदोदक्षिणस्कन्धयोरुपरि
निदधे। हारोणतत्पुत्राणां हस्तेषु तानि निधाय परमेश्वरस्य समक्षम् २७
आन्दोलनीयोपहारार्थम् आन्दोलयामास। मूसास्तेषां हस्तेभ्यस्तानि २८
गृहीत्वा वेद्यां होमबलेरुपरि दाहयामास। तानि पदनियोगार्थक-
नैवेद्यं परमेश्वरोद्देश्यो वह्निकृतः सुगन्ध्युपहारश्च। मूसा वक्षो गृहीत्वा २९
परमेश्वरस्य समक्षम् आन्दोलनीयोपहारार्थं दोलयामास, यतः पद-
नियोगार्थकमेषस्य वक्षो मूससोंऽशो बभुव। मूसा अभिषेकार्थतैलात् ३०
वेद्या उपरिस्थरुधिराच्च किञ्चित् किञ्चिदादाय हारोणतद्वस्त्राणामुपरि
तत्सुतवस्त्राणाञ्चोपरि प्रक्षिप्य हारोणं तस्य वसनानि तत्सुतान् तेषां
वसनानि च पावयामास।

ततः परं मूसा हारोणतत्सुतान् उवाच यूयं समाजावासद्वारे मांसं ३१
पचत, हारोणतत्सुतास्तद् भुञ्जतां ममैतदाज्ञानुसारात् पदनियोगार्थ-
कडल्लकस्थपूपैः समं तत्र तन्मांसं भुञ्जीध्वं। शेषपिशितपूपान् आदाय ३२
वह्निना दाहयिष्यथ। यूयं सप्त दिनानि यावद् अर्थाद् युष्माकं पदनि- ३३
योगस्य शेषदिनं यावत् समाजावासद्वाराद् वहि र्न यास्यथ यस्मात् तेषु
सप्त दिनेषु युष्माकं पदनियोगकर्म्म सम्पत्स्यते। युष्मदर्थं प्रायश्चित्तकर- ३४
णायाद्यवत् क्रियां कर्त्तुं परमेश्वरेणादिष्टं। तस्मात् यूयं सप्त दिनानि ३५
यावत् समाजावासद्वारे दिवानिशं स्थास्यथ, यथा न म्रियेध्वं तदर्थं
परमेश्वरस्य निदेशं पालयध्वं इत्याज्ञा मया लब्धा। तस्मात् परमेश्वरो ३६
मूससा यथाज्ञापयत् हारोणतत्सुतास्तत्सर्व्वं पालयाञ्चक्रिरे।

---

## ९ नवमोऽध्यायः।

१ हारोणस्य कृते बलिदानं १५ लोकानां कृते बलिदानं २२ मूसाहारोणयोराशी-
र्व्वादात् लोकान् प्रतीश्वरस्य तेजःप्रकाशश्च।

अष्टमदिने मूसा हारोणं तत्सुतान् इस्रायेलवंशस्य प्राचीनांश्चाहूत- १
वान्। स हारोणं बभाषे त्वं प्रायश्चित्तबल्यर्थं निर्दोषगोवत्सं होम- २
बल्यर्थं निर्दोषमेषं गृहीत्वा परमेश्वरस्य समक्षम् आनय। इस्रायेलो ३
वंशं वद यूयं परमेश्वरस्य सम्मुखे बलिदानाय प्रायश्चित्तबल्यर्थं छागं
होमबल्यर्थं एकहायनौ निर्दोषौ गोमेषवत्सौ मङ्गलार्थबल्यर्थं वृषमेषौ ४
तैलमिश्रितं नैवेद्यञ्च ग्रहीष्यथ यस्मादद्य परमेश्वरो युष्मभ्यं दर्शनं

५ दास्यति। तदा ते मूसस आज्ञानुसारात् तानि सर्व्वाण्यादाय समाजावासस्य सम्मुखम् उपातिष्ठन् इत्थः समाजः समीपवर्त्ती सन् परमे-
६ श्वरस्यान्तिकेऽतिष्ठत्। तदा मूसाः कथितवान् परमेश्वरो युष्मान् एतानि कर्म्माणि कर्तुम् आदिशत् एतेषु कृतेषु युष्मान् प्रति परमेश्वरस्य महिमा
७ प्रकाशिष्यते। मूसा हारोणं बभाषे त्वं वेद्याः समीपं गत्वा परमेश्वराज्ञानुसारात् स्वस्य प्रायश्चित्तहोमबली उत्सृज्य स्वस्य लोकानाञ्च पापानां प्रायश्चित्तं कुरु, ततः परं लोकानाम् उपहारं निवेद्य तेषां
८ कृतेऽपि प्रायश्चित्तं कुरु। मूसं प्रति परमेश्वराज्ञानुसारात् हारोणो
९ वेद्या अन्तिकं गत्वा स्वप्रायश्चित्तबलिं गोवत्सं अच्छिनत्। हारोणस्य सुतास्तदन्तिकं रुधिरम् आनिन्युः स स्वाङ्गुलिम् अस्रे मज्जयित्वा वेद्याः
१० शृङ्गेषु ददौ रुधिरं वेद्या मूले निषिक्तवान्। प्रायश्चित्तबले र्मेदो
११ मेत्रग्रन्थी यकृत उपरिस्थम् अन्त्राच्छादकं वेद्या उपरि जुहाव। किन्तु
१२ तस्य पिशितं कृत्तिं शिविराद् वहि र्नीत्वा वह्निना दाहयामास। ततः परं होमबलौ तेन छिन्ने हारोणस्य सुतास्तदन्तिकम् अस्रजं आनिन्युः।
१३ स वेद्या उपरि चतुर्दिक्षु तत् प्रचिक्षेप। ते होमबलेः शिरःसहितेषु पिशितखण्डेषु तदन्तिकम् आनीतेषु स तानि वेद्या उपरि दाहया-
१४ मास। तस्यान्त्रं पादांश्च प्रक्षाल्य होमद्रव्यैः साकं वेद्या उपरि दाहयामास।

१५ अपरं स लोकानाम् उपहारम् आनिनाय लोकानां प्रायश्चित्तबलिं
१६ छागं छित्त्वा प्रथमवत् पापहेतोरुत्ससर्ज। ततः परं स होमबली
१७ आनीय विधिवत् उत्ससर्ज। नैवेद्यम् आनीय तस्यैकमुष्टिम् आदाय
१८ प्रातःकालीनहोमबलिना साकं वेद्या उपरि दाहयामास। ततः परं स लोकानां मङ्गलार्थकबली वृषमेषौ छित्त्वा हारोणस्य सुतैस्तदन्तिकं तद्रक्ते
१९ आनीते स वेद्या उपरि चतुर्दिक्षु तत् प्रचिक्षेप। ततः परं स वृषस्य मेदो मेषस्य लाङ्गूलम् अन्त्रस्य मेत्रग्रन्थ्योरुपरि स्थितं मेदो यकृदुपरि
२० स्थितम् अन्त्राच्छादकम् एतानि मेदांसि गृहीत्वा वक्षस उपरि निधाय
२१ वेद्या उपरि तन्मेदो दाहयामास। मूसस आज्ञानुसारात् हारोणः
२२ परमेश्वरस्य सम्मुखे द्वे वक्षसी द्वौ दक्षिणस्कन्धौ च दोलयामास। अपरं हारोणो लोकान् प्रति हस्तौ विस्तार्य्य तान् आशिषं गदितवान् इत्थं प्रायश्चित्तबलिं होमबली मङ्गलार्थकबली च दत्त्वा वेद्या अवरुरोह।

२३ ततो मूसोहारोणौ समाजावासं प्राविशतां तस्माद् वहिरागत्य

लोकान् आशिषं जगदतुस्ततः सर्व्वान् जनान् प्रति परमेश्वरस्य तेजः प्रचकाशे। परमेश्वरस्य सम्मुखाद् वह्नि र्निर्गत्य वेद्या उपरि स्थितं २४ होमबलिं मेदश्च भस्मी चकार तद् दृष्ट्वा सर्व्वे लोका उच्चैःशब्दं कृत्वा न्युब्जीभूय प्रणेमुः।

---

## १० दशमोऽध्यायः।

१ निषिद्धवह्निना धूपज्वालनाद् अबीहूनादवयोर्दाहनं ८ तद्विधि॰ १२ पूतभक्ष्यविधिः १६ तद्विधिलङ्घने हारोणस्य कथा च।

हारोणस्य सुतौ नादव अबीहूश्च स्ववह्निपात्रे गृहीत्वा तत्राग्निं १ निधाय सर्ज्जरसं दत्त्वानादिष्टं सामान्यवह्निं परमेश्वरस्य समक्षम् उत्ससृजतुः। ततः परमेश्वरस्य सम्मुखात् वह्नि र्निर्गत्य तौ ददाह तौ च २ परमेश्वरस्य सम्मुखे प्राणान् तत्यजतुः। मूसा हारोणाय कथयामास ३ परमेश्वर इति वाचं गदितवान् अहं खान्तिकस्थानां लोकानां मध्ये पवित्रत्वेन मंस्ये सर्व्वलोकानां समीपे गौरवं लप्स्ये च तस्माद् हारोणो मौनी बभूव। अपरं मूसा हारोणपितृव्यस्य उषीयेलस्य सुतौ मीशा- ४ येलं इलीषाफनञ्चाहूय बभाषे समीपमागच्छतं युवां पूतस्थानसम्मुखात् निजभ्रातरौ शिविराद् बहि र्नयतं। तेन मूसस आज्ञानुसारात् तौ ५ समीपं गत्वा सोत्तरीयवस्त्रौ तौ बहि र्निन्यतुः। मूसा हारोणं तत्सुता- ६ विलियासरम् ईयामरञ्च जगाद यथा यूयं न म्रियेध्वं समाजं प्रति च कोपो न ज्वलेत् तत्कृते स्वशिरांस्यनावृतानि मा कुरुत स्ववस्त्राणि मा छिन्त, किन्तु युष्माकं भ्रातर इस्रायेलो वंशाः परमेश्वरकृतदाहात् विलपन्तु। यथा युष्माकं मृति र्न भवेत् तदर्थं यूयं समाजावासस्य ७ द्वाराद् बहि र्मा यात, यतो युष्माकं गात्रेषु परमेश्वरीयमभिषेकतैलम् आस्ते, ततस्ते मूससोवाक्यात् तथैव चक्रुः।

परमेश्वरो हारोणं बभाषे यथा यूयं न म्रियेध्वं तदर्थं त्वं वा तव ८ सुताः समाजावासप्रवेशकाले द्राक्षारसं मद्यं वा न पिबत, एष युष्माकं ९ पुरुषानुक्रमं नित्यविधि र्भविष्यति। तथा सति पूतत्वापूतत्वयोः शुचित्वा- १० शुचित्वयोश्च भेदं कर्त्तुं मूसोद्वारा परमेश्वरेण ज्ञापितान् सर्व्वविधीन् ११ इस्रायेल्वंशान् शिक्षयितुं युष्माभिः शक्ष्यते। मूसा हारोणं तदवशिष्ट- १२ पुत्रद्वयम् इलियासरं ईयामरञ्च जगाद परमेश्वरमुद्दिश्य वह्निकृतोप- हारादवशिष्टं यन्नैवेद्यमास्ते तद् यूयं वेद्यन्तिकं नीत्वा विना किण्वं

१३ भुंग्ध्वं तदतिपूतं। परमेश्वरम् उद्दिश्य वह्निकृतोपहारात् तदेव तव त्वत्सुतानाञ्च प्राप्यांशः, तस्मात् तत् पूतस्थाने युष्माभि र्भोजनीयम्
१४ एषाज्ञा मया प्राप्ता। त्वं त्वत्पुत्रकन्याश्च तद् दोलनीयं वक्ष उत्तोलनीयं स्कन्धञ्च शुचिस्थाने भोक्ष्यध्वे यत इस्रायेलवंशीयानां मङ्गलार्थकबलेः स
१५ तव त्वत्सन्तानानाञ्च प्राप्यांशः। ते हवनीयमेदसा साकं यम् उत्तोलनीयं स्कन्धं यच्चान्दोलनीयं वक्ष आन्दोलयितुं परमेश्वरसम्मुखम् आनेष्यन्ति तत् परमेश्वराज्ञानुसारात् नित्यविधिना तव त्वत्सन्तानानाञ्च भविष्यति।

१६ मूसाः प्रायश्चित्तार्थकछागम् अन्विष्टवान् किन्तु सोऽदह्यत तस्मात् स
१७ हारोणस्यावशिष्टसुताविलियासरैथामरौ क्रुद्धावदत्, यूयं कुतः पूतस्थाने प्रायश्चित्तबलिं न भुक्तवन्तः? सो ऽतीव पूतः समाजप्रायश्चित्तार्थं
१८ परमेश्वरसम्मुखे प्रायश्चित्तं कर्त्तुं स युष्मभ्यं दत्तः। पश्यत पूतस्थानमध्ये तद्रक्तं नानीतं तस्मात् मदाज्ञया पूतस्थाने स युष्माकं भोक्तव्य
१९ आसीत्। ततो हारोणो मूससमवादीत् पश्य ते ऽद्य परमेश्वरमुद्दिश्य स्वीयप्रायश्चित्तबलिहोमबलीन् उदसृजन् तथापि माम्प्रतीदृशं घटितं, यद्यहमद्य प्रायश्चित्तबलिम् अभोक्ष्ये तर्हि तत् किं परमेश्वरस्य दृष्ट्या-
२० ग्रहीष्यत? तन्निशम्य मूसाः सन्तुष्टोऽभूत्।

---

## ११ एकादशोऽध्यायः।

१ भक्ष्याभक्ष्यपशो र्विधिः ९ भक्ष्याभक्ष्यजलजन्तो र्विधिः १३ भक्ष्याभक्ष्यपक्षिणां विधिः २१ भक्ष्याभक्ष्योरोगामिनां विधिश्च।

१ परमेश्वरो मूसोहारोणौ जगाद युवाम् इस्रायेलवंशं वदतं मेदि-
२ नीस्थपशूनां मध्य एते पशवो युष्माभि र्भोजनीयाः। पशूनां मध्ये ये
४ द्विखण्डखुरिणो भूत्वा रोमन्थायन्ते तानेव भक्षत। किन्तु ये केवलं रोमन्थायन्ते वा केवलं द्विखण्डखुरिणस्तान् पशून् न भक्षत, महाङ्गो
५ युष्माकम् अशुचि र्यतः स रोमन्थायते किन्तु द्विखण्डखुरी नहि। शाफन् पशु र्युष्माकम् अशुचि र्यतः स रोमन्थायते किन्तु द्विखण्डखुरी नहि।
६ शशकश्च युष्मभ्यमशुचि र्यतः स रोमन्थायते किन्तु द्विखण्डखुरी नहि।
७ वराहो युष्मभ्यमशुचि र्यतः स द्विखण्डखुरी भूत्वापि न रोमन्थायते।
८ तस्माद् यूयं तेषां पिशितं न भक्षत तेषां कुणपमपि न स्पृशत ते युष्मभ्यम् अशुचयः।

जलजन्तूनां मध्य एते युष्माभि र्भोजनीयाः सागरस्थानां नदीस्थानां ९
अन्याम्बुस्थानां वा मध्ये पक्षवन्तः शल्कलिनो युष्माकं भक्ष्याः। किन्तु १०
नदीजलाशयस्थानां जलचरप्राणिनां मध्ये ये पक्षवन्तो नहि शल्कलिनश्च
नहि ते युष्माकं घृण्या भविष्यन्ति। तएव युष्माकं घृण्या भविष्यन्ति यूयं ११
तेषां मांसं न भक्षिष्यथ तेषां कुणपमपि न स्पृशत। जलजन्तूनां मध्ये १२
येषां पक्षवल्कलौ न स्तः, ते सर्व्वे युष्माकं घृण्या भविष्यन्ति।

पक्षिणां मध्य एते युष्माकं घृण्या भविष्यन्ति, ते ऽभक्ष्या घृणास्पदाः १३
उत्क्रोशः क्रौञ्चः कुररो गृध्रश्च स्वस्वजात्यनुसारात् चिल्लः स्वस्वजात्य- १४
नुसारात् काकाः स्वस्वजात्यनुसारात् उष्ट्रपक्षी रात्रिश्येनः गांचिल्लः १६
स्वस्वजात्यनुसारात् श्येनः पेचकः मत्स्यरङ्गो महापेचको दीर्घगलहंसः १८
शोणहंसः शकुनी सारसः स्वस्वजात्यनुसाराद् वको टिट्टिभो जतुका च। १९
तथा चतुष्पदै र्गामिनः पक्षवन्तो जन्तवो युष्माकं घृण्या भविष्यन्ति। २०
तथापि चतुष्पदै र्गामिनां पतङ्गानां मध्ये ये भूमावुल्लम्फनाय दीर्घजङ्घा २१
भवन्ति ते युष्माकं भक्ष्या भविष्यन्ति। स्वस्वजात्यनुसारात् शलभः स्वस्व- २२
जात्यनुसारात् शूककीटः स्वस्वजात्यनुसारात् झिल्लिका स्वस्वजात्यनुसा-
रात् खद्योत एते युष्माकं भक्ष्या भविष्यन्ति। किन्तु तदन्यै चतुष्पदै र्गा- २३
मिन उड्डीयमानाः पतङ्गा युष्माकम् अभक्ष्या घृण्या भविष्यन्ति। तै र्यूय- २४
मशुचयो भविष्यथ यस्तेषां कुणपं स्पृशति स सन्ध्यां यावत् अशुचिः
स्थास्यति। यश्च तेषां कुणपस्य कमप्यंशं वक्ष्यति स स्ववस्त्रं क्षालयिष्यति २५
तथापि सन्ध्यां यावद् अशुचिः स्थास्यति। ये जन्तवो द्विखुरा न भूत्वा २६
किञ्चित् पृथक्खुरा भवन्ति न रोमन्थायन्ते वा ते युष्मभ्यमशुचयः, तान्
स्पृष्ट्वा लोका अशुचयो भवन्ति। चतुष्पदवन्यजन्तूनां मध्ये हस्ततलगा- २७
मिनो जन्तवो युष्माकम् अशुचयो यस्तेषां शवान् स्प्रक्ष्यति, स सन्ध्यां
यावत् अशुचिः स्थास्यति। यस्तेषां कुणपान् वक्ष्यति स स्ववस्त्रं क्षाल- २८
यिष्यति तथापि सन्ध्यां यावद् अशुचिः स्थास्यति यस्मात् ते युष्मभ्यम्
अशुचयः।

पृथिव्या उरोगामिनां मध्ये युष्मान् प्रत्येते ऽशुचयो भविष्यन्ति स्वस्व- २९
जात्यनुसारात् नकुलः क्षेत्रस्थमूषिको मुषली गोधेरो नीलमूषली कृमि ३०
र्गृहगोधिका कृकलासः। उरोगामिनां मध्यत एते युष्मभ्यमशुचयो ३१
भविष्यन्ति, तेषु मृतेषु यस्तान् स्पृशति स सन्ध्यां यावद् अशुचिः
स्थास्यति। यस्मिन् वस्तुनि तेषां कुणपाः पतिष्यन्ति तदप्यशुचि भविष्यति ३२

तत् दारुभाजनं वसनं वा कृत्ति र्वा शाणपूटकं यस्य कस्यचित् कर्म्मणो योग्यं भाजनं भवेत् तत् तोये निधास्यति सन्ध्यां यावत् तदशुचि
३३ स्यास्यति पश्चात् शुचि भविष्यति। कस्यचित् मृद्भाजनस्य मध्ये तेषां कुणपेषु पतितेषु तन्मध्यस्थितं सर्व्वं वस्त्वशुचि भविष्यति युष्माभिस्तद्
३४ भज्यतां। कस्यचिद् भक्ष्यस्योपरि यदि तत्क्षालितं तोयं पतेत् तदा तद् अशुचि भविष्यति सर्व्वजातीयभाजनेषु सर्व्वजातीयं पेयवस्त्वशुचि
३५ भविष्यति। यस्य कस्यचिद् वस्तुन उपरि तेषां कुणपानां किञ्चित् यदि पतेत्, तर्ह्हि तदशुचि भविष्यति यदि चुल्ल्यादिपाकस्थाने पतेत्
३६ तर्ह्हि तत् भंक्ष्यते यतस्तदशुचि युष्मान् प्रत्यशुचि स्यास्यति । केवलं प्रस्रवणं यत्र पुष्करिण्यां बहुतोयानि तिष्ठन्ति सा च शुचि भविष्यति किन्तु यत्र तेषां कुणपानां स्पर्शो भविष्यति तदेवाशुचि भविष्यति।
३७ तेषां कुणपानां किञ्चिद् यदि कुत्रापि वपनीयवीजे पतेत् तर्ह्हि
३८ तत् शुचि स्यास्यति। किन्तु वीजोपरि तोये तिष्ठति यदि तेषां कुणपानां किञ्चित् तदुपरि पतेत् तर्ह्हि तद् युष्मभ्यम् अशुचि
३९ भविष्यति। युष्माकं भक्ष्यपशौ मृते यः कश्चित् तस्य कुणपं स्पृशति स
४० सन्ध्यां यावद् अशुचि भविष्यति। यश्च तस्य कुणपं भक्षिष्यति स स्ववसनं प्रक्षाल्य सन्ध्यां यावद् अशुचिः स्यास्यति, यश्च तं वक्ष्यति सोपि
४१ स्ववसनं प्रक्षाल्य सन्ध्यां यावद् अशुचिः स्यास्यति। भूचराः सर्व्वकीटा
४२ युष्माकं घृण्या अभक्ष्याश्च भविष्यन्ति। उरोगामी वा चतुष्पदैर्गामी वा ततोऽधिकपदै र्गामी भूचरः सर्व्वकीटो युष्माभि र्न भुज्यतां स युष्माकं
४३ घृण्यः। एतैः सर्व्वजातीयै र्जन्तुभि र्यूयं स्वान् घृण्यान् मा कुरुत, तैः
४४ स्वान् अशुचीन् मा कुरुत, यूयम् अमेध्या मा भवत। अहं युष्माकं प्रभुः परमेश्वरः, तस्माद् यूयं स्वान् पावयित्वा पवित्रास्तिष्ठत यस्मादहं पवित्रः, भूमौ गत्वा केनापि जन्तुना स्वान् अपवित्रान् मा करिष्यथ।
४५ यस्मादहं परमेश्वरो युष्माकं प्रभु र्भवितुं मिसर्देशाद् युष्मान् आनैषं
४६ तस्माद् यूयं पवित्रा भवत यतोऽहं पवित्रः। शुच्यशुचिभक्ष्याभक्ष्याणां
४७ प्राणिनां प्रभेदकः पशुपक्षिजलचरस्थलचरानधि विधिरिति।

---

## १२ द्वादशोऽध्यायः।

प्रसवात् परं शुचीकरणोत्सर्जनयो र्विधिः।

१ परमेश्वरो मूससमवादीत् त्वम् इस्रायेल्वंशं वद या नारी गर्भं धृत्वा

पुत्त्रं प्रसविष्यते सा रजस्वलाशौचवत् सप्त दिनान्यशुचि स्थास्यति। अष्टमे २ दिने बालकस्य मेहनस्य त्वक् छेत्स्यते। सा योषित् त्रयस्त्रिंशद्दिनानि ३ यावत् स्वशौचार्थं रक्तस्रावावस्थया स्थास्यति यावत् शौचार्थं दिनानि न पूर्य्यन्ते तावत् किञ्चन पूतं वस्तु न स्प्रक्ष्यति पवित्रस्थानञ्च न ४ प्रवेक्ष्यति। किन्तु यदि कन्यां प्रसुवीत तर्हि सा यथाशौचात् तथा सप्ताह- ५ द्वयम् अशुचिः स्थास्यति पश्चात् सा षट्षष्टिदिवसान् स्वशुच्यर्थं रक्त- स्रावावस्थया स्थास्यति। ततः सुतस्य सुताया वा प्रसवाशौचस्य दिनेषु ६ पूर्णेषु सा होमबल्यर्थम् एकहायनं मेषवत्सं प्रायश्चित्तबल्यर्थं पारा- वतशावकं वा कपोतशावकमेकं समाजावासस्य द्वारि याजकान्ति- कम् आनेष्यति। स परमेश्वरम् उद्दिश्य तम् उत्सृज्य तस्याः कृते प्राय- ७ श्चित्तं करिष्यति तेन सा स्वरक्तस्रावात् शुचि र्भविष्यति। प्रसूतपुत्त्र- कन्याया इयं व्यवस्था। यदि काचन मेषवत्सम् आनेतुम् असमर्था तर्हि ८ सा द्वौ कपोतवत्सौ द्वौ पारावतवत्सौ वा तयोरेकं होमार्थम् अन्यम् प्रायश्चित्तार्थम् आनेष्यति ततो याजकस्तदर्थं प्रायश्चित्तं करिष्यति तेन सा शुचि र्भविष्यति।

---

## १३ त्रयोदशोध्यायः।

१ कुष्ठरोगनिर्णयार्थं नाना परीक्षा लक्षणं विधिश्च।

परमेश्वरो मूसाहारोणौ जगाद यदि कस्यचिन् मनुजस्य देह- १ चर्म्मणि शोथः पामा श्वेतचिह्नं वा जायते देहचर्म्मणि कुष्ठवत् भवति २ च तर्हि स हारोणयाजकस्य समीपं तस्य याजकसुतानां मध्ये कस्य- चिद् वा समीपं आनायिष्यते। याजकस्तस्य देहचर्म्मस्थं व्याधिं ३ द्रक्ष्यति यदि तत्र चर्म्मस्थलोमानि पाण्डराणि भवन्ति तद्व्याधि र्यदि दृष्ट्या देहचर्म्मणोऽधो भवति तर्हि तस्य कुष्ठरोगो भवति तं दृष्ट्वा याजकस्तम् अशुचिं वक्ष्यति। लक्ष्म यदि तद्देहस्य चर्म्मणि श्वेतवर्णं ४ भवति दृष्ट्या चर्म्मणोऽधः स्थितं न भवति तस्य रोमाणि शुक्लानि न भवन्ति तर्हि याजकस्तं रोगिणं सप्त दिनानि संरुध्य निधास्यति। सप्तमे दिवसे याजकेन तस्मिन् दृष्टे यदि स व्याधिस्तथैव तिष्ठति चर्म्म न ५ व्याप्नोति तर्हि याजकः पुनः सप्तदिनानि तं संरुध्य निधास्यति। सप्त- ६ माह्ने पुनस्तं द्रक्ष्यति तत्र यदि स व्याधि र्मलीमसो भवति चर्म्म न व्याप्नोति तर्हि याजकस्तं शुचिं वदिष्यति सा पामा पश्चात् स स्ववस्त्रं

७ प्रक्षाल्य शुचि र्भविष्यति। किन्तु तस्य शौचार्थं याजकेन दृष्टे तस्य
८ पामा यदि चर्म्म व्याप्नोति तर्हि स नरो याजकेन पुन र्दर्शिष्यते। तत्र
तस्य पामा चर्म्म व्याप्नोत् इति यदि याजकः पश्यति तर्हि स तम्
अशुचिं वदिष्यति स कुष्ठरोगः।

९ मानुषस्य कुष्ठव्याधौ तिष्ठति स याजकान्तिकम् आनायिष्यते।
१० पश्चाद् याजकस्तं द्रक्ष्यति यदि तस्याजिने श्वेतः शोथो भवति तत्रस्थ-
रोमाणि च श्वेतानि भवन्ति स्फीते आममांसं भवति च तर्हि तस्य
११ देहचर्म्मणि पुरातनं कुष्ठं ज्ञात्वा याजकस्तं न रोत्स्यति किन्त्वशुचिं
१२ वदिष्यति यतः सोऽशुचिः। कुष्ठेन सर्व्वचर्म्मणि व्याप्ते तस्य शिरसः
पादं यावत् कुष्ठं व्याप्नोत् इत्थं यदि याजकः पश्यति तर्हि स विवेक्ष्यति
१३ यदि कुष्ठेन सर्व्वाङ्गं व्याप्तं, तर्हि तं शुचिं वदिष्यति यतो यस्य सर्व्वाङ्गं
१४ शुक्लमभूत् सएव शुचिः। यदा तस्य काये आममांसं प्रकाश्यते तदा
१५ सोऽशुचि र्भविष्यति। याजकस्तस्याममांसं दृष्ट्वा तमशुचिं वदिष्यति यत-
१६ स्तद् आममांसमशुचि तदेव कुष्ठं भवति। तद् आममांसं यदि पुनः
१७ शुक्लीभवति तर्हि स याजकान्तिकं यास्यति। तदा याजकेन तस्मिन् दृष्टे
यदि तस्य व्याधिः सर्व्वाङ्गे श्वेतो भवति तर्हि तं रोगिणं शुचिं वदिष्यति
तेन स शुचि र्भविष्यति।

१८ कायचर्म्मणि स्फोटको जातो निरामयश्चाभूत् पश्चात् तत्स्थाने
१९ यदि श्वेतचिह्नं वा श्वेतरक्तवर्णं स्नेहवच्चिह्नं जायते तर्हि तत् याजकं
२० दर्शयिष्यति। याजकेन तस्मिन् दृष्टे यदि तत् चर्म्मणोऽधो भवति तस्य
रोमाणि च श्वेतानि जातानि तर्हि याजकस्तमशुचिं वदिष्यति स
२१ स्फोटान्निर्गतः कुष्ठव्याधिः। किन्तु याजको यदि तत्र श्वेतरोमाणि न
पश्यति स व्याधिश्चर्म्माधश्च न भवतीषन्मलिनो भवति तर्हि याजकस्तं सप्त
२२ दिनानि रुद्धा निधास्यति। पश्चात् स यदि चर्म्म व्याप्नोति तर्हि याजक-
२३ स्तम् अशुचिं वदिष्यति तदेव कुष्ठं। किन्तु यदि स्निग्धचिह्नं स्वस्थाने
तिष्ठति न वर्द्धते तर्हि तत् क्षतस्य चिह्नं याजकस्तं शुचिं वदिष्यति।

२४ यदि मांसे वा चर्म्मणि वह्निदाहो भवति तद्दाहस्य रक्तश्वेतवर्णं
२५ शुक्लवर्णं वा स्निग्धचिह्नं भवति तर्हि याजकेन तस्मिन् दृष्टे यदि स्निग्ध-
चिह्ने स्थितरोमाणि श्वेतानि भवन्ति चिह्नञ्च दृष्ट्या चर्म्माधःस्थं भवति
तर्हि तद् दग्धाङ्गात् निर्गतं कुष्ठं तस्माद् याजकस्तम् अशुचिं वदिष्यति
२६ तदेव कुष्ठं। किन्तु स्निग्धचिह्ने स्थितरोमाणि श्वेतानि न भवन्ति चिह्नञ्च

चर्म्माधो नहि किन्तु मलिनमस्तीत्यं दृष्ट्वा याजकस्तं सप्तदिनानि रुद्ध्वा निधास्यति। सप्तमेऽह्नि याजकस्तं वीक्षिष्यते यदि तत् चर्म्म व्याप्नोति २७ तर्हि याजकस्तम् अशुचिं वदिष्यति तदेव कुष्ठं। यदि स्निग्धचिह्नं २८ स्वस्थाने तिष्ठति चर्म्मणि च न वर्द्धते किन्त्वीषन्मलिनं भवति तर्हि स दग्धस्थानस्य शोथो याजकस्तं शुचिं वदिष्यति यतस्तद् वह्निक्षतक्षतस्य चिह्नं।

पुरुषस्य योषितो वा शिरसि श्मश्रुणि वा व्याधौ जाते याजकस्तं २९ द्रक्ष्यति यदि दृष्ट्या चर्म्माधो बुध्यते तत्र हारिद्राणि सूक्ष्मलोमानि ३० तिष्ठन्ति तर्हि याजकस्तम् अशुचिं वक्ष्यति सा कच्छूरर्थात् शिरःस्थितं श्मश्रुमध्यस्थितं कुष्ठं। याजकेन कच्छ्व्याधौ दृष्टे यदि तस्य दृष्ट्या स ३१ व्याधिश्चर्म्माधो न भवति तत्र कृष्णं रोम न तिष्ठति तर्हि याजकस्तं कच्छूरोगिणं सप्त दिनानि रोत्स्यति। पश्चात् सप्तमेऽह्नि याजकेन तस्मिन् ३२ दृष्टे तस्य दृष्ट्या यदि स रोगो न वर्द्धते तत्र हारिद्रं लोम न तिष्ठति दृष्ट्या चर्म्माधो न बुध्यते तर्हि स मुण्डयिष्यते किन्तु रोगस्थानं न मुण्डयिष्यते, ततो याजकस्तं रोगिणं पुनः सप्त दिनानि रोत्स्यति। सप्तमेऽह्नि ३३ ३४ याजकस्तं रोगं द्रक्ष्यति यदि स रोगश्चर्म्मणि न वर्द्धते दृष्ट्या चर्म्मणोऽधो न भवति तर्हि याजकस्तं शुचिं वदिष्यति स स्ववस्त्रं प्रक्षाल्य शुचि र्भविष्यति।

तस्य शुचित्वात् परं यदि चर्म्मणि स रोगोतीव वर्द्धते तर्हि याजकस्तं ३५ पुन र्द्रक्ष्यति यदि तस्य चर्म्मणि कच्छु र्वर्द्धते तर्हि हारिद्रं लोम न मृगयिष्यते सोऽशुचिः। किन्तु तस्य दृष्ट्या स रोगो न वर्द्धते कृष्णरोमाण्युत्तिष्ठन्ति तर्हि तस्य रोग उपाशाम्यत् स शुचिरभूत् याजकस्तं शुचिं वदिष्यति। ३६ ३७

यदि कस्यचित् पुरुषस्य स्त्रिया वा कायचर्म्मणि चिह्नानि चिह्नान्यर्थात् श्वेतानि स्निग्धचिह्नानि भवन्ति तर्हि याजकस्तानि द्रक्ष्यति ३८ ३९ तस्य चर्म्मस्थितानि स्निग्धचिह्नानीषन्मलिनानि श्वेतानि च भवन्ति तर्हि तत्र चर्म्मणि निर्दोषास्तिलकाः स शुचिः स्थास्यति। यस्य केशाः ४० शिरसश्च्युताः स खल्वतिः शुचिः स्थास्यति। यस्य कचाः शिरोग्रपार्श्वात् ४१ च्युताः स भाले खल्वतिः शुचि र्भविष्यति। किन्तु यदि खल्वते र्नरस्य ४२ शिरसि भाले वा ईषल्लोहितं शुक्लक्षतं भवति तर्हि तस्य केशहीने शिरसि भाले वा जातं कुष्ठं। याजकेन तस्मिन् दृष्टे यदि देहचर्म्मस्थं कुष्ठ- ४३

४४ मिव केशहीने शिरसि भाले वा शुक्ललोहितक्षतस्य शोथो भवति, तर्हि स कुष्ठ्यशुचिः याजकस्तमवश्यम् अशुचिं वदिष्यति तच्छिरसि कुष्ठ-
४५ मस्ति। यस्य कुष्ठरोगो जायते तस्य वस्त्रं छेत्स्यते तच्छिरो न छादिष्यते स निजं चिवुकं वस्त्रेण छादयित्वा अशुचिरशुचिरिति शब्दं करि-
४६ ष्यति। यति दिनानि तस्य कुष्ठव्याधिः स्थास्यति स तति दिनानि अशुचिः स्थास्यति अशौचाद् एकाकी वत्स्यति शिविराद् वहिस्तस्य वासस्थानं भविष्यति।

४७ रोमजे वा आतसवस्त्रे रोमजस्य आतसस्य वा अयायां नयायां वा
४८ चर्म्मणि चर्म्मनिर्म्मितद्रव्ये वा यदि कुष्ठं जायते तथा वस्त्रे चर्म्मणि वा
४९ अयायां नयायां वा चर्म्मनिर्म्मिते कुत्रचिद् द्रव्ये यद्यल्पं श्यामता वाल्प-लोहितता भवति तर्हि तत् कुष्ठं भवति तद् याजकं दर्शयिष्यते।
५० ततो याजकस्तं रोगं दृष्ट्वा रोगयुक्तं वस्तु सप्त दिनानि रोधयिष्यति।
५१ सप्तमेह्नि तद्रोगस्य स्थानं द्रक्ष्यति यदि वस्त्रे वा अयायां नयायां वा चर्म्मणि वा चर्म्मनिर्म्मितद्रव्ये वा स व्याधि वर्द्धते तर्हि तत् संहारकं
५२ कुष्ठं तदशुचि। तस्मात् वस्त्रे वा रोमजस्य आतसजस्य वा अयायां नयायां वा चर्म्मनिर्म्मिते वा यत्र कुत्रचित् द्रव्ये स व्याधि जायते तदेव
५३ द्रव्यं दाहयिष्यते, तत् संहारकं कुष्ठं तद् वह्निना दाहयिष्यते। याज-केन दृष्टे स व्याधि यदि वस्त्रे अयायां नयायां वा चर्म्मकृतद्रव्ये वा
५४ न वर्द्धते तर्हि याजकस्तद्व्याधियुक्तं द्रव्यं प्रक्षालयितुम् आदेक्ष्यति
५५ पुनः सप्त दिनानि रोधयिष्यति। धौते याजकस्तद् द्रक्ष्यति तत्र स व्याधि यद्यन्यवर्णो न भवति न च वर्द्धते तर्हि तदेवाशुचि त्वं तद् वह्निना दाह-
५६ यिष्यसि। अन्तर्वहिर्वा तिष्ठति तत् कुष्ठं भवति किन्तु क्षालनात् परं याजकस्य दृष्ट्या तद् यदि मलिनं भवति तर्हि स वस्त्रात् चर्म्मणः
५७ अयायां नयायां वा तत् छेत्स्यति। तथापि तद्वस्त्रे वा तदयायां नयायां वा तच्चर्म्मनिर्म्मितद्रव्ये वा यदि तत् पुन दृश्यते तर्हि तदेव वर्द्धमानं
५८ कुष्ठं यत्र स व्याधि स्तिष्ठति तत् त्वं वह्निना दाहयिष्यसि। यद् वस्त्रं वा तदायां नयां चर्म्मणो द्रव्यं वा क्षालयिष्यसि तस्माद् यदि स व्याधिः शाम्यति तर्हि द्वितीयवारं तद् धाविष्यसि तेन तत् शुचि भविष्यति।
५९ रोमजस्य आतसस्य वा वस्त्रस्य अयाया नयाया वा चर्म्मणः पात्रस्य वा शौचाशौचकथनाय कुष्ठव्याधेरियं व्यवस्था।

# १४ चतुर्दशोऽध्यायः।

१ कुष्ठिनः शुचित्वविधिः प्रायश्चित्तं ३३ गृहीयकुष्ठचिह्ननिर्णयः ४८ गृहीयकुष्ठस्य शुचित्वविधिप्रायश्चित्ते।

परमेश्वरो मूससमवदत् कुष्ठिनः शुचित्वदिने तस्येयं व्यवस्था स याज- १
कान्तिकम् आनेष्यते याजकः शिविराद् वहि र्गत्वा तं द्रक्ष्यति कुष्ठिनः २
कुष्ठे शान्तिं गते सति याजकेन तस्य शोध्यनरस्यार्थं द्वौ जीवन्तौ ४
शुचिपक्षिणौ एरसकाष्ठं रक्तं रोम एसोवतृणम् एतानि ग्राहयिष्यन्ते, ५
मृत्पात्रस्थप्रस्रवणतोयोपरि पक्षिणोरेकश्छेदयिष्यते। स तं जीवत्पक्षिणं ६
एरसकाष्ठं रक्तलोम एसोवतृणञ्च गृहीत्वा तत्प्रस्रवणोद्धृततोयमिश्रिते
हतपक्षिरक्ते तानि जीवत्पक्ष्यादीनि सर्व्वाणि मज्जयिष्यति। कुष्ठात् शोध्य- ७
जनस्योपरि सप्तकृत्वस्तत् प्रक्षिप्य तं शुचीकृत्य तं जीवत्पक्षिणं प्रान्तरे
त्यक्ष्यति। तदा स शुचि र्जनः स्ववस्त्रं धौत्वा केशान् मुण्डयित्वा तोयेन ८
स्नास्यति तेन स शुचि र्भविष्यति ततः स शिविरं प्रवेष्टुं शक्ष्यति किन्तु
सप्तदिनानि स्वदूष्यस्य वहिः स्थास्यति। सप्तमेऽह्नि स्वशिरसः कचात् ९
श्मश्रूणि भ्रुवोः सर्व्वाङ्गलोमानि च मुण्डयिष्यति। स्ववसनं धौत्वा स्वयं
तोयेन स्नात्वा शुचि र्भविष्यति। अष्टमेऽह्नि स निर्दोषौ मेषशावकौ निर्दो- १०
षाम् एकहायनीं मेषवत्सां नैवेद्यार्थं दशमांशत्र्यंशपरिमितानि तैल-
मिश्रितानि गोधूमचूर्णानि लोगैकं तैलञ्च ग्रहीष्यति। शुचिकर्त्ता ११
याजकस्तं शोध्यमनुजं तानि वस्तूनि च गृहीत्वा समाजावासस्य द्वारा-
न्तिके परमेश्वरस्य सम्मुखे स्थापयिष्यति। याजक एकतरं मेषशावकं १२
लोगैकं तैलं गृहीत्वा दोषबलिरूपेणोत्स्रक्ष्यति आन्दोलनीयनैवेद्यार्थं
परमेश्वरसम्मुखे दोलयिष्यति च। प्रायश्चित्तहोमबलीनाम् उत्सर्गस्थले १३
पवित्रस्थाने तं मेषशावकं बलिं दास्यति यतः प्रायश्चित्तबलिरिव
दोषबलि र्याजकस्यांशो भविष्यति अयमप्यति पूतो भविष्यति। याजक- १४
स्तस्य दोषबलेः किञ्चिद् रुधिरं गृहीत्वा तस्य शोध्यजनस्य दक्षिणश्रोत्र-
प्रान्ते दक्षिणकराङ्गुष्ठे दक्षिणपादाङ्गुष्ठे च दास्यति। याजकस्तस्माद् १५
लोगैकतैलात् किञ्चित् तैलं गृहीत्वा स्ववामहस्ततले निषेक्ष्यति।
याजकस्तत्र वामकरतलस्थतैले स्वदक्षिणकराङ्गुलिं मज्जयित्वा अङ्गुल्या १६
तत्तैलस्य किञ्चित् किञ्चित् सप्तकृत्वः परमेश्वरस्य सम्मुखे प्रक्षेप्स्यति।
स्वकरतलस्थम् अवशिष्टं तैलं गृहीत्वा तस्य शोध्यनरस्य दक्षिणकर्णस्य १७
प्रान्ते दक्षिणकराङ्गुष्ठे दक्षिणपादाङ्गुष्ठे दोषबले रक्तोपरि दास्यति।

१८ ततः परं याजकः स्वकरतलस्थतैलमादाय शोध्यनरस्य शिरस्यभिषेक्ष्यति
१९ याजकः परमेश्वरसम्मुखे तदर्थं प्रायश्चित्तं करिष्यति। याजकः प्रायश्चित्त-
बलिं दास्यति शौचात् शोध्यमानस्य नरस्यार्थं प्रायश्चित्तं करिष्यति
२० ततो होमबलिं दास्यति। इत्थं याजकेन वेदिमानीते होमबलौ नैवेद्ये
२१ चोत्सृष्टे तदर्थं प्रायश्चित्ते कृते च स शुचि र्भविष्यति। स कुष्ठी यदि
दरिद्रः स्यात् एतावद् आनेतुं न शक्नुयात् तर्हि स प्रायश्चित्तं कर्त्तुम्
आन्दोलनार्थं दोषबलेः कृते मेषवत्समेकं तैलमिश्रितगोधूमचूर्णस्य
२२ दशांशस्यैकांशं नैवेद्यम् लोगेकतैलं तस्य सामर्थ्यानुसारात् द्वौ कपोतौ
वा कपोतवत्सावानेष्यति तयोरेकः प्रायश्चित्तबलिरन्यो होमबलि
२३ र्भविष्यति। अष्टमदिने स स्वशौचार्थं समाजावासस्य द्वारसमीपे पर-
२४ मेश्वरस्य सम्मुखे याजकस्य निकटे तान् आनेष्यति। याजको दोष-
बल्यर्थकं मेषशावकं लोगेकतैलञ्च गृहीत्वा परमेश्वरस्य सम्मुखे
२५ आन्दोलनार्थं दोलयिष्यति। स दोषबल्यर्थकं मेषशावकं छेत्स्यति
याजको दोषार्थकबलेः किञ्चिद् रक्तं गृहीत्वा शोध्यजनस्य दक्षिणकर्ण-
२६ प्रान्ते दक्षिणकराङ्गुष्ठे दक्षिणपादाङ्गुष्ठे च दास्यति। याजकस्तस्मात्
२७ तैलात् किञ्चिद् आदाय स्ववामकरतले निषेक्ष्यति। याजको दक्षिण-
कराङ्गुल्या वामकरतलस्थतैलात् किञ्चित् किञ्चित् सप्तकृत्वः परमेश्वरस्य
२८ सम्मुखे प्रक्षेप्स्यति। याजकः स्वकरतलस्थतैलात् किञ्चिदादाय शोध्य-
जनस्य दक्षिणकर्णप्रान्ते दक्षिणकराङ्गुष्ठे दक्षिणपादाङ्गुष्ठे च दोषबले
२९ रक्तस्थानोपरि दास्यति। याजकः शोध्यजनस्य कृते परमेश्वरस्य
३० सम्मुखे प्रायश्चित्तं कर्त्तुं स्वकरस्यावशिष्टं तैलं तच्छिरसि दास्यति। ततः
परं स तत्सामर्थ्यानुसारात् प्राप्तयोः कपोतयो र्युवपारावतयो र्वैकं
३१ दास्यति तेन स्वसामर्थ्यानुसाराद् यौ पक्षिणौ प्राप्तौ, तयोरेकं नैवेद्येन
सहितं प्रायश्चित्तार्थम् अन्यञ्च होमार्थं दास्यति। याजकः शोध्यजनकृते
३२ परमेश्वरस्य सम्मुखे प्रायश्चित्तं करिष्यति। अर्थहीनस्य कुष्ठिनः शोधन-
विधिरिति।

३३ परमेश्वरो मूसाहारोणौ जगादाहं यं देशं अधिकर्त्तुं युष्मभ्यं
३४ दास्यामि तत्किनान्देशप्रवेशकाले युष्माकम् अधिकारदेशस्य कुत्रापि
३५ गृहे मया कुष्ठ उत्पादिते तद्गृहस्वामी समेत्य, मम दृष्ट्या गृहे व्याधिः
३६ प्रकाशित इति कथयित्वा याजकं ज्ञापयिष्यति। गृहस्य सर्व्वं वस्तु यथा
नाशुचि भवति तदर्थं व्याधिं द्रष्टुं याजकस्य प्रवेशात् पूर्व्वं गृहं याजकेन

शून्यं कारयिष्यते, ततो याजको गृहं द्रष्टुं प्रवेक्ष्यति। अनन्तरं याजको ३७
व्याधिं द्रक्ष्यति यदि व्याधि गृहभित्तिषु निम्नी भूत ईषद्धरिद्वर्णो रक्त-
वर्णो वा जायते तद्दृष्ट्या भित्तौ निम्नी भूतो भवति तर्हि याजको वेश्मनो ३८
वहिर्भूय द्वारान्तिकं गत्वा सप्तदिनानि तद्वेश्म रोधयिष्यति। याजकः ३९
सप्तमेऽह्नि पुनरेत्य निरीक्ष्य द्रक्ष्यति यदि वेश्मकुड्ये स व्याधि र्वर्द्धते
तर्हि तस्य व्याधियुक्तान् पाषाणान् वहिष्कृत्य नगरस्य वहिरमेध्यस्थाने ४०
निक्षेप्तुं याजकस्तान् आदेक्ष्यति। ततस्तद्वेश्मनोऽभ्यन्तरस्य चतुर्दिक्षस्तैः ४१
परिष्कारयिष्यन्ते सञ्चिता धूल्यश्च नगरस्य वहिरशुचिस्थाने निक्षेप्-
स्यन्ते। ते ऽन्यग्रावण आनीय तत्पाषाणस्थाने निचेष्यन्ति तदन्यलेपेन ४२
गृहं लेपयिष्यन्ति। पाषाणेषु परिवर्त्तितेषु वेश्मनि परिष्कृते लेपिते च ४३
चेद् व्याधिः पुन र्वृद्धा वेश्म विस्तृणोति तदा याजक एत्य द्रक्ष्यति; यदि ४४
तस्मिन् वेश्मनि व्याधि र्वर्द्धते तर्हि तत्र वेश्मनि मारकं कुष्ठमास्ते
तद् वेश्माशुचि भवति। ततः स तद् वेश्म भञ्जयिष्यति अर्थात् तस्य ४५
ग्रावकाष्ठधूलीः सर्व्वा नगरस्य वहि र्नीत्वाशुचिस्थलं नाययिष्यति।
तद्गृहं यावत्कालं रुद्धं तिष्ठेत्, तत्काले यः कश्चित् तदभ्यन्तरं याति ४६
स सन्ध्यां यावद् अशुचिः स्थास्यति। यश्च तस्मिन् वेश्मनि शेते स निजां- ४७
शुकं धाविष्यति यस्तु तत्र भुंक्ते सोपि स्ववस्त्रं धाविष्यति।

तद्वेश्मनो लेपनात् परं व्याधिर्नावर्द्धतेति चेद् याजको वेश्म प्रविश्य ४८
पश्यति तर्हि याजकस्तद् वेश्म शुचि वदिष्यति यतः स व्याधिरशाम्यत्।
तद् वेश्म शुचीकर्त्तुं द्वौ पक्षिणौ एरस्काष्ठं रक्तं रोम एसोवट्णं ४९
गृहीत्वा मृत्पात्रे प्रस्रवणतोयोपरि पक्षिणमेकं छेत्स्यति। स एरसकाष्ठं ५०
एसोवट्णं रक्तरोम जीवत्पक्षिणञ्च गृहीत्वा प्रस्रवणजलमिश्रिते हत- ५१
पक्षिरक्ते मज्जयित्वा वेश्मनि सप्तकृत्वः प्रक्षेप्स्यति। इत्थं पक्षिरक्तं प्रस्र- ५२
वणतोयं जीवत्पक्षेरसकाष्ठैसोवट्णं रक्तरोम चैतैः स वेश्म शोधयि-
ष्यति। तं जीवत्पक्षिणं नगरस्य वहिः प्रान्तरे त्यक्ष्यतीति प्रकारेण ५३
वेश्मार्थं प्रायश्चित्ते कृते तत् शुचि भविष्यति। कुष्ठस्येयं व्यवस्थार्थात् ५४
सर्व्वप्रकारकुष्ठं श्वित्रं वस्त्रस्थं वेश्मस्थञ्च कुष्ठं स्फीतिः पामा स्निग्धं ५५
एतानि कदा शुचीनि कदा चाशुचीनि तज्ज्ञातुमिति व्यवस्था। ५७

---

# १५ पञ्चदशोऽध्यायः ।

१ प्रमेहिनः शोधनविधिः १९ रजस्वलायाः शोधनविधिश्च ।

१ परमेश्वरो मूसाहारोणौ जगाद, युवाम् इस्रायेल्वंशं वदतं तान्
२ इमां वाचं गदतं, कस्यचिन्नरस्याङ्गे प्रमेहरोगे जाते तस्मात् सोऽशुचि
३ र्भविष्यति। प्रमेहेन तस्याशौचं भविष्यति विशेषतो यदि तदङ्गात् प्रमेहः
क्षरति वा प्रमेहाद् अङ्गं रुध्यते, इत्यनयोरेकेन तस्याशौचं भविष्यति।
४ प्रमेही नरो यत्र शय्यायां शेते सा शय्या अशुचिः, यत्रासने स उपवि-
५ शति तदासनञ्चाशुचि भविष्यति। यश्च तस्य शय्यां स्पृशति स स्ववस्त्रं
धाविष्यति तोये स्नास्यति तथापि सन्ध्यां यावद् अशुचिः स्थास्यति।
६ प्रमेही यत्र वस्तुन्युपविशति तत्र यः कश्चिद् उपविशति स स्ववसनं
धाविष्यति तोये स्नास्यति तथापि सन्ध्यां यावद् अशुचिः स्थास्यति।
७ यस्तस्याङ्गं स्पृशति स स्ववसनं धाविष्यति तोये स्नास्यति तथापि
८ सन्ध्यां यावद् अशुचिः स्थास्यति। प्रमेही यस्य शुचिनरस्य गात्रे
निष्ठीवति स स्ववसनं धाविष्यति तोये स्नास्यति तथापि सन्ध्यां
९ यावद् अशुचिः स्थास्यति। प्रमेही यद् वाहनम् आरोहति तद् अशुचि
१० भविष्यति। तस्याधःस्थं वस्तु यः स्पृशति स सन्ध्यां यावद् अशुचिः
स्थास्यति यदि तद् वहति तर्हि तोयेन वस्त्रं धाविष्यति तोये स्नास्यति
११ च तथापि सन्ध्यां यावद् अशुचिः स्थास्यति। प्रमेही स्वकरं तोयेन न
धौत्वा यं स्पृशति स स्ववस्त्रं धाविष्यति तोये स्नास्यति तथापि सन्ध्यां
१२ यावद् अशुचिः स्थास्यति। प्रमेही यन्मृत्पात्रं स्पृशति तद् भङ्क्ष्यते सर्व्वं
१३ काष्ठपात्रं तोयेन धाविष्यति। प्रमेही यदा स्वप्रमेहात् शुद्ध्यति तदा स
स्वशुचित्वात् परम् अपराणि सप्त दिनानि योजयित्वा स्ववस्त्रं धाविष्यति
१४ प्रस्रवणतोये स्नास्यति ततः शुचि र्भविष्यति। अष्टमेह्नि स स्वार्थं द्वौ
कपोतौ कपोतवत्सौ वा गृहीत्वा परमेश्वरस्य सम्मुखे समाजावास-
१५ द्वारान्तिकम् एष्यति तौ याजकाय दास्यति। याजकस्तयोरेकं प्राय-
श्चित्तार्थम् एकञ्च होमार्थम् उत्स्रक्ष्यति याजकस्तस्य प्रमेहकारणात्
१६ परमेश्वरमुद्दिश्य प्रायश्चित्तं करिष्यति। यदि कस्यचिन् मनुजस्य शुक्रं
पतति तर्हि स निजं कृत्स्नदेहं जलेन धाविष्यति तथापि सन्ध्यां यावद्
१७ अशुचिः स्थास्यति। यत्र यत्र वस्त्रे वा कृत्तौ शुक्रं पतति तत्सर्व्वं तोयेन
१८ धाविष्यते तथापि सन्ध्यां यावद् अशुचि स्थास्यति। यया योषिता साकं

यः पुमान् शुक्रेण समं शेते तौ जले स्नास्यतः, तथापि सन्ध्यां यावद् अशुचिः स्थास्यतः।

या योषिद् रजस्वला भवति तस्या अङ्गाद् रुधिरं क्षरति सप्तदिनानि १९ तस्या अशौचं भविष्यति यश्च तां स्पृशति स सन्ध्यां यावद् अशुचिः स्थास्यति। तदशौचकाले सा यत्र यत्र शयनीये शेते तद् अशुचि भवि- २० ष्यति यत्रोपवेक्ष्यति तद् अशुचि भविष्यति। यश्च तस्याः शयनीयं २१ स्प्रक्ष्यति स स्ववस्त्रं धाविष्यति तोये स्नास्यति तथापि सन्ध्यां यावद् अशुचिः स्थास्यति। यस्तु तस्या उपवेशनाधारं स्प्रक्ष्यति, स स्ववस्त्रं धा- २२ विष्यति तोये स्नास्यति, तथापि सन्ध्यां यावद् अशुचिः स्थास्यति। यस्तु तस्याः शय्यास्थम् आसनस्थं वा वस्तु स्पृशति सोपि सन्ध्यां यावद् २३ अशुचिः स्थास्यति। यः पुमान् ऋतुमत्या सार्कं संसर्गं करोति तद्रज- २४ स्तद्गात्रे लगति स सप्तदिनान्यशुचिः स्थास्यति यत्र शय्यायां शेष्यते साप्यशुचि भविष्यति। अशौचकालाद् अन्यानि बहुदिनानि यावद् २५ यदि कस्याश्चिद् योषितो रक्तं स्रवति अशौचकालात् परं वा यदि बहु- दिनानि तस्या रक्तं क्षरति तर्हि सा तद्रक्तस्रावात् तानि सर्व्वदिनानि यावद् अशौचकालवद् अशुचिः स्थास्यति। रक्तस्रावस्य सर्व्वदिनानि २६ सा यत्र शय्यायां शेष्यते साऽशौचकालवद् अशुचि भविष्यति यत्र चासन उपवेक्ष्यति तद् अशौचकालवद् अशुचि भविष्यति। यश्च तानि २७ स्प्रक्ष्यति सोऽशुचि भविष्यति वस्त्रं धौत्वा तोये स्नास्यति तथापि सन्ध्यां यावद् अशुचिः स्थास्यति। किन्तु यदि तस्याः स्त्रिया रक्तस्रावो निवर्त्तते २८ तर्हि सा स्वार्थं सप्त दिनानि गणयित्वा तेभ्यो गणितसप्तदिनेभ्यः परं शुचि भविष्यति। अष्टमेह्नि सा स्वार्थं द्वौ कपोतौ कपोतवत्सौ वा २९ गृहीत्वा समाजावासद्वारे याजकान्तिकम् आनेष्यति। याजकस्तयो- ३० रेकं प्रायश्चित्तबलिम् अन्यं होमबलिम् उत्स्रक्ष्यति तस्या रक्तस्रावाशौच- कारणात् परमेश्वरस्य समीपे तस्याः कृते प्रायश्चित्तं करिष्यति। लोकानां ३१ मध्यवर्त्तिनि ममावासे ऽशौचकाले तैरशुचीकृते ते यन्न म्रियन्ते तदर्थं इस्रायेल्वंशाः स्वाशौचात् युवाभ्याम् इत्थं पृथक् करिष्यन्ते। इति प्रमे- ३२ हिनः शुक्रक्षरणादशुचेर्नरस्य रजस्वलायाः स्त्रियाः प्रमेहवत्स्त्रीपुंस- ३३ योरशुचिस्त्रिया सार्कं संसर्गिणश्च व्यवस्था।

# १६ षोड़शोऽध्यायः।

१ याजकस्यातिपूतस्थानप्रवेशविधिः ११ याजकस्य प्रायश्चित्तबलिदानं १५ लोकानां प्रायश्चित्तबलिदानं २० त्याज्याजविधिः २६ वार्षिकबलिदानविधिः।

१ परमेश्वरान्तिके गमनसमये हारोणस्य द्वयोः सुतयो र्मृत्यौ घटिते २ परमेश्वरो मूससं बभाषे। परमेश्वरो मूससे कथामिमां कथितवान् तव भ्राता हारोणो यन्न म्रियेत, तदर्थं विच्छेदकवसनस्य मध्यवर्त्ति-मञ्जूषाया उपरिस्थपापाच्छादनस्य सम्मुखम् अतिपूतं स्थानं सर्व्वसमये ३ प्रवेष्टुं तं निषेध, पापाच्छादनोपर्य्यहं मेघे दर्शनं दास्यामि। हारोणः प्रायश्चित्तार्थं गोवत्समेकं होमार्थं मेषमेकं गृहीत्वा इत्थम् अति पवित्र-४ स्थानं प्रवेक्ष्यति। स आतसमुत्तरासङ्गं परिधास्यति आतसं कटिवसनञ्च परिधास्यति आतसं कटिबन्धनञ्च परिधास्यति आतसस्योष्णीषेण भूषितो भविष्यति; एतानि वसनानि पवित्राणि, तस्मात् तोयेन ५ स्वकायं धौत्वा तानि परिधास्यति। ततः स इस्रायेल्वंशस्य समाजात् ६ प्रायश्चित्तार्थकं छागद्वयं होमार्थकं मेषमेकञ्च ग्रहीष्यति। हारोणः स्वस्य प्रायश्चित्तार्थकं गोवत्सम् आनीय स्वस्य परिवारस्य च कृते प्राय-७ श्चित्तं करिष्यति। ततस्तौ छागौ गृहीत्वा समाजावासस्य द्वारान्तिके ८ परमेश्वरस्य सम्मुखम् आनेष्यति। अधिकन्तौ तौ द्वौ हारोणो गुटिका-९ पातं करिष्यति तयोरेकः परमेश्वराय तदन्यस्त्यागाय भविष्यति। अयं परमेश्वरायेति यं छागं प्रति गुटिकापातेन निश्चीयते हारोणस्तं १० गृहीत्वा प्रायश्चित्तार्थं बलिं दास्यति। किन्तु योऽजो गुटिकापातेन त्यागाय भविष्यति प्रान्तरे त्यागाय तद्विसर्जनात् पूर्व्वं तस्य कृते प्रायश्चित्तं कर्त्तुं जीवता तेन परमेश्वरस्यान्तिके समुपस्थातव्यं।

११ हारोणः स्वीयप्रायश्चित्तबलिं गोवत्सम् आनीय स्वस्य परिजनस्य च कृते प्रायश्चित्तं करिष्यति, स्वीयप्रायश्चित्तबलिं तं गोवत्सं छेत्स्यति। १२ परमेश्वरस्य सम्मुखस्थवेद्याः प्रज्वलिताङ्गारैः पूर्णं धूपपात्रं चूर्णीकृत-१३ सुगन्धिसर्जरसमुष्टिमेकञ्च गृहीत्वा विच्छेदकवस्त्रमध्यं नेष्यति। तं सुगन्धिसर्जरसं परमेश्वरस्य सम्मुखे वह्नौ दास्यति तेन साक्ष्यमञ्जूषोपरि १४ स्थिते पापाच्छादने सर्जरसस्य धूमेनावृते सति स न मरिष्यति। ततः स तस्य गोवत्सस्य किञ्चिद् रक्तं गृहीत्वा पापाच्छादनस्य पूर्व्वदिशि स्वाङ्गुल्या प्रक्षेप्स्यति स्वाङ्गुल्या तद्रक्तम् पापाच्छादनस्य सम्मुखे सप्त वारान् प्रक्षेप्स्यति।

ततः स लोकानां प्रायश्चित्तार्थकबलिं छागं छित्त्वा तद्रक्तं विच्छेद- १५ वस्त्रमध्यम् आनीय गोवत्सरक्तं यथा प्रक्षिप्तवान्, तथा तद्रक्तमपि करिष्यति अर्थात् पापाच्छादनस्य सम्मुखे पापाच्छादने च तत् प्रक्षे- प्स्यति। इस्रायेल् वंशानाम् अशुचितासर्व्वपापापराधेभ्यः स पवित्रस्था- १६ नार्थं प्रायश्चित्तं करिष्यति अशुचितायुक्तानां तेषां मध्यवर्त्तिनः समाजा- वासस्य हेतोः स तथा करिष्यति। प्रायश्चित्तं कर्त्तुं तस्य महापूत- १७ स्थानप्रवेशमारभ्य वहिरागमनं यावत् समाजावासे कोपि जनो न स्थास्यति। अपरं तेन स्वस्य परिवारस्य इस्रायेल्वंशस्य सर्व्वसमाजस्य १८ च प्रायश्चित्ते समापिते स परमेश्वरसम्मुखस्थाया वेद्याः समीपम् आगत्य तदर्थं प्रायश्चित्तं करिष्यति, गोवत्साजयोः किञ्चिद् रक्तमादाय वेदि- शृङ्गेषु चतुर्दिक्षु दास्यति। तद्रक्तस्य किञ्चिद् आदाय स्वाङ्गुल्या १९ तदुपरि सप्तकृत्वः प्रक्षिप्य तां शुचिं करिष्यति इस्रायेल्वंशस्याशौचात् तां पावयिष्यति।

इत्थं पूतस्थानस्य समाजावासस्य वेद्याश्च प्रायश्चित्ते सम्पन्ने जीवदजः २० समानेष्यते। हारोणस्तस्य जीवदजस्य शिरसि स्वकरावर्पयित्वा इस्रा- येल्वंशस्य सर्व्वदोषपापापराधान् तदुपरि स्वीकृत्य तत्सर्व्वान् तद- २१ जशिरस्यर्पयिष्यति तत उपयुक्तनरेण तं प्रान्तरे विसर्क्ष्यति तेन सोजस्तेषां सर्व्वपापानि नरशून्यस्थाने शिरसा वक्ष्यति सोऽजस्तेन प्रान्तरे त्यक्ष्यते। हारोणो महापूतस्थानप्रवेशकाले यान्यातसवसनानि पर्य्यधात् तानि २२ समाजावासमध्यं गत्वा त्यक्त्वा तत्र स्थापयिष्यति। स पूतस्थाने स्वदेहं २३ जलेन धौत्वा स्ववस्त्राणि परिधाय निर्गमिष्यति स्वस्य लोकानाञ्च होमबलिं दत्त्वा स्वस्य लोकानाञ्च कृते प्रायश्चित्तं करिष्यति। तत्प्रायश्चित्तबले मेदो २४ वेद्यां दाहयिष्यति। यः पुमान् त्याज्यमजं त्यक्ष्यति स स्ववस्त्राणि प्रक्षाल्य स्वदेहं जलेन धौत्वा शिविरम् आगमिष्यति। यस्य प्रायश्चित्त- २५ बले गोवत्सस्य यस्य च प्रायश्चित्तबलेरजवत्सस्य रक्तं प्रायश्चित्तार्थं २६ पूतस्थानम् आनीतं लोकास्तौ शिविरवहि नीत्वा तयोः कृत्तिक्रव्यविष्ठा २७ वह्निना दाहयिष्यन्ति। यस्तानि दाहयिष्यति स स्ववस्त्राणि धाविष्यति २८ तोये देहं स्नापयिष्यति ततः शिविरमध्यम् आगमिष्यति।

युष्माकं कृते नित्यविधिरयं भविष्यति सप्तममासस्य दशमे दिवसे २९ स्वदेशीया वा युष्मन्मध्यवासिनो विदेशीया यूयं स्वप्राणेषु दुःखं दास्यथ किमपि कर्म्म न करिष्यथ यस्मात् तदह्नि याजको युष्मान् शुचीकर्त्तुं

युष्मत्कृते प्रायश्चित्तं करिष्यति तेन यूयं परमेश्वरस्य सम्मुखे स्वपापेभ्यः
३० परिष्कारिष्यध्वे। तद् युष्माकं विश्रामाय विश्रामदिनं, यूयं नित्य-
३१ विधिना स्वस्वप्राणान् तापयिष्यथ। यो जनो स्वपितृपदेन यागं कर्त्तुं
लोकैरभिषिच्य याजनपदे नियोच्यते, सएव प्रायश्चित्तं करिष्यति
३२ आतसानि पूतवस्त्राणि परिधास्यति च। सोऽतिपूतस्थानाय प्रायश्चित्तं
करिष्यति समाजावासस्य वेद्याश्च कृते प्रायश्चित्तं करिष्यति, याज-
३३ कानां समाजस्थानां सर्व्वेषाञ्च कृते प्रायश्चित्तं करिष्यति। इस्रायेल्वंशस्य
सर्व्वपापात् वर्षमध्य एककृत्वः प्रायश्चित्तं कर्त्तुं युष्मभ्यमयं नित्यविधि
र्भविष्यति। ततो मूससं प्रति परमेश्वरस्य यथा निदेशं तथा कर्म्मा-
क्रियत।

---

## १७ सप्तदशोऽध्यायः।

१ आवासद्वारे परमेश्वरमुद्दिश्य सर्व्वमुत्सृष्टसाज्ञा देवानुद्दिश्य उत्सृष्टं निषेधः ८ तत्करणफलं १० रक्तपाननिषेधः १५ स्वयं मृतस्य पशुना हतस्य वा पशो र्भक्षण-निषेधश्च।

१ परमेश्वरो मूससमवदत् त्वं हारोणं तत्सुतान् इस्रायेल्वंशांश्च वद
३ तेभ्य एतद्वाचं कथय परमेश्वर इत्यादिशति। इस्रायेल्वंशजो यः
४ कश्चिद् गां वा मेषं छागं वा शिविरमध्ये शिविरवहि र्वा छिनत्ति किन्तु
परमेश्वरावाससम्मुखे परमेश्वरमुद्दिश्य उपहारमुत्स्रष्टुं समाजावास-
द्वारान्तिकं नानयति तं प्रति रक्तपातपापं भविष्यति स रक्तपातनात्
५ स्वलोकानां मध्याद् उच्छेत्स्यते। अस्यायमाशय इस्रायेल्वंशाः स्वं स्वं
बलिं प्रान्तरं न नीत्वा समाजावासद्वारान्तिके परमेश्वरमुद्दिश्य याज-
६ कान्तिकमानीय मङ्गलार्थं परमेश्वरमुद्दिश्य उत्स्रक्ष्यन्ति। याजकः समा-
जावासस्य द्वारान्तिके परमेश्वरस्य वेद्या उपरि तेषां बलीनां रक्तं
७ प्रक्षेप्स्यति परमेश्वरमुद्दिश्य सुगन्धार्थं मेदो दाहयिष्यति। तेन ते
ये देवैः सह व्यभिचरन् तानुद्दिश्य पुन र्बलिं न दास्यन्ति तेषां
पुरुषपरम्परासु नित्यविधिरयमेको भविष्यति।

८ पुनस्त्वं तान् वद इस्रायेल्वंशीयो वा युष्माकं मध्ये प्रवासिविदेशी
९ यः कश्चित् प्रायश्चित्तबलिं होमबलिञ्च ददाति किन्तु परमेश्वरम्
उद्दिश्योत्स्रष्टुं तं समाजावासान्तिकं नानयति स स्वलोकानां मध्याद्
उच्छेत्स्यते।

इस्रायेल्वंशीयो युष्माकं मध्ये प्रवासिविदेशी वा यः कश्चित् किञ्चन १० रक्तं भुंक्ते तं रक्तभोक्तारं प्रति विमुखोहं भविष्यामि लोकानां मध्यात् तमुच्छेत्स्यामि। यतो रक्तमध्ये देहस्य जीवनं तिष्ठति युष्माकं ११ प्राणकारणात् प्रायश्चित्तं कर्त्तुम् अहं वेद्या उपरि युष्मभ्यं तददां, प्राणस्य प्रायश्चित्तं रक्तमेव भवति। अत इस्रायेल्वंशमहम् अवदं १२ युष्माकं मध्ये कोपि रक्तं न भोक्ष्यते युष्माकं मध्यवासी कश्चिद् विदेश्यपि रक्तं न भोक्ष्यते। इस्रायेल्वंशीयो युष्मन्मध्यवासिविदेशी वा यः १३ कश्चित् मृगयया कमपि भक्ष्यं पशुं पक्षिणं वा हन्ति स तस्यास्रं निक्षिप्य धूलीभिराच्छादयिष्यति। यतो ऽस्रमेव सर्व्वप्राणिनां जीवनं १४ अर्थात् जीवनोपायो ऽतोहम् इस्रायेल्वंशाय कथितवान् यूयं कस्यापि प्राणिनोऽस्रं न भक्ष्यध्वं, यतो ऽस्रमेव सर्व्वप्राणिनो जीवनं यः कश्चित् तद् भोक्ष्यते स उच्छेत्स्यते।

स्वदेशिविदेशिनां मध्ये यः स्वयं मृतं पशुना हतं वा पशुं भुंक्ते स १५ स्ववस्त्रं धाविष्यति तोये स्नास्यति च तथापि सन्ध्यां यावद् अशुचिः स्थास्यति ततः शुद्धो भविष्यति। किन्तु यदि न धावति न स्नाति वा १६ तर्हि स स्वपापं भोक्ष्यते।

## १८ अष्टादशोध्यायः।

१ ईश्वराज्ञां पालयितुं विनयः ६ अविहितविवाहकथनं १८ अविहितानां नाना कर्म्मणां कथनञ्च।

परमेश्वरो मूसं जगाद त्वम् इस्रायेल्वंशान् वद तेभ्य इमां वाचं १ कथय, अहं युष्माकं प्रभुः परमेश्वरः। यूयं यत्र मिसर्देशे न्यवसत २ तन्मतानुसारतो नाचरत यं किनान् देशं युष्मान् नेष्यामि तन्मतानु- ३ सारादपि नाचरत तत्रस्थानां व्यवस्थाभिर्न वर्त्तध्वं। किन्तु मम राज्य- ४ नीतीर्मन्यध्वं मम विधीन् पालयध्वं तदनुसारेणाचरत यस्मादहमेव युष्माकं प्रभुः परमेश्वरः। मम विधयो राज्यनीतयश्च युष्माभिः पालनीया ५ यो जनस्तान् पालयिष्यति सएव तद्द्वारा जीविष्यति, परमेश्वरो ऽहं।

यूयं स्वगोत्रस्य निषिद्धस्त्रिया आवरणं मोचयितुं तदन्तिकं मा ६ यात यस्मादहं परमेश्वरः। त्वं स्वपितुर्मातुर्वा नावरणं मोचय ७ यतः सा तव माता, त्वं तस्या आवरणं मा मोचय। तव पितृजायाया ८ आवरणीयं मा मोचय यस्मात् तत् पितुरावरणं भवति। तव ९

भगिनी अर्थात् तव पितुः कन्या वा मातुः कन्या सा गेहजाता वान्यत्र
१० जाता भवेत् तस्या आवरणं मा मोचय। पौत्र्या दौहित्र्या वावरणं
११ मा मोचय तत् तवावरणं भवति। तव विमातृसुताया आवरणं मा
१२ मोचय यतः सा तव पितृतो जाता तव स्वसा भवति। तव पितृस्वसु-
१४ रावरणं मा मोचय सा तव पितृगोत्रजा। मातुः स्वसुरावरणं मा
मोचय सा तव मातृगोत्रजा। तव पितृव्यावरणं मा मोचय तत्पत्नीं
१५ मा गच्छ च यतः सा तव मान्या भवति। तव पुत्रवध्वा आवरणं मा
१६ मोचय यतः सा स्नुषा भवति तस्या आवरणं मा मोचय। तव सहज-
१७ जायाया आवरणं मा मोचय यस्मात् तत् तव सहजावरणं। यस्या
योषाया आवरणं मोचयसि, तस्याः सुताया आवरणं मा मोचय,
आवरणं मोचयितुं तस्याः पौत्रीं दौहित्रीं वा मा गृहाण यतः सा
तद्गोत्रजा कर्म्मेदं गुरुपापं।

१८ स्वजायायाः क्लेशभयात् तज्जीवत्काले तत्स्वसुरावरणं यन्न मोचयेस्तदर्थं
१९ कामपि स्त्रियं तत्स्वसुः सपत्नीरूपेण मा गृहाण। ऋतुमत्या अशौ-
२० चकाले तस्या आवरणं मोचयितुं तस्याः समीपं मा याहि। त्वं स्वात्मानम्
२१ अशुचिं कर्त्तुं स्वसमीपवासिनो जायां मा गच्छ। त्वदंशजातं कमपि
मोलक् देवमुद्दिश्य वह्निमध्येन मा गमय त्वदीश्वरस्य नामाशुचि मा
२२ कुरु अहमेव परमेश्वरः। स्त्रियेव पुंसा समं संसर्गं मा कार्षीस्तदकर्त्तव्यं
२३ कर्म्म। त्वं स्वम् अशुचिं कर्त्तुं कमपि पशुं मा गच्छ कापि योषा केन-
चित् पशुना साकं शृङ्गारं कारयितुं तत्सम्मुखे न तिष्ठतु यस्मात् तत्
२४ विपरीतं कर्म्म। यूयम् एतैः कर्म्मभिः स्वान् अशुचीन् मा कार्ष्ट किन्तु
२५ यान् जातीयान् युष्मत्सम्मुखात् दवयिष्यामि ते कर्म्मभिरेतैरशुचयो-
ऽभूवन् देशोऽप्यशुचिरभूत् अतोहं तत्कलुषाणि तान् भोजयिष्यामि
२६ देशः स्वनिवासिन उद्गरिष्यति। अतः स्वदेशीया युष्माकं मध्ये प्रवा-
सिनो विदेशीयाश्च सर्व्वे यूयं एतादृशम् अवर्त्तनीयं कर्म्म न कुर्व्वाणा मम
२७ विधीन् व्यवस्थाश्च पालयत। युष्माकं पूर्व्ववर्त्तिनाम् एतद्देशीयजनानां
२८ तादृशावर्त्तनीयकर्म्मकरणाद् देशोऽशुचिरभूत् तस्माद् यूयं सावधाना
भवत, नो चेद् युष्माकं पूर्व्ववर्त्तिनो जातीया यद्वद् अनेन देशेनोद्गीर्णा-
२९ स्तद्वद् यूयमपि स्वीयाशुचित्वात् तेनोद्गरिष्यध्वे। यतो येन केनचित्
एषां मध्ये कापि घृणार्हा क्रिया क्रियते स निजलोकेभ्य उच्छेत्स्यते।
३० अतो युष्मत्पूर्व्वकालीयैर्यानि घृण्यकर्म्माण्यक्रियन्त यूयं तानि मा कुरुत

तैः स्वान् अशुचीन् अक्वत्वा मदाज्ञां पालयत अहमेव युष्माकं प्रभुः परमेश्वरः।

---

## १९ ऊनविंशोऽध्यायः।

१ नानाविधविधिव्यवस्थानां वर्णनं।

परमेश्वरो मूससमवदत् त्वम् इस्रायेलवंशानां सर्व्वसमाजाय कथय १ तान् इमां वाणीं वद यूयं पवित्रा भवत यतो युष्माकं प्रभुः परमेश्वरो- २ ऽहमेव पवित्रः।

यूयं स्वस्वमातरं पितरञ्चाद्रियध्वं मम विश्रामदिनानि पालयत ३ यतोऽहं युष्माकं प्रभुः परमेश्वरः। यूयं देवगणस्य पश्चाद्गामिनो मा भूत ४ स्वार्थं धातुमयी मूर्त्ती मा कार्ष्ट यतोऽहं युष्माकं प्रभुः परमेश्वरोऽस्मि।

परमेश्वरमुद्दिश्य मङ्गलार्थकबलिदानसमये यूयम् अनुग्रहलाभार्थं ५ दानं करिष्यथ। बलिदानस्याह्नि तत्परेऽह्नि च तन्मांसं भक्षिष्यथ यदि ६ तृतीयदिनं यावत् तदवशिष्टं तिष्ठति तर्हि तद् वह्निना दाहयिष्यथ। किन्तु तृतीयदिने यदि कश्चित् तस्य किञ्चित् भुंक्ते तर्हि स घृणार्हो ७ ऽग्राह्यश्च भविष्यति। भोक्ता तत्पापं भोक्तव्यं यतः स परमेश्वरस्य ८ पवित्रं वस्तु सामान्यं ज्ञातवान् अतः स स्वलोकेभ्य उच्छेत्स्यते।

यूयं स्वस्वक्षेत्रस्य शस्यकर्त्तनकाले क्षेत्रस्य कोणं निःशेषं न छिन्तत न च ९ स्वस्वक्षेत्रपतितं शस्यमुञ्छत। गोस्तनीक्षेत्रस्य सर्व्वं फलं न संगृह्णीत १० गोस्तनीक्षेत्रे पतितं फलं न संगृह्णीत दरिद्रेभ्यो विदेशिभ्यः किञ्चित् त्यजत युष्माकं प्रभुः परमेश्वरोऽहं।

यूयं मा चोरयत मा वञ्चयत परस्परं मृषा मा वदत च। ११

यूयं मम नाम्ना मृषा शपथं मा कुरुत स्वीयेश्वरस्य नाम साधारणं मा १२ कार्ष्ट च यस्मादहं परमेश्वरः।

त्वं स्वसमीपवासिनं प्रति नान्यायं कुरु मापहर वेतनभुजो वेतनं १३ आ रात्रेः प्रातर्यावत् मा निधेहि।

त्वं वधिरं मा शपस्व, अन्धसम्मुखे बाधकं वस्तु मा निधेहि किन्तु त्वदी- १४ श्वरात् बिभीहि परमेश्वरोऽहमेव।

त्वं विचारे नान्यायं कुरु दुर्गतस्य पक्षपातं मा कुरु धनिनं मा सम्म- १५ न्यस्व न्यायेन स्वसमीपवासिनो विचारं निष्पादय।

१६ त्वं कर्णेजपन् स्वलोकानां मध्ये मा भ्राम्य स्वसमीपवासिनि हते निश्चेष्टो मा तिष्ठ, परमेश्वरोऽहमेव।

१७ त्वं मनसा स्वभ्रातरं मा ऋतीयस्व किन्तु स्वसमीपवासिनं स्वयं तिरस्करिष्यसि तेन तत्पापं न भोक्ष्यसे।

१८ त्वं मा प्रतिहिंस्याः स्वलोकानां वंशं मा द्विष्याः समीपवासिनि स्ववत् प्रेम कुर्य्याः परमेश्वरोऽहमेव।

१९ त्वं मद्व्यवस्थाः पालय अन्यजातीयैः पशुभिः समं स्वपशून् मा क्रीडय त्वदेकक्षेत्रे नानाजातीयबीजानि मा वप अतसीलोम्नो वस्त्रं मा परिधेहि।

२० मूल्येन न मुक्ता तदन्यथा वा न विसृष्टा या वाग्दत्ता दासी तया सह
२१ यदि कश्चित् संसर्गं करोति तर्हि तौ दण्ड्यौ भविष्यतस्तौ न घानिष्येते यतः सा न मुक्ता। स पुमान् समाजावासस्य द्वारान्तिकं परमेश्वरमुद्दिश्य
२२ दोषार्थबलिम् अर्थात् दोषार्थमेषबलिम् आनेष्यति। याजकः परमेश्वरम् उद्दिश्य दोषार्थमेषबलिं दत्त्वा तत्कृतपापस्य प्रायश्चित्तं करिष्यति तेन तस्य पापं क्षंस्यते।

२३ यूयं देशं प्रविश्य भक्षणार्थं यान् यान् पादपान् रोपयिष्यथ तत्फलान्यच्छिन्नत्वक्केन गणयिष्यथ, यथा युष्मभ्यं बहुफलान्युत्पद्यन्ते तदर्थं वर्षत्रयं यावत् ते युष्माकं पक्षे अच्छिन्नत्वचः स्थास्यन्ति तत्
२४ फलानि न भक्षिष्यत। चतुर्थवर्षे सर्व्वफलानि परमेश्वरप्रशंसायै पूतानि
२५ भविष्यन्ति। पञ्चमवर्षे तत्फलानि भोक्ष्यध्वे युष्माकं प्रभुः परमेश्वरोऽहं।

२६ युष्माभिरस्रेण सार्कं किमपि वस्तु न भोक्तव्यं, मायाविद्या न व्यवहार्य्या शुभाशुभकालौ न विचार्य्यौ।

२७ यूयं स्वस्वशिरसः कचान् वर्त्तुलान् मा कार्ष्ट स्वस्वश्मश्रूणां कोणं
२८ मा मुण्डयत। यूयं प्रमीतानां कृते स्वस्वाङ्गं अस्त्रै मा क्षत वपुःस्वक्षतचिह्नं मा चित्रयत, परमेश्वरोऽहं।

२९ यूयं स्वस्वसुतां वेश्यात्वे मा प्रवर्त्तयत नोचेत् कृत्स्नो देशो व्यभिचरिष्यति कुकर्म्मणा देशः पूरिष्यते।

३० यूयं मद्विश्रामदिनानि पालयत मत्पूतस्थानम् आद्रियध्वं परमेश्वरोऽहमेव।

३१ यूयं भूतविदो न मन्यध्वं स्वान् अशुचीन् कर्त्तुं गुणिनां समीपे किमपि मा चेष्टध्वं यस्मादहमेव युष्माकं प्रभुः परमेश्वरः।

यूयं पक्वकेशानां प्राचीनानां सम्मुख उत्थाय तिष्ठत वृद्धान् समाद्रियध्वं ३२ स्वेश्वरात् बिभीत परमेश्वरोऽहमेव।

कश्चन विदेशी यदि युष्मद्देशे युष्माभिः सार्कं निवसति तर्हि यूयं तं ३३ नोपद्रवत युष्मद्वंशीयो युष्मत्सहवासिविदेशी च युष्माकं दृष्ट्या समौ ३४ भविष्यतः, विदेशिनम् आत्मवत्प्रीयध्वं यतो यूयं मिसर्देशे विदेशिन आस्त युष्माकं प्रभुः परमेश्वरोऽहं।

यूयं विचारे वा परिमाणे वा तौले वा द्रोणे नान्यायं कुरुत। न्याय्यो ३५ दण्डो न्याय्यो मानपाषाणो न्याय्य ऐफा न्याय्यो हिन् च युष्माकं भवन्तु ३६ यो मिसर्देशात् युष्मान् वहिरानयत् युष्माकं स प्रभुः परमेश्वरोऽहं। अतो ३७ यूयं मम सर्व्वा विधिव्यवस्था मन्यमानाः पालयत परमेश्वरोऽहं।

---

## २० विंशोऽध्यायः।

१ मोलक्देवमुद्दिश्य पुत्त्रोत्सर्गाद्दण्डः ६ भूतविद्भिः, सह मन्त्रणातो दण्डः ७ पूतत्वकथनं ९ मातरपित्रोः शपनाद्दण्डः १० अशुचिकर्म्मणा दण्डः २२ आज्ञापालनकथनं २७ भूतविदां दण्डश्च।

परमेश्वरो मूससमवदत् त्वम् इस्रायेल्वंशाय पुनः कथय इस्रायेल्वंश- १ मध्ये तेषां देशे प्रवासिविदेशिनां मध्ये वा यः कश्चित् स्ववंशीयं कमपि २ मोलक्देवम् उद्दिश्य ददाति स नितान्तं घानिष्यते देशीयलोकास्तं पाषाणै र्हनिष्यन्ति। अहमपि तं मानुषं प्रति विमुखीभूय स्वलोकेभ्यस्तम् उच्छे- ३ त्स्यामि यतः स मोलक्देवमुद्दिश्य स्ववंशजं दत्त्वा मत्पूतस्थानम् अपवित्री करोति मम पवित्रं नाम च साधारणं करोति। यदा पुमान् स्वसन्तानं ४ मोलक्देवायोत्सृजति, तदा यदि देशीयलोकास्तं दृष्ट्वापि न पश्यन्ति तं न घ्नन्ति तदाहं तं तस्य वंशञ्च प्रति विमुखीभूय तं मोलक्देवेन समं ५ व्यभिचर्त्तुं तत्पश्चाद्गामिनः सर्व्वांश्च स्वलोकेभ्य उच्छिन्नान् करिष्यामि।

यश्च भूतविद्भि र्गुणिभिर्वा सार्कं व्यभिचर्तुं तेषां पश्चाद् गच्छति अहं ६ तं प्रति विमुखीभूय स्वलोकेभ्यस्तम् उच्छेत्स्यामि।

यूयं स्वान् पावयित्वा पूता भवत यस्मादहं युष्माकं प्रभुः परमेश्वरः। ७ यूयं मम विधीन् सम्मन्य पालयत युष्माकं पावकः परमेश्वरोऽहं। ८

यः स्वपितरं मातरं वा शपते स नितान्तं घानिष्यते पित्रोः शपनात् ९ तदुपरि बधापराधो भविष्यति।

यदि कश्चित् परस्य जायया समं व्यभिचरति तर्हि यः समीपवासिनो १०

११ यया भार्य्यया समं व्यभिचरति स व्यभिचारी सा व्यभिचारिणी चोभौ नितान्तं घानिष्येते। यदि कश्चित् पितु र्जायाया आवरणीयं नग्नी करोति तामुपगच्छति तर्हि तौ नितान्तं घानिष्येते तयोरुपरि बधापराधो भवि-
१२ ष्यति। यदि कश्चित् पुत्त्रबधूं गच्छति तर्हि तावपि नितान्तं घानिष्येते
१३ अतिकुकर्म्मकरणात् तौ प्रति बधापराधो भविष्यति। पुमान् यदि स्त्रीवत् पुमांसमुपगच्छति तर्हि घृणार्हकर्म्मकरणात् तौ नितान्तं घानि-
१४ ष्येते तयोरुपरि बधापराधो भविष्यति। यदि कश्चित् कन्यां तन्मातरञ्च गच्छति तर्हि तद् घृणार्हं कर्म्म युष्मन्मध्ये यथा तादृशी दुष्टता न जायते
१५ तदर्थं ते त्रयोऽपि वह्निना दाहयिष्यन्ते। यदि कश्चित् कमपि पशुं
१६ गच्छति तर्हि स नितान्तं घानिष्यते यूयं तं पशुमपि हनिष्यथ। काचि-न्नारी यदि पशुना साकं संसर्गं कर्त्तुं तदन्तिकं गत्वा शेते तर्हि त्वं तां नारीं तं पशुञ्च घातयिष्यसि तौ नितान्तं घानिष्येते तौ प्रति बधापराधो
१७ भविष्यति। यदि कश्चित् स्वभगिनीम् अर्थात् पितुः कन्यां मातृकन्यां वा गृह्णाति तयोरुभयोरावरणीयं यद्युभाभ्यां दृश्यते तर्हि तद्गुरुपापं तौ स्वलोकानां दृष्टित उच्छेत्स्येते यतः स स्वभगिन्या आवरणीयस्य
१८ नग्नत्वकरणात् स्वपापफलं स्वयं भोक्ष्यते। कश्चिद् यदि रजस्वलां योषितं गच्छति तदावरणीयं नग्नी करोति तर्हि तेन पुंसा रुधिरखनिप्रकटी-करणात् तया योषिता स्वास्रखनिप्रकटीकरणाच्च तावुभौ स्वलोकानां
१९ मध्याद् उच्छेत्स्येते। त्वं स्वमातृस्वसुः पितृस्वसु र्वा आवरणीयं नग्नी मा कुर्य्याः, यः कश्चिद् इत्थं स्वगोत्रजाताया आवरणीयं नग्नी करोति तावुभौ
२० स्वपापं भोक्ष्येते। यः स्वमातुलीं गच्छति स्वमातुलावरणीयनग्नीकरणात्
२१ तौ स्वं स्वं पापफलं भोक्ष्येते निरपत्यौ च मरिष्यतः। यः स्वभ्रातृजायां गच्छति सोऽशुचिकर्म्म कुरुते स्वभ्रातृजायाया आवरणीयस्य नग्नत्वकर-णात् तौ निरपत्यौ भविष्यतः।

२२ यूयं मम सर्व्वं विधिं व्यवस्थाञ्च पालयथ तेनाहं वस्तुं युष्मान् यं देशं
२३ नयामि स देशो युष्मान् नोद्गरिष्यति। अहं युष्माकं सम्मुखाद् या जाती र्दूरयिष्यामि तेषाम् आचारानिव नाचरिष्यथ यस्मात् ते तानि
२४ कुकर्म्माणि कृतवन्तस्ततोऽहं तान् ऋतीयितवान्। किन्त्वहं युष्मभ्यमकथयं यूयं तेषां देशमधिकरिष्यथ, अहं युष्मभ्यं तं दुग्धमधुप्रवाहिनं देशम् अधिकर्त्तुं दास्यामि यत इतरलोकेभ्यो युष्मान् पृथक्कृद् युष्माकं प्रभुः
२५ परमेश्वरोऽहं। अतो यूयं शुच्यशुचिपशून् शुच्यशुचिपक्षिणश्च भेत्स्यथ,

अहं यान् पशून् पक्षिणः कीटादीन् जन्तून् अशुचीन् उक्त्वा युष्मान् पृथक् कृतवान् तै र्यूयं स्वान् स्वान् प्राणान् घृणार्हान् मा कुरुत। यूयं २६ मामुद्दिश्य पवित्रीभवत यतोऽहं परमेश्वरएव पवित्रः किञ्चाहं युष्मान् स्वलोकान् कर्त्तुं अन्यलोकेभ्यः पृथक् कृतवान्।

पुमान् स्त्री वा यो भूतविद् गुणी वा भवति स नितान्तं घानिष्यते २७ लोकैः स पाषाणै र्हनिष्यते। तं प्रति बधापराधो भविष्यति।

---

## २१ एकविंशोऽध्यायः।

१ याजकान् प्रति शाकविवाहादि र्व्यवस्था १६ देहे दोषिणां याजकस्य कर्म्मकरण-निषेधः।

परमेश्वरो मूससमवदत् त्वं हारोणवंशीययाजकान् वद तेभ्यइमां १ कथां कथय स्वलोकानां मध्ये कस्मिंश्चिन् मृतएव याजकोऽशुचि र्न भवि-ष्यति। केवलस्वगोत्रे अर्थात् मातृपितृपुत्त्रकन्याभ्रातृषु मृतेष्वशुचि २ र्भविष्यति। यस्याः समीपस्थभगिन्याः पति र्नास्ति तस्यामनूढायां भगिन्यां ३ मृतायाम् अशुचि र्भविष्यति। किन्तु ते मुख्यीभूय स्वलोकानां मध्ये स्वान् ४ साधारणान् कर्त्तुम् अशुचीन् न करिष्यन्ति। ते स्वं स्वं शिरो न मुण्ड- ५ यिष्यन्ति श्मश्रूणां कोणमपि न मुण्डयिष्यन्ति देहेष्वस्त्राघातं न करि-ष्यन्ति। ते स्वेश्वरमुद्दिश्य पवित्रा भविष्यन्ति स्वेश्वरस्य नाम साधारणं न ६ करिष्यन्ति यस्मात् ते परमेश्वरमुद्दिश्य वह्निकृतमुपहारं अर्थाद् ईश्वरस्य भक्ष्यमुत्सृजन्ति तस्मात्ते पवित्रा भविष्यन्ति। ते वेश्यां कलङ्किनीं वा न ७ विवक्ष्यन्ति पतित्यक्तामपि न विवक्ष्यन्ति यतस्ते स्वेश्वरम् उद्दिश्य पूता भवन्ति। अतस्त्वं याजकं पावयिष्यसि यतः स त्वदीश्वरस्य भक्ष्यमुत्सृ- ८ जति स त्वदर्थं पवित्रो यतो युष्मत्पावकः परमेश्वरोऽहं पवित्रः। कस्यचिद् याजकस्य कन्या यदि व्यभिचारक्रियया स्वाम् अशुचिं करोति ९ तर्हि सा स्वतातम् अशुचिं करोति सा वह्निना दह्यते। स्वीयभ्रातॄणां १० मध्ये श्रेष्ठस्य यस्य याजकस्य शिरस्यभिषेकार्थं तैलं निषिक्तं यश्च परनियो-गात् पूतवस्त्रपरिधानाधिकारी जातः स स्वशिरो नग्नं न करिष्यति निजवस्त्रं न छेत्स्यति। स कस्यापि कुणपस्यान्तिकं गृहं न प्रवेक्ष्यति ११ स्वपित्रो र्मरणादप्यशुचि र्न भविष्यति। पवित्रस्थानादपि न निर्गमिष्यति १२ स्वेश्वरस्य पूतं स्थानं साधारणं न करिष्यति यतस्तदीयेश्वरस्याभिषेकार्थ-तैलात्मकिरीटं तदुपर्य्यास्ते परमेश्वरोऽहमेव। स केवलं कुमारीं विव- १३

१४ ष्यति। किन्तु विधवां त्यक्तां कलङ्किनीं वेश्यां वा न विवक्ष्यति स निज-
१५ लोकमध्यात् कुमारीं विवक्ष्यति। स निजलोकानां मध्ये स्ववंशं नापवित्रं
करिष्यति यतोऽहमेव तत्पावकः परमेश्वरः।

१६ परमेश्वरो मूससं जगाद त्वं हारोणाय कथय तव वंशस्य पुरुषपरम्प-
१७ रायां यस्य गात्रे दोष स्तिष्ठति स स्वेश्वरमुद्दिश्य भक्ष्यं निवेदितुं समीपं
१८ न यास्यति। यस्य लोकस्य दोषोऽस्ति स निकटवर्त्ती न भविष्यति
१९ विशेषाद् अन्धः खञ्जो व्यङ्गो ऽधिकाङ्गो भग्नपदो भग्नहस्तः कुब्जो वामनो
२० नेत्ररोगी श्वित्ररोगी कण्डुमान् भग्नमुष्क एतद्दोषवान् हारोणयाजक-
२१ वंशस्य कोऽपि पुरुषः परमेश्वरमुद्दिश्य वह्निकृतोपहारम् उत्स्रष्टुं
समीपं न यास्यति तस्य दोषोऽस्ति तस्मात् स स्वेश्वरमुद्दिश्य भक्ष्यमुत्-
२२ स्रष्टुं समीपवर्त्ती न भविष्यति। स ईश्वरस्य नैवेद्यं अर्थात् अतिपूतं
२३ पूतभक्ष्यञ्च भोक्ष्यते। किन्तु विच्छेदकवस्त्रस्य समीपं न प्रवेक्ष्यति वेद्याः
समीपञ्च न यास्यति यस्मात् तस्य दोषोऽस्ति स मम पूतस्थानम् अपूतं
२४ न करिष्यति तस्य पावकः परमेश्वरोऽहमेव। इत्थं मूसा हारोणं तस्य
सुतान् सर्व्वम् इस्रायेल्वंशञ्च वाचमिमां बभाषे।

---

## २२ द्वाविंशोऽध्यायः।

१ अपवित्रीभूतस्य याजकस्य पवित्रवस्तुनः पृथग्भवनविधिः १० याजकस्य गृहवासिनां मध्ये पवित्रवस्तुभक्षणे विधिनिषेधौ १४ अज्ञानात् पवित्रवस्तुभक्षणात् प्रायश्चित्तं १७ निर्दोषबलेरावश्यकत्वं २६ बलेर्वयो निरूपणं २९ प्रशंसार्थबलिकथनञ्च।

१ परमेश्वरो मूससमवदत् त्वं हारोणं तत्सुतांश्च वद यूयं इस्रायेल्-
२ वंशस्य पवित्रवस्तुषु सावधाना भवत, मम यन्नाम उद्दिश्य तैस्तानि
३ पवित्रीक्रियन्ते, मम तत् पवित्रं नाम अमेध्यं मा कुरुत यतोऽहमेव
परमेश्वरः। तान् वद युष्माकं पुरुषपरम्परायां वंशमध्ये यः कश्चिद्
अशुचि भूत्वा इस्रायेल्वंशेन परमेश्वरम् उद्दिश्य पावितवस्तुनः समीपं
४ यास्यति स मम सम्मुखाद् उच्छेत्स्यते परमेश्वरोऽहमेव। हारोणवंशस्य
यः कुष्ठी प्रमेही वा भवति स यावत् शुचि र्न भविष्यति तावत् पवित्रं
५ वस्तु न भोक्ष्यते। यो ऽपूतवस्तु स्पृशति अर्थात् मृतं रेतःपातिनं वा
६ अशौचजनकान् कीटादीन् केनचित् प्रकारेणाशौचजनकं मानुषं वा यः
स्पृशति स सन्ध्यां यावद् अशुचिः स्थास्यति जले स्वगात्रमधौत्वा पूतं

वस्तु न भोच्यते। ततः सूर्य्येऽस्तं गते स पवित्रीभूय पूतं वस्तु भक्षिष्यति ७
यस्मात् तत् तस्यैव भक्ष्यं भवति। स्वम् अपूतं कर्त्तुं स्वयं मृतस्य छिन्नस्य ८
वा पशो मांसं कोपि न भोच्यते परमेश्वरोऽहमेव। ते मम विधानं ९
पालयन्तु नोचेत् तत्र सामान्यज्ञाने कृते ते स्वपापं भोच्यन्ते मरिष्यन्ति
च तेषां पावकः परमेश्वरोऽहमेव।

अन्यजातीयो लोकः पवित्रं वस्तु न भोच्यते वस्तुतो याजकस्य गृह- १०
प्रवासी वेतनभुग्वा पवित्रं वस्तु न भोच्यते। किन्तु याजको यदि रूप्येण ११
कमपि प्राणिनं क्रीणाति तर्हि स भोच्यते तस्य गृहजाता लोकाश्च
तस्यान्नं भक्षिष्यन्ति। याजकस्य कन्या यद्यन्यजातीयेन व्यूह्यते तदा सा १२
पवित्रवस्तुरूपम् उपहारं न भोच्यते। यदि याजकस्य दुहिता विधवा १३
त्यक्ता निरपत्या वा भूत्वा पुनरनूढावत् तातगेहे तिष्ठति तर्हि सा
स्वतातस्यान्नं भोच्यते किन्त्वन्यजातीयो लोकस्तन्न भोच्यते।

यदि कश्चिद् अज्ञानात् पवित्रं वस्तु भोच्यते तर्हि स तद्वत् पूतं १४
वस्तु तस्य पञ्चमांशम् अधिकं याजकाय दास्यति। इत्थं इस्रायेल्वंशाः १५
परमेश्वरम् उद्दिश्य यानि पूतवस्तूनि निवेदयन्ति याजकास्तानि सामा- १६
न्यानि न करिष्यन्ति। पूतवस्तुभोजनकाले स्वान् दोषदण्डं न भोजयि-
ष्यन्ति यस्मादहमेव तेषां पावकः परमेश्वरः।

परमेश्वरो मूससमवदत् त्वं हारोणाय तत्सुतेभ्य इस्रायेल्वंशाय च १७
कथय तान् इति वाचं वद, इस्रायेल्वंशस्तन्मध्ये प्रवासिनश्च ये परमे- १८
श्वरम् उद्दिश्य प्रतिश्रुतान् वा दत्तान् स्वेच्छोपहारान् आनयन्ति तेषां
मध्ये यः परमेश्वरम् उद्दिश्य होमबलिम् उत्सृजति सोऽनुग्रहलाभाय १९
गोभ्योमेषेभ्यश्छागेभ्यो वा निर्दोषं पुंपशुम् उत्स्रक्ष्यति। यूयं सदोषं २०
किमपि न निवेदयिष्यथ यतो युष्मत्कृते तन्न ग्राहिष्यते। कोपि लोको २१
यदि मानससिद्ध्यर्थं वा स्वेच्छोपहारार्थं गोभ्यो मेषादिभ्यो वा मङ्गलार्थकं
बलिम् उत्सृजति तर्हि स निर्दोषो भविष्यति तत्र कोपि दोषो न
स्थास्यति। यूयं परमेश्वरम् उद्दिश्य अन्धं भग्नं छिन्नं सव्रणं सश्चित्रं पाम- २२
युक्तं वा पशुं न निवेदयिष्यथ तं परमेश्वरम् उद्दिश्य वेद्यां वह्निकृतम्
उपहारं मा कुरुत। अधिकाङ्गं हीनाङ्गं वृषं मेषवत्सं वा स्वेच्छात २३
उत्स्रष्टुं शक्नुथ किन्तु संकल्पार्थं स न ग्राहिष्यते। मर्दितं पिष्टं भग्नं २४
सच्छतञ्च पशुं परमेश्वराय न निवेदयिष्यथ। तादृशः पशु युष्मद्देशे न २५
तिष्ठतु, यूयं विदेशिनो हस्तादपि तादृशं पशुं ईश्वरीयभक्ष्यं न निवे-

विष्यथ यतस्तेषां मध्ये अपावित्र्यम् आस्ते तेषां मध्ये दोषोस्ति ते युष्म-
द्धस्तान्न ग्राहिष्यन्ते।

२६ परमेश्वरो मूससमवदत् गोमेषच्छागशावकेषु जातेषु सप्त दिनानि
२७ यावत् मात्रा सार्द्धं ते स्थास्यन्ति ततो ऽष्टमदिनमारभ्य परमेश्वरम्
२८ उद्दिश्य ते वह्निकृतोपहाराय ग्राहिष्यन्ते। गौ र्मेषी वा भवेत् तां
तद्वत्सञ्च नैकदिने हनिष्यथ।

२९ यूयं यदा परमेश्वरम् उद्दिश्य प्रशंसाया बलिम् उत्सक्ष्यत तदानु-
३० ग्रहलाभाय तम् उत्सृक्षथ तस्मिन्नेव दिने तं भोक्ष्यध्वे च प्रात र्यावत्
३१ तस्य किञ्चिदप्यवशिष्टं मा स्थापयिष्यथ परमेश्वरोहमेव। यूयं मदाज्ञाः
३२ सम्मन्य पालयिष्यथ परमेश्वरोहमेव। यूयं मम पूतं नामापूतं न करि-
३३ ष्यथ किन्त्वहम् इस्रायेलो वंशमध्ये पवित्रत्वेन मंस्ये युष्माकं पावकः
परमेश्वरोहं। युष्माकम् ईश्वरो भवितुं मिसर्देशात् युष्मान् वहिरानयं
अहमेव परमेश्वरः।

---

# २३ त्रयोविंशोध्यायः।

१ परमेश्वरोत्सवाः ३ अर्थात् विश्रामवारः ४ निस्तारोत्सवः ९ प्रथमशस्यसमुच्छ्रुतसर्गः
१५ पञ्चाशद्दिनोत्सवः २२ पतितशस्यसंग्रहनिषेधः २३ तूरीवाद्योत्सवः २६ प्राय-
श्चित्तादि दिननिरूपणं ३० कुटोरवासोत्सवश्च।

१ परमेश्वरो मूससमवदत् त्वम् इस्रायेल्वंशेभ्यः कथय तान् इति वाचं
२ वद। यूयं पवित्रसभार्थं परमेश्वरस्य यान् उत्सवान् प्रचारयिष्यथ
तइमे मदुत्सवाः।

३ यूयं षड् दिनानि कर्म्म करिष्यथ, किन्तु सप्तमदिनं पवित्रसभार्थं
विश्रामदिनं तद्दिने किमपि कर्म्म न करिष्यथ, तद् युष्माकं सर्व्वनिवासे
परमेश्वरम् उद्दिश्य विश्रामदिनं भविष्यति।

४ यूयं स्वनिरूपितकाले पवित्रसभाकरणार्थं परमेश्वरस्यैतान् उत्सवान्
५ प्रचारयिष्यथ। प्रथममासस्य चतुर्दश दिनस्य सन्ध्यायां परमेश्वरम्
६ उद्दिश्य निस्तारो महो भविष्यति। तन्मासस्य पञ्चदश दिने परमेश्वरम्
उद्दिश्य किण्वशून्यपूपानां महं कृत्वा सप्त दिनानि किण्वहीनान् पूपान्
७ भोक्ष्यध्वे। प्रथमेह्नि युष्माकं पविचा समिति र्भविष्यति तत्र यूयं किमपि
८ वृत्तिकर्म्म न करिष्यथ। किन्तु सप्ताहं परमेश्वरम् उद्दिश्य वह्निकृतो-

उपहारं निवेदयिष्यथ सप्तमे दिने पवित्रा समज्या भविष्यति तत्र यूयं
किमपि वृत्तिकर्म्म न करिष्यथ।

परमेश्वरो मूससमवदत् त्वम् इस्रायेलुवंशं वद तान् इति वाचं गद ९
अहं युष्मभ्यं यं देशं दास्यामि तं प्रविश्य यदा यूयं शस्यं कर्त्तिष्यथ तदा १०
युष्माकं प्रथमकर्त्तितशस्यस्य मुष्टिमेकं याजकान्तिकम् आनेष्यथ। युष्माकं ११
अनुग्रहलाभाय याजकस्तं मुष्टिं परमेश्वरस्य सम्मुखे दोलयिष्यति
अर्थात् विश्रामवारस्य परदिने याजकस्तं दोलयिष्यति। किन्तु यद्दिने १२
यूयं तं मुष्टिं दोलयिष्यथ तद्दिने परमेश्वरम् उद्दिश्य होतुं प्रथमवर्षीयं
निर्दोषम् एकं मेषशावकं उत्स्रक्ष्यथ। तस्य तन्नैवेद्यं दशमांशद्वयं तैल- १३
मिश्रितं सूक्ष्मगोधूमचूर्णं, तत् परमेश्वरम् उद्दिश्य वह्निकृतं सुगन्धि-
नैवेद्यं भविष्यति, तस्य पानीयं नैवेद्यं हिनैकपरिमितस्य द्राक्षारसस्य
चतुर्थांशो भविष्यति। यूयं यावद् ईश्वरम् उद्दिश्य तदुपहारं नानयत १४
तद्दिनं यावत् पूपं भृष्टशस्यं छिन्नकणिशं वा न भोक्ष्यथ युष्माकं पुरुष-
परम्परायां सर्व्वनिवासेषु नित्यविधिरयं भविष्यति।

ततो विश्रामवारस्य परदिनमारभ्य अर्थात् आन्दोलनीयं मुष्ट्यानय- १५
नमारभ्य यूयं पूर्णान् सप्त सप्ताहान् गणयिष्यथ। इत्थं सप्तमस्य विश्राम- १६
वारस्य परदिनं यावद् यूयं पञ्चाशत् दिनानि गणयित्वा परमेश्वरम्
उद्दिश्य नवजातं नैवेद्यं निवेदयिष्यथ। द्वयो र्दशमांशयो द्वौ दोलनीय- १७
पूपौ स्वस्वनिवासात् आनयिष्यथ तौ सूक्ष्मगोधूमचूर्णेन करिष्यथ
किण्वेन पक्ष्यथ तत् परमेश्वरम् उद्दिश्य प्रथमं फलं भविष्यति। यूयं १८
ताभ्यां पूपाभ्यां साकं प्रथमवर्षीयान् निर्दोषान् सप्त मेषशावकान् एकं
युववृषं द्वौ मेषौ बलिं दास्यथ स ईश्वरम् उद्दिश्य होमबलि र्भवि-
ष्यति नैवेद्येन पानीयद्रव्येण च समं परमेश्वरम् उद्दिश्य वह्निकृतः
सुगन्धि र्होमबलि र्भविष्यति। ततो यूयं प्रायश्चित्तबलये छागवत्समेकं १९
मङ्गलार्थबलये एकहायनौ द्वौ मेषशावकौ बली दास्यथ। याजकः २०
प्रथमफलस्य पूपै र्द्वाभ्यां मेषशावकाभ्याञ्च समं तान् परमेश्वरम् उद्दिश्य
दोलयिष्यति तेन तत्सर्व्वं याजकार्थं परमेश्वरम् उद्दिश्य पूतं भविष्यति।
यूयं तद्दिने पवित्रां समितिं प्रचारयिष्यथ यूयं किमपि वृत्तिकर्म्म २१
न करिष्यथ युष्माकं पुरुषपरम्परायां सर्व्वनिवासेषु नित्यविधिरयं
भविष्यति।

युष्माकं भूमेः शस्यकर्त्तनकाले यूयं स्वस्वक्षेत्रस्य कोणं निःशेषं न छेत्- २२

त्स्यथ स्वक्षेत्रस्य पतितं शस्यं न संग्रहीष्यथ तत् दीनविदेशिनां कृते त्यक्ष्यथ युष्माकं प्रभुः परमेश्वरोऽहं।

२३ ततः परमेश्वरो मूससमवदत् त्वम् इस्रायेल्वंशं वद, सप्तममासस्य
२४ प्रथमदिनं युष्माकं विश्रामदिनं भविष्यति, अर्थात् तूरीवाद्येन स्मरणा-
२५ र्थिका पवित्रा समिति भविष्यति। तत्र यूयं किमपि वृत्तिकर्म्म न करिष्यथ, किन्तु परमेश्वरम् उद्दिश्य वह्निकृतोपहारम् उत्स्रक्ष्यथ।

२६ ततः परमेश्वरो मूससमवदत् सप्तममासस्य दशमदिनं प्रायश्चित्तदिनं
२७ भविष्यति तत्र युष्माकं पवित्रा समिति भविष्यति, तद्दिने यूयं स्वप्राणान् दुःखा करिष्यथ परमेश्वरम् उद्दिश्य वह्निकृतम् उपहारम् उत्स्रक्ष्यथ।
२८ तद्दिने यूयं किमपि वृत्तिकर्म्म न करिष्यथ यतो युष्माकं कृते युष्मत्प्रभोः परमेश्वरस्य समक्षं प्रायश्चित्तं कर्त्तुं तदेव प्रायश्चित्तदिनं भविष्यति।
२९ तद्दिने यः स्वप्राणान् दुःखा न करोति स स्वलोकमध्याद् उच्छेत्स्यते।
३० तद्दिने यः कर्म्म करोति तमहं स्वलोकमध्याद् उच्छेत्स्यामि। यूयं किमपि
३१ वृत्तिकर्म्म न करिष्यथ युष्माकं सर्व्वनिवासेषु नित्यविधिरयं भविष्यति।
३२ तद् विश्रामदिनं युष्माकं विश्रामार्थं भविष्यति तत्र दिने यूयं स्वस्व-प्राणान् दुःखा करिष्यथ मासस्य नवमेऽह्नि सन्ध्यामारभ्य परसन्ध्यां यावत् यूयं विश्रामदिनं पालयिष्यथ।

३३ ततः परमेश्वरो मूसं जगाद त्वम् इस्रायेल्वंशं वद, सप्तममासस्य
३४ पञ्चदशदिवसमारभ्य सप्तदिनानि यावत् परमेश्वरोद्देश्य उटजमहो
३५ भविष्यति। प्रथमेऽह्नि पवित्रा समिति भविष्यति तत्र यूयं किमपि
३६ वृत्तिकर्म्म न करिष्यथ। सप्त दिनानि यावत् परमेश्वरम् उद्दिश्य वह्निकृतम् उपहारम् उत्स्रक्ष्यथ, अष्टमेऽह्नि युष्माकं रुद्धा समिति भविष्यति, तत्र यूयं वह्निकृतम् उपहारं उत्स्रक्ष्यथ, सा निवृत्तिसमिति
३७ भविष्यति तत्र यूयं किमपि वृत्तिकर्म्म न करिष्यथ। एते परमेश्वरस्य महाः। परमेश्वरस्य विश्रामदिनानि विना परमेश्वरम् उद्दिश्य युष्माकं
३८ देयदानानि विना युष्माकं सर्व्वसङ्कल्पितं विना युष्माकम् ऐच्छिकनैवे-द्यानि च विना यूयं मेध्यसभाकरणायैतान् महान् प्रचार्य्य प्रतिदिन-कर्त्तव्यानुसारतः परमेश्वरम् उद्दिश्य वह्निकृतम् उपहारं होमबलिं
३९ नैवेद्यं बलिं पेयनैवेद्यम् उत्स्रक्ष्यथ। पुनः सप्तममासस्य पञ्चदशदिवसे भूमेरुत्पन्नफलसंग्रहणकाले यूयं परमेश्वरम् उद्दिश्य सप्त दिनानि महं
४० पालयिष्यथ तन्मध्ये प्रथमाष्टमाहनी विश्रामदिने भविष्यतः। प्रथमेऽह्नि

यूयम् उत्तमपादपफलानि तालपत्राणि घनवृक्षशाखास्तटिनीतटस्थ-वृक्षांश्च गृहीत्वा युष्माकं प्रभोः परमेश्वरस्य समक्षम् आनन्दिष्यथ। यूयं परमेश्वरम् उद्दिश्य वर्षमध्ये सप्त दिनानि तं महं पालयिष्यथ ४१ युष्माकं पुरुषपरम्परासु स नित्यविधि र्भविष्यति सप्तमे मासि यूयं तं महं पालयिष्यथ। यूयं सप्त दिवसान् उटजेषु निवत्स्यथ, इस्रायेल्वंशजाः ४२ सर्व्वे उटजेषु वत्स्यन्ति, तेन यदाहम् इस्रायेल्वंशान् मिसर्देशाद् बहि- ४३ रानयं तदा तान् उटजेष्ववासयम् इति युष्माकं भाविपुरुषा ज्ञास्यन्ति, युष्माकं प्रभुः परमेश्वरोऽहमेव। इस्रायेल्वंशस्य समीपे मूससा परमे- ४४ श्वरस्य सर्व्वमहानां प्रकाशनमिति।

---

# २४ चतुर्व्विंशोऽध्यायः।

१ प्रदीपतैलकथनं ५ दर्शनीयपूपकथनं १० शिलोमीतः पुत्तस्य निन्दाकथनं १७ नरहत्याकथनं १८ परिशोधकथनं २३ निन्दकस्य दण्डश्च।

परमेश्वरो मूससं जगाद त्वम् इस्रायेल्वंशम् इत्यादिश। नित्यं १ प्रदीपान् ज्वालयितुं ते त्वदन्तिकं मर्दितं निर्म्मलं जिततैलम् आने- २ ष्यन्ति। हारोणः समाजावासमध्ये साक्ष्यविच्छेदकवस्त्रस्य बहिरा- ३ सन्ध्यातः प्रभातं यावत् परमेश्वरस्य सम्मुखे प्रत्यहं तान् ज्वालयिष्यति, स युष्माकं पुरुषपरम्परायां नित्यविधि र्भविष्यति। परमेश्वरस्य सम्मुखे ४ निर्म्मलदीपवृक्षस्योपरि नित्यं तान् दीपान् स्थापयिष्यति।

त्वं सूक्ष्मगोधूमचूर्णेन द्वादश पिष्टकान् भक्ष्यसि तेषाम् एकैकः ५ पिष्टक ऐफादशमांशद्वयेन भविष्यति। एकैकपंक्तौ षट् षट् तादृशौ द्वे ६ पंक्ती कृत्वा परमेश्वरस्य सम्मुखे निर्म्मलभोजनासनोपरि स्थापयिष्यसि। प्रतिपंक्ति सूक्ष्मकुन्दुरून् दास्यसि ते पूपोपरि स्मरणार्थम् अर्थात् पर- ७ मेश्वरम् उद्दिश्य वह्निकृतोपहारार्थं स्थास्यन्ति। याजकः प्रतिविश्रामवारं ८ परमेश्वरस्य सम्मुखे तान् पूपान् नित्यं स्थापयिष्यति, इस्रायेल्वंशात् ते नित्यनियमेन ग्राहिष्यन्ते। ते हारोणस्य तस्य सुतानाञ्च भविष्यन्ति ९ ततस्ते पूतस्थाने तान् भक्षिष्यन्ति यतो नित्यविधिना परमेश्वरम् उद्दिश्य वह्निकृतोपहारमध्ये तत् तस्मै महामेध्यं भविष्यति।

इस्रायेलीयामातृको मिस्रीयपितृक एको जन इस्रायेल्वंशसहितो १० बहिरागच्छत् स शिबिरे इस्रायेलीयमानुषेण समं विरुरोध। तस्य ११ माता दान्वंशजा दिब्रेः कन्या शीलोमीन्नामिस्रायेल्वंशीया योषित्,

१२ स परमेश्वरस्य नाम निनिन्द अभिशापञ्च ददौ, तस्मात् जनास्तं
१३ मूससोऽन्तिकं निन्युः परमेश्वरादेशं ज्ञातुं तं कारायां बबन्धुश्च। ततः
१४ परमेश्वरो मूससं जगाद त्वं तमभिशपन्तं शिविरस्य वहिरानय। श्रोता-
१५ रस्तच्छिरसि हस्तान् अर्पयन्तु समाजीयाः सर्व्वे पाषाणैस्तं घ्नन्तु। त्वम्
१६ इस्रायेल्वंशं वद यः स्वेश्वरं निन्दिष्यति स स्वपापं भोक्ष्यते। परमे-
श्वरस्य नामनिन्दकोऽवश्यं घानिष्यते सर्व्वे समाजीयास्तं पाषाणै र्हनि-
ष्यन्ति, परमेश्वरस्य नामनिन्दको विदेशी स्वदेशी वा हनिष्यते।
१७ यो मानुषं हन्ति सोऽवश्यं हनिष्यते।
१८ यः पशुं हन्ति स पशो र्विनिमयात् पशुं दास्यति। यः स्वसमीप-
१९ वासिनो गात्रे क्षतचिह्नं करोति तत्कृतकर्म्मवत् तं प्रति कारिष्यते।
२० तस्य क्षतस्य शोधनं क्षतं नेत्रस्य शोधनं नेत्रं दन्तस्य शोधनो दन्तो भवि-
२१ ष्यति तेनान्यस्मिन् नरे यथा क्षतं कृतं तं प्रत्यपि तथैव कारिष्यते। अतो
यः पशुं हन्ति स तद्विनियमात् पशुं दास्यति किन्तु यो मानुषं हन्ति स
२२ हनिष्यते। स्वदेशीयविदेशीयान् अभि युष्माकं एकैव व्यवस्था भविष्यति
यतोऽहमेव युष्माकं प्रभुः परमेश्वरः।
२३ तत इस्रायेल्वंशा मूसस आदेशात्तं निन्दकं शिविरस्य वहि र्नीत्वा
पाषाणै र्जघ्नुः। मूससं प्रति परमेश्वराज्ञानुसाराद् इस्रायेल्सन्तानाः
सर्व्वं कर्म्म कृतवन्तः।

---

## २५ पञ्चविंशोऽध्यायः।

१ सप्तमवर्षमध्ये विश्रामवत्सरनिरूपणं ८ प्रतिपञ्चाशद्वर्षेमहनिरूपणं १४ उपद्रव-
निषेधः १८ आज्ञावहनफलं २३ भूमे र्नित्यविक्रयनिषेधः २९ गृहमुक्तिकथनं ३५
भ्रातरि दयाकथनं ३९ दासान् प्रति व्यवहरणं ४७ दासानां मुक्तिश्च।

१ परमेश्वरः सीनयद्रौ मूससं बभाषे त्वम् इस्रायेल्वंशान् वद तेभ्य इति
२ कथां कथय युष्मभ्यमहं यं देशं दास्यामि युष्माभिस्तस्मिन् देशे प्रविष्टे
३ परमेश्वरम् उद्दिश्य भूमे र्विश्रामो भविष्यति फलतः षड् वर्षाणि यावत्
४ स्वक्षेत्रे वीजं वप्स्यथ द्राक्षावल्लीश्छेत्स्यथ तत्फलं संग्रहीष्यथ। किन्तु
सप्तमो वत्सरः परमेश्वरम् उद्दिश्य भूमे र्विश्रामवर्षं भविष्यति, तस्मिन्
५ त्वं स्वक्षेत्रं न वप्स्यसि द्राक्षावल्लीं न छेत्स्यसि स्वयंरूढं शस्यं न कर्त्तिष्यसि
अपरिष्कृताया द्राक्षावल्ल्याः फलं न संग्रहीष्यसि तेनैव भूमे र्विश्राम-
६ वत्सरो भविष्यति। देशस्य विश्रामेण युष्माकं भक्ष्यं भविष्यति, अर्थात

क्षेत्रोत्पन्नं सर्व्वद्रव्यं युष्माकं युष्मद्दासदासीवेतनजीविभृत्यानाञ्च युष्मत्- ७
सहवासिविदेशिनाञ्च युष्माकं पशूनां देशीयवनपशूनाञ्च भक्ष्यं भविष्यति।

त्वं सप्त विश्रामवत्सरान् अर्थात् सप्तगुणसप्तवत्सरान् गणयिष्यसि ८
ततः सप्तगुणसप्तवर्षैरूनपञ्चाशद् वत्सरा भविष्यन्ति। तदा सप्तम- ९
मासस्य दशमेऽह्नि यूयं महाशब्दकरीं तूरीं वादयिष्यथ अर्थात् प्राय-
श्चित्तदिने युष्माकं सर्व्वदेशे तूरीं वादयिष्यथ। यूयं पञ्चाशत्तमं वर्षं १०
पावयिष्यथ तत्स्ते देशे सर्व्वनिवासिनः प्रति मुक्तिं घोषयिष्यथ तद्
युष्मभ्यं योवेल्नामा महो भविष्यति तत्र युष्माकं एकैको जनः स्वस्वाधि-
कारं परावृत्य यास्यति एकैको जनः स्वस्वकुलसमीपं परावृत्य यास्यति।
युष्मत्कृते पञ्चाशत्तमं वर्षं व्याप्य महामहो भविष्यति तत्र यूयं बीजं ११
न वप्स्यथ स्वयंवृद्धं शस्यं न कर्त्तिष्यथ अपरिष्कृताया द्राक्षावल्ल्याः
फलं न संग्रहीष्यथ। यतः स एव महामहो युष्मान् प्रति पूतो भविष्यति १२
तथापि यूयं क्षेत्रं गत्वा शस्यादि भक्षितुं शक्ष्यथ। तस्मिन् महामहवर्षे १३
यूयं स्वस्वाधिकारं परावृत्य यास्यथ।

यदि यूयं स्वसमीपवासिनं प्रति किमपि भूम्यादि विक्रीणीध्वं यद्वा १४
स्वसमीपवासिनः क्रीणीयात तर्हि यूयं परस्परम् अन्यायं मा कार्ष्ट।
किन्तु त्वं महामहस्य परवर्षाणां संख्यानुसारात् स्वसमीपवासितः १५
क्रेष्यसि फलोत्पत्तिवर्षाणां संख्यानुसारात् त्वां प्रति स विक्रेष्यते।
वर्षाणां बाहुल्यानुसारात् तन्मूल्यं वर्द्धयिष्यसि वत्सराणां न्यूनतानुसा- १६
रान् मूल्यं न्यूनयिष्यसि यतस्त्वां प्रति स अमुकसंख्यकवर्षाणाम् उत्पन्न-
द्रव्याणि विक्रीणीते। अतो यूयं परस्परं नान्यायं करिष्यथ किन्तु १७
स्वेश्वराद् विभेष्यथ यतोऽहं युष्माकं प्रभुः परमेश्वरः।

यूयं मम व्यवस्थयाचरिष्यथ मम राज्यनीतीर्मंस्यध्वं पालयिष्यध्वञ्च तेन १८
देशे निष्कण्टकं वत्स्यथ। देशे फलान्युत्पत्स्यन्ते तानि यूयं तृप्तिं यावद् १९
भोक्ष्यध्वे तत्र निष्कण्टकं वत्स्यथ। पश्यत यदि वयं क्षेत्रे न वपेम स्वय- २०
मुत्पन्नं शस्यञ्च न संगृह्णीयाम तर्हि सप्तमे वर्षे किं भक्षिष्यामः? इति
चेद् वदिष्यथ, तर्हि षष्ठे वर्षेऽहं युष्मान् आशिषं वदिष्यामि तेन वर्षत्रया- २१
पयुक्तं शस्यमुत्पत्स्यते। यूयम् अष्टमे वर्षे वप्स्यथ नवमं वर्षं यावत् २२
पुरातनं शस्यं भोक्ष्यध, तद्वर्षं यावत् शस्योत्पत्ति र्न भवेत्, तावत् पुरातनं
शस्यं भोक्ष्यथ।

देशीया भूमि र्युष्माभिः सर्व्वकालार्थं न विक्रेतव्या, यतो देशो ममैव, २३

२४ यूयं मया सार्कं विदेशिनः प्रवासिनश्चाध्वे। यूयं स्वाधिकृतदेशस्य सर्व्वत्र
२५ भूमिं मोचयिष्यथ। तत्र तव भ्राता यदि दरिद्रः सन् स्वाधिकारस्य किञ्चिद् विक्रीणीते, तर्हि तस्य निकटस्थो ज्ञातिरागत्य स्वभ्रातु
२६ र्विक्रीतां भूमिं मुक्तीकृत्य ग्रहीष्यति। यदि तां मोचयितुं तस्य कोपि न
२७ तिष्ठति किन्तु स्वयं मोचयितुं शक्नोति, तर्हि तस्या विक्रयवर्षाणि गणयित्वा तदनुसारतः क्रेत्रेऽवशिष्टं मूल्यं दास्यति, ततः सा पुनस्तदधिकृता
२८ भविष्यति। किन्तु यदि स तन्मूल्यं प्रतिदातुं न शक्नोति तर्हि स विक्रीताधिकारो महामहवर्षं यावत् क्रेतरि स्थास्यति महामहवर्षे सा मुक्ता सती पुनस्तदधिकृता भविष्यति।

२९ यदि कश्चित् प्राचीरवेष्टितनगरस्य मध्यस्थितं वासगृहं विक्रीणीते तर्हि स तद् विक्रीय प्रथमवर्षमध्ये तन् मोचयितुं शक्नोति अर्थाद्
३० वर्षैकमध्ये तन्मोचयितुं शक्नोति। यदि पूर्व्वोक्तवर्षमध्ये तन्न मोच्यते तर्हि प्राचीरवेष्टितनगरस्थितं तद्गृहं पुरुषपरम्परायां क्रेतुर्नित्याधि-
३१ कारो भविष्यति तन् महामहस्य वत्सरे न मोच्यते। अप्राचीरवेष्टित-ग्रामे स्थितं गृहं भूमिमध्ये गणिष्यते तन् मोचयितुं शक्यते किञ्च
३२ महामहवर्षे तन् मोच्यते। किन्तु लेविनां नगराणि तेषाम् अधि-कृतनगरेषु स्थितानि गृहाणि च लेविनः सर्व्वदा मोचयितुं शक्नुवन्ति।
३३ कश्चिल्लेविनो यत् क्रीणाति तद् विक्रीतं वेश्म तस्याधिकृतं नगरं वा महामहे मोच्यते यत इस्रायेल्वंशस्य मध्ये लेविनां नगरेषु स्थितानि
३४ वेश्मान्येव तेषामधिकारः। तेषां नगराणां प्रान्तरीया भूमि र्न विक्रा-यिष्यते यस्मात् तत्रैव तेषां नित्याधिकारो भविष्यति।

३५ तव भ्राता यदि दुर्गतो भवति वा त्वद्गोचरे क्षीणधनो भवति तर्हि स विदेशी प्रवासी वा भवेत् त्वं तमुपकरिष्यसि तेन स त्वया सार्कं
३६ जीवितं धरिष्यति। त्वञ्च तस्मात् कुसीदं वृद्धिं वा न ग्रहीष्यसि किन्तु
३७ निजेश्वराद् विभेष्यसि तव भ्रातरं त्वया सार्कं जीवनं धारय। त्वं कुसीदं
३८ विना निजमुद्रां तस्मै दास्यसि वृद्धिं विना निजान्नं तं धारयिष्यसि। यो युष्मभ्यं किनान्देशं दातुं युष्माकम् ईश्वरो भवितुं युष्मान् मिसर्देशात् बहिरानयत् युष्माकं स प्रभुः परमेश्वरोऽहम्।

३९ तव भ्राता यदि दुर्गतो भवन् त्वां प्रति विक्रीयेत तर्हि त्वं तं
४० दासवन्न श्रमय। स वेतनजीविभृत्यवत् वा प्रवासीव त्वया सार्कं
४१ निवसन् महामहस्य वत्सरं यावत् त्वां सेविष्यते। ततः स निजसन्तानैः

समं तव समीपान्निजकुलान्तिकं परावृत्य स्वीयपैटकाधिकारं पुनः प्राप्स्यति। यस्मात्ते मिसर्देशात् मया वहिष्कृता मम दासा अतस्ते ४२ दासवन्न विक्रेतव्याः। त्वं तदुपरि कठिनं शासनं न करिष्यसि ४३ किन्तु निजेश्वराद् भेष्यसि। चतुर्दिक्षु स्थितान्यजातीनां मध्याद् दासान् ४४ दासीश्च क्रेष्यसि। युष्माकं मध्ये वासिनां भिन्नजातीयसन्तानानां मध्याद् ४५ युष्मद्देशे तेभ्य उत्पन्नानां युष्मत्सहवर्त्तिनां परिजनानां मध्याच्च क्रेष्यसि तेषु युष्माकम् अधिकारो भविष्यति। यूयं स्वस्वापत्यानां अधिकारार्थं ४६ तान् दातुं शक्नुथ नित्यं स्वदासत्वकर्म्म तान् कारयितुं शक्नुथ किन्तु भ्रातृस्रायेल्वंशोपरि परस्परं कठिनं मा शासिष्यथ।

युष्माकं मध्ये कश्चित् प्रवासी विदेशी वा यदि धनवान् जायते किञ्च ४७ तत्समीपवर्त्ती तव भ्राता दरिद्रः सन् तं प्रवासिनं विदेशिनं प्रति वा तद्वंशं प्रति विक्रीयते, तर्हि विक्रयात् परं तस्य मुक्तिं भवितुं ४८ शक्नोति तस्य ज्ञातिमध्ये कोपि तं मोचयितुं शक्ष्यति। अर्थात् तस्य ४९ पितृव्यः पितृव्यपुत्रो वा तं मोचयिष्यति यद्वा तस्य वंशपरिवाराणां कश्चित् तं मोचयिष्यति; यद्यपि स स्वयं समर्थो भवति तर्हि स्वं मोचयिष्यति। तत्र तस्य विक्रयवर्षमारभ्य महामहवर्षं यावत् क्रेत्रा सार्कं ५० गणिते सति वर्षाणां संख्यानुसारात् तन्मूल्यं भविष्यति, तं प्रति वेतनभुग्भृत्यस्य दिनानुसारात् मूल्यं भविष्यति। यद्यनेकवर्षाण्यवशिष्टानि ५१ तिष्ठन्ति तर्हि तदनुसारात् तत्क्रयमूल्यं भविष्यति। यदि महामह- ५२ वर्षं यावद् अल्पवर्षाण्यवशिष्टानि तिष्ठन्ति तर्हि स तेन सार्कं गणयित्वा तत्तद्वर्षानुसारात् स्वोद्धारमूल्यं तस्मै दास्यति। स वर्षवेतनिकभृत्यवत् ५३ तेन सार्कं स्थास्यति, युष्मत्समक्षं कोपि तदुपरि कठिनं न शासिष्यति। यदि स तेषु वर्षेषु न मोच्यते तर्हि स महामहवर्षे स्वापत्यैः सार्कं ५४ मोच्यमानो यास्यति। यत इस्रायेल्वंशाः केवलं मम दासास्ते मया ५५ मिसरो वहिष्कृता मद्दासा अहं तेषां प्रभुः परमेश्वरः।

---

## २६ षड्विंशोऽध्यायः।

१ मूर्त्तार्च्चानिषेधः ७ आज्ञाग्रहाशीः १४ आज्ञालङ्घन शापः ४० पापात् खिन्नजनानां चेमप्रतिज्ञा च।

यूयं स्वार्थं देवं तच्चितमूर्त्तिञ्च मा निर्म्मात दण्डायमानं विग्रहं मा १

निर्म्मात तत्सम्मुखे दण्डवद् भवितुं युष्मद्देशे तच्छितग्रावमूर्त्तिं मा स्थाप-
२ यत यतोऽहमेव युष्मत्प्रभुः परमेश्वरः। यूयं मद्विश्रामवारान् पालयत
मत्पूतस्थानं सम्मन्यध्वं परमेश्वरोऽहमेव।
३ यदि मद्व्यवस्थयाचरत मदाज्ञा मन्यध्वे पालयत च तर्हि समयेऽहं
४ युष्मभ्यं वृष्टिं दास्यामि तेन भूर्नानाशस्यं जनयिष्यति क्षेत्रस्थपादपाः
५ फलवन्तो भविष्यन्ति। युष्मच्छस्यमर्द्दनं द्राक्षाचयनकालं प्राप्स्यति द्राक्षा-
चयनं वीजवपनकालं प्राप्स्यति यूयं तृप्तिं यावद् अन्नं भोक्ष्यध्वे देशे
६ निष्कण्टकं निवत्स्यथ। देशेऽहं शान्तिं स्थापयिष्यामि यूयं शयिष्यध्वे कोपि
युष्मान्न भाययिष्यति युष्मद्देशात् हिंस्रजन्तून् दूरयिष्यामि युष्मद्देशेऽसि
७ र्न भ्रमिष्यति। यूयं स्वशत्रून् ताड़यित्वा द्रवयिष्यथ ते युष्मत्समक्षम्
८ असिना पातयिष्यन्ते। युष्मत्पञ्चजना अन्यशतमपसारयिष्यन्ति युष्मत्-
शतजना अन्यदशसहस्राण्यपसारयिष्यन्ति युष्मद्रिपवो युष्मत्समक्ष-
९ मसिना पातयिष्यन्ते। युष्मानहम् अनुग्रहीष्यामि वर्द्धयित्वा वहुपत्यान्
१० करिष्यामि युष्माभिः स्वनियमं निर्णेष्यामि। यूयं सञ्चितपुरातनशस्यं
११ भोक्ष्यध्वे नूतनस्य स्थापनार्थं पुरातनं वहिरानेष्यध्वे। अहं न युष्मान्
१२ ऋतीयित्वा युष्मन्मध्ये स्वावासं निधास्यामि। युष्मन्मध्ये यातायातं कुर्व्वन्
१३ युष्मदीश्वरो भविष्यामि यूयं मल्लोका भविष्यथ। यूयं यथा दास्यं न
कुर्य्यात तदर्थं युष्मत्प्रभुः परमेश्वरोऽहं मिसर्द्देशाद् युष्मान् वहिरानयं
युष्माकं युगबन्धनं मोचयित्वा युष्मान् उन्नतशिरसो गमितवान्।
१४ किन्तु यदि यूयं मद्वाक्ये मनो न निधाय मदाज्ञा न गृह्णीथ
१५ मद्विधीन् अवजानीथ मद्राजनीतिस्तुच्छीकृत्य मदाज्ञा न गृहीत्वा
१६ मन्नियमं लङ्घध्वे तर्हि युष्मान् प्रत्यहम् इत्थं व्यवहरिष्यामि युष्मान् प्रति
नेत्रक्षीणताहृत्पीडाजनिकाम् आशङ्कां यक्ष्मां कम्पज्वरञ्च निरूप
यिष्यामि युष्माकं वीजवपनं वृथा भविष्यति यतो युष्मद्रिपवस्तद्
१७ भोक्ष्यन्ते। अहं युष्मान् प्रति विमुखो भविष्यामि तेन यूयं रिपूणां
समक्षं वानिष्यध्वे युष्मद्रिपवो युष्मान् शासिष्यन्ति केनापि नापसा-
१८ रिता अपि यूयं पलायिष्यध्वे। इत्थं घटितेपि यदि यूयं मद्वाक्ये मनो न
१९ निधत्थ तर्हि युष्माकं पापेभ्य एततसप्तगुणं युष्मान् दण्डयिष्यामि। युष्माकं
पराक्रमस्य गर्व्वं खर्व्वयिष्यामि युष्माकं व्योम लोहवत् भूमिञ्च पित्तलवत्
२० करिष्यामि। युष्माकं श्रमो निष्फलो भविष्यति यतो युष्माकं भूः शस्यादि
२१ नोत्पादयिष्यति। क्षेत्रशाखी फली न भविष्यति। तथापि यदि यूयं मद्वि

परीताचरन्तो मदाज्ञा मन्त न स्वीकुरुथ तर्हि युष्मत्पापानुसारात् पुनः सप्तगुणं युष्मानहं क्लेशयिष्यामि। युष्मत्प्रतिकूलं वनजन्तून् २२ प्रेषयिष्यामि ते च युष्मत्पशून् नाशयिष्यन्ति युष्मान् अपत्यहीनान् कृत्वा- ल्पसंख्यान् करिष्यन्ति युष्माकं राजमार्गान् वनीकरिष्यन्ति। एतैरपि यदि २३ यूयं मया शासिता न भवथ मद्विपरीतञ्चाचरथ तदाहमपि युष्मान् प्रति २४ विपरीतमाचरिष्यामि युष्मत्पापेभ्यः पुनः सप्तगुणं युष्मान् शासिष्यामि। मन्नियमलङ्घनस्य फलं दातुं युष्मान् प्रत्यसिम् आनेष्यामि नगरमध्ये २५ युष्मासु मिलितेषु युष्मन्मध्यं महामारीं प्रेषयिष्यामि युष्मान् रिपुकरे समर्पयिष्यामि। मया युष्माकम् अन्नयष्ट्यां भग्नायां दश योषित एक- २६ चुल्ल्यां युष्माकं पूपान् पक्ष्यन्ति तूलयित्वा युष्मभ्यं दास्यन्ति किन्तु यूयं तद्- भुक्त्वा न तर्प्स्यथ। एतैरपि यदि यूयं मयि मनो न निधाय मद्विपरीतम् २७ आचरथ तदाहं क्रुद्धो युष्मान् प्रति विपरीतम् आचरिष्यामि, अहमेव २८ युष्मत्पापेभ्यो युष्मान् सप्तगुणं शासिष्यामि। यूयं स्वस्वपुत्रकन्यानां पिशितं २९ भोक्ष्यध्वे। युष्मद्देवपीठान्यहं भंक्ष्यामि युष्मत्सूर्य्यमूर्त्तीः नाशयिष्यामि ३० युष्मन्मूर्त्तिकुणपोपरि युष्मत्कुणपानि क्षेप्स्यामि युष्मान् ऋतीयिष्यामि, युष्मत्पुराणि शून्ययिष्यामि युष्माकं पूतस्थानानि वनीकरिष्यामि सुगन्धु- ३१ पहाराणां गन्धं न ग्रहीष्यामि, देशं वनीकरिष्यामि रिपवस्तद्देशवासिनः ३२ सन्तस्तत्राश्चर्य्यं मंस्यन्ते अन्यजातीनां मध्येऽहं युष्मान् विकरिष्यामि ३३ युष्माकं पश्चादसिं निष्कोषयिष्यामि देशं वनवत् पुराणि च शून्यानि करिष्यामि। यावद् देशो वनं स्थास्यति यूयञ्च रिपुमध्ये वत्स्यथ तावत् ३४ देशः स्वविश्रामं भोक्ष्यते अर्थात् तदैव स देशो विश्रम्य स्वविश्रामं भोक्ष्यते। यावत् कालं देशो वनं स्थास्यति तावत्कालं विश्रमिष्यति यतो ३५ यूयं यावत् तद्देशेऽवसत तावत् स युष्मद्विश्रामवारेषु विश्रामं नाभुंक्त। रिपूणां देशमध्येऽहं युष्मदवशिष्टानां मनांसि विषण्णतया पूरयिष्यामि ३६ पत्रपतनशब्दस्तान् कम्पयित्वापसारयिष्यति यथासिवक्त्रात् पलायते तथा ते पलायिष्यन्ते केनापि नापसारिता अपि पतिष्यन्ति। यथा ३७ जना असिवक्त्रेण पतन्ति तथा ते केनापि नापसारिता अपि स्वस्वसङ्गिना- मुपरि पतिष्यन्ति स्वस्वरिपूणां समक्षं स्थातुं न शक्ष्यन्ति। यूयमन्यजाति- ३८ मध्ये विनंक्ष्यथ युष्मद्रिपुदेशो युष्मान् ग्रसिष्यति। अवशिष्टाः जना ३९ रिपुदेशेषु स्वस्वपापेभ्यः क्षायिष्यन्ते तत्सहितेभ्यः पूर्व्वपुरुषाणां पापे- भ्योऽपि क्षायिष्यन्ते।

४० स्वस्वापराधेन ते मम यदपराद्धं मद्विपरीतमाचरितञ्च तस्मादहमपि
४१ तेषां प्रतिकूलमाचरन् तान् रिपुदेशमानीतवान् इति स्मृत्वा ते
यदि स्वपापानि स्वपूर्व्वपुरुषपापानि च स्वीकुर्व्वन्ति तेषामच्छिन्नत्वङ्मनो
४२ नम्रो भवति ते स्वपापस्य दण्डं स्वीकुर्व्वन्ति च तर्हि याकूवा साकं
मम यो नियमस्तं स्मरिष्यामि इस्हाक्इब्राहीमभ्याञ्च मम यो
४३ नियमस्तं स्मृत्वा देशं स्मरिष्यामि। देशस्तैस्त्यक्तो वनीभूय स्वविश्रामं
भोच्यते तैश्च मद्विचारतुच्छीकरणात् मद्व्यवस्थाघृणितत्वात् स्वपापदण्डो
४४ भोक्तव्यो भविष्यति। तथापि शत्रूणां देशे तेषां प्रवासकाले ते मया न
त्यच्यन्ते, न च तैः साकं मम नियमभङ्गनार्थम् अहं तेषां निःशेषं नाशाय
४५ तानवज्ञास्यामि यतोऽहमेव तेषां प्रभुः परमेश्वरः। किन्तु तेषामीश्वरो
भवितुमहं यदान्यजातीयानां दृष्टौ तेषां पूर्व्वपुरुषान् मिसर्देशादहि-
रानयं, तदा तैः साकं यं नियममकार्षं तेषां मङ्गलार्थं तं स्मरिष्यामि
परमेश्वरोऽहमेव।

४६ परमेश्वरः सीनयरण्ये तिष्ठन् मूससा समं स्वस्येस्रायेल्वंशस्य च मध्ये
व्यवस्था इमा राज्यनीती विधींश्च स्थिरीकृतवान्।

---

## २७ सप्तविंशोऽध्यायः।

१ प्रतिश्रुतप्राणिनो मूल्यनिरूपणं १४ प्रतिश्रुतस्थावरस्य मूल्यनिरूपणं २६ प्रथमजात-
पशौ परमेश्वराधिकारः २८ निवेदितपशौ मुक्तिनिषेधः।

१ अनन्तरं परमेश्वरो मूससमवदत् त्वम् इस्रायेल्वंशान् वद तेभ्य इमां
२ कथा कथय, यदि कश्चिद् ईश्वराय विशेषं प्रतिशृणोति तर्हि प्राणिमूल्यं
३ त्वया निरूपिष्यते। आ विंशवत्सरात् षष्टितमवर्षवयो यावत् पूत-
शेकलनुसारात् पञ्चाशत् शेकल्रूप्याणि पुंसः कृते मूल्यं भविष्यति।
४ किन्तु स्त्रियाः कृते त्रिंशत्शेकल्रूप्यं मूल्यं निरूपिष्यते। आ पञ्चम-
५ वर्षाद् विंशवर्षवयो यावद् वदि भवति तर्हि पुंसः कृते त्रिंशत्
६ शेकल् स्त्रियाः कृते दश शेकल्रूप्यं निरूपिष्यते। यद्येकमासात् पञ्च-
७ वर्षवयो यावद् भवति तर्हि पुंसः कृते पञ्च शेकलरूप्यं स्त्रियाः कृते त्रयः
शेकल्रूप्यं निरूपिष्यते। यदि षष्टिवर्षं तदधिकवर्षं वा वयो भवति
तर्हि पुंसः कृते पञ्चदशशेकल् स्त्रियाः कृते दश शेकल्रूप्यं निरूपिष्यते।
८ किन्तु यदि दौर्गत्यात् स त्वन्निरूपितं मूल्यं दातुं न क्षमते तदा स

याजकान्तिकं यास्यति याजकस्तन्मूल्यं निरूपयिष्यति प्रतिश्रोतु विभवानुसाराद् याजकेन तन्मूल्यं निरूपिष्यते। यादृशः पशुः परमेश्व- ९ रायोपहारार्थमुत्सर्जनीयस्तादृशः पशु र्यदि दीयते तर्हि परमेश्वराय दत्तो यः पशुः सएव पूतो भविष्यति। तदन्यथा विनिमयो वा न कर्त्तव्यः, १० अर्थादभद्रविनिमयाद् भद्रं भद्रविनिमयादभद्रं वा न दातव्यं, यदि कश्चित् पशुना पशुं विनिमयते तर्हि तौ द्वावेव पशू पूतौ भविष्यतः। यादृशः पशुः परमेश्वरायोपहारार्थं नोत्सर्जनीयस्तादृगशुचिपशु र्यदि ११ दीयते तर्हि तदुत्स्रष्टा तं पशुं याजकान्तिकमुपस्थापयिष्यति स भद्रो- १२ ऽभद्रो वा भवेत् याजकेन तन्मूल्यं निरूपिष्यते याजकनिरूपणानुसारात् तन्मूल्यं भविष्यति। किन्तु यदि स कथञ्चित् मुमुक्षति तर्हि स निरूपि १३ तमूल्यस्य पञ्चमांशम् अधिकं दास्यति।

यदि कश्चित् परमेश्वराय स्ववेश्म पावयति तर्हि तद् भद्रमभद्रं वा १४ भवेत् याजकेन तन्मूल्यं निरूपिष्यते, याजकेन यन्मूल्यं निरूपिष्यते तदेव निश्चितं भविष्यति। वेश्मपावको यदि स्ववेश्म मुमुक्षति तर्हि स १५ तन्निरूपितमूल्याधिकं पञ्चमांशं दास्यति तस्मात् तत् तस्य भविष्यति। यदि कश्चित् स्वाधिकृतभुवः कञ्चनांशं परमेश्वराय पावयति तर्हि तत्र १६ वपनीयवीजानुसारात् मूल्यं निरूपिष्यते विशेषतो यस्याम् एकहोमर्परिमितं यववीजं वपनीयं, तस्या भूमे मूल्यं पञ्चाशत्शेकलरूप्यं भविष्यति। यदि स महवर्षमारभ्य स्वभुवं पावयति तर्हि तन्निरू- १७ पितं यन्मूल्यं तदेव निश्चितं भविष्यति। किन्तु महात् परं यदि भुवं १८ पावयति तर्हि याजकेन महवर्षं यावदवशिष्टवर्षाणां संख्यानुसारात् तेन साकं रूप्ये गणिते सति तन्निरूपितमूल्यं न्यूनयिष्यते। तद्भूपावको १९ जनो यदि कथञ्चित् तां मुमुक्षति तदा स तन्निरूपितरूप्याद् अधिकं पञ्चमांशं दास्यति तेन सा तस्य निश्चेष्यते। किन्तु यदि स स्वभुवं २० न मोचयति वान्यं प्रति विक्रीणीते तर्हि सा कदापि न मोच्यते। किन्तु सा भू र्महवर्षे क्रेतुः कराद् गता निवेदितभूरिव परमेश्वराय २१ पूता भविष्यति तत्र याजकाधिकारो भविष्यति। यदि कश्चित् पैतृक- २२ भुवं विना क्रीतभुवं परमेश्वराय पावयति तर्हि याजकस्तन्निरूपि- २३ तमूल्यानुसारात् महवर्षं यावत् तेन दातव्यं मूल्यं गणयिष्यति, तदा स तद्दिन एव तन्निरूपितरूप्यं दत्त्वा परमेश्वराय निवेदयिष्यति। महवर्षे सा पुन र्विक्रेतुरर्थाद् भूम्यधिकारिणः करे समर्पयिष्यते। २४

२५ तव सर्व्वमूल्यनिरूपणं पूतशेकलनुसाराद् भविष्यति, विंशतिगेरयैक-शेकल् अस्ति।

२६ परमेश्वराय देयं प्रथमजं पशुवत्सं कोपि पावयितुं न शक्ष्यति गोवत्सो

२७ मेषवत्सो वा भवेत् स परमेश्वरस्य भविष्यति। स यद्यशुचिजन्तु र्भवति तर्हि तदधिकारी त्वन्निरूपितमूल्येन तं मोचयिष्यति तत्राधिकं पञ्चमांशं दास्यति, यदि न मुक्तस्तर्हि त्वन्निरूपितमूल्येन विक्रेष्यते।

२८ कश्चित् स्वसर्व्वस्वात् यत्किञ्चित् परमेश्वराय निवेदयति तन्नरः पशुर्वाधिकृतभूमिखण्डं वा भवेत्, तन्न विक्रेष्यते न वा मोचयिष्यते यतः

२९ सर्व्वं निवेदितं वस्तु परमेश्वराय पूतं भवति। निवेदितो नरो न

३० मोचयिष्यते, स विनाशिष्यते। भूशस्यानां शाखिफलानां वा भूमेरुत्पन्न-

३१ द्रव्याणां दशमांशः परमेश्वरस्य भविष्यति सएव परमेश्वराय पूतः। यो दशमांशात् किञ्चित् मुमुक्षति सोऽधिकं पञ्चमांशं दास्यति।

३२ गोमेषादे र्व्रजानां दशमांशो ऽर्थात् रक्षकदण्डाधोगामिनाम् एकैकदश-

३३ मपशुः परमेश्वराय मेध्यो भविष्यति। स भद्रोऽभद्रो वेति कोपि नानु-सन्धास्यति स न परिवर्त्तिष्यते किन्तु यदि कश्चित् कथञ्चित् तं परिवर्त्त-

३४ यिष्यति तर्हि स तत्परिवर्त्तश्च मेध्यौ भविष्यतः स पशु र्न मोचयिष्यते। परमेश्वरः सीनयद्रौ इस्रायेल्वंशं प्रति मूससमेतान्यादिदेश।

---

# गणनापुस्तकम्

अर्थात्

# मूसोलिखितं चतुर्थपुस्तकं।

## १ प्रथमोऽध्यायः।

१ लोकान् गणयितुं मूसं प्रति परमेश्वराज्ञा ५ प्रतिवंशमुख्यनरनाम १७ लोकानां गणनं २० प्रतिवंशसंख्या ४७ लेवीयवंशगणनञ्च।

१ मिसर्देशाद् इस्रायेल्वंशस्य वहिरागमनस्य द्वितीयवत्सरस्य द्वितीय-

२ मासस्य प्रथमदिने परमेश्वरः सीनयप्रान्तरे समाजावासमध्ये मूससमव-दत्, यूयम् इस्रायेलः समाजीयान् सर्व्वान् स्वस्वकुलानुसारात् पितृ-

वंशानुसाराच्च गणयत, नामानुक्रमणिकायाम् एकैकं पुमांसं विशेषयत २ च। विंशतिवर्षवयस्कात्ततोऽधिकवर्षवयस्काश्च ये सर्व्वे पुरुषा इस्रायेल्-वंशमध्ये रणगमनयोग्याः सन्ति तेषां सर्व्वेषां संख्यां स्वस्वसैन्यानुसारतः ३ कुरुत। त्वं हारोणश्च तत् करिष्यथः एकैकवंशीय एकैको जनो युवयोः ४ सहकारी भविष्यति ते स्वस्वपितृवंशस्य मुख्या भविष्यन्ति।

ये युवयोः सहायाः भविष्यन्ति तेषामेतानि नामानि। रूबेनवंशजः ५ शिदेयूरस्य सुत इलीषूरः। शिमियोनवंशजः सूरीशद्दयस्य सुतः ६ शिलुमीयेलः, यिहूदावंशजोऽम्मीनादवस्य सुतो नहशोनः। इषाखर- ७ वंशजः सूयारस्य सुतो निथनेलः। सिबूलूनवंशजो हेलोनस्य सुत ८ इलीयावः। यूषफसन्तानानां मध्ये इफ्रयिमवंशजोऽम्मीहूदस्य सुत १० इलीशामः, मिनशि वंशजः पिदाहसूरस्य सुतो गमिलीयेलः। बिन्यामीन- ११ वंशजो गिदियोनेः सुतोऽवीदानः। दानवंशजोऽम्मीशद्दयस्य सुतो १२ ऽहीयेषरः। आशेरवंशजोऽक्रणस्य सुतः पगीयेलः। गादवंशजो दूये- १३ लस्य सुत इलीयासफः। नप्ताले वंशज ऐननस्य सुतोऽहीरः। इमे स्व- १५ पितृवंशमुख्या इस्रायेल्वंशस्य सहस्राणामधिपाः समाजस्य मनोनीत- १६ लोकाश्च।

तदा मूसाहारोणावुक्तनामविशिष्टान् लोकान् आददातां। तस्माद् १७ द्वितीयमासस्य प्रथमे सर्व्वसमाजं मेलयित्वा स्वस्वकुलानुसारात् स्व- १८ पितृवंशानुसारात् स्वस्वनामसंख्यानुसाराच्च विंशतिवर्षवयस्कमारभ्य शिरोगणनया लोकानां सङ्ख्या तैः ज्ञाता। इत्थं मूसाः परमेश्वराज्ञया १९ सीनयप्रान्तरे तान् गणयामास।

इस्रायेलो ज्येष्ठसुतस्य रूबेनस्य वंशीयानां कुलानुसारात् पितृवंशा- २० नुसाराच्च संख्यानिर्णयः। विंशतिवर्षवयस्कमारभ्य रणगमनयोग्यानां २१ सर्व्वपुरुषाणां नामगणनया शिरोगणनया च रूबेनवंशस्य गणित-लोकानां संख्या पञ्चशताधिकषट्चत्वारिंशत्सहस्राणि।

शिमियोनवंशस्य कुलानुसारात् पितृवंशानुसाराच्च संख्यानिर्णयः। २२ विंशतिवर्षवयस्कमारभ्य रणगमनयोग्यानां सर्व्वपुरुषाणां नामगणनया २३ मस्तकगणनया च शिमियोनवंशस्य गणितलोकानां संख्या शतत्रयाधि-कोनषष्टिसहस्राणि।

गादवंशस्य कुलानुसारात् पितृवंशानुसाराच्च संख्यानिर्णयः। विंश- २४ तिवर्षवयस्कमारभ्य रणगमनयोग्यानां सर्व्वपुरुषाणां नामगणनया २५

गादवंशस्य गणितलोकानां संख्या सार्द्धषट्शताधिकपञ्चचत्वारिंशत्सहस्राणि।

२६ यिहूदावंशस्य कुलानुसारात् पितृवंशानुसाराच्च संख्यानिर्णयः। विंशतिवर्षवयस्कमारभ्य रणगमनयोग्यानां पुरुषाणां नामगणनया २७ यिहूदावंशस्य गणितलोकानां संख्या षट्शताधिकचतुःसप्ततिसहस्राणि।

२८ इषाखरवंशस्य कुलानुसारात् पितृवंशानसाराच्च संख्यानिर्णयः। २९ विंशतिवर्षवयस्कमारभ्य रणगमनयोग्यानां सर्व्वपुरुषाणां नामगणनया इषाखर्वंशस्य गणितलोकानां संख्या चतुःशताधिकचतुःपञ्चाशत्सहस्राणि।

३० सिबूलूनवंशस्य कुलानुसारात् पितृवंशानुसाराच्च संख्यानिर्णयः। ३१ विंशतिवर्षवयस्कमारभ्य रणगमनयोग्यानां सर्व्वपुरुषाणां नामगणनया सिबूलूनवंशस्य गणितलोकानां संख्या चतुःशताधिकसप्तपञ्चाशत्सहस्राणि।

३२ यूषफो ऽर्थात् इफ्रयिमवंशस्य कुलानुसारात् पितृवंशानुसाराच्च संख्यानिर्णयः। विंशतिवर्षवयस्कमारभ्य रणगमनयोग्यानां सर्व्वपुरुषाणां ३३ नामगणनया इफ्रयिम्वंशस्य गणितलोकानां संख्या पञ्चशताधिकचत्वारिंशत् सहस्राणि।

३४ मिनशिवंशस्य कुलानुसारात् पितृवंशानुसाराच्च संख्यानिर्णयः। विंशतिवर्षवयस्कमारभ्य रणगमनयोग्यानां सर्व्वपुरुषाणां नामगणनया ३५ मिनशिवंशस्य गणितलोकानां संख्या शतद्वयाधिकद्वात्रिंशत्सहस्राणि।

३६ बिन्यामीनवंशस्य कुलानुसारात् पितृवंशानुसाराच्च संख्यानिर्णयः। विंशतिवर्षवयस्कमारभ्य रणगमनयोग्यानां सर्व्वपुरुषाणां नामगणनया ३७ बिन्यामीनवंशस्य गणितलोकानां संख्या चतुःशताधिकपञ्चत्रिंशत्सहस्राणि।

३८ दानवंशस्य कुलानुसारात् पितृवंशानुसाराच्च संख्यानिर्णयः। विंशति- ३९ वर्षवयस्कमारभ्य रणगमनयोग्यानां सर्व्वपुरुषाणां नामगणनया दान-वंशस्य गणितलोकानां संख्या सप्तशताधिकद्वाषष्टिसहस्राणि।

४० आशेरवंशस्य कुलानुसारात् पितृवंशानुसाराच्च संख्यानिर्णयः। ४१ विंशतिवर्षवयस्कमारभ्य रणगमनयोग्यानां सर्व्वपुरुषाणां नामगणनया आशेरवंशस्य गणितलोकानां संख्या पञ्चशताधिकचत्वारिंशत्सहस्राणि।

नप्तालिवंशस्य कुलानुसारात् पितृवंशानुसाराच्च संख्यानिर्णयः। विंशति- ४२ वर्षवयस्कमारभ्य रणगमनयोग्यानां सर्व्वपुरुषाणां नामगणनया नप्तालि- ४३ वंशस्य गणितलोकानां संख्या चतुःशताधिकत्रिपञ्चाशत्सहस्राणि।

मूसा हारोण इस्रायेल्वंशानां द्वादशाध्यक्षाश्च अर्थात् स्वस्वपितृ- ४४ वंशैकैकाध्यक्षा येषां गणनां चक्रुस्त इमे गणिता लोकाः। तस्मात् इस्रायेल ४५ वंशानां पितृवंशानुसारात् विंशतिवर्षवयस्कमारभ्य येऽगण्यन्त ते गणिता लोका अर्थाद् इस्रायेलवंशमध्ये रणगमनयोग्याः सर्व्वे लोकाः सार्द्धपञ्च- ४६ शताधिकत्रिसहस्राधिकषट्लक्षाणि जनाः।

लेवीयाः स्वस्वपितृवंशानुसारात् तेषां मध्ये नागण्यन्त। यतः परमे- ४७ श्वरो मूससमवदत् त्वं केवलं लेविवंशं न गणय इस्रायेल्वंशमध्ये तेषां ४८ संख्यां मा कुरु। किन्तु साक्ष्यावासे तत्पात्रद्रव्येषु च तान् नियुंक्ष्व, त ५० आवासं तत्पात्राणि च वक्ष्यन्ति तं सेविष्यन्ते च, तथावासस्य चतुर्दिक्षु शिविरं स्थापयिष्यन्ति। प्रस्थानकाले लेवीया आवासमादायावरोह- ५१ यिष्यन्ति, आवासस्थापनकाले च लेवीयास्तं स्थापयिष्यन्ति, तदन्तिक- गामिनोऽन्यवंशीया घानिष्यन्ते। इस्रायेल्वंशाः स्वस्वसैन्यस्य शिविरान्तिके ५२ तत्केतुसमीपे वत्स्यन्ति। इस्रायेल्वंशस्य मण्डलीं प्रति यथा क्रोधो न ५३ घटते तदर्थं लेवीयैः साक्ष्यावासस्य चतुर्दिक्षु शिविरं स्थापयित्वा साक्ष्या- वासो रक्षणीयः। तत इस्रायेलवंशास्तथैव चक्रुः, मूससं प्रति परमेश्वरा- ५४ ज्ञानुसारात् ते सर्व्वं कर्म्म चक्रुः।

---

## २ द्वितीयोऽध्यायः।

१ इस्रायल्वंशस्य शिविरस्थापनक्रमः १० स्थानं १७ सेनापतिनाम २५ सैन्यप्रभृते नाम च।

अनन्तरं परमेश्वरो मूससं हारोणञ्च जगाद इस्रायेल्वंशस्य सर्व्वे १ जनाः स्वस्वपितृवंशानुसारात् केतुसमीपे शिविरं स्थापयिष्यन्ति, ते २ समाजावाससमीपे चतुर्दिशि शिविरं स्थापयिष्यन्ति।

पूर्व्वस्यां दिश्यर्थात् सूर्य्योदयदिशि यिहूदावंशस्य ध्वजस्यानुगामिनो ३ लोकाः स्वस्वसैन्यानुसारात् शिविरं स्थापयिष्यन्ति, अम्मीनादवस्य सुतो नहशोनो यिहूदावंशीयानां सेनापति र्भविष्यति। तेषां सैन्यान्यर्थाद् ४ ये गणितास्ते षट्शताधिकचतुःसप्ततिसहस्राणि लोकाः। इषाखर- ५

स्तत्पार्श्वे शिविरं स्थापयिष्यति सूयारस्य सुतो निथनेल इषाखर-
६ वंशीयानां सेनापति र्भविष्यति। तेषां सैन्यान्यर्थाद् ये गणितास्ते चतुः-
७ शताधिकचतुःपञ्चाशत्सहस्राणि लोकाः। तत्पार्श्वे सिबूलूनवंशः स्थास्यति,
८ हेलोनस्य सुत इलीयाब इषाखरवंशीयानां सेनापति र्भविष्यति। तेषां
सैन्यान्यर्थाद् ये गणितास्ते चतुःशताधिकसप्तपञ्चाशत्सहस्राणि लोकाः।
९ यिहूदावंशादीनां सर्व्वशिविरस्य गणिता लोकाः स्वस्वसैन्यानुसारात्
चतुःशताधिकषडशीतिसहस्राधिकलक्षं, यात्राकाले ते प्रथमा भवि-
ष्यन्ति।

१० दक्षिणस्यां दिशि रूबेनवंशस्य ध्वजस्यानुगामिनो लोकाः स्वस्वसैन्या-
नुसारात् शिविरं स्थापयिष्यन्ति, शिदेयूरस्य सुत इलीषूरो रूबेनवं-
११ शीयानां सेनापति र्भविष्यति। तेषां सैन्यान्यर्थाद् ये गणितास्ते पञ्चश-
१२ ताधिकषट्चत्वारिंशत्सहस्राणि लोकाः। शिमियोनवंशस्तत्पार्श्वे शिविरं
स्थापयिष्यति, सूरिशद्दयस्य सुतः शिलुमीयेलः शिमियोनवंशीयानां
१३ सेनापति र्भविष्यति। तेषां सैन्यान्यर्थाद् ये गणितास्ते शतत्रया-
१४ धिकोनषष्टिसहस्राणि। तेषां पार्श्वे गादवंशः स्थास्यति, दूयेलस्य सुत
१५ इलीयासफो गादवंशीयानां सेनापति र्भविष्यति। तेषां सैन्यान्यर्थाद्
१६ ये गणितास्ते सार्द्धषट्शताधिकपञ्चचत्वारिंशत्सहस्राणि। रूबेनवंशा-
दीनां सर्व्वशिविरस्य गणिता लोकाः स्वस्वसैन्यानुसारात् सार्द्धचतुः-
शताधिकैकपञ्चाशत्सहस्राधिकलक्षं, यात्राकाले ते द्वितीया भविष्यन्ति।

१७ समाजावासो लेवीयानां शिविरेण समं यात्राकाले सर्व्वशिविराणां
मध्यीयो भविष्यति; एकैको वंशो यथा स्वस्वकेतुसमीपे शिविरं स्थापयि-
ष्यति तथैव गमिष्यति।

१८ पश्चिमायां दिशि इफ्रयिमवंशस्य ध्वजस्यानुगामिनो लोकाः स्वस्व-
सैन्यानुसारात् शिविरं स्थापयिष्यन्ति, अम्मीहूदस्य सुत इलीशामः
१९ इफ्रयिमवंशीयानां सेनापति र्भविष्यति। तेषां सैन्यान्यर्थाद् ये गणि-
२० तास्ते पञ्चशताधिकचत्वारिंशत्सहस्राणि लोकाः। तत्पार्श्वे मिनशि वंशः
स्थास्यति पिदाहसूरस्य सुतो गमिलीयेलो मिनशिवंशीयानां सेना-
२१ पति र्भविष्यति। तेषां सैन्यान्यर्थाद् ये गणितास्ते शतद्वया-
२२ धिकद्वात्रिंशत्सहस्राणि लोकाः। तत्पार्श्वे बिन्यामीनवंशः स्थास्यति
गिदियोनेः सुतो ऽबीदानो बिन्यामीनवंशीयानां सेनापति र्भवि-
२३ ष्यति। तेषां सैन्यान्यर्थाद् ये गणितास्ते चतुःशताधिकपञ्चत्रिंशत्सह-

स्राणि लोकाः। इफ्रयिमवंशादीनां सर्व्वशिविरस्य गणिता लोकाः २४ स्वस्वसैन्यानुसारात् शताधिकाष्टसहस्राधिकलक्षं, यात्राकाले ते तृतीया भविष्यन्ति।

उत्तरस्यां दिशि दानवंशस्य ध्वजस्यानुगामिनो लोकाः स्वस्वसैन्यानु- २५ सारात् शिविरं स्थापयिष्यन्ति, अम्मीशद्दयस्य सुतो ऽहीयेषरो दानवंशी- यानां सेनापति र्भविष्यति। तेषां सैन्यान्यर्थाद् ये गणितास्ते सप्तश- २६ ताधिकद्वाषष्टिसहस्राणि लोकाः। तेषां पार्श्वे आशेरवंशः शिविरं स्थाप- २७ यिष्यति, अक्रणस्य पुत्रो पगीयेल आशेरवंशीयानां सेनापति र्भविष्यति। तेषां सैन्यान्यर्थाद् ये गणितास्ते पञ्चशताधिकैकचत्वारिंशत्सह- २८ स्राणि लोकाः। तेषां पार्श्वे नप्तालेर्वंशः स्थास्यति, एननस्य सुतोऽहीरो २९ नप्तालिवंशीयानां सेनापति र्भविष्यति। तेषां सैन्यान्यर्थाद् ये गणितास्ते ३० चतुःशताधिकत्रिपञ्चाशत्सहस्राणि लोकाः। दानवंशादीनां सर्व्वशिवि- ३१ रस्य गणिता लोकाः षट्शताधिकसप्तपञ्चाशत्सहस्राधिकलक्षं, यात्रा- काले ते स्वं स्वं केतुमादाय शेषगामिनो भविष्यन्ति। ३२

इस्रायेल्वंशस्य पितृवंशानुसारेण गणिताः सर्व्वे लोका अर्थात् ३३ सैन्यानुसारात् शिविरस्था गणिता लोकाः सार्द्धपञ्चशताधिकत्रिंशत्- सहस्राधिकषट्लक्षाणि। किन्तु मूससं प्रति परमेश्वरीयाज्ञानुसारात् ३४ लेवीया इस्रायेल्वंशमध्ये नागण्यन्त। इस्रायेल्वंशो मूससं प्रति परमे- श्वरीयाज्ञानुसारात् सर्व्वं कर्म्म चक्रुस्तद्वत् ते स्वस्वकुलानुसारात् पितृ- वंशानुसाराच्च केतुसमीपे शिविरं स्थापयामासुः प्रतस्थिरे च।

---

# ३ तृतीयोऽध्यायः।

१ हारोणस्य सुतानां कथनं ५ लेवीयलोकानां कथनं २१ अर्थाद् गेर्शोनीयजनानां कथनं २७ किहातीयजनानां कथनं ३३ मिरारीयजनानां कथनं ३९ लेवीयानां प्रथमजातजनानां गणनञ्च।

सीनयद्रौ यदा परमेश्वरो मूससमवदत् तदा हारोणस्य मूससश्च वंश- १ श्रेणीयं। हारोणस्य सुतानां नामान्येतानि प्रथमजातो नादवो ऽवीहूः २ इलियासर ईथामरः। हारोणस्य सुतानामभिषिक्तयाजकानां नामा- ३ न्येतानि, अर्थात् ये सेवितुं याजकत्वपदे नियुक्तास्तेषां नामानि। किन्तु ४ नादवो ऽवीहूश्च सीनयप्रान्तरे परमेश्वरम् उद्दिश्य साधारणवह्निं

निवेद्य परमेश्वरस्य सम्मुखे प्राणान् तत्यजतुस्तयोरपत्यानि नासन्, तत इलियासरैथामरौ स्वपितु र्हारोणस्य समक्षं याजकत्वपदेन सेवां
५ चक्रातुः। परमेश्वरो मूससं बभाषे त्वं लेविवंशानानीय हारोणयाजक-
७ मुपकर्त्तुं तत्सम्मुखे स्थापय। तेन त आवासं सेवितुं समाजावासस्य
८ सम्मुखे तस्य सर्व्वसमाजस्य च पालनीयं पालयिष्यन्ति। आवासं सेवितुं समाजावासस्य सर्व्वपात्राणि इस्रायेल्वंशस्य रक्षणीयञ्च रक्षिष्यन्ति।
९ त्वं पुत्रगणसहिताय हारोणाय लेविनो दास्यसि, यतस्ते इस्रायेल्-
१० वंशमध्यात् तस्मै सर्व्वथा दत्ताः। त्वं हारोणं तत्सुतांश्च पदे नियोक्ष्यसे ते स्वयाजनपदं रक्षिष्यन्ति, किन्तु योऽन्यवंशीयो निकटं यास्यति स घानिष्यते।

११ परमेश्वरो मूससं जगाद पश्याहं इस्रायेल्वंशानां मध्यात् तेषां सर्व्व-
१२ प्रथमजातानां विनिमयाल् लेविनोऽग्रहीषं अतो लेविनएव ममाभवन्
१३ यतो यदाहं मिसर्देशे सर्व्वप्रथमजातान् प्राहरं तदा आ मानुषात् पशुं यावद् इस्रायेल्वंशस्य सर्व्वप्रथमजातान् मदर्थम् अपावयम् अतः सर्व्वे प्रथमजा मम सन्ति, परमेश्वरोऽहमेव।

१४ सीनय् प्रान्तरे परमेश्वरो मूससमुवाच त्वं स्वस्वपितृवंशानुसारात्
१५ कुलानुसाराच्च लेविवंशं गणय मासैकाधिकवयस्कान् सर्व्वपुंसो गणय।
१६ ततो मूसाः परमेश्वरोक्ताज्ञानुसारात् तान् गणयामास। तेषां प्रत्येकशो
१८ नाम, लेवेः सन्ताना गेर्शोनः किहातो मिरारिश्च। स्वस्वकुलानुसारात्
१९ गेर्शोनस्य सन्तानानां नाम लिव्निः शिमियिश्च। स्वस्वकुलानुसारात् किहातस्य सन्तानानां नामाम्रामो यिष्हरो हिब्रोण उषीयेलश्च।
२० स्वस्वकुलानुसारात् मिरारेः सन्तानानां नाम मह्लि मूशिश्च, एतानि पितृवंशानुसाराल् लेविनां कुलानि।

२१ तद्गेर्शोनाल् लिव्निवंशः शिमियिवंशश्चोत्पन्नौ, तौ गेर्शोनीय-
२२ वंशौ। मासैकाधिकवयस्कपुरुषेषु गणितेषु संख्यया ते पञ्चशताधिकसप्त-
२३ सहस्राण्यासन्। गेर्शोनीयवंशाः पश्चिमदिशायाम् आवासपश्चात्पार्श्वे
२४ शिविरमस्थापयन्। लायेलस्य सुत इलीयासफो गेर्शोनीयानां पितृ-
२५ वंशस्य मुख्य आसीत्। आवासदूष्याच्छादनवस्त्राणि समाजावासद्वार-
२६ स्याच्छादनवस्त्रं प्राङ्गणस्य यवनिका आवासवेद्योश्चतुर्दिक्षु स्थितस्य प्राङ्गणस्य द्वाराच्छादनवस्त्रं सेवार्थकाः सर्व्वरज्जवश्चैतानि समाजावासीयद्रव्याणि गेर्शोनीयवंशेन रक्षितव्यानि।

किहातात् अम्रामीयवंशो यिष्हरीयवंशो हिब्रोणीयवंश उषीयेली- २७
यवंशश्चोदपद्यन्त, एते सर्व्वे किहातीयवंशाः। एतेषां मध्ये मासैकाधिक- २८
वयस्काः पुरुषाः षट्शताधिकाष्टसहस्राणि, ते पवित्रस्थानस्य रक्षिण
आसन्। एते किहातीयवंशा आवासस्य पार्श्वे दक्षिणस्यां दिशि शिवि- २९
रमस्थापयन्। उषीयेलस्य पुत्र इलीषाफनः किहातीयानां पितृवंशस्य ३०
मुख्यो बभुव। मञ्जूषा भोजनासनं दीपवृक्षो वेदिद्वयं पूतस्थानस्य सेवा- ३१
र्थकपात्राणि विच्छेदवस्त्रम् एतानि तै रक्षितव्यानि। हारोणयाजकस्य ३२
सुत इलियासरो लेविवंशस्य मुख्यो भूत्वा पूतस्थानरक्षिणाम् आधिपत्यं
चकार।

मिरारे मह्लीयमूशीयवंशौ जातौ, तौ मिरारीयवंशौ। तद्वंशस्य ३३
मासैकाधिकवयस्कपुंसु गणितेषु शतद्वयाधिकषट्सहस्राणि पुरुषा अभ- ३४
वन्। अबीहयिलस्य सुतः सूरीयेलो मिरारिवंशस्य पितृगेहस्य मुख्यो ३५
बभुव, त आवासोत्तरपार्श्वे शिविरम् अस्थापयन्। आवासस्य फल- ३६
कान्यर्गलाः स्तम्भाः पदाधारास्तदीयानि सर्व्वभाजनानि सेवार्थकसर्व्व-
वस्तूनि चतुर्दिक्स्थप्राङ्गणस्य स्तम्भास्तेषां पदाधाराः कीला रज्जव एतानि ३७
रक्षणाय मिरारिसन्तानानां करगाणि बभूवुः। मूसा हारोणस्तत्सुताश्च ३८
समाजावासस्य सम्मुखे पूर्व्वपार्श्वे शिविरं स्थापयन्त इस्रायेल्वंशस्य
पूतस्थानस्य रक्षणीयम् अरक्षन्, किन्तु योऽन्यजातिस्तत्समीपमितः
सोऽम्रियत।

मूसोहारोणाभ्यां परमेश्वराज्ञया लेविवंशस्य मासैकाधिकवयस्क- ३९
पुंसु गणितेषु संख्यया द्वाविंशतिसहस्राणि लोका आसन्। ततः परमे- ४०
श्वरो मूससमवदत् त्वम् इस्रायेल्वंशस्य मासैकाधिकवयस्कान् प्रथम-
जातपुंसो गणय तेषां नामसंख्यां कुरु च। परमेश्वरो योऽहं मदर्थम् ४१
इस्रायेल्वंशस्य प्रथमजलोकानां विनिमयाल् लेविन इस्रायेल्वंशस्य
प्रथमजातपशूनाञ्च विनिमयाल् लेविनां पशून् गृहाण। ततः परमेश्व- ४२
राज्ञात इस्रायेल्वंशस्य प्रथमजातलोकेषु मूससा गणितेषु तेषां मासैका- ४३
धिकवयस्कानां प्रथमजातपुंसां नामसंख्या त्रिसप्तत्यधिकशतद्वयाधिक-
द्वाविंशतिसहस्राणि बभूव। परमेश्वरो मूससमवदत् त्वम् इस्रायेल्- ४४
वंशस्य प्रथमजातलोकानां विनिमयाल् लेविनस्तेषां पशूनाञ्च विनि- ४५
मयाल् लेविनां पशून् गृहाण, परमेश्वरो योऽहं लेवीया ममैव भवि-
ष्यन्ति। तत इस्रायेल्वंशीयप्रथमजातानां मध्ये लेवीये मुक्तेभ्योऽधिका ४६

४७ ये त्रिसप्तत्यधिकशतद्वयं पुरुषा मोचनीयास्तेषामेकैकजनात् पूतशेकलनु-
सारात् पञ्च पञ्च शेकलो ग्रहीष्यसि, विंशतिगेराभिः शेकलेका भवति ।
४८ तेषां मोक्तव्यावशिष्टलोकानां रूप्यमूल्यं हारोणतत्सुतेभ्यो दास्यसि ।
४९ लेविभिरमुक्ता ये ऽवशिष्टलोका आसन् तेषां मुक्तिमूल्यं रूप्यं मूसा
५० जग्राह। अर्थाद् इस्रायेल्वंशस्य तेभ्यः प्रथमजातलोकेभ्यः पूतशेकल्-
परिमाणात् पञ्चषष्ठ्यधिकशतत्रयाधिकसहस्रशेकलरूप्याणि जग्राह ।
५१ मूसाः परमेश्वराज्ञया तेषां मुक्तलोकानां रूप्यमादाय हारोणाय तत्सु-
तेभ्यश्च ददौ ।

---

# ४ चतुर्थोऽध्यायः ।

१ किहातीयलोकानां सेवायोग्यवयोनिर्णयः ४ याजकानां कर्म्मनिर्णयः १७ पूतवस्तु-
न्यनाच्छादिते किहातीयानामावासयाननिषेधः २१ गेर्शोनीयलोकानां सेवा-
योग्यवयोनिर्णयः २९ मिरारीयान् प्रति कथनं ३४ किहातीयानां संख्या ३८
गेर्शोनीयलोकानां संख्या ४२ मिरारीयाणां संख्या च ।

१ परमेश्वरो मूससं हारोणञ्च बभाषे त्वं लेविवंशानां मध्ये किहातीयानां
२ कुलानुसारात् पितृवंशानुसाराच्च आ त्रिंशद्वर्षवयस्कात् पञ्चाशद्वर्ष-
३ वयस्कं यावद् ये पुरुषाः समाजावासे कर्म्मकारिणां श्रेण्यन्तर्गता
भवन्ति तान् गणय ।
४ समाजावासे या सेवा किहातवंशेन करणीया सातिपवित्रस्थान-
५ सम्बन्धीया। यदा शिविरमग्रं यास्यति तदा हारोणतत्पुत्रा आगत्य
६ विच्छेदकवस्त्रमवरोह्य तेन साक्ष्यमञ्जूषामाच्छादयिष्यन्ति तदुपरि
तहश्चर्म्मणाच्छादनं दास्यन्ति तदुपरि सम्पूर्णनीलवस्त्रं दास्यन्ति
७ तत्पार्श्वयो र्वहनदण्डौ निधास्यन्ति च । दर्शनीयपूपासनोपरि नीलवस्त्रं
पातयिष्यन्ति तदुपरि भोजनभाजनचमसपानपात्रनिषेकार्थकपात्राणि
८ सज्जयित्वा तदुपरि नित्यपूपान् परिवेषयिष्यन्ति तदुपरि रक्तवसनं
विस्तार्य्य तहश्चर्म्मणाच्छादनेन तदाच्छाद्य भोजनासने वहनदण्डौ
९ दास्यन्ति। ते नीलवस्त्रमादाय तेन दीपवृक्षं तद्दीपान् वर्त्तिकाच्छेदनीः
१० कर्त्तरिका तत्सेवार्थकसर्व्वतैलपात्राणि चाच्छादयिष्यन्ति । ते दीपवृक्षं
तत्सर्व्वपात्राणि च तहश्चर्म्मणाच्छादने निधाय वहनदण्डोपरि स्थाप-
११ यिष्यन्ति । ते स्वर्णवेद्या उपरि नीलवस्त्रं विस्तार्य्य तहश्चर्म्मणाच्छा-
१२ दनेन तामाच्छाद्य तत्र वहनदण्डौ निधास्यन्ति । ते पवित्रस्थानसेवार्थ-
कानि सर्व्वपात्राण्यादाय नीलवस्त्रमध्ये निधास्यन्ति तहश्चर्म्मणा तदा-

च्छादयिष्यन्ति वहनदण्डोपरि स्थापयिष्यन्ति। वेद्या भस्म निक्षिप्य १३ तदुपरि वार्त्ताकीवर्णवस्त्रं पातयिष्यन्ति। तदुपरि तत्सेवार्थकभाजना- १४ न्यर्थात् कर्त्तरीत्रिसूलदर्व्वीकुण्डानि वेद्याः सर्व्वपात्राणि निधास्यन्ति तदुपरि तहशूकत्तेराच्छादनं विस्तार्य्य तत्र वहनदण्डौ निधास्यन्ति। इत्थं शिबिरस्याग्रगमनकाले पवित्रस्थाने पवित्रस्थानस्य सर्व्वभाजने १५ च हारोणतत्सुतैराच्छादिते किहातवंशाः स्कन्धभारं वोढुमायास्यन्ति किन्तु मृत्युभयात् पूतं वस्तु ते न स्पर्शनीयं। समाजावासे किहात- वंशस्य भारोऽयं भविष्यति, दीपार्थकतैलं सुगन्धिधूपो दैवसिकनैवेद्यम् १६ अभिषेकार्थकतैलम् आवासस्तस्य सर्व्ववस्तु पूतस्थानं तत्पात्राणि चैतानि हारोणसुतस्य इलियासरयाजकस्य हस्ते समर्पितानि।

अनन्तरं परमेश्वरो मूससं हारोणञ्च जगाद यूयं लेविनां मध्यात् १७ किहातीयवंशं नोच्छिन्त। तेषां मृति र्यथा न भवेत् ते जीवेयुस्तदर्थं ते १८ यदातिपवित्रस्थानस्य सविधा भवन्ति तदा तान् प्रतीत्थं कुरुत हारोण- १९ तत्पुत्रा अभ्यन्तरं गत्वा तेषां प्रतिजनं सेवायां भारे च नियोक्ष्यन्ते। किन्तु यथा ते न म्रियेरंस्तदर्थं निमिषैकमपि पवित्रवस्तु द्रष्टुं तैरन्त- २० र्न गन्तव्यं।

ततः परं परमेश्वरो मूससमवदत् त्वं गेर्शोनीयानां पितृवंशानुसारात् २१ कुलानुसाराच्च तेषामपि संख्यां गृहाण। आ त्रिंशद्वर्षवयस्कात् पञ्चा- २२ शद्वर्षवयस्कं यावद् ये पुरुषाः समाजावासे कर्म्मकारिणां श्रेण्यन्तर्ग- २३ तास्तान् गणय। गेर्शोनवंशेन यत् करणीयं, तत् कार्य्यं वहनञ्चेदं, २४ आवासस्य यवनिका समाजदूष्यं तदाच्छादनं तदुपरिस्थतहशूकत्ते- २५ राच्छादनं समाजावासस्य द्वाराच्छादनवस्त्रं प्राङ्गणस्य यवनिका आ- २६ वासवेद्योश्चतुर्दिक्स्थितस्य प्राङ्गणस्य द्वाराच्छादनवस्त्रं तस्य रज्जवस्त- त्सेवार्थकं सर्व्वपात्रं एतानि तै र्वहनीयानि, एतानि च यत्कर्म्मार्थम- भुवन् तदपि तैः करणीयं। गेर्शोनीयवंशाः स्वीयसर्व्वभारवहने सेवने च २७ हारोणतत्सुतानामाज्ञानुसारात् सर्व्वकर्म्म करिष्यन्ति, यूयं तेषु भारेषु तान् नियोक्ष्यध्वे। समाजावासे गेर्शोनीयवंशस्य सेवनमिदं, तान् २८ शासितुं हारोणयाजकस्य सुतेथामरस्याधिकारो भविष्यति।

मिरारिवंशीयानां कुलानुसारात् पितृवंशानुसाराच्च तान् गणय। २९ आ त्रिंशद्वर्षवयस्कात् पञ्चाशद्वर्षवयस्कं यावद् ये पुरुषाः समाजावासे ३० कर्म्मकारिणां श्रेण्यन्तर्गतास्तेषां प्रतिजनं गणय। समाजावासे तेषां ३१

कर्म्मानुसारात् तैः पालनीयो भारवहनविधिरयं, आवासफलकानि
३२ स्तम्भास्तदर्गलाः पदाधाराः प्राङ्गणचतुर्दिक्स्थस्तम्भास्तेषां पदाधाराः
कीलाः रज्जवः सर्व्वपात्राणि सेवार्थसकलवस्तूनि च तैं रक्षितव्यान्ये-
३३ तानि वहनीयद्रव्याण्येकैकनामक्रमेण तैर्गणितव्यानि। समाजावासे
मिरारीयवंशेन करणीया सेवेयं हारोणयाजकस्य सुतेयामरस्य वशे
भविष्यति।

३४ मूसा हारोणः समाजाध्यक्षाश्च किहातवंशस्य कुलानुसारात् पितृ-
३५ वंशानुसाराच्च त्रिंशद्वर्षवयस्कमारभ्य पञ्चाशद्वर्षवयस्कं यावत् समा-
३६ जावासे कर्म्मकारिणां श्रेण्यन्तर्गतान् पुरुषान् गणयाञ्चक्रुः। तेषां
३७ कुलानुसाराद् गणितानां सार्द्धसप्ताधिके द्वे सहस्रे आसन्। मूससं
प्रति परमेश्वराज्ञानुसारात् मूसोहारोणौ किहातीयवंशमध्ये समा-
जावाससेवाकारिण एतान् जनान् गणयामासतुः।

३८ गेर्शोनीयवंशमध्य आ त्रिंशद्वर्षवयस्कात् पञ्चाशद्वर्षवयस्कं यावद् ये
३९ समाजावासे कर्म्मकारिणां श्रेण्यन्तर्गताऽभवन्, ते स्वस्वकुलानुसारात्
४० पितृवंशानुसाराच्चागण्यन्त। तेषां स्वस्वकुलानुसारात् पितृवंशानुसाराच्च
४१ गणितानां त्रिंशदधिकषट्शताधिके द्वे सहस्रे जना आसन्। मूसो-
हारोणौ परमेश्वराज्ञानुसाराद् गेर्शोनीयवंशमध्ये समाजावाससेविन-
स्तान् जनान् गणयामासतुः।

४२ मिरारीयवंशस्य मध्ये आ त्रिंशद्वर्षवयस्कात् पञ्चाशद्वर्षवयस्कं यावद् ये
४३ समाजावासे कर्म्मकारिणां श्रेण्यन्तर्गताऽभवन्, ते स्वस्वकुलानुसरात् पितृ-
४४ वंशानुसाराच्चागण्यन्त। स्वस्वकुलानुसारात् गणितानां तेषां संख्या शतद्व-
४५ याधिकसहस्रत्रयम् आसीत्। मूससं प्रति परमेश्वराज्ञया मूसोहा-
४६ रोणौ मिरारिवंशस्य लोकानेतानगणयतां। मूसा हारोण इस्रायेल्-
४७ वंशाध्यक्षाश्च लेवीयवंशस्य त्रिंशद्वर्षवयस्कमारभ्य पञ्चाशद्वर्षवयस्कं यावत्
समाजावाससम्बन्धीयं भारवहनादिसेवाकर्म्म कर्त्तुं योग्यान् पुरुषान्
४८ स्वस्वकुलानुसारात् पितृवंशानुसाराच्च गणयाञ्चक्रुः। गणितास्ते अशीत्य-
४९ धिकपञ्चशताधिकाष्टसहस्राण्यासन्। परमेश्वराज्ञया तेषां प्रत्येको जनो
मूससा स्वस्वसेवायै भाराय च नियुक्तः। मूससं प्रति परमेश्वराज्ञया
तद्गणितलोकानां कथेति।

# ५ पञ्चमोऽध्यायः।

१ शिविरादशुचिलोकानां दूरीकरणं ५ अपराधात् परिशोधनं ११ जायां प्रति पत्यौ क्रुद्धे जायापरीक्षाव्यवस्था।

परमेश्वरो मूससं जगाद त्वं सर्व्वान् कुष्ठिनः प्रमेहिनः स्पृष्टशवा- १
शुचींश्च प्राणिनः शिविराद् वहिष्कर्त्तुं इस्रायेल्वंशमित्यादिश। यूयं २
पुमांसं स्त्रियञ्च वहिष्कुरुत यत्र युष्मत्शिविरमध्येऽहं वसामि तत् ते ३
यथाशुचि न कुर्य्युस्तदर्थं तान् शिविराद् वहिष्कुरुत। तत इस्रायेल- ४
वंशस्तथैव तान् शिविराद् वहिष्कृतवान् इस्रायेल्सन्ताना मूससम्प्रति
परमेश्वराज्ञानुसारात् कर्म्मेदं चक्रुः।

अनन्तरं परमेश्वरो मूससमवदत् त्वम् इस्रायेल्वंशं वद, पुमान् वा ५
स्त्री स्यात्, यः कश्चिद् मानवैराचरितं पापं कृत्वा परमेश्वरस्य दृष्टाव- ६
पराध्यति, स एव दण्डनीयो भविष्यति। तस्मात् स आत्मकृतं पापं स्वीकृत्य ७
स्वापराधात् यस्य प्रतिकूलात् पापं कृतवान् तस्मै पञ्चमांशाधिकं मूलद्रव्यं
दास्यति। किन्तु तद्दोषपरिशोधकं दानं तेन यस्य करे समर्पितुं शक्यते, ८
तद्वत् तस्य कश्चिद् ज्ञाति र्यदि न तिष्ठति तर्हि तेन तत् परिशोधकं
दानं परमेश्वरम् उद्दिश्य याजकाय दातव्यं, येन च स्वार्थं प्रायश्चित्तं ९
कर्त्तव्यं, स प्रायश्चित्तार्थको मेषबलिरपि दातव्यः। इस्रायेल्वंशे यानि १०
पवित्रवस्तूनि याजकान्तिकम् आनीयन्ते, तेषाम् उत्तोलनीयोपहारा
याजकस्य भविष्यन्ति। येन याजकेन यन्निवेद्यते तत् तस्यैव भविष्यति,
मानुषो यत् किञ्चन वस्तु याजकाय ददाति तत् तस्य भविष्यति।

परमेश्वरो मूससं बभाषे त्वम् इस्रायेल्वंशं वद तेभ्य इमां कथां ११
कथय कस्यापि जनस्य जाया यदि विपरीतमाचरति तस्य प्रातिकूल्येना- १२
पराध्यति, अर्थात् सा यदि स्वामिनोऽगोचरं गुप्तभावेन पुंसा संसर्गं १३
कृत्वाशुचि र्भवति तस्या विपक्षः कोपि साक्षी न तिष्ठति सा न धार्य्यते च,
यदि क्रोधित्वं स्वामिनमेति जायाया अशौचसत्त्वात् तां द्वेष्टि यद्वा स्वामी १४
क्रोधापन्नः सन् जायाया अशौचासत्त्वेपि तां द्वेष्टि, तर्हि स पतिः स्वजायां
याजकान्तिकमानेष्यति तत्कृते नैवेद्यार्थकम् एफादशमांशं यवचूर्णम् १५
आनेष्यति किन्तु तदुपरि तैलकुन्दुरू न दास्यति यस्मात् तत् तदामर्ष-
नैवेद्यम् अर्थात् अतिक्रमस्मारकं स्मरणनैवेद्यं। अनन्तरं याजकस्तां नीत्वा
परमेश्वरस्य सम्मुखम् उपस्थापयिष्यति। याजको मृत्पात्रे पूततोयमा- १६
दायावासमध्यस्थलस्य धूलिं गृहीत्वा तत्र तोये दास्यति। याजक १७

स्तां जायां परमेश्वरस्य सम्मुखम् उपस्थाप्य तस्याः शिरोऽनावृतं कृत्वा
१८ स्मरणनैवेद्यम् अर्थात् कोपनैवेद्यं तत्कराभ्यां दास्यति। याजकः
१९ शापदं तिक्ततोयं स्वकरे निधास्यति। याजकः शपथं कारयित्वा तां
स्त्रियं वदिष्यति कोपि पुमान् यदि त्वां नागच्छत् त्वञ्च स्वपतिं विनान्य-
पुंसा साकमशुचि कर्म्म नाकरोस्तर्ह्येतत् शापदं तोयं त्वयि निष्फलं
२० भवेत्। किन्तु यदि त्वं स्वपतिं विनान्यपुंसा साकम् अशुचि कर्म्माकरो-
स्त्वत्पतिं विनान्यः पुमान् यदि त्वामुपागच्छत् तर्हि परमेश्वरस्तवोरू
२१ पाचयित्वा तवोदरं स्फीतं कृत्वा तव लोकानां मध्ये त्वां शापशपथयो-
रास्पदं करोतु तत इदं शापदं तोयं तवोदरं स्फीतं कर्त्तुं उरू पाचयितुं
तवान्तरं प्रविशत्विति याजकः शापदद्दिव्येन तां स्त्रियं दिव्यं कारयित्वा
२२ वदिष्यति ततः सा स्त्री तथास्तु तथास्त्विति वदिष्यति। याजकस्तं
२३ शापं पुस्तके लेखिष्यति तत्तिक्ततोयेन मार्जिष्यति च। ततस्तेन
२४ तत् शापदं तिक्तजलं तस्यां स्त्रियां पायितायां तत् तोयं तिक्तत्वेन तस्या
२५ उदरं प्रवेक्ष्यति। अनन्तरं याजकस्तस्याः स्त्रियाः करात् कोपजन्यनैवेद्य-
मादाय परमेश्वरस्य सम्मुख आन्दोल्य वेद्या उपरि निवेदयिष्यति।
२६ याजकस्तस्य नैवेद्यस्य मुष्टिमेकाम् अर्थात् तत्स्मरणनैवेद्यस्यांशं गृहीत्वा
२७ वेद्या उपरि दाहयित्वा तां स्त्रियं तत्तोयं पाययिष्यति। स्त्रियां तोयं
पायितायां सा यदि स्वस्वामिनः प्रातिकूल्यात् कर्म्म कृत्वाशुचि जाता तर्हि
तत्शापदं तोयं तस्या मध्यं तिक्तत्वेन प्रवेक्ष्यति, तस्या जठरः स्फीतो
भविष्यति उरू च पच्येते इत्थं सा स्वलोकानां मध्ये शापफलं भक्षि-
२८ ष्यति। सा स्त्री यद्यशुचि न जाता तर्हि सा मुक्ता भविष्यति गर्भञ्च
२९ धारयिष्यति। स्त्री पत्यु र्विरुद्धम् अन्येन साकं व्यवहृत्याशुचि र्यदि
३० जायते तर्हि तस्य क्रोधहेतोरियं व्यवस्था। यद्वा पति र्यदि क्रोधापन्नः
३१ सन् स्वभार्य्यायै कुप्यति तर्हि स तां परमेश्वरस्य सम्मुख उपस्थाप-
यिष्यति याजकस्तत्र व्यवस्थामिमां पालयिष्यति। तेन पतिः पापात्
मोक्ष्यते किन्तु सा स्त्री स्वपापं भोक्ष्यते।

---

## ६ षष्ठोऽध्यायः।

१ नासरीयव्रतकरणव्यवस्था १३ नासरीयव्रतसमापनव्यवस्था २२ लोकान् प्रत्याशीर्व्वद-
नकथनञ्च।

१ परमेश्वरो मूससमुवाच त्वमिस्रायेल्वंशं वद तेभ्य इमां कथां कथय,

केनचित् पुंसा स्त्रिया वा परमेश्वरम् उद्दिश्य पृथग् भवितुं नासरीय- २
व्रते कृते स गोस्तनीरसात् सुरायाश्च पृथक् स्थास्यति, फलतो गोस्तनीरसं ३
सुराम्लरसञ्च न पास्यति गोस्तनीरसोत्पन्नं किमपि पेयं न पास्यत्यामं
शुष्कं वा मृद्विकाफलं न भक्षिष्यति। पृथक्स्थितेः सर्व्वकाले स मृद्वि- ४
काफलजातं किमपि न भोक्ष्यति, आ वीजात् त्वचं यावत् किमपि न
खादिष्यति। व्रतहेतोः पृथक्स्थितेः सर्व्वकाले क्षुरं तच्छिरो न स्प्रक्ष्यति ५
परमेश्वरम् उद्दिश्य पृथक्स्थितेर्दिनात् व्रतपूर्णं यावत् स पवित्रः
स्थास्यति, स्वकचगुच्छं वर्द्धयिष्यति। परमेश्वरमुद्दिश्य पृथक्स्थितेः ६
सर्व्वकाले स कस्यापि कुणपस्यान्तिकं न यास्यति। स्वस्य पिता भ्राता ७
माता भगिनी वा यदि म्रियते तथापि स्वं नाशुचिं करिष्यति यस्मात्
तस्य शिरसि तदीश्वरीयशौचचिह्नम् आस्ते। पृथक्स्थितेः सर्व्वसमयं ८
स परमेश्वरमुद्दिश्य पवित्रः स्थास्यति। यद्यपि तत्समीपे हठात् कस्य- ९
चिन्मरणात् स शौचचिह्नितशिरोऽशुचि करोति तर्हि स शुचित्वदिवसे
स्वशिरो मुण्डयिष्यत्यर्थात् सप्तमदिने तन् मुण्डयिष्यति। अष्टमदिने स १०
द्वौ कपोतौ वा पारावतवत्सौ समाजावासद्वारस्यान्तिके याजकसमीप-
मानेष्यति। याजकस्तयोरेकं प्रायश्चित्तार्थम् अन्यं होमार्थं निवेद्य कुणप- ११
जन्यपापात् प्रायश्चित्तं करिष्यति तेन स तद्दिनात् स्वशिरः पावयित्वा
स्वव्रतदिनानि परमेश्वरमुद्दिश्य पृथक् स्थास्यति, तेन दोषार्थम् एक- १२
वर्षीयमेषवत्सो बलिरूपेण दातव्यः, किन्तु पृथक्स्थितिकाले तदशौ-
चहेतोः पूर्व्वदिवसा वृथा जाताः।

पृथक्स्थितिदिवसेषु पूर्णेषु नासरीयव्रतस्य व्यवस्थेयं, आदौ व्रतकृत् १३
समाजावासद्वारस्य समीपमानेष्यते। होतुम् एकहायनं निर्दोषमेकं १४
मेषवत्सं प्रायश्चित्तार्थम् एकहायनीं मेषवत्सामेकां मङ्गलार्थं निर्दोषमेषं
किण्वहीनपूपपूर्णं डल्लकं तैलाक्तान् सूक्ष्मगोधूमचूर्णपिष्टकान् किण्वही- १५
नान् तैलाक्तान् सूक्ष्मपिष्टकान् तदुपकरणं पेयनैवेद्यम् एतानि परमेश्वर-
मुद्दिश्य निवेदयिष्यति। याजकः परमेश्वरस्य सम्मुखम् एतान्यानीय १६
प्रायश्चित्तबलिं होमबलिञ्चोत्स्रक्ष्यति। किण्वहीनपूपडल्लकेन सार्कं मङ्ग- १७
लार्थकमेषबलिं परमेश्वरम् उद्दिश्योत्स्रक्ष्यति पश्चात् तदुपकरणं पानीय-
नैवेद्यञ्च निवेदयिष्यति। अनन्तरं नासरीयनरः समाजावासद्वारान्तिके १८
पृथक्स्थितिसूचकं शिरो मुण्डयित्वा पृथक्स्थितिसूचकान् शिरःकचान्
आदाय मङ्गलार्थकबलेरधःस्थिताग्नौ निःक्षेप्स्यति। नासरीयव्रतकृन्न १९

रस्य केशमुण्डनात् परं याजको जलसिद्धमेषस्य स्कन्धं डल्लकात् किण्व-
हीनपूपमेकं किण्वहीनं सूक्ष्मपिष्टकमेकञ्च गृहीत्वा तत्करयोः स्थापयि-
२० ष्यति। याजक आन्दोलनीयनैवेद्यार्थं तानि परमेश्वरमुद्दिश्य दोलयि-
ष्यति, तत आन्दोलनीयवक्षसोत्तोलनीयस्कन्धेन च साकं तानि याज-
कोद्देश्यानि पूतानि भविष्यन्ति, पश्चान् नासरीयनरो द्राक्षारसं पातुं
२१ शक्ष्यति । नासरीयव्रतकृन्नरस्य तत्पृथक्स्थितिहेतोः परमेश्वराय
स्वीकर्त्तव्यस्य नैवेद्यस्य च व्यवस्थेयं, तस्य पृथक्स्थितिव्यवस्थाधिकं तेन
स्वहस्तमतानुसारात् यत्किमपि प्रतिश्रूयते तदेव स्वीयप्रतिश्रुत्यनुसारात्
तेन कर्त्तव्यं।

२२ ततः परं परमेश्वरो मूससं जगाद त्वं हारोणं तत्सुतांश्च वद यूयम्
२४ एतैराशीर्वचोभिरिस्रायेल्वंशायाशिषं दास्यथ। परमेश्वरस्त्वाम् आशीषं
२५ वदन् रक्षतु। परमेश्वरस्त्वां प्रति स्वास्यं प्रसन्नी कुर्व्वन् त्वामनुगृह्णातु।
२६ परमेश्वरस्त्वां प्रति कृपादृष्टिं कुर्व्वन् तुभ्यं शान्तिं ददातु। तेषाम् इस्रायेल्-
२७ वंशमधि मन्नामोच्चारणाद् अहं तेभ्य आशिषं दास्यामि॥

---

# ७ सप्तमोऽध्यायः।

१ आवासाय १ वेद्यै च सर्व्वाधिपानां नैवेद्यं ८९ साक्ष्यमञ्जूषाया मूससा साकं परमेश्वरस्य कथनञ्च।

१ आवासस्थापनसमाप्तिदिने मूसास्तं तत्पात्राणि वेदिं तत्पात्राणि
२ चाभिषिक्तवान् पावितवांश्च। तेषु सर्व्वेष्वभिषिक्तेषु पावितेषु चेस्राये-
लीयपितृवंशानां मुख्याध्यक्षा अर्थात् गणितेषु नियुक्ता वंशाध्यक्षा
३ नैवेद्यानि ददुः। ते परमेश्वरमुद्दिश्य षट् शकटानि द्वादश बलीवर्दान्
आनिन्युः, अर्थात् द्वौ द्वावध्यक्षावेकमेकं शकटम् एकैको ऽध्यक्ष एकैकं
बलीवर्दमानीयावाससम्मुख उपस्थापितवान्।

४ तदा परमेश्वरो मूससं बभाषे त्वं तेभ्यस्तानि ग्रहीष्यसि तानि
५ समाजावासस्य कर्म्मकृते भविष्यन्ति त्वं तानि लेविभ्यो दास्यसि, अर्थाद्
६ एकैकवंशाय स्वस्वकर्म्मानुरूपं दास्यसि। ततो मूसास्तान् शकटबली-
७ वर्दानादाय लेविभ्यो ददौ। फलतो गेर्शोनीयवंशाय तेषां सेवानुसारात्
८ द्वे शकटे चतुरो बलीवर्दान्, मिरारिवंशाय च चतुःशकटान्यष्टौ बली-
९ वर्दान् दत्त्वा हारोणयाजकस्य सुतेथामरस्य करे समर्पितवान्। किन्तु

किहातीयवंशाय किमपि न ददौ यतः स्कन्धैः पवित्रस्थानीयसर्व्ववस्तुवहनं तेषां सेवासीत्

वेद्या अभिषेकदिने ऽधिपास्तां पावयितुं वेद्याः सम्मुखे स्वं स्वं नैवेद्यं १० निवेदयामासुः। परमेश्वरो मूससं जगाद एकैको ऽधिप एकैकदिने वेदिं ११ पावयितुं स्वं स्वं नैवेद्यं निवेदयतु।

तत्र प्रथमे ऽहनि यिहूदावंशजातो ऽम्मीनादवस्य सुतो नहशोनः स्वं १२ नैवेद्यं निवेदितवान्। पवित्रस्थानस्य शेकलनुसारात् त्रिंशदधिकशत- १३ शेकल्मानं रूप्यभाजनं सप्ततिशेकल्मानं रूप्यपात्रं, एतत्पात्रद्वयं नैवेद्यार्थं तैलपक्वसूक्ष्मगोधूमचूर्णपूर्णं, धूपेन पूर्णं दशशेकल्मानं स्वर्णमय- १४ धूपपात्रं, होमार्थं गोवत्सैको मेषैक एकवर्षीयमेषवत्सैकश्च, पापप्रायश्चि- १५ त्तार्थं छागैको मङ्गलार्थकबलये द्वे गावौ पञ्च मेषाः पञ्च छागा एकहा- १७ यनाः पञ्चमेषवत्सा एतान्यम्मीनादवसुतेन नहशोनेन निवेदितानि।

द्वितीयदिने इषाखरवंशस्याधिपः सूयारस्य सुतो निथनेल एतानि १८ न्यवेदयत्। पवित्रस्थानस्य शेकलनुसारात् त्रिंशदधिकशतशेकल्मानं १९ रूप्यभाजनं सप्ततिशेकलपरिमाणं रूप्यपात्रं, इदं पात्रद्वयं नैवेद्यार्थं तैलपक्वसूक्ष्मगोधूमचूर्णैः पूर्णं, धूपपूर्णं दशशेकल्मानं स्वर्णमयं धूपपात्रं, २० होमार्थं गोवत्सो मेष एकहायनो मेषवत्सश्च, पापप्रायश्चित्तार्थं छागैको २१ मङ्गलार्थकबलये द्वे गावौ पञ्च मेषाः पञ्च छागा एकहायनाः पञ्च मेष- २२ वत्सा एतानि सूयारसुतेन निथनेलेन निवेदितानि।

तृतीयदिने सिबूलूनवंशस्याधिपो हेलोनस्य सुत इलीयाव एतानि २४ न्यवेदयत्। पवित्रस्थानस्य शेकलनुसारात् त्रिंशदधिकशतशेकल्मानं २५ रूप्यभाजनं सप्ततिशेकल्मानरूप्यपात्रं, इदं पात्रद्वयं नैवेद्यार्थं तैलपक्व- सूक्ष्मगोधूमचूर्णपूर्णं, धूपपूर्णं दशशेकल्मानं स्वर्णमयं धूपपात्रं, होतुं गोव- २६ त्सो मेष एकहायनो मेषवत्सश्च,पापप्रायश्चित्तार्थं छागो मङ्गलार्थकबलये २९ द्वे गावौ पञ्च मेषाः पञ्च छागा एकहायनाः पञ्च मेषवत्सा एतानि हेलोन- सुतेनेलीयावेन निवेदितानि।

चतुर्थदिवसे रूबेनवंशस्याधिपः शिदेयुरस्य पुत्त्र इलीषूर एतानि ३० निवेदितवान्। पूतस्थानशेकलनुसारात् त्रिंशदधिकशतशेकल्मानं ३१ रूप्यभाजनं सप्ततिशेकल्मानं रूप्यपात्रं, इदं पात्रद्वयं नैवेद्यार्थं तैल- पक्वसूक्ष्मगोधूमचूर्णपूर्णं धूपपूर्णं, दशशेकलमानं स्वर्णमयं धूपपात्रं, होतुं ३२ गोवत्सो मेष एकहायनो मेषवत्सश्च, पापप्रायश्चित्तार्थं छागो मङ्गला- ३५

र्थकबलये द्वे गावौ पञ्च मेषाः पञ्च छागा एकहायनाः पञ्च मेषवत्सा एतानि शिदेयूरसुतेनेलीषूरेण निवेदितानि।

३६ पञ्चदिवसे शिमियोनवंशस्याधिपः सूरीशद्दयस्य सुतः शिलुमीयेल ३७ इमानि निवेदितवान्। पूतस्थानशेकलनुसारात् त्रिंशदधिकशतशेकल्मानं रूप्यभाजनं सप्ततिशेकल्मानं रूप्यपात्रं, इदं पात्रद्वयं नैवेद्यार्थं ३८ तैलपक्वसूक्ष्मगोधूमचूर्णपूर्णं, धूपपूर्णं दशशेकल्मानं स्वर्णमयं धूपपात्रं, ४० होतुं गोवत्सो मेष एकहायनो मेषवत्सश्च, पापप्रायश्चित्तार्थं छागो ४१ मङ्गलार्थकबलये द्वे गावौ पञ्च मेषाः पञ्च छागा एकहायनाः पञ्च मेषवत्सा एतानि सूरीशद्दयसुतेन शिलुमीयेलेन निवेदितानि।

४२ षष्ठदिने गादवंशाधिपो द्युयेलस्य सुत इलीयासफ एतानि निवेदित- ४३ वान्। पूतस्थानशेकलनुसारात् त्रिंशदधिकशतशेकल्मानं रूप्यभाजनं सप्ततिशेकल्मानं रूप्यपात्रं, इदं पात्रद्वयं नैवेद्यार्थं तैलपक्वसूक्ष्मगोधूम- ४४ चूर्णैः पूर्णं, धूपपूर्णं दशशेकल्मानं स्वर्णमयं धूपपात्रं, -होतुं गोवत्सो ४७ मेष एकहायनो मेषवत्सश्च पापप्रायश्चित्तार्थं छागो मङ्गलार्थकबलये द्वे गावौ पञ्च मेषाः पञ्च छागा एकहायनाः पञ्च मेषवत्सा एतानि द्यूयेलसुतेनेलीयासफेन निवेदितानि।

४८ सप्तमदिने इफ्रयिम्वंशाधिपोऽम्मीहूदस्य पुत्र इलीशाम एतानि निवे- ४९ दितवान्। पूतस्थानस्य शेकलनुसारात् त्रिंशदधिकशतशेकल्मानं रूप्य- भाजनं सप्ततिशेकल्मानं रूप्यपात्रं, इदं पात्रद्वयं नैवेद्यार्थं तैलपक्वसूक्ष्म- ५० गोधूमचूर्णपूर्णं, धूपपूर्णं दशशेकल्मानं स्वर्णमयं धूपपात्रं, होतुं गो ५२ वत्सो मेष एकहायनमेषवत्सश्च, पापप्रायश्चित्तार्थं छागो मङ्गलार्थक बलये द्वे गावौ पञ्च मेषाः पञ्च छागा एकहायनाः पञ्च मेषवत्सा एतानि अम्मीहूदसुतेनेलीशामेन निवेदितानि।

५४ अष्टमदिने मिनशिवंशाधिपः पिदाहसूरस्य सुतो गमिलीयेल ५५ एतानि निवेदितवान्। पूतस्थानस्य शेकलनुसारात् त्रिंशदधिकशतशे कल्मानं रूप्यभाजनं सप्ततिशेकल्मानं रूप्यपात्रं, इदं पात्रद्वयं नैवेद्यार्थं ५६ तैलपक्वसूक्ष्मगोधूमचूर्णपूर्णं, धूपेन पूर्णं दशशेकल्मानं स्वर्णमयं धूपपात्रं, ५८ होतुं गोवत्सो मेष एकहायनो मेषवत्सश्च, पापप्रायश्चित्तार्थं छागो ५९ मङ्गलार्थकबलये द्वे गावौ पञ्च मेषाः पञ्च छागा एकहायनाः पञ्च मेष वत्सा एतानि पिदाहसूरसुतेन गमिलीयेलेन निवेदितानि।

६० नवमदिने विन्यामीनवंशाधिपो गिदियोनेः सुतो ऽबीदान एतानि

निवेदितवान्। पूतस्थानस्य शेकलनुसारात् त्रिंशदधिकशतशेकल्मानं ६१ रूप्यभाजनं सप्ततिशेकल्मानं रूप्यपात्रम् इदं पात्रद्वयं नैवेद्यार्थं तैलपक्व-सूक्ष्मगोधूमचूर्णपूर्णं, धूपेन पूर्णं दशशेकल्मानं स्वर्णमयं धूपपात्रं, होतुं ६२ गोवत्सो मेष एकहायनो मेषवत्सश्च, पापप्रायश्चित्तार्थं छागो मङ्गला- ६५ र्थकबलये द्वे गावौ पञ्च मेषाः पञ्च छागा एकहायनाः पञ्च मेषवत्सा एतानि गिदियोनेः सुतेनावीदानेन निवेदितानि।

दशमदिने दानवंशाधिपो ऽम्मीशद्दयस्य सुतोऽह्वीयेषर एतानि निवे- ६६ दितवान्। पूतस्थानशेकलनुसारात् त्रिंशदधिकशतशेकल्मानं रूप्य- ६७ भाजनं सप्ततिशेकल्मानं रूप्यपात्रं इमे भाजने नैवेद्यार्थतैलपक्वसूक्ष्म-गोधूमचूर्णपूर्णे, धूपेन पूर्णं दशशेकल्मानं स्वर्णमयं धूपपात्रं, होतुं ६८ गोवत्सो मेष एकहायनो मेषवत्सश्च, पापप्रायश्चित्तार्थं छागो ७० मङ्गलार्थकबलये द्वे गावौ पञ्च मेषाः पञ्च छागा एकहायनाः पञ्च ७१ मेषवत्सा एतान्यम्मीशद्दयस्य सुतेनाह्वीयेषरेण निवेदितानि।

एकादशेऽह्नि आशेरवंशस्याधिपोऽक्रणस्य सुतो पगीयेल एतानि न्यवे- ७२ दयत्। पूतस्थानशेकलनुसारात् त्रिंशदधिकशतशेकल्मानं रूप्यभाजनं ७३ सप्ततिशेकलमानं रूप्यपात्रं इमे पात्रे नैवेद्यार्थतैलपक्वसूक्ष्मगोधूमचूर्ण-पूर्णे, धूपेन पूर्णं दशशेकल्मानं स्वर्णमयं धूपपात्रं, होतुं गोवत्सो मेष ७५ एकहायनो मेषवत्सश्च, पापप्रायश्चित्तार्थं छागो मङ्गलार्थकबलये द्वे ७७ गावौ पञ्च मेषाः पञ्च छागा एकवर्षीयाः पञ्च मेषवत्सा एतान्यक्रण-सुतेन पगीयेलेन निवेदितानि।

द्वादशे दिने नप्तालिवंशस्याधिप एननस्य सुतोऽहीर एतानि निवे- ७८ दितवान्। पूतस्थानस्य शेकलनुसारात् त्रिंशदधिकशतशेकल्मानं रूप्य- ७९ भाजनं सप्ततिशेकल्मानं रूप्यपात्रं पात्रद्वयमिदं नैवेद्यार्थतैलपक्वसूक्ष्म-गोधूमचूर्णपूर्णं, धूपपूर्णं दशशेकल्मानं स्वर्णमयं धूपपात्रं, होतुं गो- ८० वत्सो मेष एकहायनमेषवत्सश्च पापप्रायश्चित्तार्थं छागो मङ्गलार्थक- ८२ बलये द्वे गावौ पञ्च मेषाः पञ्च छागा एकहायनाः पञ्च मेषवत्सा एता-न्येननसुतेनाहीरेण निवेदितानि।

वेद्या अभिषेकदिने तस्याः पावनाय यद्यद् इस्रायेलवंशीयाधिपैरुत्सृष्टं, ८४ तत् सर्व्वमिदं रूप्यस्य द्वादशभाजनानि रूप्यस्य द्वादशपात्राणि स्वर्णस्य द्वादश धूपपात्राणि। एकैकभाजनं त्रिंशदधिकशतशेकल्मानमासीत् ८५ एकैकं पात्रं सप्ततिशेकल्मानमासीत् तेन तत्सर्व्वेषां पात्राणां रूप्यं पवित्र-

८६ स्थानशेकलनुसारात् चतुःशताधिकसहस्रद्वयशेकल्मानं। धूपपूर्णानि स्वर्णस्य द्वादश धूपपात्राण्येकैकं पूतस्थानशेकलनुसारात् दशशेकल्मानमासीत् सर्व्वेषां धूपपात्राणां स्वर्णं विंशत्यधिकशतशेकल्मानं।
८७ होमार्थं द्वादश गावो द्वादश मेषा एकहायना द्वादश मेषवत्साः
८८ पापप्रायश्चित्तार्थं द्वादश छागाः। मङ्गलार्थकबलये साकल्यतश्चतुर्विंशतिगावः षष्टिर्मेषाः षष्टिश्छागा एकहायनाः षष्टिर्मेषवत्सा एतानि वेद्यभिषेकात् परं तस्याः पावनाय न्यवेद्यन्त।
८९ मूसा ईश्वरेण सार्कं कथां कथयितुं समाजावासं प्रविश्य साक्ष्यमञ्जूषाया उपरिस्थितपापाच्छादनाद् अर्थात् तत्रस्थकिरूवयो मध्यात् तेन सार्कं वाक्यवादिनं शब्दं शुश्राव ततः स तेन सार्कं कथां कथितवान्।

---

## ८ अष्टमोऽध्यायः।

१ प्रदीपज्वालनकथनं ५ लेविनां पावनकथनं २३ तेषां सेवायोग्यवयोनिर्णयश्च।

१ परमेश्वरो मूससं गदितवान् त्वं हारोणाय कथय तमिति वाचं भण
२ स प्रदीपज्वालनकाले दीपवृक्षस्य सम्मुखे सप्त दीपान् ज्वालयिष्यति।
३ ततो हारोणस्तादृशं चकृवान् अर्थात् मूससं प्रति परमेश्वरस्याज्ञा-
४ नुसाराद् दीपवृक्षसमक्षं सप्त दीपान् ज्वालितवान्। स दीपवृक्ष आहतस्वर्णेन निर्म्मितः,परमेश्वरो मूससं यादृशीम् आकृतिं दर्शितवान् तादृशमेव स तं दीपवृक्षं प्रकाण्डमारभ्य प्रसूनं यावद् आहतस्वर्णेन निर्म्ममे।
५ परमेश्वरो मूससं गदितवान् त्वमिस्रायेल्वंशस्य मध्याल् लेविन
७ आदाय इत्थं पावय। तान् पावयितुं तेषामुपरि पावकं तोयं निक्षिप ते
८ स्वं स्वं कायं मुण्डयित्वा वसनं धौत्वा स्वान् पावयन्तु। ते गोवत्सं तैलपक्वसूक्ष्मगोधूमचूर्णं नैवेद्यं च समानीते त्वं पापप्रायश्चित्तार्थम् अपरं
९ गोवत्सं गृहाण। लेविनः समाजावासस्य समक्षमानीयेस्रायेलवंशी-
१० यानां समाजं मेलय। अनन्तरं लेवीयेषु त्वया परमेश्वरस्यान्तिकम् आ-
११ नीतेषु इस्रायेल्वंशस्तेषां गात्रेषु करानर्पयतु। ततो हारोणः परमेश्वरस्य समक्षम् इस्रायेल्वंशस्योत्तोलनीयोपहाररूपेण लेविन उत्स्रक्ष्यति तेन
१२ ते परमेश्वरस्य सेवायै नियुक्ता भविष्यन्ति। लेवीयैर्गोवत्सयोः शिर उपरि स्वे स्वे करेऽर्पिते त्वं लेवीयानां प्रायश्चित्तार्थं तयोरेकं प्रायश्चित्तबलि-
१३ मन्यञ्च होमार्थकबलिं परमेश्वरमुद्दिश्योत्स्रक्ष्यसि। हारोणतत्सुतानां

समक्षं लेविन उपस्थाप्य परमेश्वरम् उद्दिश्य तान् उत्तोलनीयनैवेद्यरूपे-णोत्तोलयिष्यसि । इत्थं त्वमिस्रायेल्वंशाल् लेवीयान् पृथक् करिष्यसि १४ तेन ते मम भविष्यन्ति । ततः परं लेवीयाः सेवितुं समाजावासं प्रवे- १५ क्ष्यन्ति । त्वं तान् पावयित्वा उत्तोलनीयोपहाररूपेणोत्स्रक्ष्यसि यस्मात् त १६ इस्रायेल्वंशमध्यात् सर्व्वथा मामुद्दिश्य दत्ता अहमिस्रायेल्वंशस्य सर्व्वे-षामादिजानां विनिमयात् तानग्रहीं । यतो मानुषः पशु र्वा भवेत् १७ इस्रायेल्वंशस्य सर्व्वादिजा मम भवन्ति यदाहं मिसर्द्देशस्य सर्व्वादिजान् व्यनाशयं तदा स्वार्थं तानपावयं । इस्रायेल्वंशस्य सर्व्वादिजानां विनि- १८ मयाल् लेविनोऽग्रहीषं । समाजावासे इस्रायेल्वंशानां कर्त्तव्यकर्म्म १९ साधयितुं तेषां कृते प्रायश्चित्तं कर्त्तुञ्चाहम् इस्रायेलवंशमध्याल् लेवी-यान् नीत्वा हारोणतत्सुतेभ्यो दानरूपमदां, तेन पूतस्थानसन्निधानगम-नाद् इस्रायेल्वंशमध्ये मारी न भविष्यति । मूसा हारोण इस्रायेल्- २० वंशस्य सर्व्वसमाजश्च लेविनः प्रति तदेव चक्रुः, लेविनोऽधि परमेश्वरो मूससं प्रति यथाज्ञापितवान् इस्रायेल्वंशास्तान् प्रति तथैव चक्रुः । फलतो लेवीयाः स्वान् अपावयन् स्वं स्वं वसनं अधावन् हारोणस्तान् २१ उत्तोलनीयोपहाररूपान् परमेश्वरायोत्ससर्ज तान् पावयितुं प्रायश्चित्तं चकार च । ततः परं लेवीया हारोणतत्सुतानां समक्षं स्वस्वसेवाकार्य्याय २२ समाजावासं प्राविशन् लेविनः प्रति परमेश्वरो मूससं यद्यदादिशत् तान् प्रति तदनुसाराद् अक्रियत ।

परमेश्वरो मूससं गदितवान् लेविनः प्रति व्यवस्थेयं, आ पञ्चविंशति- २३ वयसो लेवीयाः समाजदूष्यस्य कर्म्मकारिणां श्रेण्यन्तर्गता भविष्यन्ति । २४ पञ्चाशत्तमवर्षे जाते तच्छ्रेणीनिर्गता भविष्यन्ति, पुन र्न सेविष्यन्ते । रक्ष- २५ णीयं रक्षितुं ते समाजदूष्ये स्वं स्वं भ्रातरमुपकरिष्यन्ति किन्तु नान्यत् २६ किञ्चित् सेविष्यन्ते लेविनां रक्षणीयमधि तान् प्रति त्वम् इत्थं करिष्यसि ।

---

# ९ नवमोऽध्यायः ।

१ निस्तारोत्सवकरणाज्ञा ६ केषाञ्चिदशुचीनां कथनं ९ तदशुचीनां निस्तारमहकरणाज्ञा १५ आवासोपरिमेघस्थितिः, तस्य यात्रया तेषां स्थिति र्यात्रा च ।

इस्रायेल्वंशे मिसर्द्देशाद् वहिरागते द्वितीयवर्षस्य प्रथमे मासि १ सीनयप्रान्तरे परमेश्वरो मूससं जगाद, इस्रायेल्वंशा निरूपितकाले २ निस्तारमहं कुर्व्वन्तु । अस्य मासस्य चतुर्दशदिनस्य सन्ध्यायां तस्य निरूपितः ३

कालो भवति तदा यूयं तं महं करिष्यध्वे, सर्व्वविधिव्यवस्थानुसारात्
४ तं करिष्यध्वे। तदा मूसा निस्तारमहं कर्त्तुमिस्रायेल्वंशानादिशत्। तदा
५ ते प्रथममासस्य चतुर्दशदिनस्य सन्ध्यायां सीनयप्रान्तरे निस्तारमहं
चक्रुः इस्रायेल्वंशा मूससं प्रति परमेश्वराज्ञानुरूपं तत् कर्म्म चक्रुः।

६ किन्तु मानुषशवस्पर्शजन्याशुचित्वात् तदा निस्तारमहं कर्त्तुम् अशक्ताः
७ केचिद् जनास्तद्दिने मूसोहारोणयोः समीपं गताः पप्रच्छुः, वयं मानुष-
कुणपं स्पृष्टाशुचयो जातास्तस्माद् इस्रायेल्वंशमध्ये निरूपितकाले परमे-
८ श्वरम् उद्दिश्योपहारं निवेदयितुं किं वयं निवारिष्यामहे? ततो मूसा-
स्तानवोचद् यूयं तिष्ठत युष्मानधि परमेश्वरः किमादिशति तदहं
शृणवानि।

९ ततः परं परमेश्वरो मूससमवादीत् त्वम् इस्रायेल्वंशाय कथय युष्माकं
१० वा युष्मद्भाविसन्तानानां मध्ये यदि कश्चित् कुणपं स्पृष्टाशुचि दूरदेशीयः
पान्थो वा भवति तथापि स परमेश्वरस्य निस्तारमहं करिष्यति।
११ द्वितीयमासस्य चतुर्द्दशदिने सन्ध्यायां तं करिष्यति किण्वशून्यपूपैस्तिक्त-
१२ शाकैश्च समं मेषशावकं भक्षिष्यति। किन्तु प्रातःकालं यावत् तस्य
किञ्चिदप्यवशिष्टं न स्थापयिष्यति तस्य किञ्चन कीकशं न भंक्ष्यति ते
१३ सर्व्वविधिना निस्तारमहं करिष्यन्ति। किन्तु यः कश्चित् शुचिस्तिष्ठति
पान्थोऽपि न भवति स यदि निस्तारमहं कर्त्तुं निवर्त्तते तर्हि स प्राणी
स्वलोकमध्याद् उच्छेत्स्यते, निरूपितकाले परमेश्वरायोपहारानयना-
१४ भावात् तेन स्वपापं स्वयं भोक्ष्यते। यदि युष्मन्मध्ये प्रवासकारी कश्चित्
विदेशीयलोकः परमेश्वरम् उद्दिश्य निस्तारमहं चिकीर्षति तर्हि सोपि
विधिवद् रीत्यनुसारात् तं करिष्यति स्वदेशजो विदेशजो वा द्वयोः कृते
विधिरेको भविष्यति।

१५ यस्मिन् दिने आवासः स्थापितस्तद्दिने मेघस्तमावासम् अर्थात्
साक्ष्यदूष्यम् आच्छादितवान् सन्ध्यामारभ्य प्रातःकालं यावत् तदावासो-
१६ परि वह्नेरिवाकारः प्राकाशत। इत्थं नित्यमभवत्, दिवा मेघो रजन्यां
१७ वह्निवदाकार आवासम् आच्छादयत्। तस्मिन् मेघ आवासोपरित
ऊर्द्ध्वं नीते इस्रायेल् वंशाः प्रयान्ति स मेघो गत्वा यत्रावतिष्ठति तत्र
१८ इस्रायेल्वंशाः शिविरं स्थापयन्ति। इस्रायेल्वंशाः परमेश्वराज्ञानुसारात्
प्रयान्ति परमेश्वराज्ञानुसारात् शिविरं स्थापयन्ति च, स मेघो याव-
१९ दावासोपरि तिष्ठति तावत् ते शिविरे तिष्ठन्ति। यदा स मेघो

बहूदिनानि विलम्ब्यावासोपरि तिष्ठति, तदेस्रायेल्वंशा यात्रामकृत्वा परमेश्वरस्य रक्षणीयं रक्षन्ति। तस्मिन् मेघे स्वल्पदिनान्यावासोपरि २० स्थिते ते तदेव कुर्व्वन्ति परमेश्वराज्ञानुसारात् शिविरे तिष्ठन्ति तथा परमेश्वराज्ञानुसारात् प्रयान्ति। आसन्ध्यातः प्रातर्यावत् स्थितः परं मेघे २१ प्रातरूर्द्धं नीते ते यात्रां चक्रुः, दिवा रात्रौ वा मेघ उत्थापिते ते यात्रां चक्रुः। द्वे दिने मासं वर्षं वा विलम्ब्यावासोपरि मेघेऽवस्थिते इस्रायेल्- २२ वंशा अपि तति दिनानि यात्रामकृत्वा शिविरे न्यूषुः किन्तु तस्मिन् उत्थापिते ते यात्रां चक्रुः। इत्थं ते परमेश्वराज्ञया शिविरे न्यूषुः परमे- २३ श्वराज्ञया यात्रां चक्रुश्च ते मूसोद्वारा परमेश्वराज्ञया परमेश्वरस्य रक्षणीयं ररक्षुः।

---

## १० दशमोऽध्यायः।

१ रूप्यतूरीकथनं ११ आ सीनयप्रान्तरात् पारन्प्रान्तरं यावद् यात्रा १४ यात्रानुक्रमः २९ होबवं प्रति मूससा निवेदनं ३३ साक्ष्यमञ्जूषानयनस्थापनकालयो मूससा- शीर्व्वदनं।

अनन्तरं परमेश्वरो मूसं जगाद त्वं समाजं समाह्वातुं शिविर- १ प्रस्थानमादेष्टुञ्च ताडितरूप्यस्य द्वे तूर्य्यौ निर्म्माहि। तयो र्द्वयो र्ध्वनौ २ कृते सर्व्वे समाजीयास्त्वदन्तिकं समाजावासद्वारि समुपस्थास्यन्ति। तयो- ३ रेकस्यां वादितायामधिपा अर्थाद् इस्रायेल्वंशस्य सहस्राधिपास्त्वद- ४ न्तिकमुपस्थास्यन्ति। तयोरुच्चैर्ध्वनौ कृते पूर्व्वदिक्स्थशिविरीया जनाः ५ प्रस्थास्यन्ते। पुनरुच्चैर्ध्वनौ कृते दक्षिणदिक्स्थशिविरीया जनाः प्रस्था- ६ स्यन्ते, इत्थं तेषां प्रस्थानक्रमानुसारेणोच्चैस्तूरीध्वनिः कर्त्तव्यः। किन्तु ७ यदा समाजस्य सर्व्वे संग्रहीतव्यास्तदा तूरीं यद्वादयिष्यथ तदुच्चै र्न वादयिष्यथ। हारोणयाजकस्य सुतास्तूर्य्यौ वादयिष्यन्ति एष विधि ८ र्युष्माकं पुरुषपरम्परायां स्थास्यति। यदा यूयं स्वदेशे क्लेशदरिपूणां ९ विरुद्धं योद्धुं यास्यथ, तदेमे तूर्य्यावुच्चै र्वादयिष्यथ तेन युष्मत्प्रभुपरमे- श्वरेण स्मृता यूयं रिपुगणाद् रक्षिष्यध्वे। युष्माकमानन्ददिनेषु महा- १० दिनेषु मासारम्भेषु च यूयं होमबलिमङ्गलार्थकबलिदानायेमे तूर्य्यौ वादयिष्यथ तत्तूरीध्वनिना युष्मदीश्वरो युष्मान् स्मरिष्यति युष्माकं प्रभुः परमेश्वरोऽहमेव।

द्वितीयवत्सरस्य द्वितीयमासस्य विंशदिने स मेघः साक्ष्यावासस्योप- ११

१२ रितो नीतस्तस्माद् इस्रायेल्वंशाः प्रस्थाननियमानुसारेण सीनयप्रान्त-
१३ रात् प्रतस्थिरे स मेघः पारणप्रान्तरेऽवतस्थे। मूसाद्वारा परमेश्वराज्ञया तेषामेषा प्रथमा यात्रा।

१४ प्रथमतः स्वस्वसैन्यैः साकं यिहूदादिवंशानां शिविरस्य केतुश्चलितः,
१५ अम्मीनादबस्य पुत्रो नहशोनस्तेषां सेनापतिरासीत्। इषाखर-
१६ वंशस्य सेनापतिः सूयारस्य सुतो निथनेलः। सिवूलूनवंशस्य सेनापति
१७ र्हेलोनस्य सुत इलीयावः। आवासेऽवतारिते गेर्शोनमिरारिवंशीयास्तमावासं वहन्तो जग्मुः।

१८ तत्पश्चात् स्वस्वसैन्यैः समं रूबेनादिवंशानां शिविरस्य केतुश्चलितः
१९ शिदेयूरस्य सुत इलीषूरस्तेषां सेनापतिरासीत्। शिमियोनवंशस्य
२० सेनापतिः सूरीशद्दयस्य सुतः शिलुमीयेलः। गादवंशस्य सेनापति र्दूयेलस्य सुत इलीयासफ आसीत्।

२१ पश्चात् किहातीयवंशीयाः पूतद्रव्यं वहन्तो जग्मु र्गन्तव्यस्थाने तेषामुपस्थितेः पूर्व्वम् आवासः स्थापितः।

२२ ततः स्वस्वसैन्यैः साकम् इफ्रयिमादिवंशानां शिविरस्य केतुश्चलितः,
२३ अम्मीहूदस्य सुत इलीशामस्तेषां सेनापतिरासीत्। मिनशिवंशस्य
२४ सेनापतिः पिदाहसूरस्य सुतो गमिलीयेलः। विन्यामीनवंशस्य सेनापति र्गिदियोनेः सुतोऽवीदान आसीत्।

२५ सर्व्वेषां शिविरस्थानां पश्चात् स्वस्वसैन्यैः साकं दानादिवंशानां शिविरस्य केतुश्चलितः, अम्मीशद्दयस्य सुतोऽहीयेषरस्तेषां सेनापतिरासीत्।
२६ आशेरवंशस्य सेनापतिरक्रणस्य सुतः पगीयेलः। नप्तालिवंशस्य सेना-
२७ पतिरैननस्य सुतोऽहीर आसीत्। इस्रायेल्वंशा अग्रगमनकाल एतेन विधिना स्वस्वसैन्यैः साकं यात्रां कृतवन्तः।

२९ मूसाः श्वश्रुररूयेलस्य सुतं मिदियनदेशीयं होववं बभाषे, परमेश्वरोऽस्मभ्यं यं देशं दातुं प्रतिज्ञातवान् वयं तत्स्थानं यामः, त्वमपि साकमस्माभिरागच्छ वयं तव मङ्गलं करिष्यामो यतः परमेश्वर इस्रायेल्वंश-
३० मधि शुभं प्रतिज्ञातवान्। ततः स प्रतिजगाद न यास्यामि स्वदेशं स्वज्ञा-
३१ तिसमीपं यास्याम्यहं। मूसा उक्तवान् त्वमस्मान् मा त्याक्षीरिति विनयेऽहं यतः प्रान्तरस्य मध्ये कथमस्माभिः शिविरं स्थापयितव्यं तद् भवान् वेत्ति
३२ तेन त्वमस्माकं नेत्ररूपोऽसि। यदि त्वमस्माभिः समं यायास्तर्हि परमेश्वरोऽस्मान् यन्मङ्गलं भोजयिष्यति, वयं त्वामपि तन्मङ्गलं भोजयिष्यामः।

ततः परं तेषु परमेश्वरस्य पर्व्वताद् दिनत्रयवर्त्म गच्छत्सु परमेश्वरस्य ३३ साक्ष्यमञ्जूषा तद्दिनत्रयं तेषां विश्रामस्थानं मृगयितुं तेषाम् अग्रे ययौ। शिविरात् प्रतिष्ठमानानां तेषामुपरि दिवा परमेश्वरस्य मेघोऽवतस्थे। ३४ मञ्जूषाया अग्रगमनकाले मूसा जगाद हे परमेश्वर, उत्तिष्ठ तव शत्रवो ३५ विकीर्य्यन्तां त्वाम् ऋतीयितारस्त्वत्सम्मुखात् पलायन्तां। विश्रामकाले ३६ स उक्तवान् हे परमेश्वर त्वमिस्रायेल्वंशस्यायुतानि सहस्राणि च प्रति प्रत्यायाहि।

---

## ११ एकादशोऽध्यायः।

१ तवियेरास्थाने मूससः प्रार्थनया वह्निनिर्व्वाणं ४ मान्नाम् ऋतीयमानानां मांसप्रार्थना १० मूससः स्वपदभारासह्यत्वं १६ सप्ततिप्राचीनेभ्यो भारांशं दातुमाज्ञा २१ मूससः प्रतीतिपरीक्षणं २४ सप्ततिप्राचीनेभ्यो मूसस आत्मांशदानं ३१ लोकेभ्यो वर्त्तकपक्षि-दानं ईश्वरस्य क्रोधप्रकाशश्च।

अनन्तरं लोकैः परमेश्वरस्य कर्णगोचरे कुवाग्भिः कलहे कृते परमे- १ श्वरस्तं श्रुत्वा चुक्रोध, तेन तेषां मध्ये परमेश्वरीयाग्निः प्रज्वलन् शिविरस्य शेषभागं ददाह। अतो लोका मूससः समीपे काकूक्तिं चक्रुस्तेन मूससा २ परमेश्वरस्य समीपे प्रार्थिते स वह्निर्निर्व्वाणः। ततो मूसास्तस्य ३ स्थानस्य नाम तवियेरा (दहनं) चकार यस्मात् तेषां मध्ये परमे-श्वरीयवह्निर्ददाह।

तेषां मध्यीयविदेशीयलोकाः क्रमशो लोभिनो बभूवुरिस्रायेल्वंशा ४ अपि पुनः क्रन्दन्त उक्तवन्तः कोऽस्मभ्यं पिशितं भोक्तुं दास्यति? मिसर्देशे ५ ऽस्माभि र्भुक्ता विनामूल्येन लब्धा मत्स्यास्त्रपुषाणि कुष्माण्डानि लताका पलाण्डवो लशुनानि चैतान्यस्माभिः स्मर्य्यन्ते। इदानीम् अस्माकं प्राणाः ६ शुष्का अस्माकं समक्षम् इमां मान्नां विना किमपि नास्ति। सा मान्ना ७ आकृत्या धन्याकवद् वर्णेन च गुग्गुलुवद् आसीत्। लोका भ्रमित्वा तामा- ८ हृत्य पेषण्या पिष्टां कण्डन्या चूर्णीकृतां वा कटाहे पक्का पूपान् अकुर्व्वन् तैलपक्वपिष्टकवत् तदास्वाद आसीत्। रजन्यां शिविरोपरि तुषारे ९ पतिते सा मान्ना तदुपरि पतितवती।

मूसा लोकानां रोदनम् अर्थात् वंशानुसारात् स्वस्वदूष्यद्वारस्य समीपे १० प्रतिजनरोदनं शुश्राव, तस्मात् परमेश्वरस्य क्रोधोऽतिशयेन प्रज्वलितो मूससोऽप्यसन्तुष्टि र्जाता। ततो मूसाः परमेश्वरं जगाद त्वं किमर्थम् ११

निजदासं क्लिश्नासि? किमर्थं वाहं तव दृष्टावनुग्रहाप्राप्तोऽस्मि, यत्
१२ त्वमेतस्य लोकसमूहस्य भारं मय्यर्पयसि? किमहमेतल्लोकनिवहस्य गर्भधारिणी जन्मदाता वा, ततो हेतोस्त्वं दुग्धपोष्यशिशुवोढृपालकवन् माम् एतान् सर्व्वान् तेषां पूर्व्वपुरुषेभ्यस्त्वया प्रतिश्रुतं देशं यावद्
१३ वक्षःस्थलेन वोढुं किमाज्ञापयसि? एतेभ्यो लोकेभ्यो दातुं कुत्र मया मांसं लप्स्यते? यत एते सर्व्वे ममान्तिके क्रन्दन्तः कथामिमां कथयन्ति भोक्तु-
१४ मस्मभ्यं पललं देहि। एतावतां लोकानां भारं सोढुमेकेन मया न शक्यते
१५ स मम शक्तितोऽधिकः। यदि त्वं मां प्रतीदृशं व्यवहरेस्तर्हि त्वयानुग्रहं कृत्वा मम प्राणा विनश्यन्तां मम दुर्गतिं मया न दृश्यतां।

१६ परमेश्वरो मूससमूचे त्वं लोकमुख्याध्यक्षरूपेण तव परिचितान् इस्रायेल्वंशस्य सप्ततिप्राचीनलोकान् संगृह्य समाजावासद्वारान्तिकं
१७ समानय ते त्वया सार्कं तत्र तिष्ठन्तु। अहं तत्रोत्तीर्य्य त्वया साकमालपिष्यामि य आत्मा त्वामधितिष्ठति तस्य किञ्चिदादाय तेष्ववस्थापयिष्येऽहं यथैकाकिना त्वया लोकानां भारो नोह्यते तदर्थं त्वया
१८ सहितैस्तैरपि लोकानां भारो वक्ष्यते। त्वं लोकान् वद यूयं श्वोऽर्थं स्वान् पावयत तेन भोक्तुं पललं लप्स्यध्वे यस्मात् कोऽस्मान् मांसं भोजयिष्यति? मिसर्देशेऽस्माकं क्षेममासीद् इत्युक्त्वा यूयं यद् रोदनम् अकुरुत तत् परमेश्वरस्य कर्णगोचरीभूतं तस्मात् परमेश्वरो युष्मभ्यं पललं
१९ दास्यति तद् यूयं भक्षिष्यथ। तद् एकदिनं द्वे दिने पञ्च दिनानि दश
२० दिनानि विंशतिदिनानि वा खादिष्यथ तन्न किन्तु युष्माकं वदनेभ्यस्तस्य निर्गमनं युष्माकं तस्मिन् घृणाकरणञ्च यावद् अर्थात् पूर्णैकमासं यावत् तत् खादिष्यथ यस्माद् यूयं स्वमध्यवर्त्तिपरमेश्वरं तुच्छीकृत्य तत्सम्मुखे रुदन्तः कथामिमां कथितवन्तः कुतो वयं मिसर्देशाद् बहिरागताः?

२१ ततो मूसा अवदत्, येषां मध्येऽहमासे ते षट्लक्षपदातिलोकास्तथापि
२२ त्वमवोचः संपूर्णैकमासभोजनायाहं तेभ्यः पललं दास्यामि। तेषां कृते सर्व्वेषु गोमेषव्रजेषु हतेषु किं तेषां प्रचुरो भविष्यति? सागरस्य
२३ सर्व्वेषु मीनेषु वा संगृहीतेषु किं तेषां कृते प्रचुरो भविष्यति? तदा परमेश्वरो मूससं बभाषे परमेश्वरस्य करः सङ्कुचितः किं? त्वदन्तिके मद्वचनं सत्यं भवति न वेति त्वम् इदानीं द्रक्ष्यसि।

२४ तदा मूसा बहिर्गत्वा परमेश्वरीया वाणी र्लोकेभ्यः कथयामास लोकानां तान् सप्ततिजनान् संगृह्यावासस्य चतुष्पार्श्वे उपस्थाप-

यामास च। परमेश्वरो मेघेनावरुह्य तेन साकमालप्य तदीयान्तरस्थात्मनः किञ्चिद् आदाय तेभ्यः सप्ततिप्राचीनेभ्यो ददौ तेन तेषामन्तर आत्मन्यवस्थिते त ईश्वरीयकथां प्रचारयितुम् आरेभिरे न निववृतिरे। इल्दद मेददनाम्नोः शिविरमध्येऽवशिष्टयो र्द्वयो र्जनयोरप्यात्मावस्थितवान्, तौ लिखितलोकश्रेण्यन्तर्गतौ, किन्त्वावासान्तिकं बहि र्न गतौ, तौ शिविर ईश्वरीयकथां प्रचारयितुम् आरेभाते। ततः कश्चिद् युवा धावन् मूससं जगाद, इल्ददमेददौ शिविरमध्ये कथां प्रचारयतः। तेन नूनसुतो यिहोशूयनामा आ यौवनात् मूससः सेवको मूससमुक्तवान् हे मत्प्रभो तौ प्रतिषेध। मूसा उक्तवान् मदनुरोधात् त्वं किं तावीर्ष्यसि? परमेश्वरस्य सर्व्वे लोकास्तस्यादेशप्रचारका भवन्तु, परमेश्वरस्तेषामन्तरे स्वात्मानं ददातु। मूसा इस्रायेलः प्राचीनाश्च शिविरं प्रविविशुः। २५ २६ २७ २८ २९ ३०

ततः परं परमेश्वरेण चालितः पवनः सागराद् एतावतो वर्त्तकपक्षिण आनीय शिविरस्य समीपे विचकार येन ते चतुर्दिक्षु शिविरस्यैकैकपार्श्वे दिनैकमार्गं यावद् भूमे र्हस्तद्वयमूर्द्धीभूय स्थिताः। ततो लोका उत्तिष्ठन्तस्तदहोरात्रं कृत्स्नं परदिनञ्च तान् पक्षिणः संजगृहुस्तेषां मध्ये कोपि दशहोमरात् न्यूनं नहि संजग्राह ततः स्वार्थं शिविरस्य चतुर्दिक्षु व्यकिरन्। किन्तु तेषां दन्तेषु मांसस्य धारणकाले चर्व्वणात् प्रागेव लोकान् प्रति परमेश्वरस्य क्रोधः प्रजज्वाल तेन परमेश्वरो लोकान् अतिमहामार्य्या जघान। मूसास्तस्य स्थानस्य नाम किब्रोद्धत्तावा (लोभिश्मशानमिति) कृतवान् यस्मात् ते लोभिनस्तत्र श्मशाने ऽवतस्थिरे। ततो लोका किब्रोद्धत्तावातो हत्सेरोतं प्रति यात्रां कृत्वा तत्रावतस्थिरे। ३१ ३२ ३३ ३४ ३५

---

## १२ द्वादशोऽध्यायः।

१ मूसोविरुद्धं हारोणमरियमो र्विपरीतकथनं १० मरियमः कुष्ठित्वं तत्कृते मूससः प्रार्थनं १४ मरियमः शिविराद् बहिष्करणं सप्तदिनात् परं पुनर्ग्रहणञ्च।

मूससा या कूशदेशीया योषित् पाणौ गृहीता, तस्याः कूशदेशीयाया भार्य्याया हेतो र्मरियमहारोणौ मूससो विपरीतं वचनम् उदितवन्तौ। तावुक्तवन्तौ परमेश्वरः किं केवलमूससा कथां कथयति? किमावाभ्यामपि न कथयति? किन्तु परमेश्वरेण तत् श्रुतं। मूसाः क्षितिस्थसर्व्वलोकेभ्यो नम्रतम आसीत्। १ २ ३

४ अनन्तरं परमेश्वरोऽकस्मान् मूसाहारोणमरियमनुक्तवान् यूयं त्रयः
५ समाजावासद्वारान्तिकं बहिरागच्छत तेन ते त्रयो बहिर्गताः। ततः
परमेश्वरो मेघस्तम्भ उत्तीर्य्यावासद्वारे तिष्ठन् हारोणमरियमावाह्वत-
६ वान् तेन तयो र्बहिर्भूतयोः स उक्तवान् युवां मद्वाचं निशामयतं,
युष्मन्मध्ये यदि कश्चिद् भविष्यद्वक्तास्ति तर्हि परमेश्वरोऽहं तत्समक्षं
७ दर्शनेन स्वं प्रकाशयिष्ये वा स्वप्ने तेन सह कथां कथयिष्यामि। मम
सेवको मूसास्तादृङ् नहि, स मम सर्व्वपरिवारमध्ये विश्वासभाजनं।
८ अहं तेन सार्कं गुप्तं नहि किन्तु व्यक्तं सम्मुखामुखी कथां कथयामि स
परमेश्वरस्य मूर्त्तिं पश्यति च, मद्दासमूससः प्रतिकूलं युवां कथां कथयितुं
९ कुतो नाबिभीतं? तौ प्रति परमेशस्य कोपो जज्वाल ततः स प्रतस्थे।
१० अनन्तरं आवासोपरितो मेघे प्रस्थिते मरियमो हिमवत् कुष्ठं बभूव
११ ततो हारोणो मरियमं प्रति निरीक्ष्य तां कुष्ठिनीं ददर्श। हारोणो मूससं
बभाषे हा हा हे मत्प्रभो विनयेऽहम् आवाभ्याम् उन्मादाद् यत् कृतम्
१२ अपराद्धञ्च तत्पापस्य फलम् आवाभ्यां मा देहि। मातृगर्भात् निर्गमन-
काले यस्य मांसस्यार्द्धं नष्टं तादृशं कञ्चन कुणपमिव तां मा कार्षीः।
१३ तदा मूसाः परमेश्वरं प्रार्थ्य जगाद हे ईश्वर तां स्वस्थां कुर्व्विति
विनयेऽहम्।
१४ परमेश्वरो मूससम् उक्तवान् यदि तस्याः पिता तस्या मुखे निष्ठीवम्
अदास्यत् तर्हि सा किं सप्त दिनानि नालज्जिष्यत? तद्वत् सा सप्त दिनानि
१५ शिविरस्य बहिः संरुध्यतां पश्चात् पुनर्ग्राहिष्यते। तेन मरियम् सप्त
दिनानि शिविरस्य बहिः समरुध्यत यावन् मरियम् अभ्यन्तरं नानीयत
१६ तावल् लोका यात्रां न चक्रुः। ततो लोका हत्सेरोतः प्रस्थाय पारण-
प्रान्तरे शिविरं स्थापयामासुः।

---

# १३ त्रयोदशोऽध्यायः।

१ देशं निरीक्षितुं प्रेषितलोकानां नामानि १७ तान् प्रति मूससाज्ञा २१ तेषां यात्रायाः कथनं २६ तेषां पुनरागमनं वार्त्ताकथनञ्च।

१ परमेश्वरो मूससम् उक्तवान् अहम् इस्रायेल्वंशाय यं किनान्देशं
२ दास्यामि तं निरीक्षितुं त्वं लोकान् प्रेषय तेषां पितृवंशानां मध्ये ये ये
३ लोका मुख्यास्तान् प्रहिणु। ततो मूसाः परेशाज्ञया यान् इस्रायेल्
४ वंशाध्यक्षान् पारणप्रान्तरात् प्राहिणोत् तेषां नामानि, रूबेणवंशजः

सक्कूरसुतः शम्मूयः। शिमियोनवंशजो होरेः सुतः शाफटः। यिहूदा- ६
वंशजो यिफुन्निसुतः कालेवः। इषाखरवंशजो यूषफसुतो यिगालः। ७
इफ्रयिमवंशजो नूनसुतो होशेयः। विन्यामीन्वंशजो राफूसुतः पल्टिः। ८
सिवूलूनवंशजः सोदेः सुतो गद्दीयेलः। यूषफवंशजो ऽर्थात् मिनशि १०
वंशजः सूषेः सुतो गद्दिः। दानवंशजो गिमल्लेः सुतोऽम्मीयेलः। आशेर- १२
वंशजो मीखायेलसुतो सिथूरः। नप्तालिवंशजो वप्सेः सुतो नहविः। १४
गादवंशजो माखेः सुतो ग्यूयेलः। एतन्नामका लोका देशं निरीक्षितुं १६
मूससा प्रेरिताः, नूनसुतस्य होशेयस्य नाम मूससा यिहोशूय इति कृतं।

मूसाः किनानदेशं निरीक्षितुं तेषां प्रेषणकाले जगाद यूयमेतं दक्षि- १७
णप्रदेशं गत्वा गिरिमारोहयत। स देशः कीदृक् तत्र वसल्लोका बलवन्तो १८
दुर्ब्बला वा, अल्पे बहवो वा, ते यत्र देशे वसन्ति स कीदृक् भद्रोऽभद्रो १९
वा ते यस्मिन् यस्मिन् नगरे न्युष्यते तानि किम्भूतानि शिविररूपाणि
दुर्गरूपाणि वा, तेषां वसतिभूमिः कीदृशी उर्व्वरा नीरसा वा तन्मध्ये २०
पादपाः सन्ति न वा तत् पश्यत। यूयं साहसिनो भूत्वा तद्देशीयानि
कतिपयफलान्यानयत, स कालो द्राक्षाफलारम्भसमय आसीत्।

अनन्तरं ते प्रस्थाय आ सीन्प्रान्तरात् हमातप्रवेशस्थाने स्थितं रिहोवं २१
यावद् देशं निरीक्षिरे। अतो दक्षिणप्रदेशेन गत्वा हिब्रोणम् उपतस्थुः २२
तत्र अनाकवंशीया अहीमानः शेशयस्तल्मयश्चासन् मिसरस्थसोयन-
नगरस्य स्थापनस्य सप्तवत्सरात् पूर्व्वं हिब्रोणनगरं स्थापितं। इष्को- २३
लोपत्यकाम् उपस्थितैस्तै द्राक्षालतायाः फलगुच्छयुक्तैका शाखा छिन्ना
सती वहनदण्डेन जनाभ्याम् ऊढा च कतिपयानि दाडिमोडुम्बरफ-
लान्यपि समानीतानि। इस्रायेल्वंशीयास्तत्र यद् द्राक्षागुच्छम् अकृन्तन् २४
तस्मात् सोपत्यका इष्कोल् (गुच्छेति) नाम्ना प्रसिद्धाभूत्। इत्थं तै देशे २५
निरीक्षिते चत्वारिंशद्दिनेभ्यः परं प्रत्यागतं।

ते प्रत्यागत्य पारणप्रान्तरस्थकादेशस्थाने मूसोहारोणाविस्रायेलः २६
सर्व्वसमाजीयश्चाभिगत्य तौ सर्व्वसमाजीयांश्च वार्त्तां जगदुस्तद्देशीय-
फलानि दर्शयामासुश्च। ते स्वयात्रां वर्णयित्वा गदितवन्तः, त्वमस्मान् २७
यं देशं प्रेषितवान् तं देशं वयं गतवन्तः स दुग्धमधुप्रवाहीति सत्यम्
एतानि च तदीयफलानि। किन्तु तद्देशवासिनो बलवन्तस्तत्रस्थनगरा- २८
णि प्राचीरवेष्टितान्यतिवृहन्ति च तत्रास्माभिरनाकवंशीया अपि दृष्टाः।
अमालेकीयलोका दक्षिणप्रदेशे वसन्ति हित्तीया यिवूषीया इमोरीयाश्च २९

गिरिषु वसन्ति किनानीयाः सागरसमीपे यर्द्दननद्यास्तटे च वसन्ति।
१० ततः कालेवो मूससे लोकान् क्षमयितुं बभाषे वयम् युगपद् उत्थाय
११ तमधिकरवाम, तस्य पराजयो ऽस्माकं सुसाध्यः। किन्तु ये लोकास्तेन
साकम् अगमन् तेऽकथयन् तेषां लोकानां विरुद्धं गन्तुं वयं न शक्ष्यामः
१२ तेऽस्मत्तो बलवन्तः। इत्थं ते यं देशं निरीक्षितवन्तस्तस्यापयशसे तैरि-
स्रायेल्वंशस्य साक्षाद् जगदे, वयं यं देशं निरीक्षितुं भ्रमणं कृतवन्तः स
देशः स्वनिवासिनो ग्रसति तन्मध्येऽस्माभि र्ये जना दृष्टास्ते सर्व्वेऽतीव-
१३ वृहत्कायाः। तत्रस्थान् वीरजान् अनाकवंशीयवीरान् पश्यन्तो वयं
स्वदृष्टौ शलभाइवाभवाम तेषां दृष्टावपि तादृशा आस्म।

---

## १४ चतुर्द्दशोऽध्यायः।

१ लोकानां कलहः ६ तान् शान्तयितुं यिहोशूयकालवयो र्यत्नः ११ ईश्वरस्य भर्त्सनं १३ तन्नुम् ईश्वरं प्रति मूससो निवेदनं २६ कलहकारिणां देशानधिकारित्वं ३६ कुवार्त्तादायिनां महामार्य्या मारणं ४० इस्रायेल्लोकानां शत्रुभिर्हतत्वञ्च।

१ ततः समाजीयाः सर्व्वे उच्चैःस्वरं कृत्वा कोलाहलं चक्रुः, लोकास्तस्यां
२ रजन्यां रुरुदुः। इस्रायेलः सर्व्वे वंशा मूसोहारोणयो र्विपरीतं कलहं
चक्रुः सर्व्वसमाजीयास्तयोः साक्षाद् गदितवन्तः, हा हा यदि वयं मिस-
३ र्देशेऽमरिष्याम वात्र प्रान्तरेऽस्माकं मृत्युरभविष्यत्। परमेश्वरः खड्ग-
धारेणास्मान् निपातयितुम् अस्माकं स्त्रियः सन्तानांश्च लोठयितुञ्चैतद्दे-
४ शान्तिकम् अस्मान् कुत आनीतवान्? मिसरदेशं प्रत्यागमनमस्माकं किं
नाधिकं क्षेमं? ततस्ते परस्परं मन्त्रयाञ्चक्रुरागच्छत वयं एकं सेनापतिं
५ कृत्वा मिसर्द्देशं परावृत्य यामः। ततो मूसोहारोणाविस्रायेल्वंशस्य
सर्व्वसमाजीयानां सम्मुखे न्युब्जीभूय पतितौ।

६ देशनिरीक्षकानां मध्ये नूनसुतो यिहोशूयो यिफुन्निसुतः कालेबश्च
७ स्वं स्वं वसनं छित्त्वा इस्रायेल्वंशस्य सर्व्वसमाजीयान् अवदतां वयं
८ यं देशं निरीक्षितुं गताः स देशोऽतीवोत्तमः। यदि परमेश्वरोऽस्मान्
प्रति सन्तुष्टस्तिष्ठति तर्ह्यस्मान् तत्र नीत्वा तं देशमस्मभ्यं दास्यति स
९ दुग्धमधुप्रवाहीति सत्यं। यूयं केवलं परमेश्वरस्य विरुद्धं नाचरत
तद्देशीयलोकेभ्यो न बिभीत यस्मात् ते ऽस्माकम् आहारस्वरूपास्तेषामा-
१० श्रयो व्यपगतः परमेश्वरो ऽस्माकं सहाय आस्ते तेभ्यो मा बिभीत। किन्तु

सर्व्वे समाजीयास्तौ पाषाणै र्मारयितुं कथितवन्तः, तदा समाजावास इस्रायेल् वंशस्य सम्मुखे परमेश्वरस्य महिमा प्राकाशत।

परमेश्वरो मूससमवादीद् एते लोकाः कतिकालान् माम् अवज्ञा- ११ स्यन्ति? तेषां मध्य एतावदाश्चर्य्यक्रियासु मया दर्शितास्वपि ते कतिकालान् मय्यप्रत्ययिनो भविष्यन्ति? महामार्य्याहं तान् हनिष्यामि तान् अनधि- १२ कारिणः कृत्वा त्वां तेभ्योपि वृहज्जातिं बलवज्जातिञ्च करिष्यामि।

ततो मूसाः परमेश्वराय कथयामास तस्मिन् कृते त्वं स्वशक्तिं प्रकाश्य १३ येषां मिस्रीयलोकानां मध्याल् लोकानेतान् आनयस्ते कथामिमां श्रोष्यन्ति, तथा लोका एतद्देशनिवासिनोऽपि तां ज्ञापयिष्यन्ति, यतस्त्वं १४ परमेश्वर एतेषां लोकानां मध्यवर्त्ती तेभ्यः प्रत्यक्षदर्शनं ददासि तव मेघ स्तेषाम् उपरि तिष्ठति त्वं दिवा मेघस्तम्भे रजन्यां वह्निस्तम्भे तिष्ठन् तेषामग्रेग्रे गच्छसीति तैः श्रुतमस्ति। इदानीं यदि त्वमेकजनवद् एतं १५ लोकसमूहं नाशयसि तर्हि तव कीर्त्तिं यैरन्यजातीयैः श्रुता त इमां कथां कथयिष्यन्ति, परमेश्वर एतल्लोकेभ्यो यं देशं दातुं प्रतिज्ञातवान् १६ तं देशं तान् नेतुं न शक्तस्तस्मात् प्रान्तरे तान् व्यनाशयत्। इदानीम् १७ अहमिति विनये परमेश्वरश्चिरसहिष्णुः कृपया पूर्णो ऽधर्म्माज्ञालङ्घ- नयोः क्षमाकृत्, किन्तु तद्दण्डकृत् तृतीयचतुर्थपुरुषान् यावत् सन्ता- नान् प्रति पितृपुरुषाणां पापफलदाता चेति त्वया यत् कथितं, तदनुसा- १८ रान् मत्प्रभो र्महिमा महान् भवतु। आ मिसर्देशाद् एतत्पर्य्यन्तमेतान् १९ जनान् प्रति त्वया यथा निजप्राज्यकृपानुसारात् क्षमा कृता तथै- षामिदं पापमपि क्षम्यताम् इत्यहं विनये। ततः परमेश्वरो जगाद २० तव वाक्यात् तदहं क्षान्तवान्। किन्त्वहं यदि नित्यो भवामि तर्हि २१ सर्व्वा पृथ्वी परमेश्वरमहिम्ना पूर्णा भविष्यति। एते लोका मे महिमानं २२ मिसरि प्रान्तरे च मम कृतान्याश्चर्य्यकर्म्माणि च दृष्ट्वापि दशकृत्वो मां परीक्षितवन्तो मद्वाक्यमवज्ञातवन्तश्च। तस्माद् अहं तेषां पूर्व्वपुरुषान् २३ प्रति यं देशमधि शपथं कृतवान् स देश एतैः कदापि न द्रक्ष्यते, ये माम- वाजानन् तेषां मध्ये केनापि स न द्रक्ष्यते। किन्तु मम दासः कालेवो २४ ऽन्यात्मविशिष्टः सम्पूर्णं ममानुगतश्च ततो हेतोः स यं देशं गतस्तं देशमहं तं प्रवेशयिष्यामि तस्य वंशस्तमधिकरिष्यति। अमालेकीयाः २५ किनानीयाश्च लोका उपत्यकायां वसन्ति स्म यूयं परावृत्य सुफार्णवगामि प्रान्तरं गच्छत।

२६ परमेश्वरो मूससं हारोणञ्च बभाषे, अहं स्वप्रतिकूलत एतस्य कल-
२७ हकृतो दुष्टसमाजस्य भारं कतिकालान् सहिष्ये? इस्रायेल्वंशा मत्-
२८ प्रतिकूलतो यद्यद् वाग्युद्धं कृतवन्तस्तदहं श्रुतवान्। त्वं तेभ्यः कथय
परमेश्वर इति वाचं वदति, यद्यहं नित्यो भवेयं तर्हि मत्कर्ण-
२९ गोचरे युष्माभि र्यत् कथितं, युष्मान् प्रति तदेव मया करिष्यते। हे
मया सह वाग्युद्धकारिणः सर्व्वे, युष्माकं गणितलोकानां सम्पूर्णसंख्या-
नुसाराद् विंशतिवर्षाधिकवयस्कानां युष्माकं सर्व्वेषां शवा एतत्प्रान्तरे
३० पतिष्यन्ति। युष्मान् यस्मिन् देशे वासयितुम् अहं शपथं कृतवान् तं
देशं यिफुन्निसुतं कालेवं नूनसुतं यिहोशूयञ्च विना युष्माकं कोपि न
३१ प्रवेक्ष्यति। किन्त्वेते लोठिष्यन्त इति वाचं यूयं यान् स्वबालकानधि
कथितवन्तस्तानहं तत्स्थानं प्रवेशयिष्यामि, यूयं यं देशं तुच्छं कृतवन्तः
स तैः परिचेष्यते। किन्तु युष्माकमेव शवा एतस्मिन् प्रान्तरे पतिष्यन्ति।
३२ युष्माकं वंशाश्चत्वारिंशद्वर्षाणि प्रान्तरेऽस्मिन् भ्रमन्तोऽत्रैव यावद् युष्माकं
३३ शवानां संख्या पूर्णा न भवेत्, तावद् युष्मद्व्यभिचारस्य फलं भोक्ष्यन्ते।
३४ युष्माभि र्यानि चत्वारिंशद्दिनानि देशो निरीक्षितस्तद्दिनसंख्यानुसाराद्
एकैकदिनार्थं एकैकं वर्षमित्थं चत्वारिंशद्वर्षाणि यावद् युष्माभि र्निज-
३५ पापं भोक्ष्यते, तेन यूयं मम विपक्षत्वं ज्ञास्यथ। अहं परमेश्वरः कथ-
यामि मद्विपरीतं मिलितम् एतं दुष्टसमाजं प्रति तदहमवश्यं करि-
ष्यामि, तेऽस्मिन्नेव प्रान्तरे विनाशिष्यन्ते तत्र मरिष्यन्ति च।

३६ देशं निरीक्षितुं मूससा प्रेषिता ये लोकाः परावृत्यागत्य तस्य देश-
स्यायशः आनीय तस्य प्रातिकूल्यात् सर्व्वसमाजीयान् वाग्युद्धं कारित-
३७ वन्तो देशस्यायशोवादिनस्ते लोकाः परमेश्वरस्य सम्मुखे महामारीतो
३८ मृताः। देशनिरीक्षणाय गतानां लोकानां मध्ये केवलो नूनसुतो यिहो-
३९ शूयो यिफून्नेः सुतः कालेबश्च जीवन्तौ तस्थतुः। तदा मूसा इस्रायेल्वंशाय
एता वाणीः कथितवान् लोकाश्चातीव विललपुः।

४० प्रातस्त उत्थाय गिरेरुपरि जिगमिषन्तोऽकथयन् पश्य परमेश्वरो
यत्र गन्तुम् आदिष्टवान् वयं तत्र गच्छाम, वयं पापं कृतवन्तः।
४१ ततो मूसाः कथितवान् अधुना यूयं कुतः परमेश्वरीयाज्ञां लङ्घध्वे?
४२ एतेन युष्माकं मङ्गलं न भविष्यति। इदानीं परमेश्वरो युष्मन्मध्ये
४३ नास्ति तदर्थम् उत्थाय मा यात। गमने कृते यूयं रिपूणां सम्मुखम्
हनिष्यध्वे यस्माद् अमालेकीयाः किनानीयाश्च जनास्तत्र युष्माकं सम्मुखे

सन्ति यूयम् असिना पतिष्यथ यतः परमेश्वरात् पराङ्मुखानां युष्माकं
परमेश्वरः सहायो न भविष्यति। तथापि ते दुःसाहसेन पर्व्वतशृङ्गम् ४४
आरुरुहुः किन्तु परमेश्वरस्य साक्ष्यमञ्जूषा मूसाश्च शिविरान्न निर्जग्मतुः।
तदा तद्गिरिवासिनोऽमालेकीयाः किनानीयाश्च लोका अवरुह्य तान् ४५
समाजघ्नु र्हर्म्मां यावद् विचकरुश्च।

---

## १५ पञ्चदशोऽध्यायः।

१ भक्ष्यपानीयनैवेद्ययोरुत्सर्गव्यवस्था १४ विदेशिनमधि कथनं १७ उत्तोलनीयप्रथमजातस्य शक्तो व्यवस्था २२ अज्ञानकृतपापस्य कथनं ३० अवज्ञाकृतां दण्डः ३२ विश्रामवाराकृतां पाषाणाघातदण्डः ३७ वस्त्रस्य ग्रन्थिकथनं।

परमेश्वरो मूससं बभाषे, त्वमिस्रायेल्वंशेभ्यः कथय तान् इदं वचनं १
वद यूयं यदा मद्दत्ताधिकारदेशं प्रविश्य मानसपालनार्थं वा स्वेच्छा- २
दत्तनैवेद्यार्थं वा युष्माकं महे गोमेषव्रजात् परमेश्वरम् उद्दिश्य सौगन्ध्यं ३
कर्त्तुं वह्निकृतोपहाररूपेण होमार्थकादिबलिं परमेश्वरम् उद्दिश्योत्स्र-
क्ष्यथ, तदानीम् उपहारोत्स्रष्टा होमार्थकादिबलिनैकेन मेषशावकेन ४
समम् एकहिनस्य चतुर्थांशेन तैलेन पक्वं दशमांशं गोधूमचूर्णं भक्ष्य-
नैवेद्यम् एकहिनस्य चतुर्थांशं द्राक्षारसं पानीयनैवेद्यञ्च परमेश्वरम् ५
उद्दिश्य दास्यति। यदा मेषेण सह हिनैकतृतीयांशेन तैलेन पक्वगोधूम- ६
चूर्णस्य द्वौ दशमांशौ भक्ष्यनैवेद्यं हिनैकतृतीयांशं द्राक्षारसम् पेयनैवे- ७
द्यञ्च दत्त्वा परमेश्वरम् उद्दिश्य सुगन्ध्युपहारार्थम् उत्स्रक्ष्यति। परमे- ८
श्वरम् उद्दिश्य व्रतपूरणाय मङ्गलार्थकबलिदानाय वा येन होमादि-
बलिरूपो गोवत्स उत्सृज्यते स तद्गोवत्सेन सममर्द्धहिनतैलेन ९
पक्वं दशमांशत्रयगोधूमचूर्णं भक्ष्यनैवेद्यमर्द्धहिनं द्राक्षारसं पेयनैवेद्यञ्च १०
परमेश्वरम् उद्दिश्य वह्निकृतसुगन्ध्युपहारार्थम् आनेष्यति। यूयं ११
गवैकेन मेषेणैकेन मेषवत्सेन छागवत्सेन च समम् इत्थं नैवेद्यं
करिष्यथ। यूयं यति पशून् आसादयिष्यथ तेषां संख्यानुसाराद् एकैकं १२
प्रतीत्थं करिष्यथ। देशीयाः सर्व्वे लोकाः परमेश्वरम् उद्दिश्य वह्नि- १३
कृतसुगन्ध्युपहारं निवेदयितुम् अनया व्यवस्थयैतानि करिष्यन्ति।

युष्माकं मध्ये प्रवासी वा युष्माकं मध्ये पुरुषपरम्परयावासी कश्चित् १४
यदि परमेश्वरम् उद्दिश्य वह्निकृतं सुगन्ध्युपहारं निवेदयितुम् इच्छेत्

१५ तर्हि युष्माभि र्यथा कर्त्तव्यं तेनापि तथा कर्त्तव्यं। समाजीयानां युष्माकं युष्मन्मध्यप्रवासिनाञ्च व्यवस्थैकैव भविष्यति, युष्माकं पुरुषपरम्परायां विधिरेष नित्यो भविष्यति, परमेश्वरस्य सम्मुखे यूयं यादृशा
१६ विदेशिनोऽपि तादृशा भविष्यन्ति। युष्माकं युष्मन्मध्ये प्रवासिविदेशीयानाञ्च विधिरेक एव व्यवस्था चैकैव भविष्यति।

१७ परमेश्वरो मूससम् उक्तवान् त्वम् इस्रायेल्वंशाय कथय तान् इमां
१८ वाचं वद, युष्मानहं यं देशं नेष्यामि तं देशम् उपस्थाय इत्थं करिष्यथ।
१९ यूयं तद्देशीयान्नभोजनकाले परमेश्वरम् उद्दिश्योत्तोलनीयमुपहारं
२० निवेदयिष्यथ। उत्तोलनीयनैवेद्यार्थं प्रथमशक्तूनां पिष्टकमेकं निवेदयिष्यथ,
२१ यथा शस्यमर्द्दनस्थानस्योत्तोलनीयनैवेद्यं तदपि तथैव करिष्यथ। यूयं पुरुषपरम्परायां स्वप्रथमशक्तुभ्यः परमेश्वरम् उद्दिश्योत्तोलनीयम् उपहारं निवेदयिष्यथ।

२२ परमेश्वरेण मूससे कथिता विधयो युष्माभि र्भ्रान्त्या यदि लङ्घ्येरन्, फलत
२३ इति पूर्व्वं परे वा प्रकाश्यमाना युष्मत्पालनीया ये विधयो मूसोद्वारा परमेश्वरेण युष्मान् प्रत्यादिश्यन्ते, तेषां कञ्चन विधिं यदि युष्माभि
२४ र्लङ्घ्येत, तत् कर्म्म यदि समाजागोचरतोऽज्ञानतः क्रियेत, तर्हि कृत्स्नसमाजः परमेश्वरम् उद्दिश्य सुगन्ध्युपहाराय होमार्थं गोवत्सं व्यवस्थानुसारात् तेन समं भोज्यपेयनैवेद्ये पापप्रायश्चित्तार्थकच्छागञ्च निवेदयि-
२५ ष्यति। इत्थम् इस्रायेलवंशस्य सर्व्वसमाजार्थं याजकेन प्रायश्चित्ते कृते तान् क्षमिष्यते यस्मात् तत् पापम् अज्ञानकृतं तैश्च तदज्ञानकृतपापार्थं परमेश्वरम् उद्दिश्य वह्निकृतोपहारः प्रायश्चित्तबलिश्च परमेश्वरस्य
२६ समक्षम् आनीतौ। तत इस्रायेल्वंशस्य सर्व्वसमाजीयान् प्रति युष्मन्मध्ये प्रवासिविदेशीयान् प्रति च तत् क्षमिष्यते यस्मात् सर्व्वे लोका अज्ञानात् पापं कृतवन्तः।

२७ यदि कश्चिदेको जनोऽज्ञानतः पापं कुर्य्यात् तर्हि स प्रायश्चित्तार्थं
२८ एकहायनीं छागवत्साम् आनेष्यति। याजकः परमेश्वरस्य साक्षात् तस्याज्ञानपापकारिणो हेतोरज्ञानकृतपापस्य प्रायश्चित्तं करिष्यति,
२९ प्रायश्चित्ते कृते तस्य पापं क्षमिष्यते। इस्रायेल्वंशजलोकानां तन्मध्ये प्रवासिनाञ्चाज्ञानकृतपापस्येयमेका व्यवस्था भविष्यति।

३० स्वदेशीयो विदेशीयो वा यः कश्चिद् दुःसाहसेन पापं करोति स
३१ परमेश्वरं निन्दति तस्मात् स निजलोकेभ्य उच्छेत्स्यते। यतः स परमे-

श्वरस्य वाक्यमवज्ञातवान् तस्याज्ञाञ्च लङ्घितवान् तस्मात् स नितान्तम् उच्छेत्स्यते तस्य दोषस्तदुपरि भविष्यति।

प्रान्तरे तिष्ठद्भिरिस्रायेल्वंशै र्विश्रामदिन इन्धनानि संग्टह्नन् एको २२ जनो विविदे। तमिन्धनसंग्राहिणं ये विविदुस्ते मूसोहारोणयोः सर्व्व- २३ समाजीयानाञ्च समक्षं तमानिन्युः। तं प्रति किं कर्त्तव्यम् इत्यस्याप्रकाश- २४ त्वात् ते तमवरुध्य रक्षितवन्तः। परमेश्वर उक्तवान् स मानुषो हन्तव्य २५ एव सर्व्वसमाजीयाः शिविरस्य वहिस्तं पाषाणाघातै र्हनिष्यन्ति। ततः २६ समाजस्य लोका मूससं प्रति परमेश्वराज्ञानुसारात् तं शिविराद् वहि- रानीय पाषाणैराघ्नन् तेन स प्राणान् तत्याज।

परमेश्वरो मूससं जगाद, त्वमिस्रायेल्वंशेभ्यः कथय तान् इति वाक्यं २७ वद ते पुरुषपरम्परासु स्ववसनकोणेषु ग्रन्थीन् कुर्व्वन्तु तत्र नीलसूत्राणि २८ बध्नन्तु च। यूयं यथा तान् ग्रन्थीन् विलोक्य परमेश्वरस्याज्ञाः स्मृत्वा २९ पालयथ युष्माकं यै र्मनोभि र्यूयं चक्षूर्भ्यैश्च तेषामिच्छातो यथा न भ्रमथ मम सर्व्वाज्ञाः स्मृत्वा पालयित्वा ईश्वरमुद्दिश्य यथा पवित्रा भवथ तदर्थं ४० ते ग्रन्थयो भविष्यन्ति। युष्माकं प्रभुः परमेश्वरोऽहं युष्माकम् ईश्वरो ४१ भवितुं मिसर्देशाद् युष्मान् वहिरानयं, अहमेव युष्माकं प्रभुः परमेश्वरः।

---

## १६ षोडशोऽध्यायः।

१ मूससं प्रति कोरहदाथनावीरामप्रभृतीनां विपक्षत्वं ४ तान् प्रति मूससः कथा १२ तेषां प्रत्युत्तरं १६ तान् प्रति मूससः पुनः कथा २० मूसोहारोणौ प्रति परमेश्वरस्य कथा २३ विपक्षाणां दूष्याद् यातुं लोकानामाज्ञापनं ३१ विपक्षाणां पृथिव्या ग्रसनं ३६ धूपपात्राणां वेदिमाच्छादयितुं नियुक्तत्वं ४१ लोकानां कलहः ४४ मूससं प्रति परमेश्वरस्य कथनं ४६ तेषां दण्डः मूसोहारोणाभ्यां दण्डनिवारणञ्च।

लेवेः प्रपौत्रः किहातस्य पौत्रो यिष्हरस्य पुत्रः कोरहो रूबेनवंशीया १ इलीयावस्य पुत्रौ दाथनोऽवीरामश्च पेलतस्य पुत्र ओनस्रेस्रायेल्वंशस्य २ सभाध्यक्षाः समाजे विख्याता लब्धनामानः पञ्चाशदधिकशतद्वयलोका मूससो विरुद्धम् उदतिष्ठन्। ते मूसोहारोणयो र्विरुद्धं मिलित्वा ३ ताभ्याम् अकथन् युवाम् आत्माभिमानिनौ, समाजीयाः सर्व्वे जनाः पवित्राः परमेश्वरस्तन्मध्यवर्त्ती, युवां कुतः परमेश्वरस्य समाजोपर्य्यात्मा- नावुन्नतौ कुरुथः?

मूसास्तत् श्रुत्वा न्युब्जः पपात कोरहं तस्य सर्व्वं गणञ्च जगाद ४

५ कस्तदीयः कश्च पवित्र इति परमेश्वरः श्वो ज्ञापयिष्यति तं स्वान्तिकम् आनेष्यति च, यं मनोनीतं करोति तमेव स्वसमीपम् आने-
६ ष्यति। हे कोरह तव गणाश्च कर्म्मेदं कुरुत श्वो धूपपात्राणि
७ गृहीत्वा परमेश्वरस्य सम्मुखे तन्मध्ये वह्निं दत्त तदुपरि सर्जरसं दत्त तेन परमेश्वरो यं मनोनीतं करिष्यति स एव पवित्रो भविष्यति, हे
८ लेविसन्ताना यूयम् आत्माभिमानिनः। पश्चात् मूसाः कोरहादीन् बभाषे
९ हे लेविसन्ताना विनये मद्वाक्यं शृणुत। इस्रायेल ईश्वर इस्रायेल्-समाजाद् युष्मान् पृथक् कृत्वा परमेश्वरस्यावासं सेवितुं समाजसम्मुखे तदीयामपि परिचर्य्यां कर्त्तुञ्च युष्मान् स्वसमीपम् आनीतवान् एतत् किं
१० युष्माभिः क्षुद्रं बुध्यते? त्वं त्वया समं तव लेवीयभ्रातरश्च तेन स्वसमीपम्
११ आनीतास्तथापि यूयं किं याजकत्वपदमपि मृगयध्वे? पश्य त्वं तव सहायाश्च परमेश्वरस्यैव प्रतिकूलं सम्मिलिता यतो हारोणः को यद् यूयं तत्प्रतिकूलं वाग्युद्धं कुरुथ?

१२ इलीयावस्य पुत्रौ दाथनावीरामावाह्वातुं मूससा लोके प्रेषिते ताव्-
१३ चतुरावां न यास्यावः। त्वमस्मान् प्रान्तरे मारयितुं दुग्धमधुप्रवाहिदेशाद् वहिरानीतवान् इदं किं क्षुद्रं कर्म्म? त्वं किम् अस्मदुपरि सर्व्वथा
१४ प्रभुत्वं चिकीर्षसि? त्वम् अस्मान् अदुग्धमधुप्रवाहिदेशम् आनीतवान् अस्मभ्यमशस्यद्राक्षाक्षेत्राणि दत्तवांश्च, किं त्वम् एतेषां लोकानां
१५ नेत्राण्युत्पाटयिष्यसि? न यास्याव आवां। ततो मूसाः प्रकुप्य परमेश्वरं गदितवान् त्वया तेषां नैवेद्यं न गृह्यतां मया तेभ्य एको गर्द्दभोपि न गृहीतस्तेषामेकोपि न हिंसितः।

१६ ततो मूसाः कोरहं जगाद त्वं तव गणाश्च यूयं श्वो हारोणेन सह
१७ परमेश्वरस्य समक्षम् उपतिष्ठध्वं, युष्माकम् एकैकजनेन धूपपात्रम् आदाय तस्मिन् सर्जरसं दत्त्वा परमेश्वरस्य सम्मुखे स्वं स्वं धूपपात्रं साकल्येन सार्द्धशतद्वयधूपपात्राण्युपस्थाप्यन्तां, त्वया हारोणेन चापि
१८ धूपपात्रे उपस्थाप्येतां। ततस्तेषाम् एकैको जनो धूपपात्रं जग्राह तत्र वह्निं दत्त्वा सर्जरसं ददौ मूसोहारोणाभ्यां समं समाजावासद्वारे
१९ तस्थौ, कोरहश्च समाजावासद्वारान्तिके तयोः प्रतिकूलं सर्व्वसमाजीयान् मेलयामास तदा सर्व्वसमाजस्य साक्षात् पारमेश्वरं तेजः प्रचकाशे।

२० अनन्तरं परमेश्वरो मूसोहारोणौ बभाषे युवाम् एतत्समाजमध्यात्
२१ पृथग् भवतं तेनाहं निमिषैकस्माद् एतान् विनाशयिष्यामि। तदा तौ

न्युब्जीभूय पतन्तौ कथितवन्तौ हे ईश्वर हे सर्व्वशरीरस्थात्मनाम् ईश्वर एकेन पापे कृते त्वत्कोपः किं सर्व्वसमाजं प्रति प्रज्वलिष्यति ?

तदा परमेश्वरो मूससम् उक्तवान् त्वं समाजीयेभ्यः कथय यूयं कोर- २३ ह्दाथनावीरामाणां दुष्यसमीपाद् यात। तस्मान् मूससा तत्पश्चाद्गा- २४ मिभिरिस्रायेल्वंशस्य प्राचीनैश्चोत्थाय दाथनावीरामयोः समीपे गते २५ स समाजीयेभ्यः कथितवान् विनयेऽहं यूयम् एतेषां दुष्टानां पापनिवहै २६ र्यथा न विनाश्यध्वे तदर्थं तेषां दुष्यसमीपाद् यात तेषां किमपि न स्पृशत च। तेन तैः कोरह्दाथनावीरामाणां दुष्यचतुर्दिग्भ्यो गतं, किन्तु २७ दाथनोऽवीरामस्तयोर्जायापुत्रशिशवश्च स्वस्वदुष्यद्वारे तस्थुः।

अनन्तरं मूसा उक्तवान् एतानि सर्व्वकार्य्याणि कर्त्तुं परमेश्वरेण २८ प्रेषितोऽहं स्वेच्छया नेदमकार्षं तदित्यनेन ज्ञातुं शक्ष्यथ। यद्येते मनु- २९ जाः सामान्यलोकवन् म्रियेरन् यद्वा सर्व्वेषां घटनावद् एतान् जनान् प्रति घटेत तर्ह्यहं न परमेश्वरेण प्रेषितः। किन्तु परमेश्वरस्याद्भुत- ३० कर्म्मकरणाद् धरित्री यदि स्वास्यं व्यादाय तान् तेषां सर्व्वस्वञ्च ग्रसेत् ते च यदि जीवन्तः परलोकं गच्छेयुस्तर्हि मानुषैरेतैः परमेश्वर एवा- वज्ञात इति यूयं वेत्स्यथ।

मूसस एतासु वाणीषु समाप्तासु तेषामधःस्थभूमि र्विदद्रे। धरित्री ३१ स्वास्यं व्यादाय तान् तेषां परिजनान् कोरहस्य सर्व्वलोकान् तेषां ३२ सकलैश्वर्य्यञ्च जग्रसे। तेन ते तेषां सर्व्वपरिजनाश्च जीवन्तः परलोकं गताः। ३३ पृथ्वी च तान् पुनराच्छादयत्, इत्थं ते समाजमध्याद् विलुप्ताः। तेषां ३४ निनादात् तेषां चतुर्दिक्स्था इस्रायेल्वंशाः पलायन्त यस्मात् तेऽकथयन् पृथिव्यस्मानपि ग्रसिष्यतीति बिभीमः। पश्चात् परमेश्वराद् वह्नि ३५ र्निर्गत्य धूपदायकान् पञ्चाशदधिकशतद्वयलोकान् ददाह।

परमेश्वरो मूससमुक्तवान् त्वं वह्नितस्तानि धूपपात्राणि ग्रहीतुं ३६ तेषां वह्निं तत्रैव विकरीतुञ्च हारोणस्य सुतम् इलियासरं याजक- ३७ मादिश, यस्मात् तानि पवित्री भूतानि। ये पापिनः स्वस्वप्राणप्रतिकूलं ३८ पापं कृतवन्तस्तेषां धूपपात्रै र्वेद्याच्छादनाय विस्तृतानि पित्तलपत्राणि निर्म्मीयन्तां, तानि परमेश्वरम् उद्दिश्य तै र्निवेदितानि तस्मात् पवित्री भूतानि, तानीस्रायेल्वंशाय चिह्नरूपाणि भविष्यन्ति। ततः परं ३९ येषु पित्तलमयेषु धूपपात्रेषु तै र्दग्धै र्जनै र्धूप उदसृज्यत तानि मूससं प्रति परमेश्वरीयाज्ञानुसाराद् इलियासरेण याजकेन गृहीतानीस्रा-

४० येल्वंशस्य स्मरणार्थम् अर्थाद् हारोणवंशादन्यवंशीयः कोपि यथा परमेश्वरस्यान्तिकं धूपम् उत्स्रष्टुं समीपगामी कोरहतद्गणेन समानश्च न भवेत् तदर्थं वेद्या आच्छादनाय पत्ररूपीकृतानि।

४१ 　तथापि परेऽहनि इस्रायेल्वंशस्य सर्व्वे समाजीया मूसाहारोणयोः प्रतिकूलं वाग्युद्धं कृत्वा बभाषिरे युवामेव परमेश्वरस्य लोकान् विना-
४२ शितवन्तौ। मूसाहारोणयोः प्रतिकूलं मिलितेन समाजेन समाजावासे विलोकिते स मेघेनाच्छादितः पारमेश्वरं तेजश्च प्रचकाशे। तदा
४३ मूसाहारोणौ समाजावासस्य द्वारसम्मुखं जग्मतुः।

४४ 　परमेश्वरो मूससमुक्तवान् युवामेतत्समाजस्य मध्याद् यातं ततोऽहं
४५ निमिषैकस्मात् तान् विनाशयिष्यामि। तदा तौ न्युब्जीभूय पेततुः।

४६ 　मूसा हारोणं जगाद त्वं धूपपात्रं गृहाण वेद्या वह्निमानीय तत्र देहि तत्र सर्जरसं दत्त्वा तूर्णं समाजस्य समीपं गत्वा तेषां प्रायश्चित्तं
४७ कुरु यतः परमेश्वरात् क्रोधस्य निर्गतत्वात् महामारी प्रवृत्ता। हारोणो मूससाज्ञानुसारात् धूपपात्रं गृहीत्वा समाजमध्यं धावितवान् तदा लोकानां मध्ये महामारी प्रवृत्ता तस्मात् स सर्जरसं दत्त्वा लोकानां कृते
४८ प्रायश्चित्तं चकार, मृतजीवितलोकानां मध्ये तस्थौ च, तेन तत्क्षणात्
४९ महामारी निववृते। कोरहेण सार्कं येऽम्रियन्त तदन्ये सप्तशताधिकानि
५० चतुर्दशसहस्राणि लोका तया महामार्य्या मम्रुः। महामार्य्यां निवृत्तायां हारोणः समाजावासद्वारस्य समीपं मूससोऽन्तिके प्रत्याजगाम।

---

## १७ सप्तदशोऽध्यायः।

१ अध्यक्षाणां यष्टिकथनं ६ हारोणस्य यष्टेः पुष्पितत्वं १० पापिनां विरुद्धं चिह्नार्थं तस्या यष्टे रक्षणं।

१ 　अनन्तरं परमेश्वरो मूससं जगाद त्वम् इस्रायेल्वंशान् उक्त्वा तेषां
२ पितृवंशाध्यक्षेभ्य एकैकवंशस्य कृत एकैकयष्टिमित्थं द्वादश यष्टी-
३ र्गृहाण यस्य या यष्टिस्तस्यां तस्य नाम लिख। किन्तु लेवेर्यष्ट्यां हारोणस्य
४ नाम लिख एकैकपितृवंशाध्यक्षस्य कृते एकैका यष्टि र्भविष्यति। यत्राहं त्वां साक्षात् करोमि तत्र साक्ष्यमञ्जूषायाः सम्मुखे समाजावासमध्ये
५ सर्व्वा निधास्यसि। यो जनो मम मनोनीतस्तस्य यष्टिः पुष्पिता भविष्यति इस्रायेल्वंशो युष्मत्प्रतिकूलं यद् वाग्युद्धं करोति तदहं स्वसमीपान्निवर्त्तयिष्यामि।

इस्रायेल्वंशाय तत्सर्व्वस्मिन् मूससा कथिते तेषाम् अध्यक्षास्तस्मै ६
द्वादशयष्टी र्ददुः फलत एकैकः पितृवंशाध्यक्ष एकैकां यष्टिं ददौ,
हारोणस्य यष्टिस्तेषां यष्टीनां मध्यीयासीत्। मूसाः परमेश्वरस्य सम्मुखे ७
साक्ष्यावासे ता यष्टी र्निदधौ। परेऽहनि मूसाः साक्ष्यावासं गत्वा ददर्श ८
लेविवंशसम्बन्धीया हारोणस्य यष्टिरङ्कुरिता सती मुकुलिता पुष्पिता च
भूत्वा वादामफलम् अफलत्। तदा मूसा इस्रायेल्वंशानां समक्षं परमे- ९
श्वरसम्मुखात् ता यष्टी र्बहिरानयत् ता दृष्ट्वा ते स्वां स्वां यष्टिं जगृहुः।

परमेश्वरो मूससं जगाद, एतेषामाज्ञालङ्घिनां वाग्युद्धं यथा मत्तो १०
दूरी भवति तेषाञ्च मृत्यु र्न जायते तदर्थं तेषां प्रतिकूलं चिह्नं स्थातुं
त्वं साक्ष्यमञ्जूषायाः सम्मुखं पुन र्हारोणस्य यष्टिं प्रत्यानय। ततो मूसा- ११
स्तत् चकार स परमेश्वराज्ञयैव चकार। इस्रायेल्वंशा मूससं बभाषिरे १२
पश्य वयं म्रियामहे वयं विनश्यामः सर्व्वे विनश्यामः। यतो यः कश्चित् १३
परमेश्वरस्यावासान्तिकं याति स म्रियते तर्हि किं वयं निःशेषपर्य्यन्तं
विनश्यामः?

## १८ अष्टादशोऽध्यायः।

१ याजकानां लेवीयानाञ्च कर्म्म ८ याजकानामंशकथनं २० लेवीयानामंशकथनं २५ लेवीयानामुत्तोलनीयनैवेद्यं याजकानामंशकथनञ्च।

परमेश्वरो हारोणम् उक्तवान् त्वं त्वया साकं त्वत्सुतास्तव पितृवंशश्च १
यूयं पवित्रस्थानस्यापराधं भोक्ष्यध्वे त्वं त्वया समं त्वत्सुताश्च याजक-
त्वपदस्यापराधमपि भोक्ष्यध्वे। त्वं लेविवंशीयान् तव भ्रातॄन् अर्थात् २
तव पितृवंशीयान् त्वया साकम् आनेष्यसि, ते त्वया संयुक्ताः सन्तस्त्वां
परिचरिष्यन्ति किन्तु त्वं त्वया साकं तव पुत्राश्च साक्ष्यावाससम्मुखे
स्थास्यथ। ते तव रक्षणीयम् आवासस्य सर्व्वरक्षणीयञ्च रक्षिष्यन्ति किन्तु ३
तेषां युष्माकञ्च यथा क्षति र्न भवेत् तदर्थं ते पवित्रस्थानीयपात्राणां वेद्याश्च
समीपं न यास्यन्ति। ते त्वया संयुक्ताः सन्तः समाजावासस्य रक्षणीयं ४
आवासस्य सर्व्वसेवानुसाराद् रक्षिष्यन्ति कोप्यन्यवंशीयो युष्माकं समीपं
न यास्यति। इस्रायेल्वंशाय यथा पुनः क्रोधो न जायते तदर्थं पवित्र- ५
स्थानस्य रक्षणीयं वेद्याश्च रक्षणीयं युष्माभी रक्षिष्यते। पश्य, इस्रा- ६
येल्वंशमध्याद् युष्माकं भ्रातरो लेविवंशीया मया गृहीताः परमेश्वराय
दत्तास्ते समाजावासीयां परिचर्य्यां कर्त्तुं युष्मभ्यं समर्पिताः। तस्मात् त्वं ७

त्वया सार्कं तव पुत्त्राश्च यूयं वेद्याः समीपे विच्छेदवस्त्रस्याभ्यन्तरे च याजकत्वं करिष्यथ सेविष्यध्वे च, युष्मभ्यमहं दानरूपं याजकत्वपदं दत्तवान् किन्तु योऽन्यवंशीयो लोकः समीपं यास्यति स घानिष्यते।

८ परमेश्वरो हारोणं गदितवान् पश्य, इस्रायेल्वंशस्य सर्व्वपावितद्रव्याल् लभ्यानां ममोत्तोलनीयनैवेद्यानां रक्षणमहं तुभ्यं दत्तवान्, तवाभिषेककारणात् तुभ्यं तव सन्तानेभ्यश्च नित्यविधिना तानि दत्तवान्।

९ वह्निकृतस्यातिपवित्रवस्तुनो मध्य एतानि तव भविष्यन्ति, नैवेद्यरूपेण वा प्रायश्चित्तरूपेण वा दोषार्थकबलिरूपेण यावन्त उपहारास्तैर्मास्

१० उद्दिश्य निवेद्यन्ते, ते सर्व्वे तुभ्यं तव पुत्त्रेभ्यश्च पवित्रा भविष्यन्ति। त्वं तान् पूतस्थाने भक्षिष्यसि सर्व्वे पुरुषास्तान् भक्षिष्यन्ति ते तुभ्यं पूताः।

११ इस्रायेल्वंशस्यान्दोलनीयनैवेद्यरूपात् सर्व्वदानाद् उत्तोलनीयनैवेद्यानि तुभ्यं त्वया सार्कं तव सुतेभ्यः सुताभ्यश्च नित्यविधिना दत्तवान् अहं, तानि तव भविष्यन्ति तव गेहस्य सर्व्वे शुचयो लोकास्तानि भक्षिष्यन्ति।

१२ ते परमेश्वराय यद्यद् उत्तमं तैलम् उत्तमद्राक्षारसं गोधूमं प्रथमजं

१३ फलम् उत्सक्ष्यन्ति तान्यहं तुभ्यं दत्तवान्। तैर्यानि स्वदेशीयानि प्रथमपक्वफलानि परमेश्वराय निवेद्यन्ते तानि तव भविष्यन्ति, तव गेहस्य

१४ सर्व्वे शुचयो लोकास्तानि भक्षिष्यन्ति। इस्रायेल्वंशेन निवेदितं सर्व्वं

१५ वस्तु तव भविष्यति। मानुषाणां पशूनां वा मध्यात् परमेश्वरार्थं तैरानीताः प्रथमजाताः सर्व्वप्राणिनस्तवैव भविष्यन्ति, किन्तु मानुषस्य प्रथमजं त्वमवश्यं मोचयिष्यसि तथाशुचेः पशोः प्रथमजमपि मोचयिष्यसि।

१६ एकमासवयस्कमारभ्य मोचनीयाः सर्व्वे त्वन्निरूपितमूल्येन विंशतिगेरा-

१७ परिमितपूतस्थानशेकलनुसारात् पञ्चशेकलरूप्येण मोचयिष्यन्ते। किन्तु गोमेषच्छागानां प्रथमजास्त्वया न मोचयिष्यन्ते त एव पवित्रास्त्वं तेषां रुधिरं वेद्युपरि प्रोक्षिष्यसि परमेश्वरम् उद्दिश्य वह्निकृतसुगन्ध्युपहा-

१८ राय तेषां मेदो दाहयिष्यसि। आन्दोलनीयं वक्षो दक्षिणस्कन्धश्च यथा

१९ तव तथा तेषां पललमपि तवैव भविष्यति। इस्रायेल्वंशः पूतवस्तूनां मध्याद् यान्युत्तोलनीयानि नैवेद्यानि परमेश्वराय निवेदयति तान्यहं तुभ्यं तव पुत्त्रेभ्यः कन्याभ्यश्च नित्यविधिना दत्तवान् परमेश्वरस्य साक्षाल् त्वया त्वद्वंशेन च सार्कं स्थिरीकृत एष नियमश्चिरस्थायी भविष्यति।

२० परमेश्वरो हारोणं जगाद तेषां भूमौ तव कोऽप्यधिकारो न स्यास्यति तेषां मध्ये तव कोऽप्यंशो न स्थास्यति, इस्रायेल्वंशमध्येऽहमेव तवांशोऽधि-

कारस्य। पश्चाहं लेविवंशीयेभ्यः स्वीयाधिकाररूपेणेस्रायेलवंशस्य सर्व्वं २१ दशमांशं दत्तवान् ते यत् सेवाकर्म्म क्रियते, तस्य समाजावासीयस्य सेवाकर्म्मणो वेतनं तदेव भविष्यति। इस्रायेल्वंशा यथा पापं भुक्त्वा २२ न म्रियेरन् तदर्थम् अद्यारभ्य ते समाजावासस्य सविधा न भवेयुः। लेवीयलोकाः समाजावासं परिचरिष्यन्ति, ते निजापराधं भोक्ष्यन्ते, २३ इस्रायेल्वंशमध्ये ते कमप्यधिकारं न प्राप्स्यन्ति एष युष्माकं पुरुष-परम्परासु नित्यविधि र्भविष्यति। किन्तु इस्रायेल्वंशाः परमेश्वरम् २४ उद्दिश्य यं दशमांशं उत्तोलनीयनैवेद्यरूपेणोत्सक्ष्यन्ति, तमहं लेवीये-भ्योऽधिकर्त्तुं दत्तवान्, अतोहं तेभ्यः कथितवान्, इस्रायेल्वंशमध्ये ते कमप्यधिकारं न प्राप्स्यन्ति।

परमेश्वरो मूससं जगाद, त्वं लेवीयेभ्यः कथय तान् इति वाक्यं वद, २५ अहं युष्मदधिकारार्थं यं दशमांशं युष्मभ्यमदां तं यदा यूयम् इस्रायेल्- २६ वंशेभ्यो ग्रहीष्यथ, तदा तस्य दशमांशस्य दशमांशम् उत्तोलनीय-नैवेद्यरूपेण परमेश्वराय निवेदयिष्यथ। युष्माकं तदुत्तोलनीयं नैवेद्यं २७ युष्मान् प्रति मर्द्दनस्थानीयशस्यवद् द्राक्षायन्त्रीयधनवच्च गणिष्यते। इत्थं २८ यूयं इस्रायेल्वंशाद् यं दशमांशं ग्रहीष्यथ तस्मात् यूयमपि परमेश्वरा-योत्तोलनीयं नैवेद्यं निवेदयिष्यथ तस्माच्च परमेश्वरीयम् उत्तोलनीय-नैवेद्यं हारोणाय याजकाय दास्यथ। युष्मभ्यं यद्यद् दीयते, तस्माद् यूयं २९ परमेश्वरीयम् उत्तोलनीयनैवेद्यम् अर्थत उत्तमात् सर्व्ववस्तुनस्तत्पवित्रांशं निवेदयिष्यथ। तस्मात् त्वं तेभ्यः कथयिष्यसि यूयं यदोत्तमवस्तुभ्य उत्तो- ३० लनीयं नैवेद्यं निवेदयिष्यथ तदा तत् लेवीयानां मर्द्दनस्थानीयधन-वद् द्राक्षायन्त्रीयधनवच्च गणिष्यते। यूयं युष्माकं परिजनाश्च तत् सर्व्वत्र ३१ भक्षिष्यथ, यस्मात् तद् युष्माकं समाजावासीयायाः परिचर्य्याया वेतनं भवति। तस्माद् उत्तमवस्तुनो नैवेद्य उत्सृष्टे तत्कारणाद् यूयं किमपि ३२ पापफलं न भोक्ष्यध्वे, इस्रायेल्वंशस्य पवित्रीकृतवस्तूनि युष्माभि र्नापवित्री करिष्यन्ते युष्माकं मृतिश्च न भविष्यति।

---

## १९ ऊनविंशोऽध्यायः।

१ रोहितगोर्भस्मना पवित्रजलकरणं ११ तद्व्यवहारमधि व्यवस्था च।

परमेश्वरो मूससं हारोणञ्च बभाषे परमेश्वर इति व्यवस्थाया विधिम् १ आदिशत् त्वम् इस्रायेल्वंशान् ब्रूहि ते निर्दोषां निष्कलङ्कां अनूढयुगां २

३ रोहितवर्णाञ्च गां तवान्तिकम् आनयन्तु। यूयं तां गाम् इलियासर-याजकाय दास्यथ स तां शिविराद् बहिरानीय स्वसम्मुखे छेदयि-
४ ष्यति। इलियासरयाजकः स्वाङ्गुल्या तस्याः किञ्चिद् रुधिरं गृहीत्वा
५ समाजावासस्य सम्मुखे तत् सप्तकृत्वः प्रक्षेप्स्यति। तस्य दृष्टौ सा गौ दाहिष्यते ऽर्थात् तस्या गोमयेन सार्कं चर्म्ममांसरुधिराणि दाहिष्यन्ते।
६ याजक एरस्काष्ठं एसोवतृणं सिन्दूरवर्णं रोम चादाय गोदाहाग्निमध्ये
७ निक्षेप्स्यति। ततो याजकः स्ववसनं धौत्वा कायं जलेन स्नापयिष्यति ततः
८ शिविरं प्रवेक्ष्यति तथापि याजकः सन्ध्यां यावद् अशुचि र्भविष्यति। यो नरस्तां दाहयिष्यति सोपि स्ववसनं तोयेन क्षालयिष्यति कायं जलेन
९ स्नापयिष्यति च तथापि सन्ध्यां यावद् अशुचि र्भविष्यति। कश्चन शुचि-स्तद् गोभस्म संगृह्य शिविरबहिस्थशुचिस्थाने निधास्यति, शुचित्वतो-यार्थं तद् इस्रायेल्वंशीयसमाजाय स्थापिष्यते तत् पापपरिष्कृद्
१० भवति। तद्गोभस्मसंग्राहको नरः स्ववसनं क्षालयिष्यति तथापि सन्ध्यां यावद् अशुचि र्भविष्यति। इस्रायेल्वंशं प्रति तन्मध्ये प्रवासि-विदेशिनः प्रति चैष नित्यविधि र्भविष्यति।

११ यः कश्चिन् मनुष्यस्य कुणपं स्पृशति स सप्त दिनान्यशुचि र्भविष्यति।
१२ स तृतीयदिने तज्जलेन स्वं परिष्करिष्यति सप्तमेऽह्नि स शुचि र्भविष्यति किन्तु यदि तृतीयेऽह्नि स्वं न परिष्करिष्यति तर्हि स सप्तमेऽह्नि शुचि र्न
१३ भविष्यति। यः कश्चन मानुषस्य कुणपं स्पृष्ट्वा स्वं न परिष्करोति स परमेशस्यावासम् अशुचिं करोति स इस्रायेल्वंशाद् उच्छेत्स्यते, यस्मात् तदुपरि परिष्कारि तोयं न क्षिप्तं तस्मात् सोऽशुचि र्भविष्यति तद-
१४ शुचित्वं तस्मिन् चिरं स्थास्यति। दूष्यमध्ये मानुषे मृते तदीयेयं व्यवस्था, तद्दूष्यं प्रविशन्तो दूष्यमध्यवर्त्तिनश्च सर्व्वे लोकाः सप्त
१५ दिनान्यशुचयो भविष्यन्ति। आच्छादनबन्धनयो राहित्यान्मुक्तं सर्व्व-
१६ द्रव्यमप्यशुचि भविष्यति। यः कश्चन क्षेत्रे खड्गेन हतस्य वा मृतस्य नरस्य कुणपं वा नरास्थि वा कुणपाधारं स्पृशति स सप्त दिनान्यशुचि
१७ र्भविष्यति। अशुचेर्जनस्य कृते तस्य दग्धबलेः किञ्चिद् भस्म गृहीत्वा
१८ पात्रे निधाय तदुपरि प्रस्रवणतोयं दातव्यं। ततः शुचिरेको नर एसो-वतृणं गृहीत्वा तोये मज्जयित्वा तद्दूष्योपरि तत्रस्थसर्व्वपात्रोपरि सर्व्व-लोकोपरि चास्थि वा हतं वा मृतं वा श्मशानं स्पृशतो जनस्योपरि च तत्
१९ प्रक्षेप्स्यति। इत्थं तृतीयदिने सप्तमदिने चाशुचेरुपरि शुचि लोकेन तस्मिन्

प्रक्षिप्ते सति स सप्तमेऽह्नि स्वं परिष्करिष्यति स्ववसनं क्षालयिष्यति तोये स्नास्यति च तेन सन्ध्यायां शुचि र्भविष्यति। किन्तु यो नरोऽशुचि र्भूत्वा २० स्वं न परिष्करोति स समाजमध्याद् उच्छेत्स्यते यतः स परमेश्वरस्य पूतं स्थानम् अशुचि कृतवान् यदुपरि शुचिकृत् तोयं न क्षिप्तं स एवाशुचिः। तान् प्रति नित्यविधिरयं भविष्यति यः शुचिकृत् तोयं प्रक्षिपति स २१ स्ववसनं क्षालयिष्यति, यश्च शुचिकृत् तोयं स्पृशति सोपि सन्ध्यां यावद् अशुचि र्भविष्यति। अशुचिजनेन यत् स्पृश्यते तदशुचि भविष्यति, यः २२ प्राणी तत् स्पृशति सोपि सन्ध्यां यावद् अशुचि र्भविष्यति।

---

## २० विंशोऽध्यायः।

१ मरियमो मृत्युः २ इस्रायेल्वंशस्य वाग्युद्धं ७ मूसोदण्डेनाहननात् शैलात् तोयोद्गमः मूसोहारोणौ प्रति परमेश्वरस्यासन्तुष्टिः १४ इदोमदेशेन यातुं मूसः प्रार्थना २२ होरपर्व्वते हारोणस्य पुत्राय स्वपददानं मृतिश्च।

अनन्तरं प्रथमे मासीस्रायेल्वंशीये सर्व्वसमाजे सीन्प्रान्तरं गत- १ वति लोकाः कादेशे न्यवसन् तत्रैव मरियमि मृतायां तत्श्मशानं बभूव।

तत्र समाजार्थं तोयं नासीत् तस्मात् लोका मूसोहारोणयोः प्रतिकूलं २ मिलिताः। मूससा साकं वाग्युद्धं कुर्व्वन्तस्ते कथयामासुः, हा, परमेश्वरस्य ३ सम्मुखे अस्मद्भ्रातॄणां मरणसमये यद्यस्माकं मृतिरभविष्यत्। यूयं अस्मा- ४ कम् अस्मत्पशूनाञ्च मरणार्थं कुतः परमेश्वरस्य समाजम् एतत्प्रान्तरम् आनीतवन्तौ? एतत् कुस्थानम् आनेतुम् अस्मान् मिसरः कुतो वहिरान- ५ यतं? इदं वीजवपनस्योडुम्बरद्राक्षादाडिमानाञ्च न स्थानम् अत्र पानार्हं तोयमपि नास्ति। ततो मूसोहारोणौ समाजस्य सम्मुखात् समाजावास- ६ द्वारं गत्वा न्युब्जौ पतितौ तेन तयोः समीपे परमेश्वरस्य तेजः प्राकाशत।

अनन्तरं परमेश्वरो मूससं कथितवान्, त्वं तव भ्राता हारोणश्च यष्टिं ७ गृहीत्वा समाजञ्च मेलयित्वा तद्दृष्टिगोचर एतं शैलं भाषेथां, तस्मात् ८ स स्वीयतोयानि प्रस्रावयिष्यति। इत्थं त्वया शैलाज्जले निःसारिते समा- जीयास्तत्पशवश्च तत् पाययिष्यन्ते। ततो लब्धाज्ञानुसारतो मूससा परमे- ९ श्वरस्य सम्मुखाद् यष्ट्यां गृहीतायां मूसोहारोणौ शैलान्तिके समाजं मेल- १० यामासतुः। अनन्तरं मूसास्तान् जगाद, हे कलहकारिणो निशामयत यूयं, एतच्छैलमध्याद् युष्मदर्थं सलिलमावाभ्यां किं निःसारयितव्यं?

११ अनन्तरम् उत्तोलितकरेण मूससा शैले द्विकृत्वो यष्ट्याहते बहूनितोयानि प्रास्रवन्, ततः समाजस्तत्पशवश्च पपुः।

१२ परमेश्वरो मूससं हारोणञ्च बभाषे युवां इस्रायेल्वंशस्य समक्षं मां सम्मानितुं मम वाचं न प्रत्यैतं, तस्माद् अहं एतस्मै समाजाय यं देशं
१३ दास्यामि तं देशं स न युवाभ्यां प्रवेशयिष्यते। तानि मिरीवाया (विवाद-स्थानस्य) तोयानि यत इस्रायेल्वंशाः परमेश्वरेण समं व्यवदन्त स च तेषां मध्ये सम्मानं लब्धवान्।

१४ अनन्तरं मूसाः कादेशाद् इदोमीयराजस्य समीपं दूतैः कथामिमां प्रेषयामास तव भ्रातृलोका इस्रायेल्वंशा इमां वाचं कथयन्ति ये क्लेशा
१५ अस्मान् प्रत्यघटन्त तान् त्वं वेत्सि। अस्माकं पितृषु मिसर्देशं गतेषु वयं बहुदिनानि मिसर्देशे न्यवसाम, ततो मिस्रीयलोका अस्मान् अस्मत्-
१६ पितृंश्च प्रति कुत्सितं व्यवाहरन्। तस्मात् परमेश्वरसन्निधौ प्रार्थितवताम् अस्माकं शब्दं स श्रुत्वा स्वदूतं प्रेष्यास्मान् मिसरो वहिरानयत्,
१७ इदानीं पश्य वयं तव देशीयसीमास्थकादेशनगरे तिष्ठामः। अधुना त्वं स्वदेशमध्येनास्मान् यातुम् अनुजानीहीति वयं विनयामहे, वयं तव शस्यक्षेत्रेण द्राक्षाक्षेत्रेण वा न यास्यामः प्रहितोयञ्च न पास्यामः केवलं राजमार्गेण यास्यामः, यावत् तव सीमां नोत्तरानस्तावद्
१८ दक्षिणं वामं वा न परावर्त्तिष्यामहे। तत इदोमीयो राजा तानवदत्, युष्माभि र्मम देशेन न गन्तव्यं, गमने कृते युष्माकं विरुद्धम् अहं-
१९ मसिमादाय यास्यामि। तत इस्रायेल्वंशाः प्रत्यवदन् वयं केवलं राजमार्गेण यास्यामः, अस्माभिरस्मत्पशुभिर्वा यदि युष्माकं पानीयं पीयते तर्हि तन्मूल्यं वयं दास्यामः केवलं पादवद् वयं यास्यामः किमप्यन्यत्
२० न करिष्यामः। तदा स प्रत्यूचे युष्माभि र्न गन्तव्यं, तत इदोमीयो राजा
२१ बहुलोकानादाय महाबलेन तेषां प्रतिकूलं वहिरागतवान्। इत्थम् इदोमीयराजेन स्वसीम्ना यातुं वारिता इस्रायेल्वंशास्तस्य समीपात् परावर्त्तिरे।

२२ अनन्तरम् इस्रायेल्वंशीयो निखिलसमाजः कादेशात् प्रस्थाय होरा-
२३ द्रिम् उपतस्थे। तदानीम् इदोमदेशस्य सीमान्तिकस्थे होरपर्व्वते
२४ परमेश्वरो मूससं हारोणञ्च जगाद, हारोणः स्वपितृलोकैः समं संग्रा-हिष्यते यं देशम् अहम् इस्रायेल्वंशाय दास्यामि तं देशं स न प्रवेक्ष्यति,
२५ यस्मात् युवां मिरीवाम्बुनो निकटे मदाज्ञां लङ्घितवन्तौ। त्वं हारोणं

तदपत्यम् इलियासरञ्च गृहीत्वा होराद्रिश्टङ्गम् आरोहय। हारोणं २६ स्वीयवसनानि सन्त्याज्य तत्सुतम् इलियासरं तानि परिधापय, पश्चाद् हारोणस्तत्र स्थाने मृत्वा स्वपितृलोकैः समं संग्राहिष्यते। ततो मूसाः २७ परमेश्वराज्ञनुसारात् सर्व्वं कर्म्म कृतवान् ते सर्व्वसमाजीयानां समक्षं होराद्रिम् आरुरुहुः। मूसा हारोणं स्वीयवसनानि सन्त्याज्य तत्सुतम् २८ इलियासरं तानि परिधापयामास ततो हारोणस्तत्र गिरेः शृङ्गे ममार, ततो मूसा इलियासरश्च पर्व्वताद् अवारोहतां। हारोणो मृत इति २९ ज्ञात्वा सर्व्वे समाजीया अर्थाद् इस्रायेल्वंशाः सर्व्वे हारोणस्य कृते त्रिंशद्-दिनानि यावत् शुशुचुः।

---

## २१ एकविंशोऽध्यायः।

१ हर्म्मायां किनानीयानां मारणं ४ लोकानां वाग्युद्धकारणाद् ज्वालकसर्पप्रेरणं ७ पित्तलीयसर्पं प्रति दृष्टिकरणात् तेषां स्वास्थ्यं १० इस्रायेल्लोकानां यात्रा २१ सीहोन-राजस्य पराजितत्वं ३३ ओगराजस्य पराजितत्वञ्च।

इस्रायेल्वंशा अथारीममार्गेणागच्छन्ति इति श्रुत्वा दक्षिणप्रदेशवासी १ किनानीयो ऽरादस्य राजा तेषां प्रतिकूलं युयोध तेषां कतिपयान् लोकान् धृत्वा बन्धीचकार च। तत इस्रायेल्वंशाः परमेश्वरम् उद्दिश्य २ प्रतिश्रुत्य कथयामासुः, यदि त्वम् एतान् अस्माकं करेषु समर्पयसि तर्हि वयं तेषां नगराणि समूलं उच्छेत्स्यामः। ततः परमेश्वर इस्रायेल्वंशी- ३ यानां प्रार्थनायां मनो निधाय तान् किनानीयान् तेषां करेषु समर्प-यामास, तत इस्रायेल्वंशास्तान् तेषां पुराणि च समूलम् उदच्छिनत् तस्य स्थानस्य नाम च हर्म्मां (समूलोच्छिन्नामिति) चकार।

अपरं तेषु होरगिरेर् इदोमदेशं परिवेष्टितुं सुफार्णवगामिपथेन ४ प्रस्थितेषु पथश्रमात् लोकानां प्राणा व्यरज्यन्त। ततो लोका ईश्वरस्य ५ मूससश्च प्रतिकूलं वक्तुमारेभिरे यूयम् अस्मान् प्रान्तरे मारयितुं मिसर्देशात् कुतो वहिरानयत? पश्यतास्माकम् यूपः पानीयञ्च न विद्येते इदं लघ्वन्नम् अस्माकं प्राणेभ्यो न रोचते। तदानीं परमेश्वरो ६ जनानां मध्यं ज्वालयितुन् भुजगान् प्रेषयामास तै लोकेषु दष्टेषु इस्रायेल्वंशस्य बहवो लोका अम्रियन्त।

अतो लोका मूससोऽन्तिकम् आगत्य बभाषिरे वयं परमेश्वरस्य तव ७ च प्रातिकूल्यगदनेन कलुषम् अकार्ष्म, परमेश्वरोऽस्माकं निकटाद्

भुजगान् एतान् नयतु तस्मिन् त्वमिदं प्रार्थयस्व, ततः स लोकानां कृते
८ प्रार्थयाञ्चक्रे। तदा परमेश्वरो मूससं गदितवान्, त्वम् एकं ज्वालयिता-
रम् अहिं निर्म्माय केतोरुपरि स्थापय, तस्मात् सर्पदष्टो यः कश्चित्
९ तं प्रति निरीक्षिष्यते, स जीविष्यति। तदा मूसाः पित्तलस्य पृदाकुं
निर्म्माय केतोरग्रे स्थापितवान्, ततः सर्पदष्टो यः कश्चित् तं पित्तलीयं
विषधरं प्रति निरैक्षत सोऽजीवत्।

१० इस्रायेल्वंशा यात्रां कृत्वा ओबोते शिबिरं स्थापयामासुः। ओबोतात्
११ यात्रां कृत्वा रव्युदयदिशि मोयाबस्य सम्मुखस्थे प्रान्तरे इयी-अबारीमि
१२ शिबिरं स्थापयामासुः। तस्माद् यात्रां कृत्वा ते सेरदोपत्यकायां शिबिरं
१३ स्थापयाञ्चक्रुः। तस्मात् यात्रां कृत्वा इमोरीयाणां सीमानिर्गतप्रान्तर-
स्थिते अर्णोनपारे शिबिरं स्थापयामासुः, यस्माद् अर्णोननदो मोया-
१४ बीयानां इमोरीयाणाञ्च मध्यवर्त्ती मोयाबदेशस्य सीमासीत्। तेन
परमेश्वरस्य युद्धपुस्तक इदं लिखितमास्ते यथा।

चक्रवातेन वाहेवम् अर्णोन्स्रोतस्तटानि च।
१५ आराख्यनगरीगन्त्री मोयाबस्य सीमास्थिता।
निम्ना भूः स्रोतसा सिक्ता तेनैतानि जितानि हि॥

१६ तस्मात् ते बेराख्यं कूपस्थानं समागताः। त्वम् अत्र लोकान् संगृहा-
णाहं तेभ्यस्तोयं दास्यामीति वाचं परमेश्वरो यत्र मूससम् अवोचत्
१७ तदिदं बेराख्यं स्थानं। तदानीम् इस्रायेल्वंशा इदं गीतं जगुः,

त्वं समुत्तिष्ठ हे कूप यूयं तमधि गायत।
१८ अध्यक्षैः स प्रहिः खातः कुलीनैः स्वीययष्टिभिः।
व्यवस्थापिन आदेशात् स एव पर्य्यखन्यत।

१९ ते प्रान्तरात् मत्तानां मत्तानातो नह्लीयेलं नह्लीयेलाद् वामोतं,
२० वामोतात् मोयाबदेशान्तःपातिन्या निम्नभूम्या यिशीमोनस्याभिमुखपि-
स्गागिरेः शृङ्गं जग्मुः।

२१ इस्रायेल्वंशा इमोरीयाणां भूपतेः सीहोनस्य समीपं दूतं प्रहित्य
२२ वच इदं जगदुः, त्वं स्वदेशेनास्मान् यातुम् अनुजानीहि वयं शस्यक्षेत्रं
द्राक्षाक्षेत्रं वा न प्रवेक्ष्यामः प्रहेः पानीयं न पास्यामः यावत् तव
२३ सीमां नातिक्राम्यामस्तावत् राजमार्गेण यास्यामः। किन्तु सीहोनः
स्वसीमया इस्रायेल्वंशं यातुं नानुज्ञाय स्वसैन्यं गृहीत्वेस्रायेल्वंशेन साकं
योद्धुं प्रान्तरं निरगमत्, यहसम् उपस्थायेस्रायेल्वंशेन समं युयोध च।

तत इस्रायेल्वंशीयाः खड्गधारैस्तान् ताडयित्वार्णोनमारभ्य यब्बोकं यावद् २४ अर्थाद् अम्मोनवंशीयानां स्थानं यावत् तस्य देशम् अधिचक्रुः, यस्माद् अम्मोनवंशीयानां सीमा गाढासीत्। इत्थम् इस्रायेल्वंशास्तानि २५ सर्व्वाणि पुराणि करतलीकृत्य इमोरीयाणां सर्व्वेषु पुरेषु हिष्वोनि तन्निकटस्थ सर्व्वेषु पुरेषु च न्यवास। तद् हिष्वोन् इमोरीयाणां राज्ञः २६ सीहोनस्य नगरमासीत्, स सीहोनो मोयाबीयस्य पूर्व्वराजस्य प्रतिकूलं युद्धा अर्णोनं यावत् तस्य सर्व्वदेशं तस्य कराभ्याम् आहृतवान्। तस्मात् कवयः कथयन्ति, यथा। २७

आयात हिष्वोनं यूयं सीहोनो यत् पुरन्तु तत्।
सुनिर्माय पुनर्व्वारं वयमासादयामहे।
हिष्वोनोऽग्निर्हि निर्याय सीहोनो नगरात् शिखा। २८
मोयाबीयार्पुरं चार्णोन्तीरस्थश्टगुमादहत्।
हे मोयाव् तव सन्तापः किमोश्दासा व्यनश्यत। २९
इमोरिभूपसीहोनः करयोः स पलायितान्।
सुतान् समर्पयामास तथा बन्दीकृताः सुताः।
विनष्टं दीवनं यावद् हिष्वोनं नः शराहतैः। ३०
नोफहं मेदिबास्थं ते यावच्छिन्नाश्च सर्व्वशः।

इत्थम् इस्रायेल्वंश इमोरीयदेशे वस्तुम् आरेभे। मूससा यासेरनगरं ३१ निरीक्षितुं लोकेषु प्रहितेषु तैस्तदीयानि सर्व्वनगराणि वशीकृतानि ३२ तत्रस्था इमोरीयलोकाश्च दूरीकृताः।

पश्चात् ते परावृत्य बाशनदेशस्य पथा जग्मुस्ततो बाशनीयः भूपतिर् ३३ ओगस्तदीयाः सर्व्वे लोकाश्च बहिरागत्य तेषां प्रतिकूलं योद्धुम् इद्रियिं जग्मुः। तदा परमेश्वरो मूससम् उवाच त्वम् एतस्मान् मा भैषीः, यस्माद् ३४ स तत्सर्व्वप्रजा देशश्च तव करे मया समर्पितः, त्वं हिष्वोनवासिनम् इमोरीयराजं सीहोनं प्रति यथा कृतवान् एनं प्रत्यपि तथा करिष्यसि। ततो यावत् तेषां कोप्यवशिष्टो नातिष्ठत् तावत् स तस्य पुत्रा ३५ लोकाश्च तैस्ताडितास्तस्य देशोऽप्यधिकृतश्च।

---

## २२ द्वाविंशोऽध्यायः।

१ मोयाबस्य समीपम् इस्रायेल्वंशस्य यानं २ बिलियमं प्रति बालाकस्य दूतप्रेषणं १५

द्विर्दूतप्रेषणं विलियमस्य यात्रा २२ तस्य प्रत्यूहकरणार्थं परमेश्वरस्य दूतस्यागमनं वालाकेन विलियमस्यातिथ्यञ्च।

१ पश्चाद् इस्रायेल्वंशा यात्रां कृत्वा यिरीहोः समीपे यर्द्दनस्य पूर्व्व-
पारे मोयावीयप्रान्तरे शिविरं स्थापयामासुः।

२ इस्रायेल्वंश इमोरीयान् प्रति यद्यद् व्यवहृतवान् तत्सिप्पोरस्य पुत्रो
३ वालाको ददर्श। तेषां लोकबाहुल्यात् मोयावीयमहीपतिरत्यन्तां भी-
४ ततां प्राप्त इस्रायेल्वंशात् महद् उद्विवेजे च। तस्मात् मोयावीयो भूप-
तिर्मिदियनीयमुख्यान् अवदत्, क्षेत्रीयतृणानि यथा गवा ग्रस्यन्ते, तथा-
स्मच्चतुष्पार्श्वीयानि सर्व्वाणि लोकनिवहेनानेन ग्रसिष्यन्ते। तदा सि-
५ प्पोरसुतो वालाको मोयावीयानां राजासीत्। अतः स वियोरसुतस्य
विलियमस्य समक्षं तज्ज्ञातेर्जन्मभूमिं फरातनदीतटस्थं पिथोरनगरं
दूतान् प्रहित्य तम् इमाम् आह्वानवाचं जगाद, पश्य यो लोकनिवहो
मिसरदेशाद् वहिरागमत्, सो ऽवनीमण्डलम् आच्छाद्य मम सम्मुखे
६ विद्यते। अहं निवेदयामि इमे मत्तो बलवन्तस्तस्मात् त्वमिदानीम्
एत्य मत्कृत एतान् जनान् अभिशपस्व, तेन जयिना मया तान् देशाद्
दूरयितुं शक्यते, यतस्त्वं यस्मै आशिषं ददासि स एवाशीःप्राप्तः, यस्मै
७ च त्वं शापं ददासि सएवाभिशप्त इत्यहं जानामि। पश्चात् मोया-
वीया मिदियनीयाश्च मुख्यजनाः पारितोषिकं करे धृत्वा प्रतस्थिरे,
८ विलियमसमीपम् उपस्थाय वालाकस्य वाचं तस्मै कथयामासुः। ततः
स तान् प्रत्यवोचत् यूयम् अद्य रजन्याम् अत्र स्थाने तिष्ठत, परमेश्वरो
९ मां यद् आदेक्ष्यति तदहं युष्मान् वक्ष्यामि। तदा मोयावीया अध्यक्षा
१० विलियमेन साकं प्रावसन्। ईश्वरो विलियमम् उपस्थाय तमवदत्
त्वत्सहिता इमे लोकाः के? तदा विलियम ईश्वरं गदितवान् मोया-
वीयराजः सिप्पोरसुतो वालाक इति कथयित्वा मम समीपं लोकान्
११ प्रैरयत्, पश्य यो जननिवहो मिसर्देशाद् वहिरागच्छत् तेन देश
आच्छाद्यते, तस्माद् इदानीं त्वम् आगत्य मत्कृते तान् लोकान् शपस्व,
१२ तेनाहं तान् पराजित्य दूरयितुं शक्ष्यामि। तत ईश्वरो विलियमं
बभाषे, त्वं तैः समं मा गच्छ तान् जनान् मा शपस्व च, यस्मात्त आशीः-
१३ पात्राणि। ततो विलियमः प्रातरुत्थाय वालाकस्याध्यक्षान् अवादीत्,
यूयं स्वदेशं यात, यस्माद् युष्माभिः साकं मम गमनं परमेश्वरस्य
१४ न सम्मतं। ततो मोयावीया अध्यक्षा उत्थाय वालाकस्य समीपं

गत्वा प्रावोचन् अस्माभिः साकम् आगन्तुं विलियमेन न स्वीकृतं।

ततो वालाकस्तेभ्योऽधिकान् सम्मानितांश्चान्यान् अध्यक्षान् प्रेरयामास। ते विलियमसमीपम् आगत्य तमवोचन्, सिप्पोरस्य सुतो वालाक इति वाचं वक्ति, निवेदयाम्यहं मम समीपम् आगन्तुं तव कश्चन विघ्नो मा भवतु। अहं त्वाम् अतीव सम्मानार्हं करिष्यामि यद्यदाज्ञापयिष्यसि तदेव करिष्यामि च, अतोऽहं विनये त्वमागत्य लोकानेतान् मत्कृते शपस्व। ततो विलियमो वालाकस्य दासान् प्रत्यवदत्, यद्यपि वालाको रूप्यैः स्वर्णैश्च पूर्णं निजवेश्म मह्यं दद्यात् तथापि क्षुद्रेण महता वा कर्म्मणा निजप्रभोः परमेश्वरस्य निदेशं लङ्घितुं मया न शक्यते। तेन निवेदयाम्यहं यूयमप्यत्र स्थाने निशां यापयत, परमेश्वरो मह्यं पुनर्यत् कथयिष्यति तदहं युष्मान् ज्ञापयिष्यामि। तत ईश्वरो रजन्यां विलियमसमीपम् उपस्थाय तं गदितवान्, ते जना यदि त्वामाह्वातुम् आगतवन्तस्तर्हि त्वयोत्थाय तैः साकं यातुं शक्यते, किन्तु मया तुभ्यं यत् कथयिष्यते तदेव त्वं करिष्यसि। ततो विलियमः प्रातरुत्थाय स्वगर्द्दभीं सज्जयित्वा मोयावीयाध्यक्षगणेन साकं गतवान्।

अनन्तरं तस्य गमनाद् ईश्वरस्य क्रोधे प्रज्वलिते परमेश्वरस्य दूतस्तस्य प्रतिकूलः सन् रिपुरिव तस्य वर्त्मनि तस्थौ, तदा स्वगर्द्दभ्यारूढः स द्वाभ्यां दासाभ्यां समं याति। तदा गर्द्दभी वर्त्ममध्ये दण्डायमानं निष्कोषासिकरं परमेश्वरस्य दूतं विलोक्य वर्त्मनो वहिर्भूय क्षेत्रं जगाम, ततो मार्गमानेतुं विलियमस्तां गर्द्दभीं प्रजहार। अपरं परमेश्वरस्य दूत उभयत्र प्राचीरयुक्ते द्राक्षाक्षेत्रस्य सङ्कीर्णमार्गे तस्थौ। ततो गर्द्दभ्या परमेश्वरस्य दूतं विलोक्य प्राचीरे स्वगात्रं घृष्टं, तेन प्राचीरे विलियमस्य पादघर्षणे जाते स पुनस्ताम् आहतवान्। परमेश्वरस्य दूतः पुनः किञ्चिदग्रं गत्वा दक्षिणे वामे वा परावर्त्तनाय यत्र स्थानं नास्ति तादृशे सङ्कुचिते वर्त्मनि स्थितवान्। तदा गर्द्दभी परमेश्वरस्य दूतं दृष्ट्वा विलियमस्य नीचभूमौ पपात, तेन विलियमस्य क्रोधे प्रज्वलिते स यष्ट्या गर्द्दभीम् आजघान। तदा परमेश्वरेण गर्द्दभ्यै वाक्सामर्थ्ये दत्ते सा विलियमं जगाद मया तव किम् अपराद्धं यत्त्वं मां त्रिः प्रहृतवान्? विलियमो गर्द्दभीं गदितवान् त्वं माम् अवजानासि, मम करे यद्यसिरस्थास्यत् तर्हि त्वाम् अधुनैवाहनिष्यम्। पश्चाद् गर्द्दभी विलियमं प्रोक्तवती आ जन्म त्वम् अद्य यावद् यदुपरि

समारोहसि तवाहं सा गर्द्दभी नास्मि किं? त्वां प्रतीदृग् व्यवहरणं
३१ किं मम निसर्गः? ततः स गदितवान्, नहि। तदा परमेश्वरेण
विलियमस्य नेत्रयोः प्रसन्नीकृतयोः स वर्त्ममध्ये तिष्ठन्तं निष्कोषासि-
३२ करं परमेश्वरस्य दूतं ददर्श, ततः स तं प्रणम्य न्युब्जः पपात। तदा
परमेश्वरस्य दूतस्तं जगाद, त्वं निजगर्द्दभीं कुतो वारत्रयं प्राहरः?
पश्याहं तव रिपुवद् वहिरागमं यतो मम साक्षात् त्वया कुमार्गे
३३ गम्यते। गर्द्दभी मां विलोक्येदं वारत्रयं मम सम्मुखाद् विमुखाभवत्
यदि सा मम सम्मुखाद् विमुखा नाभविष्यत् तर्हि मया त्वमेवाहनिष्यथाः
३४ सा चारक्षिष्यत। तदा विलियमः परमेश्वरस्य दूतम् अवोचत्, मया-
पराद्धं, त्वं मम विपरीतं वर्त्मनि तिष्ठसि तन्मया न ज्ञातं, किन्त्वधुना
३५ यदि त्वम् असन्तुष्टो भवेस्तर्ह्यहं परावृत्य यामि। तदा परमेश्वरस्य
दूतो विलियमं बभाषे, त्वमेतैः साकं यातुं शक्नोषि, किन्त्वहं यां वाचं
तुभ्यं कथयिष्यामि त्वं तामेव कथयिष्यसि। ततो विलियमो वालाकस्या-
ध्यक्षैः साकं जगाम।

३६ पश्चाद् वालाको विलियमस्यागमनवार्त्तां श्रुत्वा देशस्य सीमायाः
प्रान्तस्थिते ऽर्णानीयप्रदेशस्थे मोयावीयनगरे तं साक्षात् कर्त्तुं गतवान्।
३७ तदा वालाको विलियमं गदितवान्, अहं त्वाम् आह्वातुम् अतीव
यत्नेन किं लोकान् न प्रेषितवान्? तस्मात् त्वं मम समीपं कुतो नागतोऽसि?
३८ त्वां सम्मानार्हं कर्त्तुं किं मया न शक्यते? ततो विलियमो वालाकं
प्रत्यवादीत् पश्याधुनापि तव समीपम् आगतेन मया किं किमपि वक्तुं
३९ शक्यते? ईश्वरो मदास्ये यां वाचं दास्यति सैव मया वक्तव्या। ततो
४० विलियमो वालाकेन समं गत्वा किरियोत-हुषोतम् उपतस्थे। वालाको
गोमेषान् छेदयित्वा विलियमस्य तत्सङ्गिनाम् अध्यक्षाणाञ्च समीपं
प्रेषयामास।

## २३ त्रयोविंशोऽध्यायः।

१ वालाकस्य वलिदानं विलियमस्य प्रथमा कथा १४ अन्यस्थाने वलिदानं विलिय-
मस्य द्वितीया कथा २५ वालाकस्यासन्तोषः २७ अन्यस्थानं गत्वा तस्य वलिदानञ्च।

१ प्रत्यूषे वालाको विलियमं गृहीत्वा लोकानां परिसीमां दर्शयितुं तं
वाल उच्चस्थानम् आरोहयाञ्चकार तदा विलियमो वालाकं जगाद
त्वम् अत्र स्थाने मत्कृते सप्त वेदी निर्म्मापय, सप्त गोवत्सान् सप्त मेषां-

आसादय। ततो वालाको विलियमस्य वाक्यानुसारात् तथैव चकार, १
तदा वालाकविलियमावेकैकस्यां वेद्यां एकैकं गोवत्सं एकैकं मेषम्
उत्ससृजतुः। ततो विलियमो वालाकं गदितवान् त्वं निजहोमस्य २
सन्निधौ तिष्ठ, अहं यामि चेत् परमेश्वरो मां साक्षात् करिष्यति,
स मां यद् ज्ञापयिष्यति तदहं तुभ्यं कथयिष्यामि। ततः स उच्चस्थानं
गतः। तदा ईश्वरेण विलियमे साक्षात्कृते स तं बभाषे, अहं सप्त ४
वेदीर्निर्म्मितवान् एकैकस्यां वेद्याम् एकैकं गोवत्सं एकैकं मेषञ्च
समुत्सृष्टवान्। तदा परमेश्वरो विलियमस्यास्ये वाचं दत्त्वा तस्मै ५
कथितवान्, त्वं वालाकस्य समीपं परावृत्य गत्वा तमिमां वाचं वद। ततः ६
स तत्समीपं परावृत्य गतवान् तदा वालाको मोयावीया अध्यक्षाश्च
सर्व्वे होमस्य सन्निधौ दण्डायमाना आसन्। ततो विलियमो वाणीम् ७
आरभ्य कथयामास।

> आनयन् मामरामाद्धि प्राचीस्थगिरिवर्त्तिनः।
> मोयावीयन्टपो वालाक् निगद्य वचनन्त्विदं।
> 'मदर्थं त्वं समागच्छ शापं देहि च याकुवे।
> एत्रीश्रायेल्वंशजेभ्यो ऽभिशापं परिदेहि च।'
> नाशपदीश्वरो यन्तु शप्स्यते स कथं मया। ८
> न शप्तो यः परेशेन शप्स्यते स कथं मया।
> तमहं परिपश्यामि शिखरात् पर्व्वतस्य हि। ९
> शिलोच्चयान्मया तस्य दर्शनं परिलभ्यते।
> पश्य लोकसमूहोयम् स्वातन्त्र्येण निवत्स्यति।
> अन्यजातीयलोकानां मध्ये न गणयिष्यते।
> याकुवो हि रजःसङ्ख्यां कर्त्तुं कः पारयिष्यति। १०
> इस्रायेलश्चतुर्थांशमेकं को गणयिष्यति।
> धार्म्मिकस्य यथा मृत्युस्तथा मृत्युर्भवेन्मम।
> यादृशी चरमावस्था तस्यास्तु तादृशी मम॥

ततो वालाको विलियमाय कथितवान् त्वया मां प्रति किमिदं कृतं? ११
मम रिपुगणं शप्तुं त्वं मयानीतः, किन्तु पश्य त्वं तान् सर्व्वथाशिषं
भाषितवान्। ततः स प्रतिजगाद, परमेश्वरो ममास्ये यां वाचं दत्तवान् १२
मनोनिधाय तामेव वदितुं किं मम नोचितं? वालाको गदितवान् १३
अहं निवेदयामि, त्वं यस्मात् स्थानात् तान् द्रष्टुं प्राप्स्यसि, किन्तु

तेषां सर्व्वं द्रष्टुं न प्राप्य प्रान्तभागमात्रं द्रष्टुं प्राप्स्यसि तादृशम् अन्य-स्थानं मया सहागत्य तत्र स्थित्वा मत्कृते तान् शपस्व।

१४ ततो वालाकस्तं पिष्गागिरेः पृष्ठस्थितं प्रहरिक्षेत्रं नीत्वा तत्र सप्त वेदी निर्म्ममे, एकैकवेद्याम् एकैकं गोवत्सं एकैकं मेषञ्च समुत्ससर्ज।

१५ स वालाकं गदितवान् अहं यावत् तत्र स्थान ईश्वरं साक्षात् करोमि

१६ तावत् त्वमत्र स्वहोमस्थाने तिष्ठ। पश्चात् परमेश्वरो विलियमं साक्षात्-कृत्य तदास्ये वाचं दत्त्वा तमवादीत् त्वं वालाकसमीपं पुनर्गत्वा वाचमेतां

१७ ब्रूहि। ततः स तस्य समीपम् उपस्थितवान् तदा वालाको मोया-वीयाधिपतिभिः सार्कं स्वीयहोमस्य समीपे स्थितवान्, तदा वालाकस्तं

१८ पप्रच्छ परमेश्वरः किमुक्तवान्? ततो विलियमो वाणीम् आरभ्य जगाद,

हे वालाक् त्वं समुत्थाय श्रवणं कुरु साम्प्रतं।
सिप्पोरस्तनय त्वं मे वाक्ये मनो निधेहि च।

१९ न भवेदीश्वरस्तुल्यो मिथ्याभाषिनरस्य हि।
पश्चात्तापिमनुष्यस्य सन्ततेः सदृशो नहि।
उक्ता किं नहि कर्त्ता स प्रोच्य साधयिता नहि।

२० पश्याहमाशिषं दातुं निदेशं परिलब्धवान्।
सोप्याशिषं ददौ तस्यान्यथा कर्त्तुं क्षमे नहि।

२१ नो पर्य्यदृश्यते तेन किल्बिषं याकुबोऽन्वये।
इस्रायेलन्वये नैव दृश्यते दुःखनीयता।
आस्ते तेषां सहायो हि प्रभुस्तेषां परेश्वरः।
जयध्वनिश्च नृपतेस्तेषां मध्ये हि वर्त्तते।

२२ ईश्वरो मिसरो राष्ट्रात् तान् वहिष्कृत्य चानयत्।
वलवन्तो हि ते सर्व्वे मनुजा गण्डका इव।

२३ अतो हि याकुवो वंशे मायाशक्ति र्न विद्यते।
इस्रायेलीयवंशेन मन्त्रं न व्यवक्रियते।
ईशेन कीदृशं कर्म्म कृतं पश्यत वागिदं।
तल्लक्षणाद् उच्यते याकुविस्रायेलन्वयावधि।

२४ उत्थास्यति मृगेन्द्रीव पश्यायं नरसञ्चयः।
गात्रोत्थानं करिष्यन्ति मृगेन्द्रा इव ते नराः।
यावदाखेटलब्धन्तु नहि तैः परिभुज्यते।
पीयतेसृं हतानां न तावन्नहि शयिष्यते॥

ततो बालाको बिलियमं गदितवान् त्वं तेभ्यः शापं मा दा आशिषश्च २५ मा दाः। ततो बिलियम् उक्तवान् परमेश्वरो मह्यं यत् कथयिष्यति तत् २६ सर्व्वम् अहं कथयिष्यामि इदं किं तुभ्यं नाकथयं?

तथापि बालाको बिलियमं बभाषे विनीय कथयाम्यहम्, आगच्छ २७ त्वामहं स्थानान्तरं नयामि तत्र स्थाने चेत् मत्कृते तान् शप्तुम् ईश्वरस्य सन्तोषो जायेत। ततो बालाको यिशीमोनाभिमुखं पियोर- २८ शृङ्गं बिलियमं नीतवान्। तत्र बिलियमो बालाकम् उक्तवान् अत्र २९ स्थाने सप्त वेदी र्निम्माहि, मत्कृते सप्त गोवत्सान् सप्त मेषान् आसादय। तदा बालाको बिलियमस्य वाक्यानुसारात् प्रतिवेद्येकैकं गोवत्सं ३० एकैकं मेषम् उत्सृष्टवान्।

---

# २४ चतुर्विंशोऽध्यायः।

१ इस्रायेलीयवंशमधि बिलियमो भविष्यद्वाक्यं १० तत्कारणात् तस्मै बालाकस्य क्रोधनं १५ याकूबीयं तारादिकमधि बिलियमस्य भविष्यद्वाक्यं।

अनन्तरम् इस्रायेलीयान्वयायाशिषं दातुं परमेश्वरस्य परमा १ तुष्टिरिति विज्ञाय बिलियमः पूर्व्ववत् मायाफलम् अन्वेष्टुं न प्रवर्त्तमानः प्रान्तराभिमुखो बभुव। ततो बिलियमो निजनेत्रे उन्मील्य निखि- २ लान्वयैः समं वासिन इस्रायेल्लोकान् ददर्श, अपरं ईश्वरीयात्मा तम् अधिष्ठितवान्। तदानीं स वाचम् आरभ्य जगाद, ३

वियोरतनयो वाचं बिलियम् परिभाषते।
यस्य प्रोन्मीलिते नेत्रे आचष्टे स नरो गिरं।
वचांसि पारमेशानि निशामयति यः पुमान्। ४
सर्व्वशक्तिविशिष्टस्य दर्शनं लभते च यः।
प्रोन्मीलितदृशा तेनाभिभूतेनाभिधीयते।
याकूबन्वय कीदृक्षा निवेशाः सुषमास्तव। ५
इस्रायेल्वंश कीदृक्षा आवासास्ते मनोरमाः।
पृथुलोपत्यकावत् ते तटस्थोद्यानसन्निभाः। ६
परेशरोपितानां ते ऽगुरूणां शाखिनां समाः।
शाखिनाञ्चैरसाख्यानां कीलालतटवर्त्तिनां।
तदीयकलसादेव कीलालमुच्छलिष्यति। ७

सेच्यन्ते हि तदीयानि वीजानि बहुभि र्जलैः।
तद्राजउन्नतोऽगागात् तद्राज्यञ्च समेधिता।
८ मिसर्देशात् परेशस्तं वहिष्कृत्य समानयत्।
खड्गीव स बली शत्रून् ग्रसिष्यत्यन्यजातिजान्।
चूरिष्यते तदस्थीनि भेत्स्यन्ते तच्छरैश्च ते।
९ शयिष्यते नतो भूत्वा मृगेन्द्रीव मृगेन्द्रवत्।
उत्थापयिष्यते तत्र स केन मानुषेण वै।
यस्तस्मा आशिषं दाता तेनाशीः परिलप्स्यते।
येन स शप्स्यते तेन शापः समभिलप्स्यते॥

१० तदानीं विलियमाय वालाकस्य क्रोधे प्रज्वलिते स निजकरेण करम् आजघान। अपरं वालाको विलियमम् अभाषिष्ट, रिपून् शप्तुं मया
११ त्वमानायिषाः परन्तु त्वं वारत्रयं सर्व्वथा तेभ्य आशिषं अददाः। इदानीं त्वं स्वस्थानं पलायस्व, मया त्वं भृशं संमानिष्यसे इति चिन्तितवानहं,
१२ परन्तु पश्य परमेश्वरः सम्मानलाभात् त्वां न्यवारयत्। ततो विलियमो वालाकम् अवोचत् वालाकेन हेमरजताभ्यां परिपूर्णे निजभाण्डागारे मह्यं प्रदत्तेपि निजेच्छया भद्रमभद्रं वा कर्त्तुमहं परमेश्वरीयाज्ञां लङ्घितुं
१३ न पारये; परमेश्वरो यद् वदिष्यति तदेवाहं करिष्यामीति वचो मया
१४ किं त्वत्प्रेषितदूतेभ्योऽपि नावादि? इदानीं पश्याहं निजजातीयानां सन्निधिं यामि, एहि लोका इमे शेषयुगे त्वदीयलोकान् प्रति यत् करिष्यन्ति तत् त्वां विज्ञापयामि।

१५ अनन्तरं स वाणीम् आरभ्य कथयामास।
वियोरस्यात्मजो वाणीं विलियम् प्रब्रवीति हि।
दृष्टी प्रोन्मीलिते यस्य तेन पुंसा निगद्यते।
१६ य ईश्वरीयवाक्यानि निशामयति मानवः।
सर्व्वशक्तिविशिष्टस्य दर्शनं लभते च यः।
प्रोन्मीलितदृष्टिना तेनाभिभूतेनाभिधीयते।
१७ मया स ईक्ष्यते किन्तु सोऽधुना नोपतिष्ठति।
मया लभ्या हि तद्दृष्टिः परन्तु निकषा न हि।
तारका याकुवो मध्याद् उदयं प्रकरिष्यति।
इस्रायेलन्वयादेकः प्रोत्पद्य राजदण्डकः।
मोयावीयस्य पार्श्वस्य समाघातं करिष्यति।

विरोधकारिणां वंशं सएव संहरिष्यति।
इदानीम् तेषां मनुष्याणाम् अधिकारो भविष्यति। १८
सेयीराख्यो रिपुर्देशस्तैरेवाधिकरिष्यते।
महावीरइवाचारीस्रायेलवंशो भविष्यति।
याकूवतः समुत्पन्नः शासनं प्रकरिष्यति। १९
तेन व्यापादयिष्यन्ते ऽवशिष्टपौरमानुषाः॥

अनन्तरं स अमालेके दृष्टिं विधाय वाणीम् आरभ्य कथयामास, २०
अमालेगयमन्यासां जातीनामग्रगण्यकः।
किन्तु शेषे विनंक्ष्यन्ति तदीयनिखिलानि हि॥

अनन्तरं स केनीयान् प्रति दृष्टिं विधाय वाचम् आरभ्य कथयामास, २१
निवासस्ते महागाढो नीडमस्ति शिलोच्चये।
तथापि तावकं नीडं विनाशमुपयास्यति। २२
वहुदूरमसूर् युष्मान् वन्दीकृत्य हि नेष्यति॥

अनन्तरं स पुनर्वाणीम् आरभ्य कथयामास, २३
हा हा यदा परेशेन कर्म्मेदं प्रकरिष्यते।
तदानीं केन लोकेन जीवनं धारयिष्यते।
कित्तीमीयप्रतीराद्धि पोता आगत्य भूरिशः। २४
क्लेशं दास्यन्त्यसूराय दुःखानि त्वेवराय वै।
किन्तु तेऽपि शेषे हि विनाश उपयास्यते॥

अनन्तरं विलियम उत्थाय स्वस्थानं जग्मिवान्, अपरं वालाकोऽपि २५ निजवर्त्मना जगन्वान्।

---

## २५ पञ्चविंशोऽध्यायः।

१ इस्रायेलीयलोकानां वाल्पियोरदेवार्चनं ६ सिम्रेः कस्व्याश्च वधः १० तद्वधकारणात् पीनिहसस्य पुरस्कारः १६ मिदियनलोकान् दुःखयितुम् ईश्वरीयाज्ञा।

अनन्तरम् इस्रायेलीयान्वये शिटीमम् अध्युषितवति लोका मोयावीयाभिर्योषिद्भिः समं व्यभिचारे कर्म्मणि प्रवर्त्तिरे। यतस्तासां देवप्रसादभोजनाय ताभिर्निमन्त्रिताः लोका भुक्त्वा तासां देवान् प्रणेमुः। इत्थं ते वाल्पियोर्देवासक्ता भवितुं आरेभिरे, तस्माद् इस्रायेलन्वयाय परमेश्वरस्य कोपः प्रजज्वाल। ततः परमेश्वरो मूससम् अवादीत्, त्वं लोकानां अधिपनिवहं धृत्वा दिनकरसम्मुखीकृत्य तान् उल्लम्बय, १ २ ३ ४

५ तत इस्रायेलन्वयात् परमेश्वरस्य प्रचण्डः कोपो निवर्त्तिष्यते। तदानीं मूसा इस्रायेलन्वयस्याधिपनिवहं जगाद, युष्माकम् एकैकजनेन बाल्-पियोरदेवासक्ताः स्वस्वलोका हन्यन्तां।

६ अनन्तरं समाजावासस्य समीपे रुदत इस्रायेल्वंशीयस्य निखिलसमाजस्य मूससश्च गोचर इस्रायेलन्वयस्य जन एको निजभ्रातृनि-
७ वहस्य समीपं मिदियनीयां नारीमेकां आनिनाय। ततो हारोण-याजकस्य पौत्र इलीयासरस्य पुत्रः पीनिहसस्तद् विलोक्य समाजमध्याद्
८ उत्थाय हस्ते शक्तिं गृहीतवान्। स इस्रायेल्वंशीयस्य तज्जनस्य पश्चात् कोष्ठं प्रविश्य तयो र्द्वयोरर्थाद् इस्रायेलीयपुरुषस्य तस्या योषितश्च गुह्यस्थानं विधन् विभेद, तत इस्रायेल्वंशात् सा मारी निववृते।
९ तया मार्य्या ये मृता लोकास्ते चतुर्विंशतिसहस्राणि।

१० पश्चात् परमेश्वरो मूससं गदितवान् हारोणयाजकस्य पौत्र इलिया-
११ सरस्य पुत्रः पीनिहसो मत्कृते लोकानां मध्ये क्रोधेन प्रज्वलितः सन् इस्रायेल्वंशात् मम क्रोधं निवर्त्तयामास, तेन मया क्रोधाद् इस्रायेल्-
१२ वंशीयलोका न विनाशिताः। तस्मात् त्वं कथय, पश्याहं तस्मै स्वीयशा-
१३ न्तिकरं नियमम् अदां। तेन याजकत्वाधिकारो नित्यं तस्य तद्वंशपरम्परायाश्च स्यास्यति, यतः स स्वेश्वरस्य कृते क्रोधेन प्रज्वलितवान् इस्रा-
१४ येल्वंशस्य कृते प्रायश्चित्तं चकार च। इस्रायेल्वंशस्य यः पुमान् तया मिदियनीयया योषिता समम् अहन्यत स शिमियोनीयानां पितृ-
१५ वंशाधिपतिः सालोः पुत्रस्तन्नाम सिम्रिरासीत्। हतायास्तस्या मिदियनीयाया योषित आख्या कस्बी, सा सूरस्य कन्या, स सूरो मिदियनीयः प्रधानवंशाधिप आसीत्।

१६ परमेश्वरो मूससमवादीत् त्वं मिदियनीयलोकान् क्लिश्नीहि ताडय
१८ च। यतः पियोरदेवविषयकेन छलेन तत्पियोरनिमित्तके मारीदिवसे तेषाम् आत्मीया या कस्व्याख्या मिदियनीया राजतनया हता तद्विषयकेन च छलेन ते युष्मान् छलयित्वा क्लिष्टवन्तः।

---

## २६ षड्विंशोऽध्यायः।

१ सर्व्वजनान् संख्यातुम् ईश्वराज्ञा ५ इस्रायेलः सर्व्ववंशस्य संख्या ५२ भूमिविभाग-कथनं ५७ लेवीयवंशसंख्या ६७ मिसरो निर्गतानां मध्ये कालेवं यिहोशूयञ्च विना नान्येषां गणितत्वञ्च।

तन्मारीतः परं परमेश्वरो मूससं हारोणस्य सुतं याजकम् इलिया- १
सरञ्च जगाद, युवां इस्रायेलीयसमाजस्यैकैकपितृवंशानुसारतो विंशति- २
वर्षाधिकवयस्कान् अर्थाद् इस्रायेलीयसैन्यश्रेण्यन्तर्गतान् सर्व्वान् गण-
यतं। ततो मूससं प्रति परमेश्वरीयादेशात् मूसा याजक इलियासरश्च ३
यिरीहोः समीपस्थयर्द्दनान्तिके मोयाबीयप्रान्तरे तान् बभाषाते, विं-
शतिवर्षाधिकवयस्काः सर्व्वे गण्यन्तां। मिसर्देशान्निर्गता इस्रायेलीय- ४
वंशा इम आसन्।

इस्रायेलो ज्येष्ठः सुतो रूबेनः, तस्य रूबेनस्य सुतो हनोकः, ततो ५
हनोकाद् हनोकीयवंशः, पल्लूतः पल्लूयीयवंशो भवति, हिष्रोणाद् ६
हिष्रोणीयवंशो भवति, कर्म्मेः कर्म्मीयवंशो भवति। एते रूबेनीय- ७
वंशाः, गणितास्ते त्रिंशदधिकसप्तशताधिकत्रिचत्वारिंशत् सहस्राणि।
पल्लूसुत इलीयावः। इलीयावस्य सुता निमूयेलो ऽदाथनो ऽबीरामश्च, ८
कोरहस्य समाजो यदा परमेश्वरस्य प्रतिकूलं विवादम् अकरोत्, तदा ९
समाजे विख्यातौ यौ दाथनाबीरामौ मूसाहारोणाभ्यां सार्कं व्यवदतां
तावेतावास्तां। तदा धरास्यं व्यादाय तौ कोरहञ्च जग्रास, तस्मिन् निवहे १०
नष्टे वह्निः सार्द्धशतद्वयजनान् ददाह ते दृष्टान्तविषया बभूवुः। किन्तु ११
कोरहस्य सन्ताना न मम्रुः।

स्ववंशानुसारात् शिमियोनीयवंशाः, निमूयेलात् निमूयेलीयवंशः, १२
यामीनाद् यामीनीयवंशः, याखीनाद् याखीनीयवंशः, सेरहात् सेरही- १३
यवंशः, शौलात् शौलीयवंशश्च। अत्र शिमियोनीयवंशेषु शतद्वयाधिकद्वा- १४
विंशतिसहस्राणि जना आसन्।

स्ववंशानुसाराद् गादीयवंशाः, सिफोनात् सिफोनीयवंशः, हगे १५
र्हगीयवंशः, शूनेः शूनीयवंशः, ओष्णेर् ओष्णीयवंशः, एरेर् एरीयवंशः, १६
अरोदेर् अरोदीयवंशः, अरेलेर् अरेलीयवंशश्च। एतेषु गादीयवंशेषु १८
गणितेषु तत्र पञ्चशताधिकचत्वारिंशत् सहस्राणि लोका आसन्।

यिहूदाः सुताव् एर ओननश्च, एतावेरोननौ किनानदेशे मृतौ। १९
स्ववंशानुसाराद् यिहूदा एते वंशाः, शेलातः शेलायीयवंशः, पेरसात् २०
पेरसीयवंशः, सेरहात् सेरहीयवंशश्च। पेरसीयवंशा एते, हिष्रोणाद् २१
हिष्रोणीयवंशः, हामूलात् हामूलीयवंशश्च। एतेषु यिहूदावंशेषु गणितेषु २२
तत्र संख्या पञ्चशताधिकषट्सप्ततिसहस्राणि लोका आसन्।

स्ववंशानुसाराद् इषाखरीयवंशाः, तोलयात् तोलयीयवंशः, पूयात् २३

२४ पूयीयवंशः, याशूबाद् याशूबीयवंशः, शिम्रोणात् शिम्रोणीयवंशश्चाभूत्।
२५ एतेष्विषाखरीयवंशेषु गणितेषु तत्र संख्यया शतत्रयाधिकचतुःषष्टिसहस्राणि लोका आसन्।
२६ स्ववंशानुसारात् सिबूलूनीयवंशाः, सेरदात् सेरदीयवंशः, एलोनाद्
२७ एलोनीयवंशः, यह्लेलाद् यह्लेलीयवंशश्च। एतेषु सिबूलूनीयवंशेषु गणितेषु तत्र संख्यया पञ्चशताधिकषष्टिसहस्राणि लोका आसन्।
२८ स्ववंशानुसाराद् यूषफः पुत्रौ मिनशिरिप्रियमौ। एते मिनशेर्वंशाः,
२९ माखीराद् माखीरीयवंशः, तस्य माखीरस्य सुतो गिलियदः, तस्माद्
३० गिलियदात् गिलियदीयवंशः। तस्य गिलियदस्य सन्ताना एते,
३१ ईयेषराद् ईयेषरीयवंशः, हेलकाद् हेलकीयवंशः, अस्रीयेलाद् अस्री-
३२ येलीयवंशः, शेखमात् शेखमीयवंशः, शिमिदातः शिमिदायीयवंशः,
३३ हेफराद् हेफरीयवंशश्च। तद्धेफरसुतस्य सिलफादस्य सुतो नासीत् केवलं कन्या आसन्, तासां सिलफादकन्यानां नामानि मह्ला नोया
३४ हग्ला मिल्का तिर्सा च। एतेषु मिनशिवंशेषु गणितेषु तत्र सप्तशताधिकद्विपञ्चाशत् सहस्राणि लोका आसन्।
३५ स्ववंशानुसाराद् इफ्रयिमस्यैते वंशाः। शूथलहात् शूथलहीयवंशः,
३६ बेखराद् बेखीयवंशः, तह्नात् तह्नीयवंशश्च। एते शूथलहीयवंशाः,
३७ एरणाद् एरणीयवंशाः। एतेष्विफ्रयिमीयवंशेषु गणितेषु तत्र संख्यया पञ्चशताधिकद्वात्रिंशत् सहस्राणि लोका आसन्। वंशानुसाराद् इमे यूषफः सन्तानाः।
३८ स्ववंशानुसाराद् बिन्यामीनीयवंशाः, बेलातो बेलायीयवंशः, अस्-
३९ बेलाद् अस्बेलीयवंशः, अहीरामाद् अहीरामीयवंशः, शूफमात् शूफ-
४० मीयवंशः, हूफमात् हूफमीयवंशश्च। बेलाः सुताव् अर्दनामानौ, अर्दाद्
४१ अर्दीयवंशः, नामानात् नामानीयवंशः। एतेषु बीन्यामीनीयवंशेषु स्ववंशानुसाराद् गणितेषु तत्र संख्यया षट्शताधिकपञ्चचत्वारिंशत् सहस्राणि लोका आसन्।
४२ स्ववंशानुसाराद् एते दानवंशाः। शूहमात् शूहमीयवंशः, इमे
४३ स्ववंशानुसाराद् दानवंशाः। एतेषु शूहमीयवंशेषु गणितेषु तत्र संख्यया चतुःशताधिकचतुःषष्टिसहस्राणि लोका आसन्।
४४ स्ववंशानुसाराद् एत आशेरीयवंशाः, यिम्नाद् यिम्नीयवंशः, यिस्वे
४५ यिस्वीयवंशः, बिरियाद् बिरियीयवंशश्च। बिरियस्य सन्तानानां मध्ये

हेवराद् हेवरीयवंशः, मल्कीयेलाद् मल्कीयेलीयवंशः। तदाशेरस्य ४६ कन्याया नाम सारहा। एतेष्वाशेरीयवंशेषु गणितेषु संख्यया तत्र ४७ चतुःशताधिकत्रिपञ्चाशत् सहस्राणि लोका आसन्।

स्वस्ववंशानुसारात् नप्तालीयवंशाः, यहसीयेलाद् यहसीयेलीयवंशः, ४८ गूनेर् गूनीयवंशः, येत्सराद् येत्सरीयवंशः, शिल्लेमात् शिल्लेमीयवंशश्च। ४९ स्वस्ववंशानुसाराद् एतेषु नप्तालीयवंशेषु गणितेषु तत्र संख्यया चतुःश- ५० ताधिकपञ्चचत्वारिंशत् सहस्राणि जना आसन्।

इस्रायेलीयवंशमध्ये गणिता एते लोकास्त्रिंशदधिकसप्तशताधिक- ५१ सहस्राधिकषट्लक्षसंख्यकाः।

परमेश्वरो मूससं जगाद नामसंख्यानुसाराद् अधिकारायैतेषां मध्ये ५२ देशो विभज्यते। फलतो यत्र वंशेऽधिका लोकास्तेभ्योऽधिकभूम्यधिकारं ५३ दास्यसि, यत्र वंशेऽल्पलोकास्तेभ्यो ऽल्पभूम्यधिकारं दास्यसि, यस्मिन् ५४ निबद्धे यावन्तो लोका गण्यन्ते तस्मै तावद्भूम्यधिकारं दास्यसि। देशे गुटिकापातेन विभक्ते ते स्वस्वपितृवंशनामानुसाराद् अधिकारं ५५ प्राप्स्यन्ति। वंशोऽधिको न्यूनो वा भवतु, अधिकरिष्यमाणा भूमिर्गुटिका- ५६ पातेन विभज्यते।

स्वस्ववंशानुसारात् लेवीयवंशमध्य एते गणिताः, गेर्शोनाद् गेर्शो- ५७ नीयवंशः, किहातात् किहातीयवंशः, मिरारे मिरारीयवंशश्च। एते ५८ लेवीयवंशाः, लिब्नीयवंशो हिब्रोणीयवंशो महलीयवंशो मूशीयवंशः कोरहीयवंशश्च। किहातस्य सुतो ऽम्रामः, मिस्रदेशे जाता लेवेर् ५९ औरसी कन्या योखेबद्नाना अम्रामस्य भार्य्यासीत्, सा अम्रामस्य सुतौ हारोणमूससौ तयोर्भगिनीं मरियमञ्च प्रसुसुवे। हारोणस्य औरस- ६० सुता नादवो ऽबीहूर् इलियासर इथामरश्च जज्ञिरे। पश्चात् नादवो ६१ ऽबीहुश्च परमेश्वरस्य साक्षात् साधारणं वह्निं निवेद्य प्राणान् तत्यजतुः। एषां मध्ये मासैकाधिकवयस्काः पुरुषसन्ताना गणितास्त्रयोविंशसह- ६२ स्राणि जना आसन्, यत इस्रायेल्वंशमध्ये तेभ्यः कुत्राप्यधिकारस्याद- त्तत्वात् त इस्रायेल्वंशमध्ये नागण्यन्त।

यिरीहोः समीपस्थयर्द्दनान्तिके मोयाबीयप्रान्तरे मूससेलियासर- ६३ याजकेन चेस्रायेल्वंशस्य गणनासमये ते सर्व्वे लोका गणिताः। किन्तु ६४ सीनयप्रान्तरे मूससा हारोणयाजकेन चेस्रायेल्वंशस्य गणनासमये ये ऽगण्यन्त तेषामेकोऽपि नैतेषां मध्य आसीत्। यतः परमेश्वरेण तानध्यवादि ६५

ते ऽवश्यम् अत्र प्रान्तरे मरिष्यन्ति, यिफुन्नेः सुतं कालेवं नूनसुतं यिहोशूयञ्च विना तेषामवशिष्ट एकोऽपि न स्थास्यति ।

---

# २७ सप्तविंशोऽध्यायः ।

१ सिलफादस्य कन्यानां कथनं ६ भूम्यधिकारव्यवस्था १२ मूसं प्रतीश्वराज्ञा १५ ईश्वराय मूसानिवेदनं १८ मूसामरणात् परं तत्कर्म कर्त्तुं यिहोशूयस्य निरूपणञ्च ।

१ ततो यूषफसुतस्य मिनशिवंशमध्ये मिनशेर्वृद्धप्रपौत्तस्य माखीरप्रपौत्तस्य गिलियदपौत्तस्य हेफरपुत्तस्य सिलफादस्य कन्या अर्थात् २ मह्ला-नोया-हग्ला-मिल्का-तिर्सा-नामानः कन्याः समाजावासस्य समीपम् आगत्य मूसस इलियासरयाजकस्याधिपानां सर्व्वसमाजी- ३ यानाञ्च सम्मुखे तिष्ठन्त्य एतां वाचं कथयामासुः । अस्मत्पिता प्रान्तरे मृतः, स परमेश्वरस्य प्रतिकूलं विरोधिनः कोरहीयनिवहस्य मध्ये ४ नासीत् तथापि स्वपापेन मृतः, स अपुत्रक आसीत् । किन्तु अस्मत्पितुः पुत्तो नास्ति तस्मात् तदीयवंशात् तस्य नाम कुतो लोप्स्यते? अस्माकं ५ पितृवंशीयभ्रातॄणां मध्ये ऽस्मभ्यम् अधिकारं देहि । तदा मूसाः परमेश्वरस्य साक्षात् तासां विवादम् उपस्थापितवान् ।

६ ततो मूससं परमेश्वर उक्तवान् सिलफादस्य कन्याभिर्यद् उच्यते तद् ७ भद्रं । त्वं तासां पितृवंशीयानां मध्ये ऽवश्यं ताभ्यो भूम्यधिकारं ८ दास्यसि, तासां पितुर्भूम्यधिकारं ता अधिकारयिष्यसि । त्वम् इस्रायेल्वंशाय कथय कस्मिंश्चिद् अपुत्तके मानुषे मृते यूयं तस्य कन्यायै ९ तदधिकारं दास्यथ । यदि तस्य कन्यापि न तिष्ठति तर्हि तस्य भ्रातृभ्य- १० स्तस्याधिकारं दास्यथ । यदि तस्य भ्रातरोऽपि न तिष्ठन्ति तर्हि तस्य ११ पितृव्येभ्यस्तस्याधिकारं दास्यथ । यदि पितृव्या अपि न तिष्ठन्ति तर्हि तस्य वंशीयान्तिकज्ञातये तदधिकारं दास्यथ, स तमधिकरिष्यति । मूससं प्रति परमेश्वराज्ञानुसाराद् इस्रायेल्वंशं प्रत्येष विचारविधिर्भविष्यति ।

१२ परमेश्वरो मूससम् उक्तवान् त्वम् एतम् अवारीमं गिरिम् आरुह्य १३ इस्रायेल्वंशेभ्यो मया दत्तं देशं निरीक्षस्व, तस्मिन् निरीक्षिते सति यथा तव भ्राता हारोणः संगृहीतस्तथा त्वमपि स्वपितृलोकानां समीपे संग्र- १४ हीष्यसे । यतः सीनप्रान्तरे समाजविवादे युवां तोयसन्निधावर्थात्

सीनप्रान्तरस्य कादेशस्थमिरीवातोयस्य समीपे समाजस्य गोचरे माम् अनादृत्य मम निदेशं लंघितवन्तौ।

ततो मूसाः परमेश्वरम् उक्तवान् हे सर्व्वशरीरस्थानाम् आत्मनां १५ प्रभो परमेश्वर, परमेश्वरस्य समाजो यथा रक्षकहीनमेषपालवत् न १६ भवेत् तदर्थं यस्तेषां वहिर्गमनकाले ऽभ्यन्तरमागमनकाले च तेषाम् १७ अग्रगामी सन् तान् वहिश्चाभ्यन्तरञ्च गमयेत्, तादृशं मानुषमेकं समाजोपरि नियोजय।

ततः परमेश्वरो मूससम् अवदत् नूनपुत्रस्य यिहोशूयस्यान्तर १८ आत्मास्ति, त्वं तमादाय तस्य गात्रे स्वकरम् अर्पय, इलियासरयाजकस्य १९ सर्व्वसमाजस्य च सम्मुखे तं संस्थाप्य तेषां समक्षं तमाज्ञापय। त्वं २० तं स्वसम्मानभागिनं कुरु तत इस्रायेल्वंशस्य सर्व्वसमाजस्तदाज्ञाग्राही भविष्यति। स इलियासरयाजकस्य सम्मुखे स्थास्यति, इलियासरस्त- २१ न्मत ऊरीमद्वारा परमेश्वरं प्रक्ष्यति, स तेन सहितास्रियेल्वंशाः सर्व्वे समाजीयाश्च तदाज्ञया वहि र्यास्यन्ति तदाज्ञयाभ्यन्तरम् आगमिष्यन्ति च। ततो मूसाः परमेश्वराज्ञया सर्व्वं कर्म्म कृतवान् स यिहोशूयमादाय २२ इलियासरयाजकस्य सम्मुखे सर्व्वसमाजस्य च सम्मुखे तं संस्थापितवान्। मूससा परमेश्वरो यथाज्ञापयत् तथा तस्य गात्रे स्वकरम् अर्पयित्वा २३ स आदिष्टः।

---

## २८ अष्टाविंशोऽध्यायः।

१ होमार्थं परमेश्वराज्ञा ३ प्रातःकालसन्ध्याकालयो र्होमकथनं ९ विश्रामवारस्य होम-कथनं ११ प्रतिपदो होमकथनं १६ निस्तारोत्सवस्य होमकथनं २६ पवित्रसभाक-थनञ्च।

पश्चात् परमेश्वरो मूससं गदितवान् त्वम् इस्रायेल्वंशान् आज्ञापय १ तेभ्य इदं कथय, मम वह्निकृतसुगन्धुपहारार्थकं यद् भक्ष्यनैवेद्यं तद् २ यूयं निरूपितसमये माम् उद्दिश्य निवेदयितुं यतिष्यध्वे।

त्वं तेभ्य इदं कथय परमेश्वराय वह्निकृतोपहारार्थं युष्माभि र्यन्नि- ३ वेदयितव्यं तदिदं। प्रतिदिनं नित्यहोमार्थं एकवर्षीयौ द्वौ निर्दोषौ ४ मेषवत्सौ, तयोरेकः प्रातरन्यश्च सन्ध्यायाम् उत्सृज्यते। भक्ष्योपकरणार्थं ५ छिन्नचतुर्थांशपरिमितेनालोडिततैलेन मिश्रितम् एफादशमांशगोधूमचूर्णं दास्यते। एष नित्यहोमबलिः सीनयगिरौ परमेश्वरोद्देश्यवह्निकृतसुगन्धु- ६

७ यज्ञार्थं निरूपितः। तस्य पेयोपकरणम् एकैकमेषवत्सार्थं हिनचतुर्थांशं भविष्यति, स पेयोपकरणीयद्राक्षारसः परमेश्वराय पवित्रस्थाने ऽवता-
८ रिष्यते। द्वितीयो मेषवत्सः सन्ध्याकाल उत्सृक्ष्यते, प्रातरिव भक्ष्यपेयोपकरणाभ्यां समं सोऽपि परमेश्वराय वह्निकृतसुगन्ध्युपहारार्थम् उत्सृक्ष्यते।
९ विश्रामदिने एकहायनं निर्दोषं मेषवत्सद्वयं तैलपक्वं दशमांशद्वयं
१० गोधूमचूर्णोपकरणं पेयोपकरणञ्च निवेदयिष्यते। नित्यहोमं तत्पेयोपकरणञ्च विना प्रतिविश्रामवारम् एष होमो भविष्यति।

११ मासस्यारम्भे यूयं परमेश्वराय होमार्थं द्वौ गोवत्सौ मेषमेकम् एक-
१२ वर्षीयनिर्दोषसप्तमेषवत्सान् उत्सृक्ष्यथ। गोवत्सैकेन समं तैलपक्वदश-
१३ मांशत्रयं, एकमेषेण समं तैलपक्वदशमांशद्वयं, एकैकेन मेषवत्सेन समं तैलपक्वदशमांशैकञ्च गोधूमचूर्णोपकरणं भविष्यति, तेन स होमबलिः
१४ परमेश्वराय वह्निकृतसुगन्ध्युपहारो भविष्यति। गोवत्सैकार्थं हिनार्द्धपरिमितो मेषैकार्थं हिनतृतीयांशपरिमित एकमेषवत्सार्थं हिनचतुर्थांशपरिमितो द्राक्षारसः पेयोपकरणं भविष्यति। नित्यहोमं तत्पे-
१५ योपकरणञ्च विना वर्षस्य प्रतिमासं होमबलिरयं। परमेश्वरम् उद्दिश्य पापप्रायश्चित्तबलिश्छागैकश्च युष्माभि र्दातव्यः।

१६ प्रथममासस्य चतुर्दशदिने परमेश्वरस्य निस्तारोत्सवो भविष्यति।
१७ मासस्य पञ्चदशदिनात् सप्त दिनानि यावत् किण्वशून्यपूपभोजनोत्सवो
१८ भविष्यति। प्रथमदिने पवित्रसभा भविष्यति, तद्दिने यूयं किमपि विषय
१९ कर्म्म न करिष्यथ। किन्तु परमेश्वराय वह्निकृतसुगन्धिहोमबलिरूपेण दातुं
२० द्वौ गोवत्सौ मेषैक एकहायना निर्दोषाः सप्त मेषवत्साः, उपकरणार्थम्
२१ एकेन गोवत्सेन समं दशमांशत्रयं, मेषैकेन समं दशमांशद्वयं, सप्त मेष-
२२ वत्सानाम् एकैकेन वत्सेन समम् एकैको दशमांशस्तैलपक्वं गोधूमचूर्णं, तेषां
२३ प्रायश्चित्तार्थं प्रायश्चित्तबलिरेकश्छागश्च, एतानि सर्व्वाणि युष्माभिर्नित्य-
२४ होमस्य प्रातर्होमं विना निवेदयिष्यन्ते। एतद्विध्यनुसारात् सप्त दिनानि यावत् प्रत्यहं परमेश्वराय भक्ष्यरूपं वह्निकृतं सुगन्ध्युपहारं निवेद-
२५ यिष्यते, नित्यहोमं तत्पेयोपकरणञ्च विना तन्निवेदिष्यते। सप्तमेऽह्नि युष्माकं पवित्रसभा भविष्यति तदा यूयं किमपि विषयकर्म्म न करिष्यथ।

२६ प्रथमफलानां दिने सप्तसप्ताहेभ्यः परं यदा यूयं परमेश्वराय नूतनं भक्ष्यनैवेद्यम् आनेष्यथ तदा युष्माकं पवित्रा सभा भविष्यति तदा कि-
२७ मपि विषयकर्म्म न करिष्यथ। किन्तु परमेश्वराय सुगन्धिहोमार्थं द्वौ

गोवत्सौ मेषैक एकहायनाः सप्त मेषवत्साः, उपकरणार्थं गोवत्- १८
सकहते दशमांशत्रयं, एकमेषहते दशमांशद्वयं, सप्त मेषवत्सानाम् १९
एकैकवत्सहते एकैकदशमांशस्तैलपक्वं गोधूमचूर्णं, युष्माकं प्रायश्चित्तार्थं २०
छागैकश्च, एतानि सर्व्वाणि युष्माभि र्नित्यहोमं तदुपकरणञ्च विना निवे- २१
दयिष्यन्ते, सर्व्वाण्येतानि निर्दोषाणि पेयोपकरणयुक्तानि च भविष्यन्ति।

---

## २९ ऊनत्रिंशोऽध्यायः।

१ तूरीवादनकालस्य होमकथनं ७ पवित्रसभासमयस्य होमबलिदानादि १७ उट्जोत्सवकालस्य होमबलिदानादि च।

सप्तममासस्य प्रथमदिने युष्माकं पवित्रसमिति र्भविष्यति तदा यूयं १
विषयकर्म्म मा करिष्यथ तद्दिनं युष्माकं तूरीवादनकालो भविष्यति।
तद्दिने परमेश्वराय सुगन्धिहोमबल्यर्थम् एकः पुंगोवत्स एको मेष एक- २
हायनाः सप्त निर्दोषा मेषवत्साः, उपकरणार्थम् एकगोवत्सहते दश- ३
मांशत्रयं, एकमेषहते दशमांशद्वयं, सप्तमेषवत्सानाम् एकैकमेषवत्स- ४
हते एकैको दशमांशस्तैलपक्वं गोधूमचूर्णं, स्वेषां प्रायश्चित्तार्थं प्रायश्चित्त- ५
बलिश्छागैकश्च, एतानि सर्व्वाणि युष्माभि र्निवेदयिष्यन्ते। मासिकहोमं ६
तदीयभक्ष्योपकरणं दैवसिकहोमं तदीयभक्ष्योपकरणं तयो र्विध्यनुया-
यीणि पेयोपकरणानि च विना सर्व्वमेतत् परमेश्वराय वह्निकृतसुगन्ध्यु-
पहारार्थं युष्माभिः कर्त्तव्यं।

तत्सप्तममासस्य दशमदिने युष्माकं पवित्रसमिति र्भविष्यति, तदा ७
यूयं स्वस्वप्राणान् क्लेक्ष्यथ किमपि विषयकर्म्म न करिष्यथ। किन्तु परमे- ८
श्वराय सुगन्धिहोमबल्यर्थं एको गोवत्सो मेषैक एकहायनाः सप्त मेष-
वत्साः, उपकरणार्थम् एकगोवत्सहते दशमांशत्रयं, एकमेषहते दश- ९
मांशद्वयं, सप्त मेषवत्सानां एकैकवत्सहते एकैकदशमांशस्तैलपक्वं १०
गोधूमचूर्णं स्वेषां प्रायश्चित्तबलिश्छागैकश्च, एतानि सर्व्वाणि युष्माभिः ११
प्रायश्चित्तदिवसीयपापबलिं नित्यहोमं तदीयभक्ष्यपेयोपकरणानि च
विना निवेदयिष्यन्ते।

सप्तममासस्य पञ्चदशदिने युष्माकं पवित्रसमिति र्भविष्यति तदा १२
यूयं किमपि विषयकर्म्म न करिष्यथ तदारभ्य सप्त दिनानि यावत् परमे-
श्वरं उद्दिश्य मह्हं करिष्यथ। परमेश्वराय वह्निकृतसुगन्धिहोमबल्यर्थं १३

त्रयोदश गोवत्सा द्वौ मेषावेकहायना निर्दोषाश्चतुर्दश मेषवत्साः, उप-
१४ करणार्थं त्रयोदशानां पुंगवानाम् एकैककृते दशमांशत्रयं द्वयो र्मेषयो
१५ रेकैककृते दशमांशद्वयं चतुर्दशानां मेषवत्सानाम् एकैकवत्सकृत एकैको
१६ दशमांशस्तैलपक्कं गोधूमचूर्णं, प्रायश्चित्तार्थं छागैकश्च, एतानि सर्व्वाणि
युष्माभि र्नित्यहोमं तदीयभक्ष्यपेयोपकरणञ्च विना निवेदयिष्यन्ते।
१७ द्वितीयदिने द्वादश गोवत्सा द्वौ मेषावेकहायना निर्दोषाश्चतुर्दश
१८ मेषवत्साः, गोवत्समेषमेषवत्सानां कृते तत्संख्यया विध्यनुयायीनि
१९ तदीयानि भक्ष्यपेयोपकरणानि, प्रायश्चित्तार्थं छागैकश्च, एतानि सर्व्वाणि
युष्माभि र्नित्यहोमं तदीयं भक्ष्यपेयोपकरणञ्च विना निवेदयिष्यन्ते।
२० तृतीयदिवसे एकादश गोवत्सा द्वौ मेषावेकहायना निर्दोषाश्चतुर्दश
२१ मेषवत्साः, गोवत्समेषमेषवत्सानां कृते तत्संख्यया विध्युक्तानि तदी-
२२ यानि भक्ष्यपेयोपकरणानि, प्रायश्चित्तार्थं छागैकश्च, एतानि सर्व्वाणि
युष्माभि र्नित्यहोमं तदीयं भक्ष्यपेयोपकरणञ्च विना निवेदयिष्यन्ते।
२३ चतुर्थदिने दश गोवत्सा द्वौ मेषावेकहायना निर्दोषाश्चतुर्दश मेष-
२४ वत्साः, गोवत्समेषमेषवत्सानां कृते तत्संख्यया विध्युक्तानि तदीयानि
२५ भक्ष्यपेयोपकरणानि, प्रायश्चित्तार्थं छागैकश्च, एतानि सर्व्वाणि युष्माभि
र्नित्यहोमं तदीयं भक्ष्यपेयोपकरणञ्च विना निवेदयिष्यन्ते।
२६ पञ्चमदिने नव गोवत्सा द्वौ मेषावेकहायना निर्दोषाश्चतुर्दश
२७ मेषवत्साः, गोवत्समेषमेषवत्सानां कृते तत्संख्यया विध्युक्तानि तदीयानि
२८ भक्ष्यपेयोपकरणानि, प्रायश्चित्तार्थं छागैकश्च, एतानि सर्व्वाणि युष्माभि
र्नित्यहोमं तदीयं भक्ष्यपेयोपकरणञ्च विना निवेदयिष्यन्ते।
२९ षष्ठदिन अष्टौ गोवत्सा द्वौ मेषावेकहायना निर्दोषाश्चतुर्दश मेष-
३० वत्साः, गोवत्समेषमेषवत्सानां कृते तत्संख्यया विध्युक्तानि तदीयानि
३१ भक्ष्यपेयोपकरणानि, प्रायश्चित्तार्थं छागैकश्च, एतानि सर्व्वाणि युष्माभि
र्नित्यहोमं तदीयं भक्ष्यपेयोपकरणञ्च विना निवेदयिष्यन्ते।
३२ सप्तमदिने सप्त गोवत्सा द्वौ मेषावेकहायना निर्दोषाश्चतुर्दश मेष-
३३ वत्साः, गोवत्समेषमेषवत्सानां कृते तत्संख्यया विध्युक्तानि तदीयानि
३४ भक्ष्यपेयोपकरणानि, प्रायश्चित्तार्थं छागैकश्च, एतानि सर्व्वाणि युष्माभि
र्नित्यहोमं तदीयं भक्ष्यपेयोपकरणञ्च विना निवेदयिष्यन्ते।
३५ अष्टमदिने युष्माकं महासमिति र्भविष्यति, तद्दिने युष्माभिः किमपि
३६ विषयकर्म्म न कर्त्तव्यं। किन्तु परमेश्वराय वह्निकृतसुगन्धिहोमार्थम्

एको गोवत्स एको मेष एकहायना निर्दोषाः सप्त मेषवत्साः, गोवत्समेष- ३७
मेषवत्सानां कृते तत्संख्यया विधुक्तानि तदीयानि भक्ष्यपेयोपकरणानि,
प्रायश्चित्तार्थं छागैकश्च, एतानि सर्व्वाणि युष्माभि र्नित्यहोमं तदीय- ३८
भक्ष्यपेयोपकरणञ्च विना निवेदयिष्यन्ते। होमबलीन् भक्ष्यपेयनैवेद्यानि ३९
मङ्गलार्थकबलींश्चाधि युष्माभि र्यत् प्रतिश्रुतं स्वेच्छादत्तञ्च तद्विना यूयम्
एतानि निरूपितमहेषु परमेश्वराय निवेदयिष्यथ। पश्चात् परमेश्व- ४०
राज्ञया मूसा इस्रायेल्वंशाय तत्सर्व्वं गदितवान्।

---

# ३० त्रिंशत्तमोऽध्यायः।

१ प्रतिश्रुतव्रतानां पालनमधि व्यवस्था २ पित्रा दुहितुर्व्रतस्य सफलनिष्फलत्वकथनं ६ पत्या जायायाः प्रतिश्रुतसफलनिष्फलत्वकथनं ९ विधवायाः प्रतिश्रुतसफलनिष्फल-त्वस्य कथनञ्च।

अनन्तरं मूसा इस्रायेल्वंशाधिपेभ्यः कथितवान्, परमेश्वर एतान्या- १
ज्ञापयत्। यदि कश्चित् पुमान् परमेश्वराय किञ्चित् प्रतिशृणोति यद्वा २
व्रतेन स्वं बद्धुं शपथं करोति, तर्हि स स्ववाक्यं मुधा न कृत्वा वक्त्रात्
निर्गतं वाक्यं सफलं करिष्यते।

यदि काचित् कुमारी पितृगेहे वसन्ती परमेश्वराय किञ्चित् प्रति- ३
शृणोति व्रतेन वा स्वां बध्नाति, तत्पिता च यदि तस्याः प्रतिश्रुतं येन वा स्वां ४
बध्नाति तद् व्रतवाक्यं श्रुत्वा तस्यै किमपि न कथयति, तर्हि तस्याः सर्व्वं
प्रतिश्रुतं स्थिरीभविष्यति येन च स्वां बध्नाति तद् व्रतवाक्यं निश्चितं
भविष्यति। किन्तु श्रवणदिने यदि तस्याः पिता तां निषेधति तर्हि ५
तस्याः प्रतिश्रुतं येन च स्वां बध्नाति तद् व्रतवाक्यं निश्चितं न भविष्यति
तस्याः पितु र्निषेधात् परमेश्वरस्तां क्षमिष्यते।

तस्याः प्रतिश्रवणकाले येन वा स्वां बध्नाति तद्व्रतवाक्यस्य तस्या ६
आस्यात् निर्गमकाले यदि तस्याः पतिस्तिष्ठति, स पतिश्च यदि तत्- ७
श्रवणदिने किमपि न कथयति, तर्हि तस्याः प्रतिश्रुतं येन च स्वां बध्नाति
तद् व्रतवाक्यं निश्चितं भविष्यति। किन्तु श्रवणदिने यदि तस्याः पतिस्तां ८
निषेधति, तर्हि सा यत् प्रतिशृणोति येन च स्वां बध्नाति तत् मुधा
भविष्यति, तेन परमेश्वरस्तां क्षमिष्यते।

विधवा स्वामित्यक्ता वा स्त्री येन स्वां बध्नाति स्म तद् व्रतवाक्यं ९
स्थिरीभविष्यति। सा यदि स्वामिगेहे प्रतिश्रुतवती वा व्रतेन शपथेन १०

११ बद्धा भवेत्, तस्याः पतिश्च यदि तत् श्रुत्वा तामनिषिध्य मौनीभूतस्तर्हि तस्याः सर्व्वं प्रतिश्रुतं निश्चितं भविष्यति येन च स्वां बद्धवती तद् व्रत-
१२ वाक्यं निश्चितं भविष्यति। किन्तु श्रवणदिने तस्याः पति यदि तत् सर्व्व मुधा कृतवान्, तर्हि तस्याः प्रतिश्रवणे बन्धने च या वाक् तदास्यात् निरगच्छत सा निश्चिता न भविष्यति, तस्याः पत्या व्यर्थकरणात् परमेश्वरस्तां क्षमिष्यते।

१३ योषितः सर्व्वं प्रतिश्रवणं क्लेशदं शपथश्च तस्याः स्वामिना निश्चितं व्यर्थञ्च
१४ भवितुं शक्यते। तस्याः पति यदि कतिपयानि दिनानि यावत् सर्व्वथा निःशब्दो भवति तर्हि श्रवणदिने निःशब्दत्वात् स तस्याः सर्व्वं प्रतिश्रवणं
१५ वा सर्व्वं व्रतं निश्चितं करोति। तच्छ्रवणात् परं यदि केनापि प्रकारेण
१६ स तद् व्यर्थं करोति तर्हि तस्या दोषं स एव भोक्ष्यते। पुरुषं पत्नीञ्चाधि पितरं बाल्यकाले पितृगृहस्थां कुमारीञ्चाधि मूससं प्रति परमेश्वरेणाज्ञापिता आदेशाः समाप्ताः।

---

# ३१ एकत्रिंशत्तमोऽध्यायः।

१ मिदियनीयलोकानां दण्डनं विलियमस्य वधः १२ स्त्रीणां रक्षणाद् योद्धृभ्यो मूससः क्रोधः २१ तेषां शुचित्वं २५ लोठितद्रव्यविभागः ४८ परमेश्वराय सेनापतीनां दानं।

१ अनन्तरं परमेश्वरो मूससं जगाद त्वम् इस्रायेलवंशकृते मिदियनी-
२ यान् प्रतिकुरु पश्चात् त्वं पितृलोकानां समीपे संग्रहीष्यसे। ततो
३ मूसा लोकान् अवदत्, युष्माकं कतिपया लोका युद्धार्थं सज्जित्वा परमे-
४ श्वरार्थं मिदियनीयान्॰ प्रतिकर्त्तुं तेषां प्रतिकूलं योद्धुं गच्छन्तु। यूयम्
५ इस्रायेलन्वयस्य एकैकवंशाद् एकैकसहस्रं लोकान् योद्धुं प्रेषयत। तत इस्रायेलन्वयस्य एकैकवंशमध्यात् सहस्रजनेषु गृहीतेषु योद्धुं द्वादश-
६ सहस्रलोका घसज्जन्त। इत्थं मूसा एकैकवंशस्य एकैकसहस्रं जनान् पवित्रपात्राणि वाद्यकरतूर्य्यौ च धरन्तं याजकस्त्रेलियासरस्य पुत्रं
७ पीनिहसं युद्धाय प्रेषयामास। ते मूससं प्रति परमेश्वरस्याज्ञानुसारात्
८ मिदियनीयानां प्रतिकूलं युद्ध्वा सर्व्वपुरुषान् जघ्नुः। अत्र ते हतान् इतरजनान् विना इवि-रेकम-सूर-हूर-रेवाख्या मिदियनीयानां पञ्च राजानोऽपि हताः, वियोरस्य सुतो विलियमोऽपि खड्गेन विनाश-
९ याञ्चक्रे। इस्रायेलवंशा मिदियनीयानां सर्व्वयोषितो बालकांश्च बन्दी कृतवन्तः, तेषां सर्व्वपशून् मेषव्रजान् सर्व्वसम्पत्तिञ्च लोठयित्वा

नीतवन्तः। तेषां निवासस्थानानि नगराणि दुर्गाणि च वह्निना दाहया- १०
मासुः। अनन्तरं ते मानुषपशुप्रभृतिलोठितं अपहृतञ्च सर्व्वद्रव्यं निन्युः, ११
यिरीहोः समीपस्थयर्द्दनतीरस्थिते मोयावीयप्रान्तरे स्थितं शिविरं मूसस १२
इलियासरयाजकस्य इस्रायेल्वंशीयसर्व्वसमाजस्य चान्तिकं तान् बन्दि-
नोऽपहृतानि लोठितानि द्रव्याणि च निन्युः।

ततो मूसा इलियासरयाजकः समाजाधिपाश्च तान् साक्षात् कर्त्तुं १३
शिविराद् वहिर्ययुः। रणादागतेभ्यः सेनापतिभ्यो ऽर्थात् सहस्रपतिभ्यः १४
शतपतिभ्यश्च मूसाः क्रुध्यन् तान् अवदत् यूयं किं सर्व्वा योषितो जीवन्ती १५
रक्षितवन्तः? पश्यत इमा विलियमस्य मन्त्रणया पियोर्द्देवमधि परमे- १६
श्वरस्य प्रतिकूलम् इस्रायेल्वंशं पापं कारितवत्यस्तस्मात् परमेश्वरस्य
समाजे महामारी जाता। अतो यूयं बालकानां मध्ये सर्व्वान् पुंबालकान् १७
हत, पुरुषोपभुक्ता योषितश्च हत, किन्तु या बालिकाः पुरुषोपभुक्ता १८
नहि ता रक्षत। यूयं सप्त दिनानि शिविराद् वहि र्वसत, युष्माभि- १९
र्मानुषा हता हतानाञ्च शवाः स्पृष्टास्तस्माद् यूयं तृतीयदिने सप्तमदिने
च स्वान् बन्दिनश्च पावयत। सर्व्वजातीयं वसनं चर्म्मनिर्म्मितं वस्तु २०
छागरोमनिर्म्मितं वस्तु काष्ठनिर्म्मितं पात्रञ्च शुची कुरुत।

पश्चाद् इलियासरयाजको रणागतान् योद्धॄन् अवदत्, परमेश्वरो २१
मूससम् इमां व्यवस्थाम् अवादीत्। स्वर्णरूप्यपित्तललौहरङ्गसीसकादीनि २२
यानि वस्तूनि वह्निना न नश्यन्ति तानि वह्निना गमितानि शुचीनि २३
भविष्यन्ति, तथापि यूयं तानि शुचिजनके तोये धाविष्यथ; यानि वस्तूनि
वह्नौ नश्यन्ति तानि यूयं तोयेन गमयिष्यथ। सप्तमे दिने यूयं स्वेषां २४
वसनानि धाविष्यथ, ततः शुचयः सन्तः शिविरं प्रवेक्ष्यथ।

ततः परमेश्वरो मूससं बभाषे, त्वम् इलियासरयाजकश्च समाजस्य २५
पितृवंशाधिपाश्च मानुषपशुप्रभृतिलोठितवस्तूनां सङ्ख्यां कुरुत। तानि २६
लोठितद्रव्याणि द्विधा कृत्वा युद्धागतयोद्धॄनां सर्व्वसमाजीयानाञ्च मध्ये २७
विभजत। युद्धागतयोद्धृभ्यः परमेश्वराय करं गृह्णीत, अर्थात् तेषां २८
सम्बन्धार्द्धभागान्तर्गतेभ्यो मानवगोगर्द्दभमेषेभ्यश्च पञ्चशतप्राणिनाम् एकैकं २९
प्राणिनमादाय परमेश्वरायोत्तोलनीयनैवेद्यार्थं इलियासरयाजकाय
देहि। इस्रायेल्वंशस्यार्द्धभागान्तर्गतेभ्यो मानुषेभ्यो गोगर्द्दभमेषादिपशु- ३०
भ्यश्च पञ्चाशत् प्राणिनां एकैकं प्राणिनमादाय परमेश्वरस्यावासस्य रक्ष-
णीयरक्षकेभ्यो लेवीयेभ्यो देहि। ततो मूससं प्रति परमेश्वराज्ञया मूसा ३१

१२ इलियासरयाजकश्च सर्व्वं कर्म्म कृतवन्तौ। योद्धृभि र्लोठिता या सम्पत्ति-
१३ रियती सा, पञ्चसप्ततिसहस्राधिकानि षट्लक्षाणि मेषा द्विसप्तति-
१४ सहस्राणि गाव एकषष्टिसहस्राणि गर्दभाः पुरुषानुपभुक्ता द्वात्रिंशत्
१५ सहस्राणि योषितश्च। तस्माद् युद्धगतानाम् अर्द्धांशस्य सङ्ख्येयं पञ्चशता-
१७ धिकसप्तत्रिंशत्सहस्राधिकं लक्षत्रयं मेषाः। तेषां मध्ये परमेश्वरस्य करः
१८ पञ्चसप्तत्यधिकषट्शतानि मेषाः। गावः षट्त्रिंशत्सहस्राणि तासां मध्ये
१९ द्वासप्ततिः परमेश्वरस्य कररूपाः। गर्दभाः पञ्चशतत्रिंशत्सहस्राणि तेषां
४० मध्ये एकाधिकषष्टिः परमेश्वरस्य कररूपाः। मानुष्यः षोड़शसहस्राणि
४१ तासां मध्ये द्वात्रिंशत् परमेश्वरस्य कररूपाः। मूसाः परमेश्वरस्याज्ञया
परमेश्वरस्य करम् अर्थाद् उत्तोलनीयं नैवेद्यम् इलियासरयाजकाय
४२ ददौ। योद्धृगणस्य भागात् मूससा बिभिन्नो य इस्रायेल्वंशस्यार्द्धभागः,
४३ स समाजीयार्द्धभागः संख्यया पञ्चशताधिकसप्तत्रिंशत्सहस्राधिकं लक्षत्रयं
४४ मेषाः षट्त्रिंशत्सहस्राणि गावः पञ्चशताधिकत्रिंशत् सहस्राणि गर्दभाः
४७ षोड़श सहस्राणि मानुष्यश्च। ततो मूसा इस्रायेल्वंशस्य तदर्द्धांशात्
निश्चितं करमर्थात् मानुषपशुभ्यः पञ्चाशत्प्राणिनामेकं प्राणिनं गृहीत्वा
परमेश्वराज्ञात आवासस्य रक्षणीयरक्षिभ्यो लेवीयेभ्यो ददौ।

४८ ततः सहस्रसैन्यशासकाः सहस्रपतयः शतपतयश्च मूससो निकट-
४९ मेत्य तं जगदुः, तव दासा हस्तगतानां योद्धृणां संख्यां कृतवन्तः, तेषाम्
५० एकोऽपि न्यूनो नाभूत्। तस्माद् वयं परमेश्वरस्य सम्मुखे स्वप्राणानां कृते
प्रायश्चित्तं कर्त्तुं लब्धसम्पत्तेः स्वर्णपात्रं नूपुरं बलयं अङ्गुरीयकं कुण्डलं
५१ हारं वा परमेश्वराय नैवेद्यं आनीतवन्तः। मूसा इलियासरयाजकश्च
५२ तानि शिल्पकृताभरणरूपाणि स्वर्णानि तेभ्यो जगृहतुः। परमेश्वरम्
उद्दिश्य सहस्रपतिभिः शतपतिभिश्च निवेदितं स्वर्णं पञ्चाशदधिकसप्त-
५३ शताधिकषोडशसहस्रशेकलपरिमितम् आसीत्। यत एकैको योद्धा
५४ स्वार्थं लोठितं द्रव्यम् आनयत्। ततो मूसा इलियासरश्च सहस्रपति-
शतपतिभ्यस्तानि स्वर्णानि गृहीत्वा परमेश्वरम् उद्दिश्येस्रायेल्वंशस्य
स्मरणाय समाजावासम् आनिन्यतुः।

---

## ३२ द्वात्रिंशाऽध्यायः।

१ गर्दनस्य पूर्व्वदिशि गादवंशस्य रूबेनवंशस्य चाधिकारप्रार्थना ६ तान् प्रति मूसस तिरस्कारः १६ तेषामुत्तरं २० तेषां कथातो मूसोऽङ्गीकारः ३४ नगराणां निर्म्माणञ्च।

रूबेनवंशीयानां गादवंशीयानाञ्च बहवः पशव आसन् तेन यासेर- १
देशं गिलियद्देशञ्च पशुचरणयोग्यं वीक्ष्य गादरूबेनवंशीया एत्य २
मूससम् इलियासरयाजकं समाजाधिपांश्च जगदुः, अटारोतं दीबोनं ३
यासेरं निम्रा हिष्‌बोनं इलियाली सिव्‌मा निबो वियोनश्चैतानि
यानि स्थानानि प्रति परमेश्वर इस्रायेल्‌समाजस्य सम्मुख आहतवान् ४
तान्येव पशुचरणयोग्यानि, तव दासानाञ्च पशवः सन्ति। अतएव तेऽ- ५
वदन् यदि वयं तव दृष्ट्यानुग्रहं प्राप्तास्तर्हि देशमेनं अधिकर्त्तुं भवद्दा-
सेभ्यो देहि यर्द्दनपारं मास्मान् नय।

ततो मूसा गादवंशीयान् रूबेनवंशीयांश्च गदितवान् युष्माकं भ्रातरः ६
किं योद्धुं यास्यन्ति यूयञ्च किमत्रोपवेक्ष्यथ? परमेश्वरेण दत्तं देशं यातुं ७
यूयं कुत इस्रायेल्‌वंशानां मनांसि भग्नाशानि कुरुथ? यदाहं युष्माकं ८
पितॄन् देशं वीक्षितुं कादेशवर्णेयात् प्रैरयं, तदानीं तेऽपीत्थं कृतवन्तः।
फलत इष्‌कोलोपत्यकां यावत् ते गत्वा देशे निरीक्षिते सति परमेश्व- ९
रेण दत्तं देशं यातुं इस्रायेल्‌वंशानां मनांसि तै र्भग्नाशानि कृतानि।
अतस्तदानीं परमेश्वरस्य क्रुधि प्रज्वलिते स शपमान उक्तवान् अहं १०
यं देशमधि इब्राहीम इस्‌हाको याकूवश्चान्तिके शपथम् अकार्षं, ११
तं देशं मिसराद् आगतानां विंशतिवर्षाधिकवयस्कानां लोकानां
मध्ये कोऽपि वीक्षितुं न प्राप्स्यति यस्मात् ते सर्व्वे मम सम्यगनुगता
नहि। केवलं किनसीययिफुन्नेः पुत्रः कालेवो नूनस्य पुत्रो यिहो- १२
शूयश्चैतौ तं द्रक्ष्यतः, यतस्तौ सर्व्वथा परमेश्वरस्यानुगतौ। इत्थं इस्रा- १३
येल्‌वंशं प्रति परमेश्वरस्य क्रोधे प्रज्वलिते यावत् परमेश्वरस्य दृष्टौ
कुकर्म्मकारी सर्व्ववंशो न व्यनश्यत् तावत् चत्वारिंशद्वर्षं यावत् स तान्
प्रान्तरे भ्रामयामास। पश्यत पापिष्ठवंशाद् उत्पन्ना यूयम् इस्रायेल्- १४
वंशाय परमेश्वरस्य क्रोधं वर्द्धयितुं स्वपितॄणां पदं गृहीतवन्तः। यतो १५
यदि यूयं तस्य पश्चाद्गमनात् परावर्त्तध्वं तर्हि इस्रायेल्‌लोकांस्तेन पुनः
प्रान्तरे त्यक्ष्यन्ते युष्माभिश्चैते सर्व्वे लोका विनाशयिष्यन्ते।

ततः परं ते समीपमेत्य कथयामासुः वयमत्र स्वपशुकृते गोष्ठानि १६
स्वबालककृते नगराणि च निर्म्मास्यामः। यावच्च वयं इस्रायेल्‌वंशान् १७
स्वस्थानं न प्रवेशयामस्तावत् तेषामग्रेऽग्रे सज्जमाना गमिष्यामः, किन्त्व-
स्माकं बालका देशनिवासिभ्यो भयात् प्राचीरवेष्टितपुरेषु वत्स्यन्ति।
इस्रायेल्‌वंशस्य सर्व्वे जना यावत् स्वाधिकारं नाप्नुवन्ति तावद् वयं १८

१९ खखपरिजनानां समीपं न प्रत्यागमिष्यामः। यर्द्दनस्य पारे तैः साकं वयं नाधिकारं ग्रहीष्यामः, किन्तु यर्द्दनस्य पूर्व्वपारे ऽस्माकम् अधिकारो भविष्यति।

२० ततो मूसास्तान् अवदत्, यदि यूयम् इदं कुरुथ, अर्थात् सज्जमानाः
२१ परमेश्वरस्य सम्मुखे योद्धुं गच्छथ, स च यावत् खखरिपून् खसम्मुखाद् बहि र्न करिष्यति तावद् यूयं सर्व्वे यदि परमेश्वरस्य सम्मुखे सज्जमाना
२२ यर्द्दनतटिनीपारं यास्यथ, ततो देशे परेशस्य वशीभूते यूयं पुनरागमिष्यथ, तर्हि यूयं परमेश्वरस्य इस्रायेल्वंशस्य च समीपे निर्द्दोषा भविष्यथ, परमेश्वरस्य सम्मुखे देशेऽस्मिन् युष्माकम् अधिकारो भविष्यति।
२३ किन्तु यूयं यदि तन्न करिष्यथ, तर्हि पश्यत परमेश्वरस्य प्रतिकूलं अपरात्स्यथ, युष्माकं पापं युष्माकम् उद्देशं प्राप्स्यतीति निश्चयं
२४ जानीथ। यूयं खखबालकानां कृते नगराणि पशूनाञ्च कृते गोष्ठानि
२५ निर्म्मात, खखास्यात् निर्गतवाक्यानुसारात् कुरुत। पश्चाद् गादवंशीया रूवेनवंशीयाश्च मूससम् ऊचुः प्रभुरस्माकं यथाज्ञापयत् भवद्दासा वयं
२६ तथैव करिष्यामः। अस्माकं बालका जायाः पशुव्रजाश्च सर्व्वे ऽत्र
२७ गिलियदस्य सर्व्वनगरे स्थास्यन्ति। अस्माकं प्रभोराज्ञया भवद्दासाः सर्व्वे
२८ सज्जमाना योद्धुं परमेश्वरस्य सम्मुखे पारं यास्यामः। ततो मूसास्तानधि याजकम् इलियासरं नूनपुत्त्रं यिहोशूयम् इस्रायेल्वंशाधिपांश्चादिष्ट-
२९ वान्। मूसास्तान् गदितवान्, गादवंशीया रूवेनवंशीयाश्च यदि परमेश्वरस्य सम्मुखे युष्माभिः साकं सज्जमाना योद्धुं यर्द्दनतटिनीपारं यान्ति, तर्हि युष्माकं सम्मुखे देशे वशीभूते यूयं तेभ्यो गिलियदं देशम्
३० अधिकर्त्तुं दास्यथ। किन्तु यदि ते सज्जमाना युष्माभिः साकं नदीपारं न
३१ गच्छन्ति, तर्हि ते युष्माभिः समं किनानदेशे वत्स्यन्ति। ततो गादवंशीया रूवेनवंशीयाश्च प्रत्यवदन्, परमेश्वरो भवद्दासान् यदादिशत् वयं
३२ तदेव करिष्यामः। वयं परमेश्वरस्य सम्मुखे सज्जमानाः पारं गत्वा किनानदेशं यास्यामः, तेन यर्द्दनस्य पूर्व्वपारे ऽस्माकम् अधिकारो
३३ भविष्यति। ततो मूसास्तेभ्यो गादवंशीयेभ्यो रूवेनवंशीयेभ्यश्च यूषफसुतस्य मिनशेरर्द्धवंशाय च इमोरीयाणां भूपस्य सीहोनस्य राज्यं वाशनस्य भूपतेर् ओगस्य राज्यम् अर्थात् नानाप्रदेशस्थनगरविशिष्टं जनपदं चतुष्पार्श्वीयनगराणि च ददौ।

३४ ततो दीबोनं अटारोतं अरोयेरं अट्रोतं शोफनं यासेरं यग्बिहं

वेत्निम्रा वैयारस्वैतन्नामविशिष्टानि प्राचीरवेष्टितानि नगराणि ३६
गोष्ठानि च गादवंशीयै र्निर्म्मितानि। हिष्वोनम् इलियाली किरि- ३७
याथयिमं नामपरिवर्त्तिते निवोवाल्मियोने शिव्मा चैतानि पुराणि ३८
रूवेनवंशीयै र्निर्म्मितानि स्वनिचितपुराणां नामानि च कृतानि। मिनशेः ३९
सुतस्य माखीरस्य वंशो गिलियदं गत्वा तदाचक्रमे तत्स्थाननिवासिन
इमोरीयान् अनधिकारिणो ऽकरोत्। ततो मूससा मिनशेः सुतस्य ४०
माखीरस्य वंशाय गिलियदे दत्ते स तन्मध्ये उवास। मिनशिवंशीयो ४१
यायीरो गत्वा तस्य ग्रामान् करतलीकृत्य तेषां नाम हावोत्-यायीरं
(यायीरग्रामाणीति) चकार। नोवहश्च गत्वा किनातं तस्य शाखानगराणि ४२
च वशीकृत्य स्वनामानुरूपं तन्नाम नोवहं कृतवान्।

---

# ३३ त्रयस्त्रिंशोऽध्यायः।

१ इस्रायेल्वंशस्य द्वाचत्वारिंशावस्थानानां कथनं ५० किनानीयलोकान् नाशयितुं आदेशस्य।

य इस्रायेल्वंशीयाः स्वस्वसैन्यैः सार्कं मूसोहारोणाभ्यां मिसरदेशाद् १
वहिरानीतास्तेषाम् अवस्थितिकथनं। मूसाः परमेश्वराज्ञया तेषां २
यात्रानुसाराद् अवस्थितीनां विवृतिं लिलेख। तेषाम् अवस्थितीनां
विवृतिरियं। प्रथममासस्य पञ्चदशदिने निस्तारमहदिनस्य प्रातर् ३
इस्रायेल्वंशा मिस्रीयाणां समक्षं महाबलेन रामिषेषाद् वहिर्भूय प्रत-
स्थिरे। तद्दिने मिस्रीयाः शवान् श्मशाने न्यदधत, यतः परमेश्वरस्तेषां ४
मध्ये प्रथमजान् सर्व्वान् अवधीत्, परमेश्वरश्च तेषां देवानप्यदण्डयत्।
इस्रायेल्वंशो रामिषेषात् प्रस्थाय सुक्कोते शिविरम् अस्थापयत्। सुक्को- ५
तात् प्रस्थाय प्रान्तरस्य प्रान्तस्थ एथमे शिविरं स्थापितवान्। एथमात् ७
प्रस्थाय वाल्सिफोनस्य सम्मुखस्थं पीहहीरोतं परावृत्य मिग्दोलस्य
पूर्व्वदिशि शिविरं स्थापितवान्। ते पीहहीरोताद् यात्रां कृत्वा ८
सागरमध्येन प्रान्तरं प्रविविशुः, एथमप्रान्तरेण दिनत्रयं गत्वा मारायां
शिविरं स्थापयामासुः। मारातो यात्रां कृत्वा एलीमम् उपस्थाय तत्र ९
शिविरं स्थापितवन्तः, एलीमे द्वादश प्रस्रवणाः सप्तति खर्ज्जूरपादपा-
श्चासन्। एलीमात् प्रस्थाय सुफार्णवसमीपे शिविरं स्थापितवन्तः। १०
सुफार्णवाद् यात्रां कृत्वा सीनप्रान्तरे शिविरं स्थापयामासुः। सीन- ११
प्रान्तराद् यात्रां कृत्वा दफ्कायां शिविरं स्थापयामासुः। दफ्कातो १२

१४ यात्रां कृत्वा आलूशे शिविरं स्थापयामासुः। आलूशाद् यात्रां कृत्वा रिफीदीमे शिविरं स्थापयामासुः, तत्र लोकानां पानार्हं तोयं नासीत्।
१५ रिफीदीमाद् यात्रां कृत्वा सीनयप्रान्तरे शिविरं स्थापितवन्तः।
१६ सीनयप्रान्तराद् यात्रां कृत्वा किब्रोद्धत्तावायां शिविरं स्थापयामासुः।
१७ किब्रोद्धत्तावातो यात्रां कृत्वा हत्सेरोते शिविरं स्थापयामासुः। हत्सेरो-
१८ ताद् यात्रां कृत्वा रित्मायां शिविरं स्थापयामासुः। रित्मातो
२० यात्रां कृत्वा रिम्मोणपेरषे शिविरं स्थापयामासुः। रिम्मोणपेरषाद्
२१ यात्रां कृत्वा लिब्नायां शिविरं स्थापयामासुः। लिब्नातो यात्रां कृत्वा
२२ रिस्सायां शिविरं स्थापितवन्तः। रिस्सातो यात्रां कृत्वा किहेलाथायां
२३ शिविरं स्थापयामासुः। किहेलातो यात्रां कृत्वा शेफराद्रौ शिविरं
२४ स्थापयामासुः। शेफराद्रे र्यात्रां कृत्वा हरादायां शिविरं स्थापयामासुः।
२५ हरादाया यात्रां कृत्वा मखेलोते शिविरं स्थापयामासुः। मखेलोताद्
२७ यात्रां कृत्वा तहते शिविरं स्थापयामासुः। तहताद् यात्रां कृत्वा तेरहे
२८ शिविरं स्थापयामासुः। तेरहाद् यात्रां कृत्वा मित्कायां शिविरं स्थाप-
२९ यामासुः। मित्काया यात्रां कृत्वा हश्मोनायां शिविरं स्थापयामासुः।
३० हश्मोनाया यात्रां कृत्वा मोषेरोते शिविरं स्थापयामासुः। मोषेरोताद्
३१ यात्रां कृत्वा बिनेयाकने शिविरं स्थापयामासुः। बिनेयाकनाद् यात्रां
३२ कृत्वा होर्हगिद्गदे शिविरं स्थापयामासुः। होर्हगिद्गदाद् यात्रां
३४ कृत्वा यट्वाथायां शिविरं स्थापयामासुः। यट्वाथाया यात्रां कृत्वा
३५ अब्रोणायां शिविरं स्थापयामासुः। अब्रोणाया यात्रां कृत्वा त इत्सि-
३६ योनगेबरे शिविरं स्थापयामासुः। इत्सियोनगेबराद् यात्रां कृत्वा
३७ सीनप्रान्तरीयकादेशे शिविरं स्थापयामासुः। कादेशाद् यात्रां कृत्वा
३८ तैर् इदोमदेशस्य प्रान्तरीयहोराद्रौ शिविरं स्थापितं। तदा हारोणो याजकः परमेश्वराज्ञया होराद्रिम् आरूढवान् तत इस्रायेल्वंशस्य मिसराद् बहिरागमनस्य चत्वारिंशद्वर्षस्य पञ्चममासस्य प्रथमेऽह्नि तत्र
३९ मृतः। होराद्रौ हारोणयाजकस्य मृतिकाले स त्रयोविंशाधिकशतवत्सर-
४० वयस्क आसीत्। तत्र किनानदेशस्य दक्षिणसीमावासी किनानीयाराद-
४१ भूप इस्रायेल्वंशागमनस्य वार्त्तां श्रुतवान्। अपरं ते होराद्रे र्यात्रां
४२ कृत्वा सल्मोनायां शिविरं स्थापितवन्तः। सल्मोनाया यात्रां कृत्वा
४३ पूनोने शिविरं स्थापयामासुः। पूनोनाद् यात्रां कृत्वा ओबोते
४४ शिविरं स्थापयामासुः। ओबोताद् यात्रां कृत्वा मोयाबप्रान्तस्थ इयी-

अवारीमे शिविरं स्थापयामासुः। इयी-अवारीमाद् यात्रां कृत्वा दिवो- ४५ नगादे शिविरं स्थापयामासुः। दीवोनगादाद् यात्रां कृत्वा त अल्मोन- ४६ दिव्राथयिमे शिविरं स्थापयामासुः। अल्मोन-दिव्राथयिमाद् यात्रां ४७ कृत्वा निवोः सम्मुखस्थ अवारीमाद्रौ शिविरं स्थापितवन्तः। अवारी- ४८ माद्रे यात्रां कृत्वा यिरीहोः सम्मुखस्थयर्दनसमीपस्थे मोयावीयप्रान्तरे शिविरं स्थापयामासुः। ते यर्दनसमीपे वैत्-यिशीमोतम् आरभ्य आवेल- ४९ शिट्टीमं यावत् मोयावीयप्रान्तरे शिविरं स्थापयित्वा तस्थुः।

तदा परमेश्वरो यिरीहोः समीपस्थयर्दनसन्निधौ मोयावीयप्रान्तरे ५० मूससं जगाद, इस्रायेल्वंशेभ्यः कथय तान् एतां वाचं वद, यूयं यदा ५१ यर्दनतटिनीपारं गत्वा किनानदेशं प्राप्स्यथ, तदा स्वेषां सम्मुखात् ५२ तद्देशवासिनो वहिः करिष्यथ, तेषां सर्व्वाः प्रतिमा भंच्यथ सर्व्वान् सिक्तविग्रहान् विनाशयिष्यथ, तेषां सर्व्वमुच्चस्थानम् उच्छेत्स्यथ। तद्देश- ५३ निवासिनो ऽनधिकारिणो विधाय देशमध्ये यूयं वत्स्यथ, यतोऽहम् अधिकर्त्तुम् युष्मभ्यं तं देशं दत्तवान्। यूयं गुटिकापातेन स्वस्ववंशा- ५४ नुसाराद् देशं विभज्य ग्रहीष्यथ, तत्र बहुसंख्यकेभ्योऽधिकांशं अल्प- संख्यकेभ्योऽल्पांशं दास्यथ, यस्य गुटिका यत्र पतति तत्रैव तस्यांशो- भविष्यति, इत्थं यूयं स्वस्वपितृवंशानुसाराद् अधिकरिष्यथ। किन्तु ५५ यूयं यदि स्वस्वसम्मुखात् तान् देशवासिनो वहि र्न कुरुथ तर्हि युष्माभि र्न विनष्टा ये ऽवशेक्ष्यन्ते ते युष्मन्नेत्रेषु कण्टकानि युष्माकं पार्श्वेषु तीक्ष्णकण्टकानि च भविष्यन्ति युष्माकं तत्र निवासदेशे युष्मान् क्लेक्ष्यन्ति च। अहमपि तान् प्रति यथा व्यवहर्त्तुं मतिं कृतवान् तथैव युष्मान् ५६ प्रति व्यवहरिष्यामि।

---

## ३४ चतुस्त्रिंशोऽध्यायः।

१ इस्रायेल्लोकान् प्रति प्रतिज्ञातस्य देशस्य सीमानिर्णयः १० देशं विभक्तुं निरूपितधिपानां नामानि च।

अनन्तरं परमेश्वरो मूससम् अवदत्, त्वम् इस्रायेल्वंशान् इत्था- १ दिश तेभ्य इति वद, युष्मासु किनानदेशं प्राप्तेषु स देशो ऽर्थात् २ स्वस्वप्रदेशैः समं किनानदेशो युष्माभिरधिकरिष्यते। युष्माकं दक्षि- ३ णकोणाद् इदोमसमीपस्थात् सीनप्रान्तराद् युष्माकं दक्षिणसीमा

४ पूर्व्वदिशि लवणसागरस्य कूलं भविष्यति। ततः सीमा दक्षिणदिशं परावृत्य अक्रब्बीमाख्येनारोहणपथेन सीनपर्य्यन्तं यास्यति, तस्मात् कादेशवर्णेयदक्षिणे हत्सर-अदरम् आगत्य असमोनं यावद् यास्यति। ५ सा सीमा असमोनाद् मिसरनदीं यावद् गमिष्यति महासमुद्रस्तद्दक्षि-६ णसीमायाः शेषो भविष्यति। महासमुद्रो युष्माकं पश्चिमसीमा भवि-७ ष्यति, एषैव युष्माकं पश्चिमसीमा भविष्यति। युष्माकम् उत्तरसीमा चेयं, ८ महासमुद्रात् होरपर्व्वतो युष्माभि र्लक्ष्यतां। होराद्रे र्हमातप्रवेश-९ स्थानं लक्ष्यतां, तस्मात् सा सीमा सिदादं यावद् यास्यति। सा सीमा सिफ्रोणं यावद् यास्यति, हत्सरैननं तस्याः शेषं भविष्यति, १० एषा युष्माकम् उत्तरसीमा भविष्यति। पूर्व्वसीमार्थं युष्माभिर्हत्सरैननात् ११ शिफामं लक्ष्यतां। तस्मात् सा सीमा ऐनस्य पूर्व्वदिशा शिफामाद् रिब्लां यावद् यास्यति, सा सीमा किन्नेरतह्रदस्य पूर्व्वकूलेन यास्यति। १२ तस्मात् सा सीमा यर्द्दनेन यास्यति लवणसमुद्रश्च तस्याः शेषो भविष्यति, १३ इति चतुर्दिक्स्थसीमाभि र्युष्माकं देशो बद्धो भविष्यति। ततो मूसा इस्रायेल्वंशान् इत्यादिदेश, परमेश्वरः सार्द्धनववंशेभ्यो यं देशं दातुम् आज्ञापयत् अर्थाद् यं देशं यूयं गुटिकापातेन अधिकरिष्यथ स १४ एष देशः। यतो रूबेनीयवंशो गादीयवंशो मिनशेरर्द्धवंशश्च स्वस्वपितृ-१५ वंशानुसारात् स्वस्वाधिकारं प्राप्ताः। यर्द्दनस्य पारे यिरीहोः समीपे पूर्व्वस्यां सूर्य्योदयदिशि ते सार्द्धद्वयवंशा अधिकारं प्राप्ताः।

१६ परमेश्वरो मूससं जगाद, ये नरा युष्मदर्थं देशम् अंशयिष्यन्ति, १७ तेषां नामानीमानि, इलियासरयाजको नूनस्य सुतो यिहोशूय एकै-१८ कस्माद् वंशाद् एकैकाधिपश्चैतान् नरान् यूयं देशम् अंशयितुं वरीष्यथ। १९ तेषां नामानि, यिहूदावंशाद् यिफुन्निसुतः कालेवः। शिमियोनवंशाद् २१ अम्मीहूदस्य सुतः शिमूयेलः। विन्यामीनवंशात् किष्लोनस्य पुत्त्र इली-२२ ददः। दानवंशाद् यग्लेः सुतो वुक्किरध्यक्षः। यूषफ्वंशाद् अर्थात् २४ मिनशिवंशाद् एफोदस्य सुतो हन्नीयेलोऽध्यक्षः। इफ्रयिम्वंशात् शिप्त-२५ नस्य सुतः किमूयेलो ऽधिपः। सिवूलूनवंशात् पर्णकस्य पुत्त्र इलीषाफनो-२६ ऽधिपः। इषाखरवंशाद् अस्सनस्य पुत्त्रः पल्टियेलोऽधिपः। आशेरवंशात् २८ शिलोमिपुत्त्रो ऽहीहूदोऽधिपः। नप्तालिवंशाद् अम्मीहूदस्य सुतः पिदहे-२९ लोऽधिपः। किनानदेशम् इस्रायेल्वंशार्थम् अंशयितुं परमेश्वरेणैते जना निर्द्दिष्टाः।

# ३५ पञ्चत्रिंशोऽध्यायः।

१ लेवीयानां नगराणां तदीयपरिसराणाम् आश्रयनगराणाञ्च निरूपणं ९ हन्तृ-प्रतिहन्त्रो र्विधिः ३० वधकेभ्य उत्कोचग्रहणे प्रतिषेधश्च।

परमेश्वरो मोयाबीयप्रान्तरे यिरीहोः समीपस्थयर्दननद्याः सन्निधौ १ मूससं गदितवान् त्वं स्वस्वभूम्यधिकारात् कतिपयानि निवासनगराणि २ तेषां नगराणां चतुर्दिक्स्थान् परिसरांश्च लेवीयेभ्यो दातुम् इस्रायेल्वंशम् आदिश। तानि सर्व्वपुराणि तेषां निवासाय भविष्यन्ति ते च परिसरा- ३ स्तेषां पशुसम्पत्तिजन्तूनां कृते भविष्यन्ति। यूयं यद्यत् पुरं लेवीयेभ्यो ४ दास्यथ तत्परिसरो नगरप्राचीरस्य वहिश्चतुष्पार्श्वेषु सहस्रहस्तपरि-मितो भविष्यति। यूयं नगरस्य वहिःस्थितां पूर्व्वसीमां द्विसहस्रहस्तपरि- ५ मितां दक्षिणसीमां द्विसहस्रहस्तपरिमितां पश्चिमसीमां द्विसहस्रहस्त-परिमिताम् उत्तरसीमाञ्च द्विसहस्रहस्तपरिमितां करिष्यथ, तन्मध्ये पुरं भविष्यति तच्च तेषां नगरपरिसरो भविष्यति। घातकानां पलायनाय ६ यानि षड् आश्रयपुराणि युष्माभि र्दास्यन्ते तानि तेभ्योऽन्यानि द्विचत्वा-रिंशत् पुराणि च यूयं लेवीयेभ्यो दास्यथ। साकल्यतो युष्माभिरष्ट- ७ चत्वारिंशत् पुराणि तदीयपरिसराश्च लेवीयेभ्यो दास्यन्ते। यूयम् एकैकस्य ८ वंशस्य प्राप्तांशानुसाराद् इस्रायेल्वंशस्याधिकृतभूमे र्लेवीयेभ्यस्तानि नग-राणि दास्यथ, अधिकादधिकं अल्पादल्पं दास्यथ।

परमेश्वरो मूससं जगाद त्वम् इस्रायेल्वंशेभ्यः कथय तान् इति ९ वाचं वद यदा यूयं यर्दनपारं गत्वा किनानदेशं प्राप्स्यथ, तदा येन केन- ११ चिद् अज्ञानतो नरो हन्यते स हन्ता यत् पुरं पलायमानो रक्षामियात् तादृशान्याश्रयनगराणि युष्माभिः संस्थाप्यन्तां। तेन हन्ता विचाराय १२ समाजसम्मुखम् उपस्थितेः प्राक् यथा न म्रियेत तदर्थं तानि नगराणि प्रतिहन्तु र्हस्ताद् युष्माकम् रक्षास्थानानि भविष्यन्ति। युष्माभिरे- १३ तदर्थं यानि नगराणि दातव्यानि तान्याश्रयनगराणि षट्संख्यकानि भविष्यन्ति। तेषां मध्ये त्रीणि पुराणि यर्दनस्य पूर्व्वपारे त्रीणि पुराणि १४ च किनानदेशे युष्माभि र्दास्यन्ते, तान्येवाश्रयपुराणि भविष्यन्ति। इस्रायेल्वंशीयेन वा तन्मध्यवासिना विदेशिना येन केनचिदज्ञानात् १५ नरो हन्यते स यथा तत् स्थानं पलायेत तत्कृते तानि षट् पुराणि आश्रयरूपाणि भविष्यन्ति। यदि कश्चित् लौहास्त्रेण कञ्चनाहन्ति १६ तेन च स म्रियते तर्हि स नरहा, स च हन्तावश्यं हननीयः। वा येन १७

नरं मारयितुं शक्नोति तादृशं पाषाणं करेणादाय यदि कञ्चनाहन्ति
१८ तेन च स म्रियते तर्हि स नरहा, स च हन्तावश्यं घानिष्यते। यद्वा येन
मारयितुं शक्नोति तादृशं काष्ठमयम् अस्त्रं करेणादाय यद्याहन्ति तेन
१९ च स म्रियते तर्हि स नरहा, स च हन्तावश्यं घानिष्यते। प्रतिहन्ता
२० स नरहा हननीयः, स तेन दृष्टएव हननीयः। यदि कश्चित् द्वेषात्
कञ्चनाहन्ति वा व्याधवत् संलक्ष्य तदुपर्य्यस्त्रं निक्षिपति तेन च स
२१ म्रियते, यदि वा शत्रुत्वात् करेणाहन्ति तेन च स म्रियते, तर्हि स
येनाहतः सोऽवश्यं घानिष्यते, यतः स नरहा, स च हन्ता प्रतिहन्ता
२२ दृष्टएव हननीयः। शत्रुत्वं विना यदि कश्चिद् अज्ञानतः कञ्चनाहन्ति
२३ वा गवेषणं विनास्त्रं निक्षिपति, वा येन मारयितुं शक्नोति तादृशं
पाषाणं नरं न वीक्ष्य कस्यचिद् उपरि निक्षिपति तेन च स म्रियते,
२४ किन्तु यदि स तस्य रिपुरनिष्टचेष्टी वा न भवति, तर्हि हन्तृप्रतिहन्त्रो
२५ र्विचारो समाजेनैतद्विध्यनुसारात् निश्चेतव्यः। समाजः प्रतिहन्तुः
करात् तं हन्तारम् उद्धरिष्यति, स च यत्र पलायितस्तस्मिन् आश्रयनगरे
पुनस्तं प्रेषयिष्यति, स च पूततैलेनाभिषिक्तस्य महायाजकस्य मृतिं यावत्
२६ तत्र स्थास्यति। किन्तु यो हन्ता यदाश्रयपुरं पलायितः, कदाचिद्
२७ यदि स तत्सीमातो बहिर्भूय प्रतिहन्त्रा तदाश्रयपुरस्य सीमाया बहिः
प्राप्यते, तर्हि स हन्ता प्रतिहन्त्रा हननीयो भवति, तस्मिंश्च रक्तपाताप-
२८ राधो न भविष्यति। यतो महायाजकस्य मृतिं यावद् आश्रयपुरे तेन
न्युषितव्यं, किन्तु महायाजके मृते सति स हन्ता स्वीयभूम्यधिकारं
२९ प्रत्यागमिष्यति। एतानि वचनानि युष्माकं सर्व्वनिवासे युष्मत्पुरुष-
परम्परया विचारविधिरूपेण मान्यानि भविष्यन्ति।

३० यो हन्ता कञ्चन जनं हन्ति स साक्षिणां वाक्येन घानिष्यते, किन्त्वेकस्य
३१ साक्षिणो वाक्यात् कस्यापि प्राणदण्डो न कर्त्तव्यः। प्राणदण्डयोग्यस्य हन्तुः
३२ प्राणरक्षार्थं यूयम् उत्कोचं मा ग्रहीष्यथ सोऽवश्यं घानिष्यते। आश्रय-
पुरे पलायितो नरो यथा याजकस्य मरणात् प्राक् स्वदेशं प्रत्यागत्य
३३ वसेत्, तदर्थं तस्मात् किञ्चिद् उत्कोचं मा गृह्णीत। यूयं स्वनिवास-
देशम् अपूतं मा कुरुत, यतो रुधिरं देशम् अपूतं करोति रुधिर-
३४ पातिनो रुधिरं विना देशस्य प्रायश्चित्तं न भवति। अतो यूयं यं देशम्
अधिकरिष्यथ, तत्राहं वसामि तमपूतं मा कुरुत यतः परमेश्वरो-
ऽहम् इस्रायेल्मध्यवासी।

# ३६ षट्त्रिंशोऽध्यायः।

१ सिलफदस्य कन्यानाम् अधिकारकथनं ५ वंशाधिकारं रक्षितुं स्ववंशे तासां विवाह-निरूपणं १० निरूपणानुरूपं कर्म्म करणञ्च।

ततः परं यूषफवंशान्तर्गता मिनशिवंशीयमाखीरस्य सुतस्य गिलि- १ यदस्य पितृवंशाधिपा मूसस इस्रायेलीयपितृवंशाधिपानाञ्च समक्षम् एत्य कथयामासुः। ते जगदुः, परमेश्वरो गुटिकापातेनेस्रायेल्वंशाय २ देशम् अंशयितुं मत्प्रभुम् आदिष्टवान्, अस्माकं भ्रातुः सिलफदस्य भूमिं तत्कन्या अधिकारयितुम् अस्मत्प्रभुम् आज्ञापितवांश्च। किन्त्वि- ३ स्रायेल्वंशमध्येऽन्यवंशीयेन केनचित् साकं यदि तासां विवाहो भवति, तर्ह्यस्माकं पैतृकभूम्यधिकारात् तासाम् अधिकारविशिष्टा भूमिर्नायिष्यते, ता यद्वंशान्तर्गतास्तद्वंशाधिकारे योक्ष्यते च, इत्थं सा अस्मदधिकृतांशाद् हरिष्यते। तत इस्रायेल्वंशस्य महानन्दे भूते ता यद्वंशान्तर्गता- ४ स्तद्वंशस्य भूम्यधिकारे तासां भूमि र्योक्ष्यते, इत्थम् अस्मत्पितृवंशात् तासां भूम्यधिकारो हारिष्यते।

ततो मूसाः परमेश्वरस्याज्ञया इस्रायेल्वंशाय कथितवान्, यूषफ- ५ वंशीया न्याय्यं कथयन्ति। परमेश्वरः सिलफदकन्या अधीत्यादिशत्, ६ ता यान् कांश्चन वृणते तेषामेव जाया भविष्यन्ति, किन्तु केवलं स्वपितृवंशमध्ये स्वकुलस्यान् उद्वक्ष्यन्ति। इस्रायेल्वंशीयानां भूम्यधिकार एक- ७ वंशाद् अन्यवंशं न परिवर्त्तिष्यते, इस्रायेल्वंशाः सर्व्वे स्वस्वपितृवंशाधिकारे स्थास्यन्ति। सर्व्व इस्रायेल्वंशो यथा स्वस्वपैतृकभूम्यधिकारं ८ भुंक्ते, तदर्थम् इस्रायेल्वंशमध्येऽधिकारिणी सर्व्वा कन्या स्वपितृवंशीयस्य कस्यचित् नरस्य जाया भविष्यति। तत एकवंशाद् अन्यवंशम् ९ अधिकारो न परिवर्त्तिष्यते, इस्रायेलीयानाम् एकैको वंशः स्वस्वपित्रधिकारे स्थास्यति।

अनन्तरं मूसाः परमेश्वरेण यथादिष्टस्तथा सिलफदस्य कन्याभिर- १० कारि। यतो महला-तिर्सा-हग्ला-मिल्का-नोयानामानः सिलफदस्य ११ कन्याः स्वस्वपितृव्यपुत्रैरूढाः। यूषफसुतस्य मिनशे र्वंशान्तर्गतैः साकं १२ तासां विवाहे निष्पन्ने तासां भूम्यधिकारस्तासां पितृवंश एव स्थितः। परमेश्वरो यिरीहोः समीपस्थयर्दनतटे मोयाबीयप्रान्तरे मूसोद्वारा १३ इस्रायेल्वंशं प्रति एता आज्ञा नीतिवाक्यानि चादिष्टवान्।

# द्वितीयोपदेशः

अर्थात्

# मूसालिखितं पञ्चमपुस्तकं।

---

## १ प्रथमोऽध्यायः।

१ यात्राया चत्वारिंशद्वर्षे इस्रायेल्वंशाय मूससः कथनं ६ परमेश्वरस्य प्रतिज्ञा ९ अधिपानां निरूपणं १९ इमोरीयलोकानां गिरिं प्रति यात्रा २२ अग्रे चाराणां प्रेषणं चाराणां वाक्यात् लोकानां कलहः ३४ तान् प्रति परमेश्वरस्य कोपः प्रतिज्ञादिश्च।

१ पारण-तोफल-लावन-हत्सेरोत्-दीयाहवानां मध्यस्थले सूफसम्मुखस्थे प्रान्तरे ऽर्थात् यर्दननद्याः पूर्व्वपारस्थप्रान्तरे मूसाः सर्व्वान् इस्रा-
२ येल्वंशान् प्रति एतान् उपदेशान् कथितवान्। सेयीरगिरिणा होरेव-
३ मारभ्य कादेश्बर्णेयं यावत् एकादशदिनगम्यो मार्ग आस्ते। चत्वारिंशद्वर्षस्यैकादशमासस्य प्रथमेऽह्नि मूसाः परमेश्वरेण यथादिष्टस्तथैव तेभ्यः
४ कथयामास। हिष्वोननिवासिन इमोरीयसीहोनराजस्य बधात् परम
५ चस्तारोन्निवासिनि वाशानीयभूप ओगेऽपीद्रियां हते सति, मूसा यर्दनस्य पूर्व्वपारे मोयावीयदेशे शास्त्रमिदं व्याहर्तुम् आरभत।

६ अस्माकं प्रभुः परमेश्वरो होरेवे ऽस्मभ्यं कथितवान्, यूयम् अस्मिन्
७ गिरौ बहुदिनान्युषितवन्तः, इदानीं परावृत्य इमोरीयाणां गिरिश्रेणीं तन्निकटस्थं प्रान्तरं गिरिं तलभूमिं दक्षिणदेशं सागरतटञ्चार्थात किनानीयानाम् निखिलदेशं लिवानोनाद्रिञ्च गत्वा फरादाख्यं महानदं
८ यावत् यात्रां कुरुत। पश्यताहं युष्माकं सम्मुखे तं देशं समार्पयं, तस्मात् परमेश्वरो युष्मत्पूर्व्वपुरुषेभ्य इब्राहीम इस्हाके याकूवे च तेषां पश्चात् तेषां वंशाय च यं देशं दातुं प्रतिज्ञातवान् यूयं तं देशं गत्वाधिकुरुत।

९ तत्कालेऽहं युष्मभ्यम् अकथयं, युष्माकं भारं सोढुम् एकेन मया
१० न साध्यं। यस्माद् युष्मत्प्रभुना परमेश्वरेण वर्द्धिता यूयमिदानीं बहु-
११ त्वात् आकाशस्य तारागण इव जाताः। युष्माकं पैतृकः प्रभुः परमेश्वरो

यथाङ्गीकृतवान् तथैव युष्मान् पुनः सहस्रगुणान् करोतु आशिषञ्च ददातु। युष्माकम् एतावन्तं भारं गुरुत्वं विवादञ्च वोढुम् एकेन मया १२ किं शक्यते? यूयं स्वस्ववंशानां बुद्धिमज्ज्ञानिनः परिचितांश्च लोकान् १३ वृणीत, तानहं युष्माकं मुख्यान् करिष्यामीति वाक्ये मया कथिते १४ यूयं प्रत्यवदत त्वं यत् कर्त्तुम् आदिशसि, तद् भद्रं। ततोऽहं युष्माकं १५ वंशानां मुख्यान् ज्ञानिनः परिचितांश्च जनान् आदाय युष्माकम् अधिपान् कृत्वा सहस्रपतीनां शतपतीनां पञ्चाशत्पतीनाञ्च पदानि दत्त्वा युष्मद्वंशानां शास्तृत्वे नियुक्तवान्। तदाहं तान् विचारकान् इत्यादिशं, १६ यूयं वादिप्रतिवादिनां स्वस्वभ्रातॄणां वचांसि श्रुत्वा वादिनं तद्भ्रातरञ्च वा विदेशिनञ्च न्याय्यं विचारयिष्यथ। विचारे यूयं कस्यापि पक्षपातं मा १७ कार्ष्ट यथा क्षुद्रस्य तथा महतोऽपि वाचं शृणुत, मानुषाद्भयात् मा बिभीत, यतो विचार ईश्वरस्यैव; यस्य विचारो युष्माभि र्दुर्गम्यः स विवादो मदन्तिकम् आनीयतां तमहं श्रोष्यामि। इत्थं तदानीं युष्माकं १८ कर्त्तव्यं सर्व्वकर्म्माधि मयादिष्टं।

अनन्तरमस्मत्प्रभुपरमेश्वराज्ञानुसाराद् वयं होरेवात् प्रस्थाय इमो- १९ रीयाणां गिरियानमार्गे युष्माभि र्यद् भयानकं महाप्रान्तरं दृष्टं तन्मध्येन यात्रां कृत्वा कादेशवर्णेयम् आगताः। अहं युष्मभ्यम् अकथयं प्रभुः २० परमेश्वरो ऽस्मभ्यं येषां देशं दास्यति तेषाम् इमोरीयाणां गिरिं यूयं प्राप्ताः। पश्यत युष्माकं प्रभुः परमेश्वरो युष्माकं करेषु देशम् समर्पितवान् २१ अतो यूयं स्वेषां पैतृकप्रभोः परमेश्वरस्याज्ञानुसाराद् गत्वा तमधिकुरुत ततो मा बिभीत निराशाश्च मा भूत।

तदा यूयं सर्व्वे मदन्तिकम् आगत्य कथितवन्तः, आदौ वयं तद्देशे २२ लोकान् प्रेषयाम तेऽस्मत्कृते देशं निरीक्ष्य अस्माभिः केन पथा यातव्यं कानि पुराणि चाक्रम्याणि तद्वार्त्ताम् आनयन्तु। तदा तत्कथयाहमपि २३ तुष्टवान् युष्माकम् एकैकस्माद् वंशाद् एकैकं जनम् आदाय द्वादश जनान् गृहीतवान्। ते प्रस्थाय गिरिमारुह्य इष्कोलोपत्यकां प्राप्य २४ देशं वीक्षाञ्चक्रिरे। तद्देशीयानि कतिपयानि फलानि च गृहीत्वा- २५ स्माकं समीपमानीय वार्त्तां जगदुः, अस्माकं प्रभुः परमेश्वरो ऽस्मभ्यं यं देशं दास्यति स उत्तमो देशः। तथापि यूयं तत्र यातुम् अनिच्छन्तः २६ स्वेषां प्रभोः परमेशस्याज्ञाविरुद्धाचारिणो जाताः। स्वस्वदूष्ये च २७ वाग्युद्धं कृत्वा कथितवन्तः, परमेश्वरो द्वेषाद् अस्माकं विनाशायास्मान्

१८ इमोरीयाणां करेषु समर्पयितुं मिसर्देशाद् वहिरानयत्। वयं क्व यामः? यतस्तद्देशीयजना अस्मत्तो बहुप्रजा दीर्घकायाश्च, तेषां पुराणि च वृहन्ति गगणस्पर्शिप्राचीरयुक्तानि सन्ति, तत्रास्माभिर- नाकीयवंशा अपि दृष्टा इति वार्त्तयास्माकं भ्रातरोऽस्मान् भीरून्
१९ चक्रुः। तदाहं युष्मानवदं मा त्रस्यत तेभ्यो मा बिभीत। परमेश्वरेण
२० मिसर्देशे युष्मदर्थं युष्माकं समक्षं यानि कर्माणि कृतानि प्रान्तरे ऽस्मिन्नपि युष्माभि र्यानि दृष्टानि, तदनुसाराद् युष्माकं प्रभुः परमेश्वरो
२१ युष्माकम् अग्रगामी भूत्वा युष्मत्कृते योत्स्यति। यतः स्वतनयवाही पितेव युष्माकं प्रभुः परमेश्वरो युष्माकम् अत्रागमनं यावत् निखिलमार्गे युष्मान्
२२ ऊढवान्। तथापि युष्माकं यः प्रभुः परमेश्वरो रात्रौ वह्निना दिवा
२३ मेघेन गन्तव्यं मार्गं दर्शयन् युष्माकं शिविरनिधानस्थानं वीक्षितुं युष्माकम् अग्रेऽग्रे गच्छति, तस्मिन् यूयं न व्यश्वसित।

२४ ततः परमेश्वरो युष्माकं वाक्यमाकर्ण्य क्रुध्यन् इति शपथं कृतवान्,
२५ अहं युष्माकं पूर्व्वपुरुषेभ्यो यं देशं दातुं शपथं कृतवान् एतेषां दुष्टमानु-
२६ षाणां मध्ये न कोपि तमुत्तमं देशं द्रक्ष्यति। केवलं यिफुन्नेः पुत्त्रः कालेवस्तं द्रक्ष्यति, स यत्र देशे पद्भ्यां व्रजितवान् तं देशं तस्मै तद्वंशाय
२७ च दास्यामि यतः स परमेश्वरस्य सम्यगनुगतः। परमेश्वरो युष्मत्का-
२८ रणात् मह्यमपि क्रुध्यन् अवदत्, त्वमपि तत् स्थानं न प्रवेक्ष्यसि। तव परिचारको नूनस्य पुत्त्रो यिहोशूयस्तं देशं प्रवेक्ष्यति, त्वं तमाश्वासय,
२९ यतः स इस्रायेल्वंशं तमधिकारयिष्यति। एतेऽपहारिष्यन्त इति यूयं यानधि कथितवन्त इदानीमपि ये भद्राभद्रज्ञानम् अप्राप्ताः, युष्माकं ते बालकास्तं देशं प्रवेक्ष्यन्ति, मया तस्मिन् तेभ्यो दत्ते ते तमधिकरिष्यन्ति।
४० इदानीं यूयं परावृत्य सुफार्णवगामि प्रान्तरं यात। तदा यूयं मां प्रत्य-
४१ वदत, वयं परमेश्वरस्य विरुद्धं पापं कृतवन्तः, वयं प्रभोः परमेश्वरस्य सर्व्वाज्ञानुसाराद् गत्वा युध्यामहे, इत्युक्त्वा यूयं सर्व्वे युद्धास्त्रैः सज्ज-
४२ माना गिरिमारोढुं दुःसाहसं कृतवन्तः। तदा परमेश्वरो माम् उक्तवान् त्वं तान् वद, अहं युष्मन्मध्यवर्त्ती नास्मि, अतो यूयं यथा रिपूणां समक्षं
४३ नाहन्येध्वं तदर्थं योद्धुं मा यात। वचने ऽस्मिन् युष्मभ्यम् मया कथितेऽपि यूयं तन्न श्रुत्वा परमेश्वरस्याज्ञाया विरुद्धाचारिणो दुःसाहसिनश्च
४४ भूत्वा पर्व्वतमारोहत। तस्मात् तद्गिरिवासिन इमोरीयलोका युष्मद्वि- रुद्धं वहिर्भूय युष्मान् मधुमक्षिकावत् ताडयित्वा सेयीरे हर्म्मां यावत्

व्यकिरन्। तदा यूयं परावृत्य परमेश्वरस्य समीपे रुदितवन्तः, किन्तु ४५ परमेश्वरो युष्माकं रवे मनो न न्यधत्त न च तमाकर्णयत्। ततो यूयं ४६ कादेशे उषित्वा तत्र बहुकालं स्थितवन्तः।

---

## २ द्वितीयोऽध्यायः।

१ इदोमीयलोकैः समं योद्धुं निषेधः ९ मोयाबीयैः समं योद्धुं निषेधः १७ अम्मोनीयैः समं योद्धुं निषेधः २४ इमोरीयसीहोनभूपेन युद्ध्वा तं दमितुमाज्ञा।

अनन्तरं वयं परमेश्वराज्ञया सुफार्णवगामिना प्रान्तरेण यात्रां १ कृत्वा बहुदिनैः सेयीराद्रिं वेष्टितवन्तः। परमेश्वरो मामवादीत् अलं २ युष्माकम् एतदद्रिवेष्टनेन, इदानीम् उत्तरं यात। लोकनिवहम् इत्यादिश, ४ सेयीरवासिनां युष्मद्भ्रातॄणाम् एषौवंशीयानां सीमया युष्माभि र्यातव्यं, ते युष्मत्तो भेष्यन्ति, तस्माद् यूयं सावधाना भवत, तैः समं मा विरुन्ध, ५ यस्मादहं तेषां देशस्य किमपि युष्मभ्यं न दास्यामि पादैकमितां भुवमपि न दास्यामि, एनं सेयीराद्रिम् अधिकर्त्तुम् अहम् एषावे दत्तवान्। रूप्येण तेभ्यः क्रीतमन्नं युष्माभि र्भक्ष्यं रूप्येण च क्रीतं तोयं पेयं। ६ यतो युष्माकं प्रभुः परमेश्वरो युष्माकं करकर्म्मणि युष्मान् आशिषम् ७ उक्तवान् एतस्मिन् महाप्रान्तरे युष्माकं यात्रां ज्ञातवांश्च, एतानि चत्वारिंशद् वर्षाणि परमेश्वरो युष्माभिः समं विद्यते, तेन युष्माकं कस्याप्यभावो नास्ति। इत्थं वयं प्रान्तरस्थमार्गेणैलतेनेत्सियोनगेबरेण च ८ गत्वा सेयीरनिवासिनाम् अस्मदेषौवंशीयभ्रातॄणां सम्मुखस्थेन प्रथा मोयाबीयप्रान्तरगामिनं मार्गं परावृत्ताः।

ततः परं परमेश्वरो मह्यं कथितवान् यूयं मोयाबीयान् मा क्लिश्नीत ९ युद्धेन तैः समं मा विरुन्ध तेषां देशं युष्मभ्यमहं न दास्यामि, यस्माद् आरपुरम् अधिकर्त्तुं लोटवंशाय दत्तवान्। पुरा तत्र य एमीया १० अवसन् त अनाकीया इव महान्तो बहुप्रजा दीर्घकायाश्चासन्। अनाकीया इव वीरत्वेनापि मान्या आसन्, मोयाबीयास्तान् एमीयान् ११ वदन्ति। तथा सेयीरे पुरा होरीया न्यवसन् किन्त्वेषौवंशीया स्वसम्मु- १२ खात् तान् बहिष्कृत्य तेषां स्थानम् अधिकृत्य तत्र न्यवसन्। इस्रायेल्वंशीयैः परमेश्वरात् प्राप्तायां स्वाधिकृतायां भुवि यादृशं कृतं तादृशं तैरप्यकारि। इदानीं यूयम् उत्थाय सेरदनदीपारं यात तस्मैतद्वाक्याद् वयं १३

१४ सेरदनदीपारं गताः। भ्रमणेनास्माकं कादेशाद् आ आगमनात् सेरदनदीपारगमनं यावद् अष्टात्रिंशत् वत्सराणि गतानि ; तेषु वत्सरेषु परमेश्वरस्य शपथकारणात् तत्कालीया योद्धारः सर्व्वे शिविरमध्यात् लुप्ताः।
१५ यतः शिविरमध्यात् निःशेषं यावद् तान् लोप्तुं तेषां प्रतिकूलं पर-
१६ मेश्वरस्य हस्तो विस्तारितोऽभूत्। इत्थं लोकानां मध्यात् सर्व्वेषु योद्धृषु
१७ मृत्युना संहृतेषु परमेश्वरो माम् उक्तवान् अद्य युष्माभिर् आरपु-
१८ राख्या मोयाबीयसीमा लंघ्यते । यूयम् अम्मोनवंशीयानां सम्मुखम् उपस्थाय तान् मा क्लिश्नीत तैः समं मा विरुन्ध, अहं युष्मभ्यम् अम्मोनवंशीयानां देशस्य किञ्चिदप्यधिकारार्थं न दास्यामि, यस्मादहं तमधि-
२० कर्त्तुं लोटवंशाय दत्तवान् । स देशोऽपि वीरदेश इति विख्यात आसीत् , यस्माद् अम्मोनीयै र्ये समसुम्मीया इति गदितास्ते वीरवंशीयाः
२१ पुरा तत्र न्यवसन्। ते महान्तो बहुप्रजा अनाकीया इव दीर्घकायाश्चासन्, किन्त्वम्मोनवंशीयाः स्वसम्मुखे परमेश्वरेण विनष्टान् तान् अन-
२२ धिकारिणः कृत्वा तेषां देशे न्यवसन्। सेयीरवासिनाम् एषौवंशीयानां कृते तेन तथैव कृतं, स्वेषां सम्मुखे होरीयलोकेषु तेन विनष्टेषु त एषौवंशीयास्तान् अनधिकारिणः कृत्वाद्य यावत् तेषां देशे निवसन्ति।
२३ येऽव्वीयलोका असां यावत् हत्सेरीमे न्यवसन् तेऽपि कप्तोराद् आगतैः कप्तोरीयलोकै र्विनष्टास्तेषाञ्च देशे तै र्न्यूषितं।

२४ परमेश्वर उवाच । यूयम् उत्तिष्ठत यात्रां कृत्वार्णोननद्याः पारं यात, पश्यत हिष्बोनवासीमोरीयाणां राजा सीहोनस्तद्देशश्च युष्मत्करेषु मया समर्पितः, यूयं तमधिकर्त्तुम् आरभ्य रणेन तैः सार्द्धं वि-
२५ रुन्ध। अद्यारभ्याहम् आकाशाधःस्थाः सर्व्वजातीर्युष्मत्त्रासयिष्यामि भीषयिष्यामि च, ता युष्मद्वार्त्तां श्रुत्वा युष्मतः कम्पिष्यन्ते व्यथिष्यन्ते
२६ च। ततोऽहं हिष्बोनवासिनः सीहोनस्य समीपं किदेमोतप्रान्तरात् दूतं
२७ प्रहित्य प्रणयवाक्यमिदं कथितवान् त्वं स्वदेशमध्येन मां यातुम् अनुजानीहि, अहं दक्षिणं वामं वा न परावृत्य राजमार्गेणैव यास्यामि।
२८ अस्माकं प्रभुः परमेश्वरोऽस्मभ्यं यं देशं दास्यति, वयं यर्द्दननद्याः पारं गत्वा यावत् तं देशं न प्राप्स्यामस्तावत् सेयीरनिवासिभिरेषौवंशीयै-
२९ रारवासिभिर्मोयाबवंशीयैश्च मां प्रति यथाचरितं तथा त्वयाप्याचर्य्यतां रूप्यं गृहीत्वा मह्यम् अन्नं दीयतां रूप्यं गृहीत्वा पातुं
३० तोयञ्च दीयतां, केवलमहं पद्भ्यां पारं यास्यामि। किन्तु हिष्बोनीयो

राजा सीहोनः स्वदेशमध्येनास्मान् यातुं नान्वजानात्, यतो युष्मत्प्रभुः परमेश्वरो युष्माकं करेष्वद्यवत् तं समर्पयितुं तन्मनः कठिनीकृतवान् तदन्तःकरणं कठोरं कृतवान्। परमेश्वरो मह्यं कथितवान् पश्य कर्म्मणि २१ प्रवृत्तेन मया सीहोनस्तदीयदेशश्च तव करे समर्पितः, त्वयापि कर्म्मारभ्य तस्य देशोऽधिक्रियतां। ततःपरमस्माकं प्रतिकूलं वहिर्भूय यहसे योद्धुमा- २२ गताः सीहोनस्तस्य सर्व्वप्रजाश्चास्माकं प्रभुणा परमेश्वरेणास्मत्करेषु सम- २३ र्पिताः स तत्सुतास्तल्लोकाश्चास्माभि र्हताः। तदा तस्य सर्व्वनगराण्य- २४ प्यस्माभि र्गृहीतानि प्रतिपुरस्थाः पुंस्त्रीबालकाः निःशेषं नाशितास्तेषा- मेकोपि न शेषितः। किन्तु पशून् वशीभूतनगरीयं लोठितं वस्तुजातञ्च २५ वयं स्वार्थमग्रहीष्म। अर्णोननद्याः तटस्थारोयेरं नदीमध्यस्थपुरञ्चारभ्य २६ गिलियदं यावत् पुरैकमप्यस्माकम् अगम्यं नासीत्, अस्मत्प्रभुणा पर- मेश्वरेण तत्सर्व्वम् अस्मत्करेषु समर्पितं। केवलं अम्मोनवंशस्य देशोऽर्थात् २७ यव्वोकतटिनीपार्श्वस्थः प्रदेशः पर्व्वतस्थानि पुराणि च यान्यन्यस्थानान्यपि परमेश्वरोऽस्मान् प्रतिषिद्धवान्, तानि स्थानानि युष्माभि र्नाक्रमितानि।

---

## ३ तृतीयोऽध्यायः।

१ ओगाख्यस्य वाशानभूपस्य पराजयः १२ रूवेणगाद्वंशीयेभ्यः परास्तभदानाज्ञा २१ यिहोशूयं प्रति मूससं उपदेशः २३ देशं प्रवेष्टुं मूससः प्रार्थना च।

ततोऽस्मासु परावृत्य वाशानपथेन गतेषु वाशानभूप ओगस्तस्य सर्व्व १ लोकाश्चास्माकं प्रतिकूलं योद्धुम् इद्रियीम् आगमन्। परमेश्वरो मह्यम् २ अकथयत्, त्वं तस्मान् मा बिभीहि यतोऽहं तं तस्य सर्व्वलोकान् देशञ्च तव करे समर्पयिष्यामि, हिष्वोन्वासिनम् इमोरीयराजं सीहोनं प्रति त्वया यथा कृतं तथा तमपि प्रति क्रियतां। इत्थं वाशानभूप ओगोऽपि ३ तदीयसर्व्वलोकाश्चास्माकं प्रभुणा परमेश्वरेणास्माकं करेषु समर्पिता अस्माभिश्च विनष्टानां तेषाम् एकोऽपि जनो नावशिष्टः। तदा वयं तस्य ४ सर्व्वाणि पुराणि वशे कृतवन्तः वाशानीयनरपतेरोगस्य जनपदेऽर्गोवा- ख्यदेशे स्थितानां षष्टिनगराणाम् एकमपि नगरम् अस्माभिरजेयं नातिष्ठत्। तानि नगराणि प्रोच्चप्राचीरवेष्टितानि द्वारैरर्गलैश्च सुरक्षि- ५ तान्यासन् तदतिरिक्तानि प्राचीरशून्यान्यनेकानि नगराणि चासन्। हिष्वोनीयभूपं सीहोनं प्रत्यस्माभि र्यत् कृतं तद्वत् तेऽप्यस्माभि र्विनष्टाः, ६

७ वयं पौरान् तेषां योषितो बालकांश्च निःशेषं नाशितवन्तः, किन्तु तेषां
८ सर्व्वपशून् नगरीयद्रव्यादि लोठयित्वा स्वार्थं गृहीतवन्तः। तदा वयम्
अर्णोननदीतो हर्म्मोणाद्रिं यावत् सर्व्वदेशं यर्द्दनपारस्थानाम् इमोरी-
९ याणां राजद्वयाद् हृतवन्तः। सीदोनीयास्तं हर्म्मोणं शिरियोणम् इमो-
१० रीयाश्च सीनीरं गदितवन्तः। सल्खाम् इद्रियीञ्च यावद् वयम् अधि-
त्यकास्थं सर्व्वं नगरं सर्व्वं गिलियदं वाशानं वाशानीयभूपतेरोगराजस्य
११ नगराणि च वशे कृतवन्तः। यस्माद् अवशिष्टवीराणां मध्ये वाशानीयभूप
ओगमात्रः शेषोऽतिष्ठत्, पश्य तस्य खट्वा लौहमयी सा किम् अम्मोनीय-
वंशस्य रब्बायां नास्ति? मानुषहस्तपरिमाणेन सा नवहस्तदीर्घा चतु-
र्हस्तविस्तृता चास्ति।

१२ तदा जनपदेऽस्मिन् अस्माभिरधिकृतेऽर्णोननदीस्थम् अरोयेरम्
आरभ्य गिलियदगिरेरर्द्धांशस्तन्नगराणि चाहं रूबेणवंशगादवंशाभ्यां
१३ दत्तवान्। गिलियदस्यावशिष्टमंशम् ओगस्य जनपदञ्च अर्गोवप्रदेशाख्यं
सर्व्वं वाशानदेशमहं मिनशिरर्द्धवंशाय दत्तवान्। पुरा स कृत्स्नो
१४ वाशानदेशो वीरदेश इति विख्यात आसीत्। गिसूरीयाणां
माखाथीयानाञ्च सीमां यावत् कृत्स्नम् अर्गोवदेशं मिनशि वंशीयो
यायीरो वशीकृत्य स्वनामानुरूपम् अद्य यावत् तेषां वाशानीय-
१५ नगराणां नाम हवोत्-यायीरं कृतवान्। अहं माखीराय गिलि-
१६ यदं दत्तवान्। गिलियदादर्णोननदीं यावत् तदीयाम् अर्द्धोपत्यकां
१७ सीमाञ्च यावद् अम्मोनवंशस्य सीमां यब्बोक्नदीञ्च यावत् किन्नेरताञ्च
प्रान्तरस्थक्रदम् अर्थात् असदोत्पिसगाया अधःस्थं लवणाब्धिं यावत्
पूर्व्वदिक्स्थं प्रान्तरं यर्द्दननदीं तदीयसीमाञ्चाहं रूबेणवंशाय गादवंशाय
१८ च दत्तवान्। तदाहं युष्मान् इदमादिशं, युष्माकं प्रभुः परमेश्वरोऽधिकर्त्तुं
देशमिमं युष्मभ्यं दत्तवान् किन्तु युष्माकं योद्धारः सर्व्वे सज्जमाना
१९ युष्माकमिस्रायेल्वंशीयानां भ्रातृणां सम्मुखे पारं यास्यन्ति। मया यानि
नगराणि युष्मभ्यं दत्तानि, तत्र युष्माकं जायासुतपशवो वत्स्यन्ति, यतो
२० युष्माकं पशवो बहुसंख्यकाः सन्ति तदहं वेद्मि। अपरं युष्मदिव युष्माकं
भ्रातृभ्योऽपि परमेश्वरेण विश्रामे दत्ते तैश्च युष्मत्प्रभुपरमेश्वरात् प्राप्ये
यर्द्दनपारस्थे देशे ऽधिकृते सति यूयमत्र मया दत्तां स्वस्वाधिकृतभूमिं
प्रत्यागमिष्यथ।

२१ तदाहं यिहोशूयम् आदिशं युष्मत्प्रभुः परमेश्वर इमोरीयनृपावेतौ

प्रति यदकरोत् तत् त्वं स्वनेत्राभ्यां दृष्टवान्; त्वं यत्र पारं गमिष्यसि, तत्रस्थानि सर्व्वराज्यानि प्रति परमेश्वर इत्थं करिष्यति। यूयं तेभ्यो मा २२ भैष्ट यतो युष्माकं प्रभुः परमेश्वरः स्वयं युष्मत्कृते योत्स्यति।

तदाहं परमेश्वरे विनीतवान् हे प्रभो परमेश्वर त्वं स्वं महिमानं स- २३ प्रभावकरञ्च स्वदासाय प्रकाशयितुम् आरब्धवान्, स्वर्गे मर्त्ये वा त्वत्कर्म्मेव २४ त्वत्प्रभाववत् कर्त्ता क ईश्वर आस्ते? यर्दनस्य पारस्थं तमुत्तमं देशं तं २५ रम्यं लिवानोनं गिरिं द्रष्टुं मां यातुम् अनुजानीहि मयैतत् प्रार्थितं। किन्तु परमेश्वरो युष्मत्कृते मत्प्रतिकूलं क्रुध्यन् मद्वाचं न श्रुत्वावदत् २६ अलमनेन, एतदधि पुनर्मां मा वद। पिस्गायाः शृङ्गमारुह्य पश्चि- २७ मोत्तरदक्षिणपूर्व्वदिश आलोक्य स्वनेत्राभ्यां पश्य यस्मात् त्वं यर्दनपारं न यास्यसि। त्वं यिहोशूयम् आदिश्याश्वासय बलीकुरु च यस्मात् २८ स एतेषां लोकानाम् अग्रगामी सन् पारं यास्यति, स एव च त्वया द्रक्ष्यमाणं तं देशं तान् अधिकारयिष्यति। इत्थं वयं बैत्पियोरस्य सम्मुख- २९ स्थितायाम् उपत्यकायां न्यवसाम।

---

# ४ चतुर्थोऽध्यायः।

१ आज्ञां पालयितुं मूसो विनयः ४१ यर्दनस्य पूर्व्वदिश्यास् आश्रयपुरत्रयनिरूपणं।

हे इस्रायेलवंशा अहं यान् विधीन् व्यवस्थाश्च पालयितुं युष्मान् शिक्ष- १ यामि तत्र मनो निधत्त तेन यूयं जीविष्यथ, युष्माकं पैतृकः प्रभुः परमेश्वरो युष्मभ्यं यं देशं दास्यति तं प्रविश्याधिकरिष्यथ च। अहं युष्मान् २ यद् वाक्यम् आदिशामि तदधिकं मा कुरुत स्तोकमपि न कुरुत, मयोक्तां युष्मत्प्रभोः परमेश्वरस्याज्ञां सर्व्वां पालयत। बाल्पियोरमधि परमे- ३ श्वरो यद् कृतवान् तद् यूयं स्वस्वनेत्रैर्दृष्टवन्तः, स बाल्पियोरस्य पश्चाद्गामिसर्व्वजनान् युष्माकं मध्याद् व्यनाशयत्। किन्तु स्वप्रभौ परमेश्वर ४ आसक्ता यूयं सर्व्वे अद्य यावत् जीवथ। पश्यत मम प्रभुः परमेश्वरो ५ मां यथादिशति, अहं युष्मान् तथा विधीन् व्यवस्थाश्च ज्ञापयामि, अस्माद् यूयं यं देशं अधिकर्त्तुं याथ तत्र तादृग् आचरिष्यथ। तथा ६ कृत्वा तदनुसाराद् आचरिष्यथ, यतो तदेवान्यजातीनां बोधे युष्माकं ज्ञानबुद्धोः प्रमाणं भविष्यति, त एतान् विधीन् श्रुत्वा वदिष्यन्ति, एषा महाजाति ज्ञानबुद्धिमती चेति सत्यं। अस्माकं प्रभुः परमेश्वरो ऽस्माकं ७

सर्व्वप्रार्थनाकाले यथास्माकं सविधो भवति तथा सविधो देवः केषां
८ महाजातीयानामास्ते? अद्याहं युष्मत्समक्षं यादृशं शास्त्रं ददामि तादृशो
९ न्याय्यविधिव्यवस्थाः कस्या महाजातेः सन्ति? यूयं यथा स्वनेत्रदृष्टानि
कर्म्माणि न विस्मरेत तानि च यथा युष्मज्जीवत्काले युष्मच्चेतसो न निः-
सरेयुस्तस्मिन् मनो निधाय स्वप्राणानधि सावधाना भवत, युष्माकं पुत्त्र-
१० पौत्त्रान् एतानि शिक्षयत च। विशेषतो होरेबे युष्मत्प्रभुपरमेश्वरस्य
सम्मुखे तिष्ठतां युष्माकं स्थितिदिनं मा विस्मरत। तदा परमेश्वरो माम्
अवदत् त्वं मदन्तिके लोकान् मेलय, अहं स्ववाक्यानि तान् श्रावयिष्यामि,
ते यावज्जीवनं यथा मत्तो बिभ्यति तत्कृते तानि तैः शिक्ष्यन्तां स्वसन्ता-
११ नांश्च ज्ञाप्यन्तां। तदा यूयं सविधाः सन्तः पर्व्वताधोऽवस्थिताः स चाद्रि-
रग्निना ज्वलित आकाशान्तरञ्च यावत् तमिस्रेण मेघेन ध्वान्तेन च
१२ व्याप्तञ्च। ततो वह्नेर्मध्यात् परमेश्वरो युष्माभिः समभाषत, यूयं तद्वाचो
ध्वनिं श्रुतवन्तः, किन्तु कामपि मूर्त्तिं नापश्यत केवलो ध्वनिरभूत्।
१३ स यं नियमं पालयितुं युष्मान् आदिशत् तमर्थात् दशाज्ञाः प्रचार्य्य
प्रस्तरद्वये लिखितवान्।

१४ यूयं यं देशम् अधिकर्त्तुं पारं याथ तत्र युष्माभिः पालनीया विधि-
१५ व्यवस्था युष्मान् शिक्षयितुम् अहं तदा परमेश्वरेणादिष्टः। अतो यदा
परमेश्वरो होरेबे वह्निमध्याद् युष्माभिः संभाषितवान् तस्मिन् दिने
१६ युष्माभिः कापि मूर्त्ति र्न दृष्टा। अतो यूयं यथा भ्रष्टा भूत्वा स्वार्थं
१७ पुंसः स्त्रियो वा मूर्त्तिविशिष्टं विग्रहं भूचरजन्तुगगणोड्डीयमानपक्षि-
१८ भूचरकीटभूम्यधःस्थजलचरजन्तूनां कस्यचित् मूर्त्तिं वा न निर्म्मयात,
१९ वा भ्रमित्वा गगणे नेत्रे उन्मील्य युष्माकं प्रभुः परमेश्वरो यानि व्योमाधः-
स्थानां सर्व्वजातीनां कृते स्थापितवान् तानि गगणस्थानि रविसोमभानि
विलोक्य च नत्वा न सेवेध्वं तदर्थं यूयम् अतिसावधानास्तिष्ठत।
२० यतो यूयम् अद्येव यथा परमेश्वरस्य विशेषलोका भवेत तदर्थं पर-
२१ मेश्वरो लौहकुण्डस्वरूपात् मिसर्देशाद् युष्मान् वहिरानयत्। युष्मत्का-
रणात् परमेश्वरो मह्यमपि क्रुध्यन् एतं शपथं कृतवान् त्वं यर्द्दन-
नदीपारं न यास्यसि तस्माद् युष्मत्प्रभुः परमेश्वरो युष्मभ्यं यं देशम्
२२ अधिकर्त्तुं दास्यति तमुत्तमं देशं प्रवेष्टुं न शक्नोम्यहं। मयैतद्देशे मर्त्तव्यं
यर्द्दननद्याः पारं न यातव्यं किन्तु यूयं पारं गत्वा तमुत्तमं देशम् अधि-
२३ करिष्यथ। यूयं यथा स्वैः समं निश्चितं युष्मत्प्रभुपरमेश्वरस्य नियमं

न विस्मरेत युष्मत्प्रभुणा परमेश्वरेण प्रतिषिद्धां कस्यचित् प्राणिनस्तच्चितां मूर्त्तिं वा न निर्म्मयात तत्कृते स्वानधि सावधाना भवत। यतो युष्माकं २४ प्रभुः परमेश्वरो ज्वलदग्निस्वरूपः स्वगौरवरक्षक ईश्वरश्च।

युष्माभिः सुतान् सुतसुतांश्च जनयित्वा बहुकालं देश उपोषिते सति २५ यदि यूयं भ्रंशमानाः कस्यचित् प्राणिनस्तच्चितमूर्त्तिं निर्म्माय युष्माकं प्रभुं परमेश्वरं क्रोधयितुं तत्साक्षात् कुकर्म्म कुरुथ, तर्ह्यहमद्य युष्माकं २६ प्रतिकूलं स्वर्गं मर्त्त्यञ्च साक्षिणौ कृत्वा कथयामि यूयं यं देशम् अधिकर्त्तुं यर्दननद्याः पारं याथ तद्देशात् तूर्णं निःशेषं विनंक्ष्यथ तन्मध्ये बहुकालं नावस्थास्यध्वे किन्तु समूलम् उच्छेत्स्यध्वे। परमेश्वरोऽन्यजातीनां मध्ये २७ युष्मान् विकरिष्यति, तत्रान्यदेशीयलोकानां मध्ये परमेश्वरेण नीता यूयं अल्पसंख्यका अवशेक्ष्यध्वे। तत्र मानुषकरकृतान् काष्ठमयान् २८ प्रस्तरमयान् दर्शनश्रवणभोजनासमर्थान् देवान् सेविष्यध्वे। किन्तु २९ तत्र यदि स्वप्रभुं परमेश्वरं गवेषयध्वे तर्हि स्वसर्व्वान्तःकरणेन सार्कं सर्व्वप्राणैः सार्कं मार्गध्विं युष्माभिः स प्राप्स्यते। यदा क्लिष्टान् युष्मान् ३० प्रत्येतानि घटिष्यन्ते तत्र भविष्यत्काले यूयं स्वप्रभुं परमेश्वरं प्रति परावृत्य तद्वाचं श्रोष्यथ, यतो युष्मत्प्रभुः परमेश्वरो दयावान् ईश्वरः, ३१ स युष्मान् न त्यक्ष्यति न च नाशयिष्यति युष्मत्पूर्व्वपुरुषाणां समीपे यं नियमं शपथेन निश्चितवान् तं न विस्मरिष्यति। पश्य पृथ्व्यां ३२ परमेश्वरस्य आ नरसृष्टिदिनाद् युष्माकमग्रवर्त्तिपूर्व्वपुरुषान् व्योमैक-दिशोऽन्यदिशं यावत् समस्तलोकान् इति पृच्छथ, एतन्महाकार्य्यसमं कार्य्यं किं कदापि जातं? कदापि वा किमेतादृशं श्रुतं? यूयं यथा ३३ किमन्ये केचन लोकास्तथा वह्निमध्ये वाक्यवादिन ईश्वरस्य रवं श्रुत्वापि जीवन्तोऽतिष्ठन्? वा युष्माकं प्रभुणा परमेश्वरेण मिसर्देशे युष्माकं ३४ समक्षं यथा कृतं, तथा परीक्षाचिह्नलक्षणरणान् पराक्रमिकरं विस्तीर्णबाहुं महाभयङ्करत्वादि प्रकाशयित्वा भिन्नजातिमध्यात् स्वार्थं एक-जातिं गृहीतुं किं कोपि देव उद्युक्तवान्? परमेश्वर एव प्रभुस्तदन्यः कोपि ३५ नहीति युष्मान् ज्ञापयितुं तानि सर्व्वाणि युष्मच्चक्षुर्गोचरे प्राकाश्यत। स युष्मान् उपदेष्टुं स्वर्गात् स्ववाक्यं श्रावितवान् धरण्युपरि च स्वमहाग्निं ३६ दर्शितवान्, यूयमग्निमध्यात् तद्वाचं श्रुतवन्तः। स युष्मत्पूर्व्वपुरुषेषु ३७ स्नेहमकरोत् तस्मात् तेषां पश्चात् तेषां वंशमपि वरीतवान्। युष्मत्तो ३८ बलवत्तरबृहज्जाती युष्मत्साक्षात् वहिष्कर्त्तुं युष्मान् तेषां देशं प्रवेश-

यिलायवद् अधिकारयितुं स निजास्यप्रसादात् स्वमहाबलेन युष्मान्
३९ मिसर्देशाद् वहिरानयत्। अत ऊर्द्धस्थस्वर्गेऽधःस्थधरण्यां परमेश्वर-
एव प्रभुरन्यः कोपि नहीति यूयमद्य जानीत स्वस्वमनसि विवेचयत
४० च। अहमद्य तस्य या विधिव्यवस्था आदिष्टवान् ता आचरत तेन
यूयं युष्मत्परतो युष्मद्वंशस्य मङ्गलं लप्स्यध्वे; युष्माकं प्रभुः परमेश्वरो
युष्मभ्यं यां भूमिं चिरकालार्थं दास्यति, तस्यां युष्मदवस्थिते र्दिनानि
बहूनि भविष्यन्ति।

४१ तदा यर्द्दनपूर्व्वपारे सूर्य्योदयदिशि मूससा हन्तॄणाम् आश्रयपुराणि
४२ त्रीणि निश्चितानि। स्वयं पूर्व्वद्विष्टो नरो येन केनचिदज्ञानाद् हन्यते,
४३ स हन्ता तन्नगराणाम् एकं नगरं पलाय्य प्राणरक्षां गमिष्यति। तान्ये-
तानि, रूवेणीयानां समभूस्थकाननस्थं वेत्सरं, गादीयानां गिलियदस्थं
रामोतं, मिनशीयानां वाशानस्थं गोलनञ्च।

४४ शास्त्रम् एतत् मूससा इस्रायेल्वंशानां समक्षं स्थापितं। मिसराद्
४५ इस्रायेल्वंशस्यागमनात् परं हिष्बोन्वासिन इमोरीयराजस्य सी-
४६ होनस्य देशे यर्द्दनतटस्थवैत्पियोरस्य सम्मुखस्थसमभूमौ मूसास्तेभ्य
एतानि प्रमाणवाक्यानि विधिव्यवस्थाश्च ददौ, यतो मिसराद् आगतै-
४७ रिस्रायेलीयवंशै र्मूससा च स सीहोनो हतस्तस्य वाशानीयभूपतेरोगस्य
४८ चैतयो र्यर्द्दनपूर्व्ववासिनोरिमोरीयराजयो र्देशौ ऽर्थाद् अर्णोननदीत-
टस्थम् अरोयेरम् आरभ्य सीयोनापरनामकं हर्म्मोणं यावत् समस्तदेशो
४९ ऽस्दोद्पिस्गाधःस्थितप्रान्तरस्थं सागरञ्च यावत् यर्द्दनस्य पूर्व्वपारे
सूर्य्योदयदिशि स्थितं सर्व्वप्रान्तरञ्च वशेऽकारि।

---

## ५ पञ्चमोऽध्यायः।

१ होरेबे नियमस्य निरूपणं ६ दशाज्ञाकथनं २९ लोकानां प्रार्थनया मूससा दशाज्ञाया ईश्वरतो ग्रहणं।

१ मूसाः सर्व्वेस्रायेल्वंशान् आहूय बभाषे हे इस्रायेल्वंशा अहं
शिक्षार्थं रक्षणार्थं पालनार्थञ्च युष्माकं कर्णगोचरे यान् विधीन् याश्च
२ व्यवस्था वदामि तत्र मनो निधद्ध्वं। अस्माकं प्रभुः परमेश्वरो होरेबे
३ सहास्माभिर्नियममेकं कृतवान्। परमेश्वरस्तं नियमं नास्माकं पूर्व्वपुरुषैः
४ साकं कृतवान् किन्त्वद्य जीवद्भिरस्माभिः साकं तं कृतवान्। परमेश्व-
५ रोऽद्रौ युष्माकं सम्मुखीभूय युष्माभिः सम्भाषितः। किन्तु यूयं वह्नेः

बिभ्यतः पर्व्वतं नारोहत ततः परमेश्वरस्य वाक्यं युष्मान् ज्ञापयितुमहं तत्र परमेश्वरस्य युष्माकञ्च मध्ये ऽतिष्ठं।

परमेश्वर उवाच, दास्यगेहाद् अर्थतो मिसर्देशाद् त्वदीयोद्धार- ६ यिताहमेव तव प्रभुः परमेश्वरः। मम साक्षात् तव काचिदन्या ७ देवता न तिष्ठतु। निजार्थं काञ्चित् तक्षितप्रतिमाम् अर्थाद् उपरिस्थे ८ स्वर्गे वा नीचस्थायां पृथिव्यां वा धरण्या अधःस्थे तोये स्थितस्य कस्यचिद् वस्तुनो मूर्त्तिं मा निर्म्माहि। ता न नम, ता न सेवस्व, ९ यतोऽहं तव प्रभुः परमेश्वरः स्वगौरवरक्षीश्वरः, ये पितृलोका माम् ऋतीयन्ते, तृतीयचतुर्थपुरुषान् यावत् तेषां सन्तानेभ्योऽधर्म्मफलदाता; किन्तु ये मयि प्रीयन्ते ममाज्ञाश्च पालयन्ति तेषां सहस्रपुरुषान् यावद् १० दयाकृदहं। त्वं निजप्रभोः परमेश्वरस्य नाम निरर्थकं मा गृहाण, यतो ११ यः कश्चित् तस्य नाम निष्प्रयोजनं गृह्णाति, परमेश्वरस्तं निरपराध इति न गणयति। त्वं स्वप्रभोः परमेश्वरस्याज्ञानुसाराद् विश्रामदिनं पालयन् १२ पवित्रीकुरु। षड् दिनानि श्रमित्वा तव वाणिज्यादि सर्व्वं कर्म्म कुरु; १३ किन्तु सप्तमदिनं तव प्रभोः परमेश्वरस्य विश्रामदिनमेव, तस्मिन् १४ त्वया वा तव पुत्त्रेण वा तव दुहित्रा वा तव दासेन वा दास्या वा गोगर्द्दभादिपशुना वा द्वारवर्त्तिना विदेशिना केनापि किमपि कार्य्यं मा क्रियतां; तत्र तव दासदास्यौ त्वया समं विश्रमिष्यतः। स्मर १५ त्वं मिसर्देशे दास्ये स्थितः, किन्तु प्रभुः परमेश्वरः पराक्रमिकरेण विस्तीर्णबाहुना तस्माद् त्वां बहिरानयत्, अतो तव प्रभुः परमेश्वरो विश्रामदिनं पालयितुं त्वाम् आज्ञापयत्। त्वं स्वप्रभोः परमेश्वरस्या- १६ ज्ञानुसारात् निजपितरं मातरञ्च सम्मन्यस्व, तेन तव प्रभुः परमेश्वरो यं देशं तुभ्यं दास्यति, तस्मिन् देशे तव दीर्घकालम् आयु- र्मङ्गलञ्च भविष्यति। नरहत्यां मा कार्षीः। परदारान् मा गच्छ। १७ चौर्य्यं मा कार्षीः। स्वस्य समीपवासिनो विरुद्धं मिथ्यासाक्ष्यं मा २० देहि। स्वसमीपवासिनो योषिति मा लोभं कुरु। स्वसमीपवासिनो २१ गृहक्षेत्रदासदासीगोगर्द्दभेषु प्रतिवासिनः कुत्रापि द्रव्ये मा लोभं कुर्य्याः।

परमेश्वरो गिरौ मेघघोरतमिस्रवह्निमध्यात् सर्व्वसमाजीयान् प्रति २२ वाक्यान्येतानि प्रोच्चैरुक्तवान् नापरं किमपि भाषितवान्। तानि वाक्या- नि च प्रस्तरपत्रद्वये लिखित्वा मयि समार्पयत्। तदाद्रौ वह्निना २३ प्रज्वलिते युष्माभिश्च तमिस्रमध्यात् तस्मिन् रवे श्रुते युष्माभिरर्थात्

२४ युष्मद्वंशाधिपैः प्राचीनैश्च मदन्तिकम् एत्य वाक्यमिदम् उक्तं, पश्यास्माकं प्रभुः परमेश्वरो ऽस्माकं समीपे स्वमहिमगौरवे प्राकाशयत् वयं वह्नि-मध्यात् तद्वाचं श्रुतवन्तः, ईश्वरेण सम्भाषितोऽपि नरो जीवितुं शक्नोतीति
२५ वयमद्य दृष्टवन्तः। किन्त्विदानीं वयं कुतो म्रियेमहि? एष महाग्नि-रस्मान् धक्ष्यति वयं यदि स्वप्रभोः परमेश्वरस्य शब्दं पुनः शृणुयाम तर्हि
२६ मरिष्यामः। यस्माद् वयमिव वह्निमध्ये वदतो जीवदीश्वरस्य शब्दं श्रुत्वा
२७ जीवन्नतिष्ठत् प्राणिमध्य एवम्भूतः कोऽस्ति? अतोऽस्माकं प्रभुः परमेश्वरो यद्यद् गदति भवता समीपं गत्वा तत्सर्व्वं श्रूयताम्, अस्माकं प्रभोः परमे-
२८ श्वरस्य सर्व्वं वाक्यं भवतास्मभ्यं कथ्यतां, वयं तत् श्रुत्वा पालयिष्यामः। वाक्यमिदं मां भाषमाणानां युष्माकं ध्वनिं श्रुत्वा परमेश्वरो मामवदत् एते लोकास्तुभ्यं यदकथयन् तस्य ध्वनिमहं श्रुतवान्, त उचितं भाषित-
२९ वन्तः। हा हा मत्तो भेतुं मदाज्ञां सर्व्वा ग्रहीतुञ्च सदा यदि तेषां मति-
३० स्तिष्ठेत् तर्हि तेषां तद्वंशस्य च चिरं शुभं भवेत्। त्वं तान् स्वं स्वं दूष्यं
३१ यातुं वद। किन्तु त्वं मदन्तिकेऽत्र तिष्ठ, या आज्ञाविधिव्यवस्थास्तैः शिक्षितव्या अधिकारार्थं मद्दास्यमाने देशे च तैराचरणीयास्ता अहं
३२ त्वां वदिष्यामि। अतो युष्माकं प्रभुः परमेश्वरो युष्मान् यद्यद् आदिशत्
३३ तस्य दक्षिणं वामं वा न परावृत्य तद् आचरत। युष्माकं प्रभुः परमेश्वरो यद्यन्मार्गं गन्तुम् आदिशत् तैर्मार्गैर्गच्छत, तेन यूयं जीविष्यथ युष्माकं शुभं भविष्यति स्वाधिकरिष्यमाणे देशे च यूयं दीर्घायुषो भविष्यथ।

---

## ६ षष्ठोऽध्यायः।

१ व्यवस्थाभिप्रायः २ ताम् आचरितुं विनयवाक्यं।

१ परमेश्वर एता आज्ञाविधिव्यवस्था युष्मान् शिक्षयितुम् आदिष्टवान् यूयं यं देशम् अधिकर्त्तुं पारं याथ तत्र ता युष्माभिराचरणीयाः।
२ यदि यूयं स्वप्रभोः परमेश्वराद् भीत्वा यावज्जीवं पुत्रपौत्रादिपरम्परासु मदुक्तान् आज्ञाविधीन् आचरत तर्हि युष्माकम् आयुर्वर्द्धिष्यते।
३ अतो हे इस्रायेल्वंशा मनो निधाय ता आचरितुं यतध्वं, तेन युष्माकं पूर्व्वपुरुषाणां प्रभुः परमेश्वरो यत् प्रतिज्ञातवान् तदनुरूपमेव दुग्धमधुप्रवाहिणि देशे युष्माकं क्षेमं भविष्यति, यूयं वर्द्धिष्णवो

भविष्यथ च। हे इस्रायेल्वंशाः शृणुत, प्रभुरस्माकं परमेश्वर एकएव ४
परमेश्वरः। यूयं सर्व्वान्तःकरणैः सर्व्वप्राणैः सर्व्वशक्तिभिश्च स्वप्रभौ ५
परमेश्वरे प्रेम कुरुत। अधुनाहं युष्मान् यान्याज्ञापयामि तानि सर्व्वाणि ६
युष्माकं मनसि तिष्ठन्तु। यूयं स्वसन्तानान् यत्नेन तानि शिक्षयत ७
स्वगृहे उपवेशनकाले मार्गे गमनकाले शयनकाल उत्थानकाले च तान्यधि
भाषध्वञ्च। तानि युष्माभिः स्वकरेषु चिह्नरूपाणि बध्यन्तां युष्माकं ८
नेत्रयोर्मध्ये ललाटभूषणरूपाणि भवन्तां। युष्माकं गृहाणां द्वारका- ९
ष्ठेषु गोपुरेषु च तत् सर्व्वं लिख्यतां। युष्मभ्यं दातुं युष्माकं पूर्व्वपुरुषाणाम् १०
इब्राहीम्-इस्हाक्-याकूबां समक्षं युष्माकं प्रभुणा परमेश्वरेण यं
देशमधि शपथः कृतस्तं देशं तेनानीता यूयं यदा स्वैरनिचितानि ११
वृहन्ति चारूणि पुराणि स्वैरपूरितान्युत्तमद्रव्यैः पूर्णानि गृहाणि
स्वैरखनितान् प्रहीन् स्वैररोपितानि द्राक्षाक्षेत्राणि जितक्षेत्राणि च
लप्स्यध्वे यदा च भुक्ता तर्प्स्यथ, तदा सावधाना भवत दासत्वागारात् १२
मिसर्देशाद् युष्मान् वहिरानेतारं परमेश्वरं मा विस्मरत। यूयं स्वप्रभोः १३
परमेश्वराद् बिभीत तं सेवध्वं तन्नाम्ना शपध्वं। यूयम् इतरदेवानाम् १४
अर्थात् चतुर्दिक्स्थजनदेवानां पश्चात् मा यात। युष्माकं मध्यवर्त्ती प्रभुः १५
परमेश्वरः सगौरवरक्षक ईश्वरः; तस्य युष्मत्प्रभोः परमेश्वरस्य कोपे
युष्मत्प्रतिकूलं प्रज्वलिते स देशाद् युष्मान् विनाशयिष्यति।

मसायां यूयं यथा स्वप्रभुं परमेश्वरं पर्य्यैक्षध्वं तथा तं मा परीक्षध्वं। १६
युष्माकं प्रभुणा परमेश्वरेणादिष्टा आज्ञाः प्रमाणवाक्यानि विधींश्च १७
यत्नात् पालयत। परमेश्वरस्य गोचरे यन्न्याय्यं सच्च तदेवाचरत तेन १८
युष्माकं मङ्गलं भविष्यति। परमेश्वरो युष्माकं सम्मुखात् सर्व्वं रिपुं १९
दूरयितुं यं देशमधि युष्माकं पूर्व्वपुरुषाणां समीपे शप्तवान् तमुत्तमं
देशं यूयं परमेश्वरस्य वाक्यानुसारात् प्रविशन्तोऽधिकरिष्यथ।

अस्माकं प्रभुः परमेश्वरो युष्मभ्यं याः प्रमाणवाक्यविधिव्यवस्था दत्त- २०
वान् ताः कीदृशा इति भविष्यत्काले युष्माकं सन्तानैः पृष्टा यूयं तान् २१
वदिष्यथ वयं मिसर्देशे राज्ञः फिरौणो दासा आस्म, ततः परमेश्वरः
पराक्रमिकरेणास्मान् मिसराद् वहिरानयत्, अस्माकं साक्षात् मिसरं २२
फिरौणं तत्परिजनञ्च महान्ति क्लेशदानि चाद्भुतकर्म्माणि चिह्नानि च
दर्शितवान्, किन्त्वस्मान् तद्देशाद् उद्धृतवान् यञ्च देशम् अस्मभ्यं दातुम् २३
अस्माकं पूर्व्वपुरुषाणां समीपे शप्तवान् तमस्मान् आनीतवान्। वयं २४

यथाद्यवत् नित्यं हितार्थं प्राणरक्षणार्थञ्चास्माकं प्रभोः परमेश्वरात् बिभीयाम तदर्थं स प्रभुः परमेश्वर एतान् विधीन् आचरितुम् अस्मान्
२५ आदिशत्। अधुना वयं यदि स्वप्रभोः परमेश्वरस्याज्ञानुसारात् तत्सम्मुख एतान् सर्व्वविधीन् आचरामस्तर्हि तदस्माकं पुण्यं भविष्यति।

---

# ७ सप्तमोऽध्यायः।

१ देवार्च्चकैः समं व्यवहारनिषेधः १२ एतदाज्ञाचरणफलम् आशिषःकथनं २५ विग्रहान् नाशयितुम् आज्ञा।

१ यूयं यं देशम् अधिकर्त्तुं याथ तत्र युष्माकं प्रभुः परमेश्वरो यदा युष्मान् प्रवेशयिष्यति युष्मत्साक्षाद् बहुसंख्यका जातीरर्थात् हित्तीयगिर्गाशीयेमोरीयकिनानीयपिरिषीयहिव्वीययिबूषीयाणां या जातयो युष्मत्तो
२ ऽप्यत्यो बलवत्यश्च ता युष्मत्सम्मुखाद् वहिःकरिष्यति, तदा यूयं स्वप्रभुणा परमेश्वरेण युष्माकं करेषु समर्पितान् तान् ताडयित्वा समूलम् उच्छे-
३ त्स्यथ, तैः समं कमपि नियमं न करिष्यथ तान् न दयिष्यध्वे, तैः सह विवाहसम्बन्धं न करिष्यथ तेषां पुत्रेभ्यः स्वकन्या न दास्यथ स्वपुत्रे-
४ भ्यश्च तेषां कन्या न ग्रहीष्यथ। यस्मात् ते युष्माकं पुत्रान् इतरदेवं सेवितुं मत्तः परावर्त्तयिष्यन्ति तेन युष्मभ्यं परमेश्वरस्य क्रोधः प्रज्वलन् युष्मान्
५ तूर्णं नाशयिष्यति। अतो यूयं तान् प्रति इत्थम् आचरत, तेषां वेदीर्नाशयत विग्रहान् भंक्त चैत्यवृक्षान् छिन्त तच्चितमूर्त्तीर्वह्निना दाहयत।
६ यतो यूयं स्वप्रभोः परमेश्वरस्य पूतलोकाः सर्व्वमहीस्थलोकेभ्यः प्रभोः
७ परमेश्वरस्य विशेषलोका भवितुं तेनानुगृहीताः। यूयं सर्व्वजातिभ्यः संख्ययाधिका इति कारणात् परमेश्वरो युष्मान् स्निग्धवान् वरीत-
८ वांश्च तन्न यतो यूयं सर्व्वलोकेभ्यः स्तोकाः। किन्तु परमेश्वरो युष्मासु प्रीयते युष्माकं पूर्व्वपुरुषाणां समीपे यत् शप्तवान् तत् पालयतीतिहेतुना परमेश्वरः पराक्रमिकरेण युष्मान् मिस्रियभूपस्य फिरौणः
९ करादुद्धृत्य दासत्वागारात् मोचितवान्। अतो युष्माकं प्रभुपरमेश्वर एव ईश्वरः, स विश्वसनीय ईश्वरः सन् स्वप्रेमकारिणाम् आज्ञाग्राहिणां
१० सहस्रपुरुषान् प्रति नियमितानुग्रहम् आचरति, स्वद्वेषिणश्च संहर्त्तुं प्रकाश्य फलं ददाति, फलतो न विलम्ब्य द्वेषिभ्यः प्रकाश्य फलं ददातीति
११ जानीत। अतोऽहं पालयितुम् अद्य युष्मान् या आज्ञाविधिव्यवस्था वदामि ता आचरितुं यतध्वं।

यूयं यद्यासु व्यवस्थासु मनो निधाय ता आचरत तर्हि युष्माकं प्रभुः १२ परमेश्वरो युष्माकं पूर्व्वपुरुषाणां समीपे यौ नियमानुग्रहावधि शप्तवान् तौ युष्मान् प्रति सफलौ कुर्व्वन् युष्मासु प्रेष्यते युष्मान् आशिषं गदित्वा १३ वर्द्धिष्णून् करिष्यति, विशेषाद् युष्मभ्यं यं देशं दातुं युष्माकं पूर्व्वपुरुषाणां समीपे शप्तवान् तत्र देशे युष्माकं गर्भफलानि भूम्युत्पन्नानि शस्यद्राक्षारस-तैलानि गोनिवहमेषव्रजांश्च वर्द्धयिष्यति। यूयं सर्व्वलोकेभ्योऽप्याशिषं १४ प्राप्स्यथ युष्मत्पशूनां मध्ये युष्माकं मध्ये वा स्त्रीपुंसौ वन्ध्यौ न भवि-ष्यतः। परमेश्वरो युष्मत्तः सर्व्वाः पीडा दवयिष्यति मिसर्देशीया या महा- १५ व्याधयो युष्माभिर्दृष्टास्ता युष्मान् प्रति न घटयिष्यति किन्तु युष्माकं द्वेषिणः प्रति घटयिष्यति। अतो युष्माकं प्रभुः परमेश्वरो युष्माकं करेषु यान् १६ लोकान् समर्पयति यूयं तान् ग्रासयत तान् प्रति नेत्रै र्मा लज्जध्वं तेषां देवान् मा सेवध्वं यतो युष्माकं तद् उन्माथरूपं। एता भिन्नजातयो १७ ऽस्मत्तोपि बहुप्रजा वयम् एताः कथम् अधिकारात् च्योतयिष्यामइति चिन्तयित्वा तेभ्यो मा बिभीत। युष्माकं प्रभुः परमेश्वरो राज्ञे फिरौणे १८ सर्व्वमिसर्देशाय च यद्यत् कर्म्म कृतवान् यद्यद् अद्भुतं कर्म्म यूयं प्रत्यक्षम् १९ अपश्यत यैश्च चिह्नैश्चित्रकर्म्मभिः पराक्रमिकरेण विस्तारितबाहुना च युष्माकं प्रभुः परमेश्वरो युष्मान् वहिरानयत् तानि स्मरत यूयं येभ्यो बिभीथ तान् सर्व्वजातीयान् प्रति युष्माकं प्रभुः परमेश्वरस्तथा करिष्यति। येऽवशिष्टा युष्मत् स्वान् गोपयिष्यन्ति ते यावत् न २० विनंक्ष्यन्ति तावद् युष्माकं प्रभुः परमेश्वरस्तेषां मध्यं वरटाः प्रेर-यिष्यति। यूयं तेभ्यो मा बिभीत यतो युष्माकं मध्यवर्त्ती युष्मत्प्रभुः २१ परमेश्वरो बली भयङ्कर ईश्वरः। युष्माकं प्रभुः परमेश्वरो युष्मत्- २२ सम्मुखात् तान् जातीयान् क्रमाद् दवयिष्यति, युष्माकं प्रतिकूलं यथा वन्यपशवो न वर्द्धन्ते तदर्थं यूयम् एकदा तान् नाशयितुं न शक्ष्यथ। किन्तु युष्माकं प्रभुः परमेश्वरो युष्माकं करेषु तान् समर्पयिष्यति यावत् २३ ते समूलं न विनंक्ष्यन्ति तावत् महामारणेन तान् मारयिष्यति। तेषां २४ भूपतीन् युष्माकं करेषु दास्यति, यूयं गगणाधस्तेषां नामानि लोप्स्यथ, यावत् तान् न विनाशयिष्यथ तावद् युष्माकं सम्मुखे कोऽपि न स्थास्यति।

यूयं तेषां तक्षितमूर्त्तीर्वह्निना दाहयिष्यथ, यथा यूयम् उन्माथग्रस्ता २५ न भवथ तदर्थं तेषां गात्रीये रौप्ये स्वर्णे वा लोभं न करिष्यथ स्वार्थं तन्न ग्रहीष्यथ यस्मात् तद् युष्माकं प्रभोः परमेश्वरस्य घृण्यं वस्तु। यूयं यथा २६

तदिवाभिशप्ता न भवथ, तदर्थं तद् घृण्यं वस्तु स्वगृहाणि नानेष्यथ किन्तु तद् ऋतीयिष्यध्वे अतितुच्छं करिष्यथ च।

---

# ८ अष्टमोऽध्यायः।

इस्रायेल् लोकान् प्रति परमेश्वरस्य कृपानुग्रहत्वात् तदाज्ञां ग्रहीतुं मूसमा विनयः।

१ अद्याहं युष्मान् यद्यदाज्ञापयामि यत्नात् तत् सर्व्वम् आचरत, तेन जीविष्यथ वर्द्धिष्यध्वे च परमेश्वरो यं देशमधि युष्माकं पूर्व्वपुरुषाणां २ समीपे शप्तवान् तत्र यूयं प्रविशन्तस्तमधिकरिष्यथ। यूयं तदाज्ञा ग्रहीष्यथ नवेति युष्मान् परीक्षितुं युष्माकं मनोगतं प्रकाशयितुं युष्मान् नम्रयितुञ्च युष्माकं प्रभुः परमेश्वर एतानि चत्वारिंशद् वर्षाणि प्रान्तरे ३ येन येन पथा युष्मान् अगमयत् तान् स्मरत। मनुजः केवलपूपेन न जीवति किन्तु परमेश्वरस्य वदनाद् यानि यानि वचांसि निःसरन्ति तैरेव जीवतीति युष्मान् ज्ञापयितुं स युष्मान् नतान् क्षुधितांश्च कृत्वा ४ युष्माकं पूर्व्वपुरुषैरज्ञाता या मान्ना तया युष्मान् अपुष्णात्। एतेषु चत्वारिंशद् वर्षेषु युष्माकं गात्रीयवस्त्राणि न जीर्णानि युष्माकं पादाश्च ५ न स्फीताः। मानुषो यथा स्वपुत्रं शास्ति युष्माकं प्रभुः परमेश्वरो युष्मान् ६ तथा शास्तीति यूयं मनसि विचारयत। यूयं स्वप्रभोः परमेश्वरस्याज्ञासु ७ मनो निधाय तत्पथेन गच्छत तत्तश्च बिभीत। युष्माकं प्रभुः परमेश्वरो युष्मान् उत्तमं देशम् आनेष्यति तत्र देशे निम्नभूमेः पर्व्वताच्च निर्गतानि ८ जलस्रोतांसि प्रस्रवणानि जलाशयाश्च सन्ति। तत्र देशे गोधूमयवद्राक्षो- ९ डुम्बरदाडिम्बजिततैलमधूनि जायन्ते। तत्र देशे भक्ष्यं भोक्तुं प्राप्स्यथ तस्य न्यूनं न भविष्यति युष्माकं कस्यापि वस्तुनोऽभावो न भविष्यति; तस्य १० देशस्य प्रस्तरा लोहमयाः; तस्य गिरिभ्यो यूयं पित्तलं खनिष्यथ। तत्र यूयं भुक्त्वा तृप्ता प्रभुणा परमेश्वरेण दत्तदेशस्योत्तमत्वात् तं धन्यं वदिष्यथ। ११ किन्तु अवधद्धं युष्माकं प्रभुं परमेश्वरं मा विस्मरत, तस्य या आज्ञावि- १२ धिव्यवस्था अद्याहं युष्मभ्यं ददामि ता आचरत। भुक्त्वा युष्मासु तृप्तेषु १३ सुनिर्म्मितगृहेषूषितेषु युष्माकं गोमेषादिव्रजेषु वर्द्धितेषु युष्माकं स्वर्ण- १४ रौप्येषु वृद्धेषु युष्माकं सर्व्वैश्वर्य्ये एधिते यूयं मा गर्व्विष्ट, यो मिसर्दे- १५ शाद् दासत्वागाराद् युष्मान् वहिरानयद् युष्माकं नम्रतापरीक्षाभा- विक्षेमार्थं ज्वालयित्रहिरस्थिकैः पूर्णेन महाभयङ्करेण काननेन युष्मान्

अगमयद् युष्मत्कृते मरुभूमौ वह्निप्रस्तरमयगिरेस्तोयं निरगमयत् युष्मत्- १६ पूर्व्वपुरुषैरज्ञाता या मान्ना तया युष्मान् प्रान्तरेऽपुष्णात् तादृशं युष्मत्प्रभुं परमेश्वरं न विस्मरत। वयं स्वविक्रमबाहुबलाभ्याम् एतदैश्वर्य्यं प्राप्ता १७ इति मनःसु मा विचारयत। किन्तु प्रभुं परमेश्वरं स्मरत, यस्मात् स १८ युष्माकं पूर्व्वपुरुषाणां साक्षात् शपमानो यं नियमं कृतवान् तम् अद्य- वत् स्थिरीकर्त्तुं युष्मभ्यं धनप्राप्तेः शक्तिमदात्। किन्तु यदि यूयं केनापि १९ प्रकारेण स्वप्रभुं परमेश्वरं विस्मृत्य इतरदेवान् अनुगम्य सेवध्वे भजध्वे च तर्हि युष्माकं विरुद्धम् इदं साक्ष्यम् अद्याहं ददामि यूयं विनंक्ष्यथ। युष्माकं सम्मुखे परमेश्वरो या जाती विनाशयति ताइव यूयमपि वि- २० नंक्ष्यथ; युष्माभिः स्वप्रभुपरमेश्वरस्य वाक्ये ऽवधोरिते विनाशो लप्स्यते।

---

## ९ नवमोऽध्यायः।

१ स्वस्वधर्म्मे निर्भरं न कर्त्तुं मूससो निवेदनं ७ आज्ञालङ्घनवर्णनञ्च।

हे इस्रायेल्वंशा यूयं मनो निधद्धं युष्मत्तो महतीर्बलवतीश्च जातीरन- १ धिकारिणीः कर्त्तुम् अद्य युष्माभि र्यर्द्दननदीपारं गम्यते; तेषां लोकानां नगराणि बृहन्ति गगणस्पर्शिप्राचीरवेष्टितानि च। ता जातयो बृहत्यो २ दीर्घकायाश्च, ते च लोका युष्माभिर्विदिता अनाकवंशीयाः, यतो ऽनाक- वंशीयानां सम्मुखे स्थातुं केन शक्यत इति वाग्युष्माभिः श्रुता। किन्तु ३ दाहकाग्निस्वरूपो युष्माकं प्रभुः परमेश्वरः स्वयं युष्माकम् अग्रे गमिष्यती- ति जानीत स तान् नाशयिष्यति युष्माकं साक्षात् तान् वशी करिष्यति यूयं परमेश्वरवाक्येन तूर्णं तान् अनधिकारिणः कृत्वा नाशयिष्यथ। किन्तु ४ युष्माकं प्रभुणा परमेश्वरेण युष्माकं सम्मुखात् तेषु बहिष्कृतेषु परमेश्वरो ऽस्माकं धर्म्माद् इमं देशम् अधिकारयितुमस्मान् आनीतवान् इति मनसि मा चिन्तयत, यतः परमेश्वर आसां जातीनां पापाद् युष्माकं सम्मुखात् एता अधिकारच्युताः करिष्यति। यूयं स्वस्वधर्म्मात् स्वमनः- ५ सारल्याद्वा तासां देशमधिकर्त्तुं यास्यथ तन्न किन्तु परमेश्वरो युष्माकं पूर्व्वपुरुषान् इब्राहीम्-इस्हाक्-याकूबः प्रति यत् शप्तवान् तत् पालयितुं युष्माकं प्रभुः परमेश्वर आसां जातीनां दुष्टत्वात् युष्माकं सम्मुखात् ता अधिकारच्युताः करिष्यति। अतो युष्माकं प्रभुः परमेश्वरो यदिमं उत्तमं ६ देशमधिकर्त्तुं युष्मभ्यं दास्यति तन्न युष्माकं पुण्यस्य फलम् इति जानीत यतो यूयम् अवाध्यलोकाः।

७ यूयं प्रान्तरे स्वप्रभुं परमेश्वरं यदक्रोधयत तत् स्मरत मा विस्मरत; यूयं मिसर्देशाद् आ प्रस्थानाद् अत्रागमनं यावत् परमेश्वरस्याज्ञा-
८ लङ्घिनो भवथ। होरेबे च परमेश्वरम् अक्रोधयत, ततः परमेश्वरः क्रुध्यन्
९ युष्मान् नाशयितुम् उद्यतः। तदाहं प्रस्तरपत्रद्वयम् अर्थाद् युष्माभिः सह परमेश्वरस्य नियमपत्रं ग्रहीतुं गिरिमारुह्य चत्वारिंशद् अहोरात्राणि
१० न भुक्त्वा न पीत्वा गिरौ स्थितवान्। ततः परमेश्वरः समागमदिने पर्व्वत-शृङ्गे वह्निमध्याद् युष्मान् सम्भाष्य यान्यकथयत् तेषु वाक्येष्वीश्वरीयाङ्गुल्या
११ तत्प्रस्तरपत्रयो र्लिखितेषु परमेश्वरस्तत्प्रस्तरद्वयं मह्यमदात्। तदा चत्वा-रिंशद् अहोरात्रेषु गतेषु परमेश्वरस्तत् प्रस्तरद्वयम् अर्थात् नियम-
१२ पत्रद्वयं मह्यं दत्त्वा कथितवान्, उत्तिष्ठ स्थानादितस्तूर्णम् अवरुह्य याहि, यस्मात् त्वं मिसर्देशाद् यान् लोकान् वहिरानीतवान् ते भ्रष्टाः, अहं यं पन्थानं दर्शितवान् ते तूर्णं तत्पथाद् वहिर्भूय
१३ स्वार्थं सिक्तां मूर्त्तिं निर्म्मितवन्तः। परमेश्वरो मह्यं पुनः कथितवान्
१४ एते लोका अवाध्या इत्यहं दृष्टवान्, अतस्त्वं मत्तोऽपसर तान् अहं नाशयानि व्योमाधस्तेषां नाम लुम्पानि; त्वामेवाहं तेभ्योऽपि बलवद्बृह-
१५ ज्जातिं करिष्यामि। ततोऽहं परावृत्य हस्ताभ्यां नियमपत्रे गृहीत्वा
१६ प्रज्वलितवह्निपर्व्वताद् अवरुह्यागतः। यूयं प्रभुपरमेश्वरस्य विरुद्धं पापम् अकुर्व्वत स्वार्थं सिक्तगोवत्सम् अनिर्म्मात परमेश्वराज्ञापितपथात्
१७ तूर्णं वहिरभवत, इत्यहं विलोक्य दृष्टवान्। ततोऽहं तत् प्रस्तरपत्र-
१८ द्वयं वेगेन हस्तात् निक्षिप्य युष्माकं साक्षाद् भग्नवान्। परमेश्वरं क्रोधयितुं तस्य दृष्टौ कुकर्म्म कुर्व्वद्भिर्युष्माभिस्तस्य यद् अपराद्धं तस्माद् युष्मदपराधादहं पूर्व्ववत् परमेश्वरसम्मुखे न्युब्जीभूय चत्वारिंशद्
१९ दिवारात्रीः पूपभोजनजलपाने न कृतवान्। यतो युष्मान् नाशयितुं क्रोधेन तापातिशयेन च प्रज्वलितात् परमेश्वराद् भीतोऽहं, किन्तु तदापि
२० परमेश्वरो मन्निवेदनं श्रुतवान्। परमेश्वरे हारोणं नाशयितुं तस्मायपि
२१ क्रुद्धे मया तत्कृते प्रार्थितं। युष्माकं पापमर्थाद् यूयं यं गोवत्समनिर्म्मात तमहं गृहीत्वा वह्निना दग्धवान् यावच्च स धूलीवत् सूक्ष्मो नाभवत् तावत् तं पिष्ट्वा चूर्णीकृतवान्, अपरं गिरेर्निर्गतनद्यां तस्य धूलीर्नि-
२२ क्षिप्तवान्। यूयं तबियेरायां मसायां किब्रोद्धत्तावायाञ्च परमेश्वरम्
२३ अक्रोधयत। तथा परमेश्वरो यदा कादेशवर्णेयाद् युष्मान् प्रेषयन् अक-थयत्, यूयं प्रस्थाय मया दास्यमानं देशमधिकुरुत, तदापि यूयं स्वप्रभुं

परमेश्वरं न प्रतीत्य तत्कथायां मनो न निधाय तदाज्ञां लङ्घितवन्तः।
युष्माभिः समं मम परिचयदिनाद् यूयं परमेश्वरस्याज्ञालङ्घिन आस्थ। २४
अहं प्रथमवत् तदापि चत्वारिंशद् दिवारात्रीः परमेश्वरस्य सम्मुखे २५
न्युब्जः स्थितवान्, यतः परमेश्वरो युष्मान् विनाशयिष्यतीति स्वयं कथितवान्। अहं परमेश्वरस्य समीप इति प्रार्थितवान् हे प्रभो परमेश्वर २६
त्वं स्वाधिकारस्वरूपान् यान् लोकान् स्वमहिम्ना मोचितवान् पराक्रमिकरेण मिसरो वहिष्कृत्यानीतवांश्च तान् न विनाशय। तव दासान् २७
इब्राहीम्-इसहाक्-याकूबः स्मर, एतल्लोकानाम् अबाध्यतादुष्टतापापानि
प्रति मा पश्य। यस्मात् त्वम् अस्मान् यद्देशाद् वहिरानयस्तद्- २८
देशीयलोका इति कथयिष्यन्ति, परमेश्वरस्तेभ्यो यं देशं दातुं प्रतिज्ञातवान् तं देशं तान् नेतुं नाशक्नोत्, तत्कारणात् तान् ऋतीय हन्तुं
प्रान्तरे वहिरानयत्। त्वं स्वपराक्रमेण विस्तीर्णबाहुना च यान् वहि- २९
रानीतवान् एतएव तव ते लोका अधिकारश्च।

---

## १० दशमोऽध्यायः।

१ द्वितीयवारं दशाज्ञाकथनं ६ हारोणस्य मरणात् परं तस्य पुत्त्रस्य याजकत्वपदे नियोगः ८ लेवीयानां पृथक्त्वं १० ईश्वराज्ञा १२ ईश्वराज्ञाः पालयितुं मूससो विनयः।

तदा परमेश्वरो मह्यं कथितवान् त्वं पूर्व्ववत् प्रस्तरद्वयं तक्षित्वा मद- १
न्तिकं गिरिमारोह काष्ठीयां मञ्जूषामेकां निर्म्माहि च। त्वया भग्नयोः २
पूर्व्वप्रस्तरपत्रयो र्यानि वाक्यान्यासन्, तेषु मया तत्र प्रस्तरयो र्लिखितेषु
त्वं तौ मञ्जूषायां स्थापयिष्यसि। ततोऽहं शिटीमकाष्ठेन मञ्जूषां निर्म्मित- ३
वान् पूर्व्ववत् द्वौ प्रस्तरौ तक्षित्वा तौ कराभ्याम् आधाय गिरिमारूढवान्। ततः परमेश्वरः समागमदिने गिरौ वह्निमध्याद् या दशाज्ञा ४
युष्मभ्यं कथितवान् ताः पूर्व्वलिपिवत् तयोः प्रस्तरपत्रयो र्लिखित्वा
परमेश्वरस्ते मह्यमदात्। अहं मुखं परावर्त्त्य गिरेरवरुह्य परमे- ५
श्वरस्याज्ञया मन्निर्म्मितायां मञ्जूषायां प्रस्तरद्वयं निहितवान्, तस्मात्
तत् प्रस्तरद्वयं तत्र तिष्ठति।

इस्रायेलवंशेन वेरोत्-विनेयाकनात् मोषेरोतं यात्रायां कृतायां ६
तत्र हारोणो मृतवान्, तत्स्थाने तस्य श्मशानमभूत् तेन तत्सुत
इलियासरस्तस्य याजकत्वपदे नियुक्तः सेवां कृतवान्। ते तत्स्थानाद् ७

गुद्गोदायां यात्रां कृतवन्तः, गुद्गोदातः सजलस्रोतोदेशं योटवाथां प्रस्थितवन्तः।

८ तदाद्यवत् परमेश्वरस्य नियममञ्जूषां वोढुं परमेश्वरस्य परिचर्य्यायै तत्साक्षात् स्थातुं तन्नाम्ना चाशिषं दातुं परमेश्वरो लेवीयवंशं पृथक्
९ कृतवान्। अतः स्वभ्रातृगणमध्ये लेवीयानां कोप्यंशोऽधिकारो वा न तिष्ठति, युष्माकं प्रभुपरमेश्वरस्य वाक्यानुसारात् परमेश्वर एव तेषामधिकारः।

१० अतः पूर्व्ववत् तदापि चत्वारिंशद् दिवारात्रीः पर्व्वते तिष्ठतो मम
११ निवेदनं परमेश्वरस्तदापि श्रुत्वा युष्मान् न नाशयितुं स्वीकृतवान्। परमेश्वरो मह्यं कथितवान्, उत्तिष्ठ प्रस्थानार्थं लोकानाम् अग्रे गच्छ; अहं तेभ्यो यं देशं दातुं तेषां पूर्व्वपुरुषाणां समीपे शप्तवान् स तैः प्रविश्यताम् अधिक्रियताञ्च।

१२ हे इस्रायेल्वंशाः, युष्माकं प्रभुपरमेश्वराद् भयं तस्य सर्व्वपथेन गमनं तस्मिन् प्रेमकरणं सर्व्वान्तःकरणैः सर्व्वप्राणैः समं युष्मत्प्रभु-
१३ परमेश्वरस्य सेवनं युष्माकं हितार्थमहं परमेश्वरस्य यानाज्ञाविधीन् अद्य ददामि तदनुसाराद् आचरणञ्च विना युष्माकं प्रभुः परमे-
१४ श्वरो युष्मत्तः किं याचते? पश्यत व्योमोपरिस्थः स्वर्गः पृथ्वी तन्मध्यस्थं
१५ सर्व्वं वस्तु च युष्माकं प्रभुपरमेश्वरस्य। परमेश्वरो युष्माकं पूर्व्वपुरुषेषु प्रेतुं तान् प्रति तुष्टवान् तेभ्यः परं तेषां वंशम् अर्थाद् युष्मान् अद्यवत् सर्व्वजा-
१६ तिमध्याद् वरीतवान्। अतो यूयं स्वस्वान्तःकरणानां त्वचं छिन्त पुनर-
१७ वाध्या मा भूत। यतो युष्माकं प्रभुः परमेश्वर ईश्वराणामीश्वरः, प्रभूणां प्रभुर्महान् सर्व्वशक्तिमान् भयङ्करश्चेश्वरः स पक्षपातं न करोति उत्कोचं
१८ न गृह्णाति। स पितृहीनानां विधवानाञ्च विचारं निष्पादयति खाद्यवस्त्रे
१९ दातुं विदेशिनि प्रीयते। अतो यूयं विदेशिनि प्रीयध्वं यतो यूयं मिसर्देशे
२० विदेशिन आस्त। यूयं स्वप्रभुपरमेश्वराद् बिभीत तं सेवध्वं, तस्मिन्
२१ आसज्यध्वं तस्य नाम्नि शपध्वं। स युष्माकं स्तवो युष्माकम् ईश्वरश्च यूयं यानि दृश्यन्ति भयङ्कराणि च कर्म्माणि स्वनेत्रैरपश्यत तानि
२२ तेनैव युष्मदर्थं कृतानि। युष्माकं पूर्व्वपुरुषाः शप्ततिजनसंख्यकाः सन्तो मिसरं गताः, इदानीं यूयं स्वप्रभुणा परमेश्वरेण व्योमतारका इव बहुसङ्ख्यका विधत्ताः।

# ११ एकादशोऽध्यायः।

१ ईश्वरस्य महाकर्म्मकारणात् तदाज्ञां पालयितुं विनयः १० देशवर्णनं १२ आज्ञापालनफलनिर्णयः १८ सन्तानान् उपदेष्टुम् आज्ञा २२ आज्ञापालनफलं २६ शापाशिषोः कथनं।

यूयं स्वप्रभुपरमेश्वरे प्रीयध्वं तस्य रक्षणीयविधिव्यवस्थाज्ञाः सदा १
पालयत। युष्माकं सन्तानै र्यन्नादर्शि न चाज्ञायि, तद् अद्य युष्माभिरे- २
वाभिज्ञायतां, फलतो युष्मत्प्रभोः परमेश्वरस्य शासनं तस्य महिमा
पराक्रमिहस्तो विस्तीर्णबाहुराश्चर्य्यलक्षणानि मिसर्देशमध्ये मिसर्देशीय- ३
राजं फिरौणं प्रति तस्य सर्व्वदेशञ्च प्रति कृतानि कार्य्याणि च, स मिस्री- ४
याणां हयरथसैन्यानि प्रति यद् अकरोत्, तेषां युष्मत्पश्चाद् धावनकाले
स सुफार्णवतोयानि तेषामुपर्य्यवाहयत् तेन त अद्य यावत् परमेश्वरेण
व्यनश्यन्, अत्र युष्मदागमं यावत् स युष्माकं कृते प्रान्तरे यदकरोत्, ५
रुवेणवंशीयैलीयावस्य सुतौ दाथनावीरामौ प्रति स यदकरोत्, ६
फलतः पृथ्वी यत् स्वास्यं विस्तार्य्य इस्रायेल्वंशमध्ये तौ तत्परिजनान्
तद्दूष्याणि तदधिकृतसर्व्वसम्पत्तीश्चाग्रसत्। यूयं परमेश्वरकृतं सर्वं ७
महाकर्म्म स्वनेत्रै र्दृष्टवन्तः। अतोऽद्याहं युष्मभ्यं या आज्ञा ददामि, ८
यूयं ता आचरत, तेन यूयं यं देशम् अधिकर्त्तुं पारं याथ,
बलवद्भि र्युष्माभिः स देशः प्रवेक्ष्यतेऽधिकरिष्यते च, यं देशं युष्म- ९
त्पूर्वपुरुषेभ्यस्तेषां वंशाय च दातुं परमेश्वरः शप्तवान्, तस्मिन् दुग्धमधु-
प्रवाहिनि देशे युष्माकम् अवस्थिति र्दीर्घकालीया भविष्यति।

यूयं यस्मात् मिसरदेशाद् वहिरागतास्तत्र वीजान्युप्त्वा शाकोद्यानवत् १०
पदै र्जलं सिक्तवन्तः, किन्तु यं देशम् अधिकर्त्तुं याथ, स देशो मिसरवत्
नहि। यतो यं देशम् अधिकर्त्तुं यूयं पारं गच्छथ स पर्वतमयो निम्न- ११
भूमिमयश्च, स च व्योमवृष्ट्या सिच्यते। तत्र देशे युष्माकं प्रभुः परमेश्वरो १२
मनो निधत्ते, आ वर्षप्रथमात् शेषं यावद् युष्माकं प्रभोः परमेश्वरस्य
दृष्टिः सदा तं प्रति तिष्ठति।

अद्याहं या आज्ञा युष्मभ्यं ददामि ता आरचन्तो यूयं यदि स्वस- १३
र्व्वान्तःकरणैः सर्व्वप्राणैश्च समं स्वप्रभुपरमेश्वरे प्रीयध्वे तञ्च सेवध्वे
तर्हि यूयं यथा स्वशस्यद्राक्षारसतैलानि संग्रहीतुं शक्नुयात, तदर्थम् अहं १४
प्रथमद्वितीययो र्वर्षाकालयो र्युष्मद्देशाय वृष्टिं दास्यामि, युष्माकं पशूनां १५
कृते क्षेत्रीयतृणान्युत्पादयिष्यामि च, तेन यूयं भुक्त्वा तप्स्यथ। यूयम् अव- १६

धद्धं, युष्माकं मनोभ्रान्ति र्न भवतु, यूयं विपथगामिनो मा भवत,
१७ इतरदेवान् मा सेवध्वं तांश्च मा नमत। नो चेद् युष्मान् प्रति प्रज्व-
लितक्रोधेन परमेश्वरेण व्योम्नि रुद्धे वृष्टि र्न भविष्यति भूमौ च शस्यादि
नोत्पत्स्यते, परमेश्वरश्च युष्मभ्यं यम् उत्तमं देशं दास्यति, तत्र यूयं
तूर्णं विनंक्ष्यथ।

१८ यूयं ममैतानि वाक्यानि स्वान्तःकरणेषु मनःसु च निधद्धं चिह्नरूपाणि
च स्वकरेषु बध्नीत, तानि भूषणरूपाणि युष्माकं नेत्रद्वयमध्ये तिष्ठन्तु।
१९ यूयं तानि स्वस्वबालकान् शिक्षयन्तो गेह उपवेशनकाले पथगमनकाले
२० शयनकाल उत्थानकाले च भाषध्वं। गृहद्वारस्य पार्श्वकाष्ठयो र्गोपुरेषु
२१ च तान्युल्लेखत। तेन परमेश्वरो युष्माकं पूर्व्वपुरुषेभ्यो यां भूमिं दातुं
शप्तवान्, तत्र भूमौ युष्माकम् अवस्थितिः पृथिव्युपरिस्थव्योमस्थितिवत्
दीर्घकालीया भविष्यति।

२२ या एता आज्ञा अहं युष्मभ्यं ददामि यदि यूयं ता आचरन्तः
स्वप्रभुपरमेश्वरे प्रीयध्वे तस्य सर्व्वमार्गैश्चलथ दृढञ्च तस्मिन्नासज्यध्वे,
२३ तर्हि परमेश्वरो युष्माकं सम्मुखाद् एता जातीस्ताड़यित्वा वहिः
करिष्यति यूयं युष्मत्तो वृहतीनां बलवतीनाञ्च जातीनां देशमधि-
२४ करिष्यथ। युष्माकं पादा यत्र यत्र पतिष्यन्ति तत्सर्व्वस्मिन् युष्माकमधि-
कारो भविष्यति, प्रान्तरं लिवानोनाद्रिर्नदी फरात् पश्चिमसागरश्च
२५ युष्माकं सीमा भविष्यन्ति। युष्माकं सम्मुखे स्थातुं कस्यापि सामर्थ्यं
न भविष्यति यूयं यं यं देशं व्रजिष्यथ युष्मत्प्रभुः परमेश्वरः स्ववाक्यानु-
सारात् तान् देशान् युष्मत्तो भयाशङ्काभ्यां व्यापयिष्यति।

२६ पश्यताद्याहं युष्माकं सम्मुखे शापाशिषौ स्थापितवान्, अहं युष्मान्
२७ या आज्ञा ज्ञापितवान् प्रभुपरमेश्वरस्य ता आज्ञा यदि यूयम् आ-
२८ चरत, तर्ह्याशिषं लप्स्यध्वे। यदि च स्वप्रभोः परमेश्वरस्याज्ञा न पालयथ,
अद्याहं युष्मान् यन्मार्गमधि आदिशं तं विहाय यदि स्वैरज्ञातान्
२९ इतरदेवान् अनुगच्छथ, तर्हि शापं लप्स्यध्वे। यं देशमधिकर्त्तुं यूयं
याथ, तं यदा युष्माकं प्रभुः परमेश्वरो युष्मान् प्रवेशयिष्यति, तदा
३० यूयम् आशिषं गिरिषीमाद्रौ शापम् एवलाद्रौ निधास्यथ। पश्यत तौ
गिरी यर्दनपारे सूर्य्यास्तपथान्ते गिल्गलस्य सम्मुखस्थसमभूवासिकिना-
३१ नीयानां देशे मोर्य्युद्यानान्तिके स्थितौ। यतो युष्माकं प्रभुः परमे-
श्वरो युष्मभ्यं यं देशम् अधिकर्त्तुं दास्यति तं देशं प्रवेष्टुं यूयं यर्दननद्याः

पारं यास्यथ तमधिकरिष्यथ तत्र वत्स्यथ च। अतोऽहमद्य युष्माकं ३२ सम्मुखे या विधिव्यवस्था निदधामि ता आचरितुम् अवधद्ध्वं।

## १२ द्वादशोऽध्यायः।

१ प्रतिमाप्रभृतिं नाशयितुमाज्ञा ४ परमेश्वरनिश्चितस्थाने तं सेवितुं यातुमाज्ञा १७ विशेषाज्ञा २० पूतस्थाने पूतवस्तु भोक्तुमाज्ञा २९ देवार्चकवत् कर्म्म कर्त्तुं निषेधः।

युष्माकं पैतृकः प्रभुः परमेश्वरो युष्मभ्यम् अधिकारार्थं यं देशं दास्यति १ तत्र देशे युष्माभिरिहलोके ऽवस्थितिकालं यावद् या विधिव्यवस्था मनःसु निधातव्या आचरितव्याश्च, ता एताः। यूयं या या जातीरधिकारात् २ च्योतयिष्यथ ता उच्चाद्रिभ्यगूपरि प्रतितेजस्विद्रुमाधश्च च यत्र यत्र स्वदेवान् असेवन्त तानि स्थानानि यूयं समूलं विनाशयिष्यथ। यूयं तेषां ३ वेदीर्विनाशयिष्यथ प्रतिमा भंक्ष्यथ चैत्यान् वह्निना दाहयिष्यथ तच्चित- देवप्रतिमाश्छेत्स्यथ तत्स्थानात् तेषां नाम लोप्स्यथ।

यूयं स्वप्रभुपरमेश्वरं प्रति तथा न करिष्यथ। किन्तु युष्माकं प्रभुः पर- ४ मेश्वरः स्वनाम निधातुं युष्माकं सर्व्ववंशमध्ये यत् स्थानं वरीष्यति तस्य ५ तद् वासस्थानं गवेषयिष्यथ, तत् स्थानं गत्वा यूयं स्वस्वहोमादिबलीन् ६ दशमांशान् हस्तोत्तोलितान् प्रतिश्रुतान् स्वेच्छादत्तांश्चोपहारान् गोमे- षादिव्रजानां प्रथमजांश्चानेष्यथ। तत्र च यूयं सपरिवारा युष्माकं ७ प्रभुपरमेश्वरस्य सम्मुखे भोक्ष्यध्वं युष्माकं प्रभुपरमेश्वरो युष्मान् आशिषं उक्तवान् तत्कारणाद् युष्माकं कराणां कर्म्मभिरानन्दिष्यथ। अत्र स्थाने ८ ऽस्माकम् एकैको जन इदानीं यथा स्वस्वमनसोऽभिलाषानुसाराद् आचरति यूयं तथा न करिष्यथ। यस्माद् युष्माकं प्रभुपरमेश्वरो युष्मभ्यं ९ यद् विश्रामस्थानम् अधिकारञ्च दास्यति तं यूयं नेदानीं प्राप्ताः। किन्तु यदा यूयं यर्द्दनदीपारं गत्वा स्वप्रभुपरमेश्वरेण दातव्याधि- १० कारदेशे वत्स्यथ यदा च यूयं चतुर्दिक्स्थरिपुभ्यस्तेन विश्रामे दत्ते निर्व्विघ्नं वत्स्यथ, तदा युष्माकं प्रभुपरमेश्वरः स्वनाम निधातुं यत् स्थानं वरिष्यति ११ तत्र यूयं मदाज्ञानुयायिनो होमादिबलीन् दशमांशान् परमेश्वरोद्दे- श्यान् हस्तोत्तोलितान् स्वेच्छया प्रतिश्रुतांश्चोपहारान् निवेदयिष्यध्वे। यूयं युष्माकं पुत्राः कन्या दासा दास्यो युष्मन्मध्ये ऽधिकारांशहीना १२ युष्मन्नगरद्वारान्तरस्था लेवीया यूयञ्च युष्माकं प्रभुपरमेश्वरस्य सम्मुख

१३ आनन्दिष्यथ। यूयम् अवधद्धं स्वदृष्टे सर्व्वस्थाने होमबलिं न दास्यथ।
१४ किन्तु युष्माकं कस्यचित् वंशस्य मध्ये परमेश्वरेण यत् स्थानं वरीष्यते, तत्र स्वस्वहोमबलीन् दास्यथ तत्र चाज्ञानुरूपाणि यज्ञकर्म्माणि करि-
१५ ष्यथ। युष्माकं प्रभुपरमेश्वरो युष्मभ्यं यामाशिषं दास्यति तदनुरूपं सर्व्वनगरद्वाराभ्यन्तरे यूयं पशून् हत्वा मनोभिलाषानुरूपं मांसं भोक्ष्यध्वे यथा कृष्णसारस्य हरिणस्य मांसं तथा तदपि शुच्यशुचिभिः सर्व्वलोकै
१६ र्भक्षणीयं। यूयं केवलं रुधिरं न भोक्ष्यध्वे तत् भूमौ जलवत् निक्षेप्स्यथ।
१७ स्वस्वशस्यद्राक्षारसतैलानां दशमांशा गोमेषादीनां प्रथमजाः प्रतिश्रुताः स्वेच्छादत्ता हस्तोत्तोलिता उपहाराश्च युष्माभिः स्वस्वनगर-
१८ द्वारमध्ये न भोजनीयाः। किन्तु युष्माकं प्रभुः परमेश्वरो यत् स्थानं वरीष्यति तत्र युष्मत्प्रभुपरमेश्वरस्य सम्मुखे यूयं युष्माकं पुत्राः कन्या दासा दास्यश्च नगरद्वारान्तरस्थलेवीयलोकाश्च तद् भोक्ष्यध्वे, यूयं यत्र हस्तार्पणं करिष्यथ युष्माकं प्रभुपरमेश्वरस्य सम्मुखे तेनानन्दि-
१९ ष्यथ। अवधद्धं यूयं देशेऽवस्थितिकालं यावत् लेवीयान् मा त्यजत।
२० युष्माकं प्रभुपरमेश्वरेण स्वाङ्गीकारानुसाराद् युष्माकं सीमायां विस्तारितायां, मांसं भोक्ष्यामहे वाणियं यदि मांसबुभुक्षुभि र्युष्माभिरुच्यते, तर्हि युष्माकं मनोभिलाषानुसारात् मांसं भक्षिष्यते।
२१ युष्माकं प्रभुपरमेश्वरः स्वनाम निधातुं यत् स्थानं वरीष्यति तद् यदि युष्मत्तो वहुदूरं भवति, तर्हि परमेश्वरेण दत्ताद् युष्माकं गोमेषादिव्रजात् पशून् गृहीत्वा मदाज्ञानुसाराच् छेत्स्यथ स्वस्वमनोभिलाषानु-
२२ सारात् नगरद्वाराभ्यन्तर उपविश्य मांसं भोक्ष्यध्वे च। यथा कृष्णसारहरिणानां मांसं तथा तदपि भक्षिष्यथ, शुचिरशुचिर्व्वा सर्व्वो लोक-
२३ स्तद् भक्षितुं शक्नोति। केवलं रुधिरं युष्माभि र्न भक्षितव्यं तत्रावधद्धं
२४ यतो रुधिरमेव जीवनं, अतो मांसेन समं प्राणान् न भोक्ष्यध्वे। यूयं तत्
२५ न भुक्त्वा भूमौ जलवत् निक्षेप्स्यथ। यूयं तन्न भोक्ष्यध्वं परमेश्वरस्येप्सित-
२६ कर्म्मणि कृते युष्माकं युष्मद्भाविवंशस्य च क्षेमं भविष्यति। किन्तु युष्माकं पूतवस्तूनि प्रतिश्रुतवस्तूनि च गृहीत्वा परमेश्वरेणानुगृहीतं स्थानं
२७ युष्माभि र्गन्तव्यं। यूयं स्वस्वहोमबलीन् अर्थात् तेषां मांसरुधिरे युष्माकं प्रभुपरमेश्वरस्य वेद्याम् उत्सर्क्ष्यथ, युष्मदीयबलीनां रुधिरं प्रभुपरमेश्वरस्य वेद्यां निक्षेप्स्यथ, किन्तु तेषां मांसं यूयं भक्षिष्यथ।
२८ यूयं मयादिष्टान्येतानि सर्व्ववाक्यानि श्रुत्वा पालयत तेन प्रभु-

परमेश्वरस्य गोचरे ग्राह्योत्तमकर्म्मणि कृते युष्माकं युष्मद्वंशस्य सदा शुभं भविष्यति।

यूयं यान् भिन्नजातीयान् अधिकाराच् च्योतयितुं याथ तेषु युष्माकं २९ प्रभुणा परमेश्वरेण युष्मत्सम्मुखाद् उच्छिन्नेषु यूयं यदा तेषां देशमधिकृत्य तत्र वत्स्यथ, तदा स्वसमक्षं तेषां विनाशात् परं यूयं तेषां पश्चाद्गत्वा ३० यदुन्माथे न पतथ तदर्थम् अवधद्धं, ता जातयः स्वस्वदेवान् कथम् असेवन्त? वयमपि ताइव सेविष्यामहे, इति कथयन्तस्तासां देवान् मानुसरत। यूयं स्वप्रभुपरमेश्वरं प्रति तथा न करिष्यथ ते स्वदेवान् ३१ प्रति परमेश्वरस्य घृणितं सर्व्वं कर्म्म कुर्व्वन्ति, ते देवान् उद्दिश्य स्वपुत्त्रकन्या अपि वह्नौ जुह्वति। अहं यद्यद् युष्मान् आदिशामि तत् सर्व्वं ३२ पालयितुं यतिष्यध्वे तस्य न्यूनमधिकं वा न करिष्यथ।

---

## १३ त्रयोदशोऽध्यायः।

१ देवमर्च्चितुं प्रवर्त्तकलोकहननं ६ देवमर्च्चितुं प्रवर्त्तकज्ञातिकुटुम्बवधः १२ देवार्च्चकनगरं नाशयितुमाज्ञा।

यदि युष्माकं मध्ये कश्चन भविष्यद्वक्ता स्वप्नार्थवक्ता वोत्पद्य युष्मान् १ चिह्नं चित्रं वा कर्म्म निर्णीयेति वदति, वयं युष्माभिरविदितान् इतरदे- २ वान् अनुगम्य सेविष्यामहे, तर्हि तेन यत् चिह्नं चित्रं वा कर्म्म निर्णीतं तस्मिन् फलितेऽपि यूयं तस्य भविष्यद्वक्तुः स्वप्नार्थवक्तुर्वा वाक्ये मनो न ३ निधास्यध्वे यतो यूयं सर्व्वान्तःकरणैः सर्व्वप्राणैः समं स्वप्रभुपरमेश्वरे प्रीयध्वे न वेति ज्ञातुं युष्माकं प्रभुपरमेश्वरो युष्मान् परीक्षिष्यते। यूयं ४ स्वप्रभुं परमेश्वरम् अनुगच्छत तत्तो बिभीत तदाज्ञाः पालयत तत्कथां मन्यध्वं तं सेवध्वं तस्मिन् आसज्यध्वञ्च। स भविष्यद्वक्ता स्वप्नार्थवक्ता वा ५ हन्तव्यः, यतो मिसर्देशाद् युष्मान् वहिष्कृत्य दासत्वागारात् मोचयित्वानयत् यो युष्माकं प्रभुः परमेश्वरस्तस्माद् युष्मान् परावर्त्तयितुं, युष्माकं प्रभुः परमेश्वरो येन पथा यातुं युष्मान् आदिशत् तस्माद् युष्मान् च्योतयितुञ्च तस्य मन्त्रणा। यूयं स्वमध्यात् तं पापिष्ठं दवयत।

युष्माकं सहोदरः पुत्त्रः कन्या वक्षःस्थायिनी जाया प्राणसममित्त्रं ६ वा यदि युष्मान् भ्रमयति, अर्थाद् युष्मच्चतुर्दिक्स्थजातिसेवितान् समीप- ७ स्थान् पृथिव्या आद्योपान्तस्थितान् दूरवर्त्तिनो वा देवानधि यदि युष्मान् इति वदति, आगच्छत, वयं युष्माभिर्युष्मत्पूर्व्वपुरुषैश्चाज्ञातान् इतर-

देवान् सेवामहे, तर्हि यूयं न स्वीकृत्य तस्य कथायां मनो न निधद्ध्वं
९ तं प्रति नेत्रै र्न लज्जध्वं तं न दयध्वं न चमध्वञ्च। किन्तु यूयं
तं हनिष्यथ, तस्य हननाय प्रथमं युष्माभिस्ततः परं सर्व्वजनैः कराः
१० प्रसार्य्यन्तां। प्राणवियोगं यावत् तं प्रस्तरैराहनिष्यथ यतो दासत्वा-
गारात् मिसरदेशाद् युष्मान् वहिरानयद् यो युष्माकं प्रभुः परमे-
११ श्वरस्तस्माद् युष्मान् परावर्त्तयितुं स चेष्टितवान्। सर्व्वस्रायेल्वंशीयास्तत्
श्रुत्वा भयं प्राप्स्यते युष्मन्मध्ये तादृशं कुकर्म्म पुनर्न करिष्यते च।
१२ आगच्छत वयम् अज्ञातान् इतरदेवान् सेवामहै, इति वाचा
युष्माकं मध्यत उत्पन्नाः कतिपया दुष्टलोकाः स्वनगरवासिनोऽभ्रमयन्
१३ इति संवादं यदि युष्माकं निवासार्थं प्रभुपरमेश्वरेण दत्तानां नगराणां
१४ मध्ये किञ्चन नगरमधि शृणुथ, तर्हि युष्माभिरनुसरणेऽनुसन्धाने च कृते
सम्यक् पृष्टे च तत् तथ्यं युष्माकं मध्य एतादृशं घृणार्हं कुकर्म्म जातम्
१५ इति यदि निश्चीयेत, तर्हि यूयम् असिना तन्नगरवासिनः प्रहरत,
१६ तन्नगरं तन्मध्यस्थितं पश्वादिसर्व्वम् असिना समूलम् उच्छिन्त, लोठि-
तद्रव्याणि च तस्य हट्टपथमध्ये संगृह्य तन्नगरं तत्सर्व्वद्रव्यञ्च परमेश्वरम्
उद्दिश्य वह्निना दाहयत तत् नित्यं राशीभूय तिष्ठतु तन्नगरं पुन-
१७ र्निचितं न भवेत्। तेषां शप्तद्रव्याणां किञ्चिदपि युष्माकं करेषु न तिष्ठतु,
तेन परमेश्वरः स्वक्रोधात् परावृत्य युष्मान् दयिष्यते। अहमद्य युष्माकं
प्रभुपरमेश्वरस्य या आज्ञा युष्मान् वदामि यूयं यदि ताः पालयन्तस्तस्य
वाक्ये मनो निधाय युष्मत्प्रभोः परमेश्वरस्य दृष्ट्या यद् भद्रं तदाचरथ,
१८ तर्हि स युष्माकं पूर्व्वपुरुषान् प्रति प्रतिज्ञानुसाराद् युष्मान् प्रति दया-
शीलः सन् युष्मान् वर्द्धयिष्यति।

---

# १४ चतुर्दशोऽध्यायः।

१ मृतार्थं शरीरच्छेदननिषेधः ३ शुच्यशुचिपशूनां निर्णयः ९ शुच्यशुचिजलचरजन्तूनां निर्णयः २१ दशमांशादिकथनं।

१ यूयं स्वप्रभुपरमेश्वरस्य सन्तानास्तस्मात् स्वशरीरच्छेदनं न करिष्यथ,
२ मृतानां कृते स्वभ्रूमध्यस्थलचौरं न करिष्यथ। यतो यूयं स्वप्रभुपरमेश्व-
रस्य पूतलोकाः, परमेश्वरः स्वविशेषलोकान् कर्त्तुं भूमिस्थसर्व्वजातितो
युष्मान् अनुगृहीतवान्।

किमपि घृणार्हद्रव्यं युष्माभि र्मा भुज्यतां। एते पशवो युष्माभि र्भोज- ४
नीयाः, गौर्मेषश्छागो हरिणः कृष्णसारो वन्यगवो वन्यच्छागो गवयः पृषतो ५
वातप्रमी च। जन्तूनां मध्ये ये द्विखण्डविभक्तखुरिणो भूत्वा रोमन्था- ६
यन्ते ते युष्माभि र्भोजनीयाः। किन्तु ये रोमन्थायन्ते द्विखण्डखुरिणो वा ७
सन्ति, तेषां मध्य एते युष्माभि र्न भोजनीयाः, उष्ट्रः शशकः शाफनश्च,
यतस्ते रोमन्थायन्ते किन्तु न द्विखण्डखुरिणः, अतो युष्मान् प्रति ते न
शुद्धाः। शूकराश्च द्विखण्डखुरिणः सन्ति, किन्तु न रोमन्थायन्ते, तस्मात् ८
ते युष्मान् प्रत्यशुद्धाः, यूयं तेषां मांसं न भुञ्जीध्वं तेषां शवं न स्पृशत।

जलजन्तूनां मध्ये ये पक्षवन्तः शल्कलिनश्च सन्ति ते युष्माभि र्भक्ष्याः, ९
किन्तु येषां पक्षवल्कलानि न सन्ति तान् न भुञ्जीध्वं ते युष्मान् प्रति १०
न शुचयः।

सर्व्वे शुचिपक्षिणो युष्माभि र्भक्ष्याः, किन्तु नैते भक्ष्याः, उत्क्रोशः ११
क्रौञ्चः कुररो गृध्रश्चिल्लः स्वस्वजात्यनुसारात् शङ्करचिल्लश्च स्वजात्य- १४
नुसारात् सर्व्वकाकाः उष्ट्रपक्षी रात्रिश्येनो गांचिल्लश्च स्वजात्यनु- १५
सारात् श्येनः पेचको महापेचको दीर्घगलहंसः शीनहंसः शकुनि- १७
र्मत्स्यरङ्कः सारसः स्वजात्यनुसाराद् वको टिट्टिभो जतुका च। चतुष्पदे १९
र्गन्तारः पक्षिणो युष्मान् प्रति न शुचयो यूयं तान् न भुञ्जीध्वं। २०
तदन्यः सर्व्वशुचिः पक्षी युष्माभि र्भक्ष्यः।

यूयं स्वयं मृतस्य कस्यचित् प्राणिनो मांसं न भुञ्जीध्वं तत् स्वनगर- २१
द्वारान्तरस्थाय विदेशिने भोजनार्थं दातुं कस्यचिद् विदेशिनो वा निकटे
विक्रेतुं शक्नुथ यतो यूयं स्वप्रभुपरमेश्वरस्य पूतलोकाः। यूयं छागवत्सस्य
मांसं तन्मातृदुग्धेन न पक्ष्यथ।

युष्माकं क्षेत्रमध्ये प्रतिवर्षं वीजाद् उत्पन्नस्य सर्व्वशस्यस्य दशमांशं २२
यूयं पृथक् करिष्यथ। युष्माकं प्रभुः परमेश्वरः स्वनाम निधातुं यत् स्थानं २३
वरीष्यति तत्र यूयं स्वस्वशस्यद्राक्षारसतैलानां दशमांशान् गोमेषा-
दिव्रजानां प्रथमजातान् तस्य सम्मुखे भुञ्जीध्वं, स्वप्रभुपरमेश्वरात्
सदा भेतुं शिक्षध्वं। स पन्था यदि युष्माभि र्दुर्गम्यो भवति, युष्माकं २४
प्रभुः परमेश्वरः स्वनाम निधातुं यत् स्थानं मनोनीतं करिष्यति तस्य
दूरत्वाद् यूयं यदि परमेश्वरस्य महाशीर्व्वादाल्लब्धानि सर्व्वद्रव्याणि
तत्स्थानं नेतुं न शक्तास्तर्हि यूयं तैर्द्रव्यैर्मुद्राः कृत्वा ता मुद्रा गृहीत्वा २५
युष्माकं प्रभुपरमेश्वराभिमतं स्थानं यास्यथ। ततः स्वस्वप्राणेच्छानुसारात् २६

तां मुद्रां दत्त्वा गोमेषादिद्राक्षारसमद्यानां यच्च द्रव्ये युष्माकं मनोभिलाषो जायते तत् क्रीत्वा तत्र युष्माकं स्वप्रभुपरमेश्वरस्य सम्मुखे भुक्त्वा सपरि-
२७ वारम् आनन्दिष्यथ। युष्माकं नगरद्वारान्तरस्थान् लेवीयान् न त्यक्ष्यथ, यतो युष्माभिः सह तेषां कश्चिद् अधिकारोंऽशश्च नास्ति।
२८ यूयं तृतीयस्य वर्षस्य शेषे तद्वत्सर उत्पन्नानां शस्यादीनां दश-
२९ मांशान् बहिरानीय नगरद्वाराभ्यन्तरे सञ्चिनुत युष्माभिः सह येषां लेवीयानाम् अधिकारांशौ न स्तः, ते द्वारान्तरस्थविदेशिनः पितृहीन-बाला विधवाश्चागत्य तत् भुञ्जानास्तर्प्स्यन्ति, तेन युष्माकं प्रभुपरमेश्वरो युष्माकं करकृतकर्म्मार्थं युष्मान् आशिषं वदिष्यति।

---

# १५ पञ्चदशोऽध्यायः।

१ ऋणमोचनवर्षकथा ७ ततो दातुमसम्मतिनिषेधः १२ सप्तवर्षात् परं दासमुक्तिकथा १९ परमेश्वराय प्रथमजपशून् पृथक् कर्त्तुमाज्ञा।

१ यूयं सप्तवर्षतः परं क्षमाम् आचरिष्यथ, तस्याः क्षमाया व्यवस्थेयं।
२ य उत्तमर्णः स्वसमीपवासिन ऋणं ददाति स स्वदत्तमृणं क्षमिष्यते, परमेश्वरीयक्षमेति नाम्ना विख्याते तस्मिन् वर्षे कश्चित् प्रतिवासितो
३ भ्राता वा ऋणशोधं न ग्रहीष्यति। विदेशितो यूयं तद् ग्रहीतुं शक्नुथ, किन्तु यावद् युष्मन्मध्याद् दारिद्र्यशेषो न भवेत् तावद्
४ युष्माकं भ्रातरि युष्माकं यदस्ति तत् क्षमिष्यध्वे। यतो युष्मत्प्रभुः परमे-श्वरो यं देशम् अधिकारार्थं युष्मभ्यं दास्यति तत्र देशे युष्मान् आशिषं
५ वदिष्यति। अद्याहं युष्मान् यदादिशामि तत् पालयितुं सावधानाः
६ सन्तो युष्माकं प्रभुपरमेश्वरवाक्ये मनो निधद्धं। यतो युष्माकं प्रभुपर-मेश्वरो युष्मान् प्रति स्वाङ्गीकारानुसाराद् युष्मान् आशिषं वदिष्यति यूयं बहुजातीयेभ्य ऋणं दास्यथ किन्तु ऋणं न ग्रहीष्यथ, बहुजातीयानाम् आधिपत्यं करिष्यथ किन्तु ते युष्माकम् आधिपत्यं न करिष्यन्ति।
७ युष्माकं प्रभुपरमेश्वरदत्तदेशे नगरद्वारान्तरस्थभ्रातॄणां मध्ये यदि कश्चिद् दुर्गतस्तिष्ठति तर्हि यूयं तं प्रति मनःकाठिन्यं न करिष्यथ,
८ दुर्गतभ्रातरं प्रति स्वकरौ मा रत्स्यथ। किन्तु तं प्रति मुक्तहस्ता भूत्वा
९ तत्प्रयोजनानुसाराद् अवश्यं तस्मायृणं दास्यथ। यूयं सावधाना भवत, सप्तमवर्षम् अर्थात् परमेश्वरीयक्षमावर्षं सविधम् इति कथयित्वा

दुष्टान्तःकरणे मा कुचिन्तयत। यूयं यदि स्वस्वदरिद्रभ्रातरं प्रति कुदृष्टिं कृत्वा तस्मै किमपि न दत्थ तर्हि तेन युष्माकं प्रतिकूलं परमेश्वरे प्रार्थनायां कृतायां युष्माकम् अपराधो भविष्यति। अतो १० यूयं तस्मै दास्यथ दानकाले च मनसि मा दुःखिनो भवत, यस्मात् सत्कर्म्मकारणाद् युष्मत्प्रभुपरमेश्वरो युष्माकं सर्व्वकर्म्मसु यूयं यत्र हस्तार्पणं करिष्यथ तत्र युष्माकं क्षेमं करिष्यति। यतो युष्माकं देशे ११ दुर्गताभावो न भविष्यति तस्मादहं युष्मान् इत्यादिशं, यूयं स्वदेशस्थान् दुर्गतदुःखिभ्रातॄन् प्रति मुक्तहस्ता भवत।

यदि युष्मदन्तिके युष्मद्भ्राता कश्चिद् इब्रीयः पुमान् स्त्री वा विक्रीयते १२ तर्हि तेन षट् वर्षाणि यावत् सेवितस्त्वं सप्तमवर्षे तं मोचयित्वा स्वतो विस्रक्ष्यसि। मुक्तस्य तस्य विसर्जनकाले तं रिक्तहस्तं न विस्रक्ष्यसि। १३ त्वं पशुशस्यद्राक्षारसेभ्यस्तस्मै प्रचुरं दास्यसि, तव प्रभुपरमेश्वरा- १४ शीर्व्वादानुसारात् तस्मै दास्यसि। यूयं मिसर्देशे दासत्व आस्त प्रभु- १५ परमेश्वरो युष्मान् अमोचयत् तद् यत् स्मरथ तदर्थम् अहमद्य युष्मान् इत्यादिशामि। त्वत्तः क्षेमं प्राप्तः स यदि त्वयि तव गृहे च प्रीयमाणस्तु- १६ भ्यं कथयति त्वामहं न विहास्यामि, तर्हि त्वं सूचिं गृहीत्वा द्वारकाष्ठेन १७ सह तस्य कर्णं भेत्स्यसि तेन स सदा तव दासः स्थास्यति, दासीं प्रति च तथा करिष्यसि। तेन षड्वर्षाणि त्वत्सेवनेन स वेतनजीवि- १८ भृत्यादपि त्वां प्रति द्विगुणफलदोऽभूत् तस्मात् त्वं तं मोचयित्वा विस्रष्टुं कठिनं न ज्ञास्यसि, तेन तव प्रभुपरमेश्वरस्तव सर्व्वकर्म्मसु तुभ्यम् आशिषं दास्यति।

यूयं स्वस्वगोमेषादिपशुव्रजाद् उत्पन्नान् सर्व्वप्रथमजान् पुंपशून् १९ स्वप्रभुपरमेश्वरमुद्दिश्य पवित्री करिष्यथ यूयं गोः प्रथमजेन किञ्चन कर्म्म न करिष्यथ प्रथमजमेषस्य च रोम न छेत्स्यथ। युष्माकं प्रभुपरमेश्वरस्य २० सम्मुखे परमेश्वरानुगृहीते स्थाने सपरिवाराः प्रतिवर्षं तान् भोक्ष्यध्वे। किन्तु तत्र यदि कश्चिद् दोषस्तिष्ठति अर्थात् स पशुवत्सो यदि खञ्जान्धा- २१ दित्वदोषी स्यात् तर्हि यूयं स्वप्रभुपरमेश्वराय तं बलिरूपेण न दास्यथ। किन्तु नगरद्वाराभ्यन्तरे तं भोक्ष्यध्वे, शुचिरशुचिर्व्वा लोको हरिणकृष्ण- २२ सारवत् तं भोक्ष्यते। यूयं केवलं तस्य रुधिरं मा भक्षत, तद् भूमौ २३ तोयवत् निक्षेप्तव्यं।

# १६ षोड़शोऽध्यायः।

१ निस्तारपर्व्वकथा ९ सप्तसप्ताहात् परं उत्सवकथा १३ उटजोत्सवकथा १६ वर्षे वारत्रयं धर्म्मधामगमनकथा १८ विचारकर्त्तृनिरूपणकथा २१ चैत्यप्रतिमास्थापन-निषेधः।

१ यूयं आवीव्मासं मंस्यथ युष्माकं प्रभुपरमेश्वरम् उद्दिश्य निस्तार-पर्व्वं पालयिष्यथ, यतो युष्माकं प्रभुपरमेश्वर आवीव्मासे रात्रौ २ युष्मान् मिसर्द्देशाद् वहिरानयत्। परमेश्वरः स्वनामनिवासार्थं यत् स्थानं वरीष्यति तत्र यूयं स्वप्रभुपरमेश्वराय मेषान् गाश्च गृहीत्वा ३ निस्तारपर्व्वीयबलिरूपेणोत्स्रक्ष्यथ। तेन बलिना समं किण्वं न खादिष्यथ, यूयं यावज्जीवं मिसरो निर्गमनदिनं स्मर्त्तुं सप्तदिनानि किण्वशून्यान् पूपान् अर्थाद् दुःखसूचकान् पूपान् भोक्ष्यथ, यतो यूयं ४ मिसर्द्देशात् तूर्णं वहिरागताः। सप्त दिनानि युष्माकं सर्व्वसीमायां किण्वं मा दृश्यतां, प्रथमदिनसन्ध्यायां हतबलेर्मांसस्य किमपि प्रातर्यावत् ५ शेषं मा तिष्ठतु। युष्माकं प्रभुपरमेश्वरो युष्मभ्यं यानि नगराणि दास्यति तेषां कुत्रापि द्वारे निस्तारपर्व्वीयबलि र्युष्माभिर्न दातव्यः। ६ किन्तु युष्माकं प्रभुपरमेश्वरः स्वनामनिवासार्थं यत् स्थानं वरीष्यति तत्रैव सन्ध्यायां सूर्य्यास्तकाले ऽर्थात् मिसर्द्देशाद् युष्माकं वहिराग-७ मनस्य वेलायां निस्तारोत्सवीयं बलिं दास्यथ। तत्र प्रभुपरमेश्वरस्या-नुगृहीतस्थाने तं जलेन पक्त्वा भोक्ष्यध्वे प्रात र्यूयं परावृत्य स्वस्वदूष्ये ८ यास्यथ। यूयं षड्दिनानि किण्वशून्यान् पूपान् भक्षिष्यथ, किन्तु सप्तमे दिने युष्माकं प्रभुपरमेश्वरम् उद्दिश्य महासभा भविष्यति तत्र किमपि कर्म्म न करिष्यथ।

९ ततः परं यूयं सप्त सप्ताहान् गणयित्वार्थात् शस्ये दात्रदानमा-१० रभ्य सप्त सप्ताहान् गणयित्वा युष्माकं प्रभुपरमेश्वराशीर्व्वादानुसारात् स्वेच्छादत्तोपहारेण युष्माकं प्रभुपरमेश्वरम् उद्दिश्य सप्ताहमहं पाल-११ यिष्यथ। युष्माकं प्रभुपरमेश्वरेण स्वनामनिवासार्थम् अनुगृहीते स्थाने युष्माकं प्रभुपरमेश्वरस्य सम्मुखे यूयं युष्माकं पुत्त्रकन्यादासदास्यो द्वार-वर्त्तिलेवीया युष्माकं मध्यवासिविदेशिपितृहीनविधवाश्च सर्व्वे आन-१२ न्दिष्यथ। यूयं मिसर्द्देशे दासत्वे स्थितास्तत् स्मरत। विधीनेतान् पालयन्त आचरत।

१३ शस्यद्राक्षारसानां संग्रहणात् परं यूयं सप्तदिनानि यावद् उटजमहं

करिष्यथ। तत्र मद्दे यूयं युष्माकं पुत्रकन्यादासदास्यो द्वारस्थलेवीया १४ विदेशिपित्टहीनविधवाश्च सर्व्वे आनन्दिष्यथ। यूयं स्वपरमेश्वरानुग्रही- १५ तस्थाने स्वप्रभुपरमेश्वरम् उद्दिश्य सप्तदिनानि महामहं करिष्यथ, युष्माकं प्रभुपरमेश्वरो युष्माकं सर्व्वप्राप्तिषु करकृतसर्व्वकर्म्मसु च युष्मान् आशिषम् अवोचत् ततो यूयमानन्दिष्यथ। युष्माकमेकैकः पुमान् वर्षमध्ये वारत्रयं १६ अर्थात् किण्वशून्यपूपमहे सप्ताहमहे उटजमहे च परमेश्वरस्यानुग्रहीते स्थाने युष्माकं प्रभुपरमेश्वरस्य सम्मुखे दर्शनं दास्यति, किन्तु परमेश्वर-सम्मुखे रिक्तहस्तो दर्शनं न दास्यति। स्वप्रभुपरमेश्वरेण दत्ताशीर्व्वा- १७ दानुसाराद् युष्माकम् एकैको जनः शक्त्यनुसाराद् उपहारं दास्यति।

युष्माकं प्रभुपरमेश्वरो युष्माकं वंशानुसाराद् युष्मभ्यं यानि नगराणि १८ दास्यति तेषां द्वारमध्ये यूयं स्वार्थं विचारकान् शासकांश्च नियोजयत, ते न्यायतो लोकान् विचारयन्तु। यूयम् अन्यायविचारं मा कुरुत, १९ कमपि नानुरुध्यध्वम् उत्कोचं मा गृह्णीत, यत उत्कोचो ज्ञानिनां नेत्राण्यन्धी करोति धार्म्मिकानां वाक्यं वक्री करोति च। तस्मात् सर्व्वथा २० न्याय्यम् अनुगच्छत तेन यूयं जीवित्वा स्वप्रभुपरमेश्वरेण दास्यमानं देशम् अधिकरिष्यथ।

यूयं स्वप्रभुपरमेश्वराय यां वेदिं निर्म्मास्यथ तदन्तिके कमपि चैत्य- २१ वृक्षं मा रोपयत। परमेश्वरेण घृणितां प्रतिमां मा स्थापयत। २२

---

## १७ सप्तदशोऽध्यायः।

१ निर्दोषबलेरावश्यकता २ देवार्चकवधाज्ञा ८ याजकविचारकाभ्यां कठिनविचार-निष्पत्तिः १२ साहसिकपापिवधाज्ञा १४ राजत्वनिर्णयः।

यूयं स्वप्रभुपरमेश्वराय सकलङ्कदोषिगोमेषादिबलिं न दास्यथ यतः १ स युष्माकं प्रभुपरमेश्वरस्य घृणितं वस्तु।

युष्माकं मध्ये ऽर्थात् प्रभुपरमेश्वरदत्ते युष्माकं कस्मिंश्चित् नगरे यदि २ पुमान् स्त्री वा युष्माकं प्रभुपरमेश्वरस्य साक्षात् कुकर्म्म कुर्व्वन् तन्नियमं लङ्घते, फलतः स गत्वा यदीतरदेवान् सेवते ममाज्ञायाः ३ प्रातिकूल्येन वा चन्द्रसूर्य्यादिव्योमीयवस्तूनि पूजयतीति वचसि युष्माकं ४ साक्षात् केनापि कथिते यूयं साक्षिणः श्रुत्वा यत्नात् मृगयित्वा तत् सत्यं निश्चितं तद् घृणार्हकार्य्यम् इस्रायेल्वंशमध्ये कृतमभूत्, इति

५ यदि पश्यथ, तर्हि यूयं तं कुकर्म्मकारिपुरुषं स्त्रियं वा स्वनगरद्वार-निकटे वहिरानेष्यथ पुरुषः स्त्री वा भवेत् तस्य प्राणवियोगपर्य्यन्तं तं
६ प्रस्तरैराहनिष्यथ। बधयोग्यो नर एकस्य साक्षिणो वाक्येन न हनिष्यते
७ किन्तु द्वयोस्त्रयाणां वा वाक्येन हनिष्यते। तान् हन्तुं प्रथमं साक्षिभिः पश्चात् सर्व्वजनै र्हस्ताः प्रसार्य्यन्तां, इत्थं यूयं स्वमध्यात् पापिष्ठं दूरयिष्यथ।

८ युष्माकं विचारस्थाने रक्तपातं प्रहारमधि वा वादिप्रतिवादिनोर्वि-वाद उपस्थिते यदि तस्य विचारोऽतिदुर्ज्ञेयः स्यात् तर्हि यूयम् उत्थाय
९ युष्माकं प्रभुपरमेश्वरेणानुगृहीतं स्थानं यास्यथ। लेवीययाजकानां तत्कालीयविचारकस्य च निकटं गत्वा प्रक्ष्यथ, ते युष्मान् विचारनिष्पत्तिं
१० वदिष्यन्ति। यूयं परमेश्वरेणानुगृहीतस्थानस्थितानां तेषां निष्पत्त्यनु-सारात् कर्म्म करिष्यथ ते युष्मान् यद् वदिष्यन्ति तत् कर्त्तुं मनो निधा-
११ स्यध्वे। ते युष्मान् यां व्यवस्थां वदिष्यन्ति याञ्च विचारनिष्पत्तिं करिष्यन्ति यूयं तदनुसारात् करिष्यथ ते युष्मान् यद् आदेक्ष्यन्ति, यूयं तस्य दक्षिणं वामं वा न परावर्त्तिष्यध्वे।

१२ किन्तु यो नरो दुःसाहसात् कर्म्म करोति तत्र स्थाने युष्माकं प्रभुपर-मेश्वरं सेवितुं दण्डायमानानां याजकानां विचारकानाञ्च वाक्ये मनो न निधत्ते, स हनिष्यते, यूयम् इस्रायेल्वंशात् तं पापिष्ठं दूरयिष्यथ।
१३ तेन सर्व्वलोकास्तत् श्रुत्वा भेष्यन्ति दुःसाहसात् पुनर्नाचरिष्यन्ति।
१४ यूयं यदा स्वप्रभुपरमेश्वरेण दास्यमानं देशं प्रविश्य तमधिकृत्य तन्मध्ये वत्स्यथ तदास्माकं चतुर्द्दिक्स्थसर्व्वजातिवद् वयमपि स्वोपरि
१५ राजानमेकं नियोक्ष्यामहे इति वाचि युष्माभिः कथितायां युष्माकं प्रभुपरमेश्वरो यं नरं वरीष्यति तमेव यूयं राजानं करिष्यथ, स्व-भ्रातृणां मध्याद् राजानं गृहीत्वा स्वोपरि नियोक्ष्यध्वे, किन्तु भ्रातृभिन्ना
१६ न्यदेशीयं कमपि स्वोपरि राजानं न करिष्यथ। स राजा स्वार्थं बहु-हयान् न संग्रहीष्यति विशेषतो बहुहयग्रहणार्थं मिसर्देशं लोकान् न प्रेषयिष्यति यतः परमेश्वरेणोक्तं, इतः परं यूयं तेन पथा पुनर्न
१७ यास्यथ। तस्य मनो यन्न परावर्त्तते तदर्थं स बहुस्त्री र्न विवक्ष्यति
१८ स्वार्थं रूप्यस्य स्वर्णस्य वा बाहुल्यं न संग्रहीष्यति। स राजसिंहासनोप-वेशनकाले लेवीययाजकानां सम्मुखस्थितव्यवस्थाशास्त्रस्यानुरूपमेकं शास्त्रं
१९ लिखित्वा स्वसमीपे स्थापयिष्यति यावज्जीवं नित्यं पठिष्यति च तेन स

स्वप्रभुपरमेश्वराद् भेतुम् एतद्व्यवस्थायाः सर्व्ववाक्यविधीन् पालयितुञ्च शिक्षित्वा स्वभ्रातृणाम् उपरि न गर्व्विष्यति विधितश्च दक्षिणं वामं वा २० न परावर्त्तिष्यति, ततो हेतोरिस्रायेल्वंशमध्ये स तस्य सन्तानाश्च दीर्घ-कालं यावद् राजत्वं करिष्यन्ति।

## १८ अष्टादशोऽध्यायः।

१ परमेश्वरस्य याजकलेवीयानां अधिकाररूपत्वं ३ याजकानां प्राप्तिनिर्णयः ६ लेवीयानां प्राप्तिनिर्णयः ९ किनानीयवत् व्यवहर्त्तुं निषेधः १५ विशेषभविष्यद्वक्तारं मन्तुमाज्ञा २० मिथ्याभविष्यद्वक्तृदण्डकथा।

लेवीययाजका लेवेः सर्व्ववंशाश्चेस्रायेल्वंशेन सह अंशाधिकारौ न १ प्राप्स्यन्ति, केवलं परमेश्वरस्य वह्निकृतोपहाररूपोऽधिकारस्तै र्भोक्तव्यः। ते स्वभ्रातृणां मध्ये कमपि भूम्यधिकारं न प्राप्स्यन्ति, किन्तु परमेश्वरः २ स्वयं स्ववाक्यानुसारात् तेषाम् अधिकारो भविष्यति।

लोकेभ्यो याजकानां प्राप्तिरियं व्यवस्था, गोमेषबलिदलोका बलेः स्कन्ध- ३ गलनाड़ी र्याजकाय दास्यन्ति। यूयं स्वस्वप्रथमोत्पन्नशस्यद्राक्षारस- ४ तैलानि मेषाणां प्रथमछिन्नलोमानि च तस्मै दास्यथ। यतः परमेश्वरस्य ५ नाम्नि सदा परिचरितुं युष्माकं प्रभुपरमेश्वरो युष्माकं सर्व्ववंशमध्यात् तं तस्य भाविवंशं वरीतवान्।

युष्माकम् अर्थाद् इस्रायेल्वंशस्य कस्मिंश्चिन्नगरद्वारे प्रवसन् कश्चिल्ले- ६ वीयो यदि स्वमनोभिलाषात् परमेश्वरेण निश्चितं स्थानम् आगत्य तत्र ७ परमेश्वरस्य सम्मुखे दण्डायमानलेवीयभ्रातृगणवत् स्वप्रभुपरमेश्वरं सेवते तर्हि स तेषां समांशं लप्स्यते, स्वोयपैतृकभूमे र्विक्रयमूल्यमपि लप्स्यते। ८

यूयं यदा स्वप्रभुपरमेश्वरदत्तं देशं प्राप्स्यथ, तदा तद्देशीयभिन्न- ९ जातीयानां घृणार्हकर्म्मवत् कर्म्म कर्त्तुं न शिक्षिष्यध्वे। पुत्त्रकन्याहो- १० मदैवज्ञः कालविवेचको मोहको डाकिनी गुणी भौतिको मायिको ११ मृतानां मन्त्रणार्थी कश्चिद् युष्मन्मध्ये मा विद्यतां। यतः परमेश्वर एतान् १२ ऋतीयते युष्माकं प्रभुपरमेश्वर एतद्घृणार्हकर्म्मकारणाद् युष्माकं सम्मुखात् तान् दूरयिष्यति। यूयं स्वप्रभुपरमेश्वरम् उद्दिश्य सरलम् १३ आचरत। यतो यूयं या जाती र्बहिः करिष्यथ ताः कालविवेचकदैव- १४ ज्ञानां वचःसु विश्वसन्ति, किन्तु युष्माकं प्रभुपरमेश्वरो युष्मभ्यं तत् कर्त्तुं नानुजानाति।

१५ युष्माकं प्रभुपरमेश्वरो युष्माकं भ्रातृगणमध्यात् मत्सदृशं भविष्यद्व-
१६ क्तारम् उत्पादयिष्यति तद्वचःसु यूयं मनो निधास्यध्वे। वयं स्वप्रभु-
परमेश्वरवाक्यं पुनर्न शृणुयाम महाग्निमिमं न पश्येम न म्रियेमहि
चेति होरेवि तिष्ठद्भिर्युष्माभिः समारोहदिने स्वप्रभुपरमेश्वरः प्रार्थितः।
१७ ततः परमेश्वरो मामवदत्, इम उत्तमं कथयन्ति। अहम् एतेषां कृत
१८ एतेषां भ्रातृगणमध्यात् तव सममेकं भविष्यद्वक्तारम् उत्पादयिष्यामि
तदास्ये मम वाक्यं दास्यामि च, अहं यदाज्ञापयिष्यामि तत् स तान्
१९ वदिष्यति। स मम नाम्नि यां वाचं कथयिष्यति तां यो न श्रोष्यति तस्मै
समुचितं फलमहं दास्यामि।

२० यां वाचं कथयितुम् अहं नादिशामि तां यो भविष्यद्वक्ता मम
नाम्नि दुःसाहसात् कथयिष्यति यो वेतरदेवानां नाम्नि कथयिष्यति
२१ स हनिष्यते। किन्तु परमेश्वरेणानुक्तं यद् वाक्यं तद् वयं कथं ज्ञातुं
२२ शक्नुयाम? यूयं यदीदं भावयथ, तर्हि केनचिद् भविष्यद्वक्त्रा परमेश्वर-
नाम्नि वाक्ये कथिते तद्वाक्यं यदि न फलति तत्फलं नोपतिष्ठति च तर्हि
तद्वाक्यं परमेश्वरोक्तं नहि, तत् तेन भविष्यद्वक्त्रा दुःसाहसाद् उक्तं, यूयं
ततो न भेष्यथ।

---

## १९ ऊनविंशोऽध्यायः।

१ आश्रयनगरनिरूपणं ४ तत्र वधकानां रक्षाकथनं ११ स्वेच्छावधकस्य न रक्षा १४
सीमाचिह्नं दूरयितुं निषेधः १५ साक्षिद्वयेन विचारनिष्पत्तिः १६ मृषासाक्षिदण्डः।

१ युष्माकं प्रभुपरमेश्वरो येषां जातीयानां देशं युष्मभ्यं दास्यति तेषु
तेनोच्छिन्नेषु यदा यूयं तेषां स्थानमधिकृत्य तेषां नगरेषु गृहेषु च
२ वत्स्यथ, तदा यूयमधिकारार्थं प्रभुपरमेश्वरदत्तदेशमध्ये स्वार्थं पुरत्रयं
३ पृथक् करिष्यथ। हन्तृलोकास्तत् स्थानं पलाय्य यद् रक्षां गच्छेयु-
स्तदर्थं पथ्यानं करिष्यथ युष्मत्प्रभुपरमेश्वरदत्तदेशस्य सीमां त्रिधा
करिष्यथ च।

४ तत्स्थानपलायमानो यो हन्ता प्राणरक्षायोग्यस्तस्य निर्णयोऽयं।
यः कश्चित् पूर्वं समीपवासिनं न द्विष्ट्वा तमज्ञानाद् हन्ति, स एव।
५ तदुदाहरणमिदं कस्मिंश्चिद् इन्धनानि छेत्तुं समीपवासिना साकं वनं गते
तरुं छेत्तुं तेनोत्तोलितः कुठारो यदि त्सरोरपसृत्य समीपवासिनो
गात्रे पतेत् तेन च स म्रियेत तर्हि स एतेषामेकं नगरं पलाय्य प्राणान्

रक्षिष्यति। पूर्व्वमन्तीयितत्वात् स बधापराधी न भवति। अतो रक्त- ६
पातप्रतिहन्ता तस्य हन्तुः पश्चाद् धावन् क्रोधेन प्रज्वलन् दीर्घपथत्वात्
तं धृत्वा नाशयितुं यन्न शक्नुयात् तदर्थम् अहं युष्मान् आदिशामि यूयं ७
स्वार्थं नगरत्रयं पृथक् करिष्यथ। युष्माकं प्रभुपरमेश्वरो युष्माकं पूर्व्व- ८
पुरुषान् प्रति शपथानुसाराद् यदि युष्माकं सीमां वर्द्धयति, यान्
देशान् दातुं युष्माकं पूर्व्वपुरुषाणां साक्षात् प्रतिज्ञातवान् तान् ददाति,
अहं युष्मान् प्रभुपरमेश्वरे प्रेतुं तस्य पथि चलितुञ्च यद् आदिशं तद् यदि ९
यूयं पालयथ, तर्हि यूयमेतन्नगरत्रयं विनान्यनगरत्रयं पृथक् करिष्यथ।
युष्माकं प्रभुपरमेश्वरो युष्मभ्यं यं देशं दास्यति तन्मध्ये निरपराधस्य रक्तं १०
न पात्यतां, रक्तपातापराधश्च युष्मान् मा गच्छतु।

यदि कश्चित् स्वसमीपवासिनं द्विषन् व्याधवद् गुप्तस्तिष्ठन् तत्प्रति- ११
कूलम् उत्थाय तं मर्म्मान्तम् आहन्ति तेन च स म्रियते स च हन्ता
यद्येतेषां नगराणाम् एकस्मिन् नगरे पलायते, तर्हि तस्य निवासनगरस्य १२
प्राचीनलोका नरान् प्रहित्य तस्मात् तम् आनीय प्रतिहन्तुः करे समर्प-
यिष्यन्ति स च हनिष्यते। यूयं नेत्रैर्न लज्जिष्यध्वे, इत्थम् इस्रायेल्वंशात् १३
निरपराधरक्तपातदोषं दूरयिष्यथ तेन युष्माकं शुभं भविष्यति।

युष्माभिरधिकरिष्यमाणायां भूमौ युष्मत्प्रभुपरमेश्वरेण दातव्ये देशे १४
यूयं पूर्व्वपुरुषैः स्थापितां प्रतिवासिनः सीमां मा स्थानान्तरी कुरुत।

कस्यचिद् अपराधस्य पापस्य दोषस्य वा विचारे सति कस्यचित् १५
प्रातिकूल्येनैकः साक्षी मा भवेत्, किन्तु द्वयोस्त्रयाणां वा साक्षिणां
मुखात् सर्व्वा कथा निश्चिता भविष्यति।

अन्यायसाक्ष्यं दातुं यदि मृषासाक्षी कस्यापि प्रतिकूलं भवति तर्हि १६
तौ वादिप्रतिवादिनौ परमेश्वरसम्मुखे ऽर्थात् तत्कालीययाजकविचार- १७
कानां सम्मुखे स्थापयिष्येते। विचारकैर्यत्नाद् विचारिते स साक्षी यदि १८
मृषा भवति स्वभ्रातृप्रतिकूलं मृषा साक्ष्यम् अदात्, तर्हि स स्वभ्रातरं १९
प्रति यथा कर्त्तुमकल्पत तं प्रति यूयं तथा करिष्यथ, इत्थं स्वमध्यात्
पापिष्ठं दूरयिष्यथ। यस्मात् तत् श्रुत्वा शेषलोका भेष्यन्ति तदारभ्य २०
युष्माकं मध्ये कुकर्म्म न करिष्यन्ति। तं प्रति यूयं नेत्रैर्न लज्जिष्यध्वे २१
किन्तु प्राणानां विनिमयेन प्राणा नेत्रस्य विनिमयेन नेत्रं दन्तस्य विनिम-
येन दन्तो हस्तस्य विनिमयेन हस्तः पादस्य विनिमयेन पादस्तेन त्यक्तव्यः।

## २० विंशोऽध्यायः।

१ रणकाले याजककथा ५ सेनापतिकथा १० रिपुनगरं प्रति व्यवहारनिर्णयः १६ सप्तजातीयानां नाशाज्ञा १९ रणकाले फलवत्तरुनाशनिषेधः।

१ यूयं स्वरिपुप्रतिकूलं योद्धुं वहिर्भूय यदि स्वतोऽधिकहयरथजनताः पश्यथ तथापि मा बिभीत यतो यो मिसर्देशाद् युष्मान् आनयद् युष्माकं २ स प्रभुपरमेश्वरो युष्माभिः सह स्थास्यति। यूयं यदा रणसमीपम् उपगमिष्यथ तदा याजक आगत्य लोकान् संभाषमाण इति वदिष्यति, ३ हे इस्रायेल्वंशाः शृणुत यूयमद्य रिपुभिः समं योद्धुं याथ किन्तु मनःसु ४ निराशा मा भवत मा बिभीत मा कम्पध्वं तेभ्यो मा त्रस्यत। यतो युष्माकं प्रभुपरमेश्वरो युष्मान् जयिनः कर्त्तुं युष्माकं रिपूणां प्रतिकूलं योद्धुं युष्माभिः समं याति।

५ ततः परम् अधिपतयो लोकान् इति वदिष्यन्ति युष्मन्मध्य एवम्भूतः को विद्यते यो नवीनगृहं निर्म्माय तत्प्रतिष्ठां न कृतवान्? रणे तस्मिन् मृते यद् अन्यलोकेन तत्प्रतिष्ठा न क्रियेत, तदर्थं स गृहं परावृत्य ६ यातु। एवम्भूतो वा को विद्यते यो द्राक्षाक्षेत्रं कृत्वा तत्फलं न भुक्तवान्? रणे तस्मिन् मृतेऽन्यलोको यत् तत्फलं न भुञ्जीत तदर्थं स ७ स्वगृहं परावृत्य यातु। एवम्भूतो वा को विद्यते यो वाग्दाने कृते विवाहं न कृतवान्? रणे तस्मिन् मृतेऽन्यलोको यत् तस्य जायां न ८ गृह्णीयात् तदर्थं स गृहं परावृत्य यातु। अधिपतयो लोकेभ्यः पुनः कथयिष्यन्ति भीरुर्व्यग्रमना वा लोकः कोऽस्ति? तन्मनोवत् तस्य भ्रातॄणां मनांसि यत् निराशानि न भवेयुस्तदर्थं स गृहं परावृत्य यातु। ९ अधिपतयो लोकैः समं कथां समाप्य लोकान् युद्धं नेतुं सैन्योपरि सेनापतीन् नियोक्ष्यन्ते।

१० कस्यापि नगरस्य प्रतिकूलं युद्धं करणार्थं युष्माभिस्तत्समीपे प्राप्ते ११ सन्धिकथा घोषयिष्यते। ततो यदि ते पौराः सन्धीच्छवो युष्मदर्थं द्वारं मोचयन्ति तर्हि तन्नगरीयसर्व्वलोका युष्मभ्यं करं दास्यन्ति युष्मान् १२ सेविष्यन्ते च। यदि ते सन्धिं न कृत्वा युष्माभिः समं युयुत्सन्ति, तर्हि १३ यूयं तेषां नगरम् अवरोत्स्यथ। ततो युष्माकं प्रभुपरमेश्वरेण तेषु युष्माकं करे समर्पितेषु यूयं तन्नगरीयान् सर्व्वपुरुषान् असिधारै १४ र्हनिष्यथ, किन्तु तेषां स्त्रीबालकपश्वादि नगरस्य सर्व्वस्वं स्वार्थं लोठितरूपं गृहीत्वा युष्माकं प्रभुणा परमेश्वरेण दत्तं रिपुलोठितं भोक्ष्यध्वे।

युष्मत्तोऽतिदूरे यानि पुराणि तानि प्रतीत्थं करिष्यथ किन्त्वत्रस्थजाती- १५
यानां पुराणि प्रति नेत्थं करिष्यथ । यतो युष्माकं प्रभुः परमेश्वर एतेषां १६
लोकानां यद्यत् पुरमधिकर्त्तुं युष्मभ्यं दास्यति तेषां मध्ये कमपि प्राणिनं
जीवन्तं न स्थापयिष्यथ । यूयं स्वप्रभुपरमेश्वराज्ञया तान् अर्थात् १७
हित्तीय-इमोरीय-किनानीय-पिरिषीय-हिव्वीय-यिबूषीयलोकान् समू-
लम् उच्छेत्स्यथ । नो चेद् यद्यद् घृणार्हं कर्म्म ते स्वदेवान् उद्दिश्य १८
कुर्व्वन्ति तद् युष्मान् शिक्षयिष्यन्ति, तेन यूयं स्वप्रभुपरमेश्वरस्य
प्रतिकूलम् अपराधिनो भविष्यथ ।

युद्धेन नगरं वशीकर्त्तुं युष्माभिस्तदवरुध्य बहुकाले यापिते परशुना १९
तन्नगरस्य तरवो न छेदनीयाः, तत्फलानि युष्माभि र्भक्ष्याणि, किन्तु
पुरावरोधार्थं तरवोऽच्छेदनीयाः यतः क्षेत्रतरुर्मानुषस्य जीवनोपायः ।
किन्तु यान् तरून् अभक्ष्यफलान् जानीथ तान् नाशयितुं कर्त्तितुञ्च २०
शक्ष्यथ । युष्माभिः समं युद्धकारि पुरं यावन्न पराजयते तावत् तत्-
पुरप्रतिकूलं तैस्तरुभिर्दुर्गं निर्म्मास्यथ ।

---

## २१ एकविंशोऽध्यायः ।

१ अनिश्चितवधप्रायश्चित्तं १० सुन्दरीबन्दीस्त्रिया विवाहनियमः १५ अप्रियाजातज्येष्ठपु-
त्राधिकारनिर्णयः १८ अबाध्यपुत्रवधाज्ञा २२ उद्बन्धनस्थापननियमः ।

अधिकर्त्तुं युष्माकं प्रभुपरमेश्वरेण दास्यमाने देशे क्षेत्रमध्ये यदि हत- १
लोकः प्राप्यते किन्तु स केन हत इति न ज्ञायते तर्हि युष्माकं प्राचीना २
विचारकाश्च बहिर्गत्य तं शवमारभ्य चतुर्दिक्स्थपुराणि यावत्
मापयिष्यन्ति । यत् पुरं हतलोकस्य समीपं भविष्यति, तत्प्राचीन- ३
लोका युगवहनादिसर्व्वकर्म्माप्रवृत्तां गोवत्सां ग्रहीष्यन्ति । तत्पुर- ४
प्राचीना अकृष्टानुप्तनित्यजलस्रोतोवाहिखातं तां गोवत्साम् आनीय
तत्र तस्या मस्तकं छेत्स्यन्ति । लेवीययाजकाश्च समीपमुपस्थास्यन्ति, यतो ५
युष्मत्प्रभुपरमेश्वरं परिचरितुं परमेश्वरनाम्नाशिषं दातुञ्च ते तेनानुगृही-
तास्तेषाञ्च वाक्यात् सर्व्वविवादो दण्डविचारश्च निश्चितव्यः । शवसमीप- ६
स्थपुरमुख्याश्च तत्र जलस्रोतसि छिन्नमस्तकगोवत्सोपरि स्वस्वकरान् ७
प्रक्षाल्य वाक्यमिदं वदिष्यन्ति, न हस्तैरस्माकम् एष रक्तपातः कृतो न
चास्मन्नेत्रै र्दृष्टः । हे परमेश्वर भवता मुक्तस्य स्वीयेस्रायेल्वंशस्येदं कर्म्म ८

हन्यतां स्वीयेस्रायेल्वंशं प्रति निरपराधरक्तपातदोषो नार्प्यतां, तेन तान्
९ प्रति तद्रक्तपातदोषः क्षमिष्यते। इत्थं युष्माभिः परमेश्वराभिलषिते धर्म्मे आचरिते स्वमध्यात् निरपराधरक्तपातदोषो दूरयिष्यते।

१० युष्माभिः स्वरिपुप्रतिकूलं युद्धयात्रायां कृतायां परमेश्वरेण युष्मत्-
११ करेषु समर्पितानां तेषां केषुचिद् युष्माभि र्बन्दीकृतेषु यदि त्वं बन्दीनां
१२ मध्ये सुन्दरीं स्त्रियं विलोक्य तां विवोढुम् इच्छेस्तर्हि त्वया स्वगृहमानीता
१३ सा स्वमस्तकमुण्डनं नखच्छेदनञ्च कुर्य्यात्, बन्दित्ववसनं त्यक्त्वा तव गृहे वसेत् पूर्णमेकमासं स्वपितरं मातरञ्च शोचेत्, ततः परं त्वं ताम् उप-
१४ गन्तुं विवोढुञ्च शक्ष्यसि, सा च तव जाया भविष्यति। किन्तु यदि तस्यां त्वं न तुष्येस्तर्हि सा स्वमनोभिलाषात् त्वया विस्रष्टव्या, न रूप्येण विक्रेतव्या न वा विनिमातव्या, यस्मात् त्वं ताम् उपागमत्।

१५ यस्य नरस्य प्रियाप्रिये द्वे पुत्रवत्यौ स्त्रियौ स्तस्तस्य ज्येष्ठपुत्रो
१६ यद्यप्रियाजातो भवेत्, तर्हि स्वपुत्रेभ्यः स्ववित्तदानकाले सोऽप्रियाजातं ज्येष्ठपुत्रम् अवज्ञाय प्रियाजाताय पुत्राय ज्येष्ठाधिकारं दातुं न शक्ष्यति।
१७ अप्रियाजातो ज्येष्ठ इति तेनाङ्गीकर्त्तव्यं तस्मै च सर्व्वस्वस्यांशद्वयं दातव्यं, यतः स तद्बलस्य प्रथमफलं ज्येष्ठाधिकारश्च तस्यैव सम्भवति।

१८ यदि कस्यचित् पुत्रोऽबाध्यो विपथगामी च भवति पित्रोराज्ञा न गृह्णाति
१९ शासितोऽपि तौ न समाद्रियते, तर्हि तस्य पितरौ तं धृत्वा नगरीय-
२० प्राचीनानां समीपे निवासस्थानस्य गोपुरान्तिकम् आनीय नगरीयप्राचीनेभ्यः कथयिष्यतः, आवयोरेषः पुत्रोऽबाध्यो विपथगामी च स आवयो-
२१ राज्ञा न गृह्णाति स उदरम्भरी मद्यपश्च। ततो नगरीयलोकास्तं प्रस्तरै र्हनिष्यन्ति, इत्थं यूयं स्वमध्यात् पापिष्ठं दूरयिष्यथ तेन सर्व्व इस्रायेल्वंशस्तत् श्रुत्वा भेष्यति।

२२ यदि कश्चिद् बधयोग्यं पापं कृत्वा प्राणदण्डं प्राप्य युष्माभिस्तरावु-
२३ द्बध्येत, तर्हि तस्य शवस्तरूपरि कृत्स्नरात्रिं न स्थापितव्यः किन्तु तद्दिने श्मशाने निधातव्यः, यतो यः कश्चित् तरावुल्लम्ब्यते स ईश्वरेणाभिशप्तः। अधिकर्त्तुं युष्माकं प्रभुपरमेश्वरेण दत्तो देशो युष्माभि र्नाशुचीकर्त्तव्यः।

---

## २२ द्वाविंशोऽध्यायः।

१ भ्रातृगणस्यापकारनिषेधः ४ मिश्रितसूत्रजवस्त्रपरिधाननिषेधः ५ सशावकपक्षिणीधरणनिषेधः ८ हर्म्यपृष्ठप्राचीरकरणाज्ञा ९ अयुग्मयोगनिषेधः १२ वस्त्रे ग्रन्थि-

विधानं १९ वश्यपमानेषु दण्डः २२ परदारेषु दण्डः २२ व्यभिचारेषु दण्डः २६ बलात् मैथुनेषु दण्डः।

युष्माकं भ्रातुर्बलीवर्दं मेषादिकं वा विपथेन गच्छन्तं दृष्ट्वा यूयं तत्र १ मनो निधास्यध्वे, भ्रातुः समीपं तं परावर्त्य यापयिष्यथ। यदि २ युष्माकं स भ्राता दूरवर्त्त्यपरिचितो वा भवेत् तर्हि युष्मद्भ्राता यावत् तं पशुं न मृगयते तावद् यूयं तं स्वगृहमानीय स्थापयिष्यथ, पश्चात् तस्मै दास्यथ। यूयं तस्य गर्द्दभं वस्त्रं प्रति च तथा करिष्यथ, युष्माकं भ्रातु- ३ र्हारितं यद् द्रव्यं युष्माभिः प्राप्यते तत्सर्व्वं प्रति तथा करिष्यथ यूयं तत्र मनो निधास्यध्वे।

युष्माकं भ्रातुर्गर्द्दभं बलीवर्द्दं वा पथि पतितं दृष्ट्वा यूयं तं प्रति मनो ४ निधास्यध्वे, तम् उत्थापयितुं तमुपकरिष्यथ।

स्त्री पुंसो वस्त्रं पुमान् वा स्त्रिया वस्त्रं न परिदध्यात्, यः कश्चन तत् ५ करोति स युष्माकं प्रभुपरमेश्वरस्य घृणार्हो भवति।

पथपार्श्वस्थतरौ भूमौ वा युष्माकं सम्मुखे यदि कस्यापि पक्षिणो नीडे ६ शावका डिम्बा वा तिष्ठन्ति तदुपरि च पक्षिणी तिष्ठति, तर्हि तैः शावकैः समं पक्षिणीं न धरिष्यथ। स्वार्थं शावकान् गृहीत्वा पक्षिणीं ७ त्यक्ष्यथ तेन युष्माकं शुभम् आयुर्वृद्धिश्च भविष्यति।

गृहपृष्ठात् मानुषस्य पतनेन यथा युष्मद्गृहेषु रक्तपातापराधो ८ नायाति तदर्थं यूयं नवीनगृहनिर्म्माणकाले तत्पृष्ठेऽवालीन् निर्म्मास्यथ।

युष्माभी रोपितवीजफलानि द्राक्षाफलानि च यद् युष्माकमव्यवहा- ९ र्य्याणि न भवेयुस्तदर्थं यूयं द्राक्षाक्षेत्रे मिश्रितवीजानि न वप्स्यथ।

कर्षणार्थं युष्माभि र्वृषगर्द्दभौ न योक्तव्यौ। यूयं रोमकार्पासयो १० र्मिश्रितसूत्रजवस्त्रं न परिधास्यथ।

स्वीयावरणार्थगात्रीयवस्त्रस्य चतुष्कोणेषु ग्रन्थीन् निधास्यथ। १२

यदि कश्चिद् विवह्य स्त्रीसङ्गं कृत्वा तामृतीयते ऽपवदते च तस्या १२ दुर्नाम कुर्व्वन् कथयति, स्त्रियमेतामहं व्यवहं किन्तु सङ्गकालेऽस्याः १४ कौमार्य्यचिह्नं न प्राप्तवान्, तदा तस्याः कन्यायाः पितरौ तस्याः कौमार्य्य- १५ चिह्नमादाय गोपुरं गत्वा पुरस्य प्राचीनानां समीपं वहिरानेष्यतः। कन्यायाः पिता प्राचीनान् वदिष्यति, अहम् अनेन मानुषेण सह १६ स्वकन्यां व्यवाहयं किन्त्वेषस्तामृतीयते, तव कन्यायाः कौमार्य्यचिह्नं मया १७ न प्राप्तम् इति कथयन् ताम् अपवदते, किन्तु मत्कन्यायाः कौमार्य्यचिह्न-

मिदं पश्यतेत्युक्त्वा ताभ्यां नगरप्राचीनसाक्षात् तद्वस्त्रं विस्तारयिष्यते।
१८ नगरप्राचीनास्तं पुरुषं धृत्वा दण्डयिष्यन्ति। तस्य शतशेकलरूप्यं
१९ दण्डयित्वा कन्यापित्रे दास्यन्ति, यतः स इस्रायेल्वंशीयकन्याया दुर्नाम कृतवान्, पश्चात् सा तस्य भार्य्या भविष्यति, स पुरुषो यावज्जीवं तां
२० त्यक्तुं न शक्ष्यति। किन्तु तद् वाक्यं यदि सत्यं भवेत् कन्यायाः कौमार्य्य-
२१ चिह्नं न प्राप्येत, तर्हि सा कन्या तैर्बहिरानीय स्वपितुर्गृहद्वारसमीपे संस्थाप्यतां, नगरीयलोकाश्च प्रस्तरैस्तां घ्नन्तु। यतः सा पितृगृहे व्यभिचारं कृत्वा इस्रायेल्वंशे कुकर्म्म कृतवती, इत्थं यूयं स्वमध्यात् पापिष्ठां दूरयिष्यथ।

२२ परनार्य्या समं संसर्गे कश्चन पुमान् यदि ध्रियते तर्हि स संसर्गकारी पुमान् सा च नारी द्वौ हनिष्येते, इत्थं यूयम् इस्रायेल्वंशमध्यात् पापिष्ठं
२३ दूरयिष्यथ। यदि कश्चन वराय वाग्दत्तां कुमारीं पुरमध्ये प्राप्योपग-
२४ च्छति तर्हि यूयं तौ द्वौ नगरद्वारसमीपं बहिरानीय प्रस्तरैर्हनिष्यथ; सा कन्या हन्तव्या यतः सा पुरमध्ये तिष्ठन्त्यपि नोच्चैःस्वरं कृतवती; पुमांश्च हन्तव्यो यतः स स्वसमीपवासिनो जायामुपागमत्, इत्थं यूयं स्वमध्यात् कलुषं दूरयिष्यथ।

२५ यदि कश्चन पुमान् वाग्दत्तां कन्यां प्रान्तरे प्राप्य बलाद् आक्रम्यो-
२६ पगच्छति तर्हि केवलम् उपगतपुमान् हनिष्यते, किन्तु यूयं कन्यां प्रति किमपि न करिष्यथ, तस्या मरणार्हदोषो नास्ति यतो यथा कश्चन मानुषः
२७ स्वसमीपवासिनः प्रतिकूलम् उत्थाय तं हन्ति, तदपि तथा। पुमान् प्रान्तरे तां प्राप्तवान्, तस्माद् उच्चैःशब्दं कृतवत्यास्तस्या वाग्दत्तायाः कन्याया रक्षकः कोपि नाविद्यत।

२८ यदि कश्चिद् अवाग्दत्तां कुमारीं प्राप्य तां धृत्वोपगच्छति, तर्ह्यु-
२९ पगतः पुमान् कन्यायाः पित्रे पञ्चाशत्शेकल्मुद्रा दास्यति सा च तस्य भार्य्या भविष्यति, तस्या उपगमात् पुमान् तां त्यक्तुं यावज्जीवं न शक्ष्यति।

३० मनुजः स्वतातस्य जायां नोपगमिष्यति स्वपितुराच्छादनीयं न मोच-यिष्यति।

---

# २३ त्रयोविंशोऽध्यायः।

१ समाजं यातुं कतिपयजनानां निषेधः ७ केषाञ्चन जनानां ग्रहणं ९ अशुचित्वात्

सावधानाज्ञा १५ पलायितं दासं समर्पयितुं निषेधः १७ व्यभिचारादिनिषेधः १९ वार्द्धुषिकग्रहणनिषेधः २१ प्रतिश्रुतसिद्धकरणाज्ञा २४ प्रतिवासिद्रव्यभोजनविधिः।

निष्कोषश्छिन्नलिङ्गो वा जनः परमेश्वरस्य समाजं न प्रवेक्ष्यति। १ जारजः परमेश्वरस्य समाजं न प्रवेक्ष्यति, ते दशमपुरुषेऽपि परमेश्वरस्य २ समाजं न प्रवेक्ष्यन्ति। अम्मोनीया मोयाबीयाश्च परमेश्वरस्य समाजं ३ न प्रवेक्ष्यन्ति, दशमपुरुषेऽपि परमेश्वरस्य समाजं न प्रवेक्ष्यन्ति, यतस्ते मिसर्देशाद् आगच्छतो युष्मान् अन्नजलदानेन पथि न साक्षात् ४ कृतवन्तः, किन्तु युष्मान् अभिशप्तुं युष्माकं प्रतिकूलम् अरामनहर-यिमस्थपिथोरनिवासिनं वियोरस्य पुत्रं विलियमस्य वेतनं दत्तवन्तः। युष्माकं प्रभुपरमेश्वरो विलियमस्याभिमतं न स्वीकृत्य युष्मासु स्नेहात् ५ तम् अभिशापं परावर्त्त्याशिषं विधत्तवान्। यूयं यावज्जीवं तेषां ६ शान्तिशुभे कदापि न यतिष्यध्वे।

यूयम् इदोमीयलोकान् न घृणिष्यथ, यस्मात् ते युष्माकं भ्रातरः, ७ मिस्रीयानपि न घृणिष्यथ यतो यूयं तेषां देशे प्रावसत। तृतीयपुरुषे ८ तेभ्य उत्पन्नाः सन्तानाः परमेश्वरस्य समाजं प्रवेक्ष्यन्ति।

रिपुगणैः समं योद्धुं यात्राकरणकाले यूयं स्वान् सर्व्वथा कुकर्म्मतो रक्षि- ९ ष्यथ। युष्माकं मध्ये यदि कश्चन रात्रिघटिताशौचाद् अशुचिर्भवेत्, तर्हि १० स शिविराद् वहिर्गच्छेत् शिविरं न प्रविशेत्। स सन्ध्याकाले जले ११ स्नात्वा सूर्य्यास्तकाले शिविरं प्रविशेत्। यूयं शिविराद् वहिः स्थानमेकं १२ निरोप्य तं वहिर्देशं गमिष्यथ। यूयं स्वस्वसामग्रीमध्ये अस्त्रमेकं १३ गृहीत्वा भूमावुपवेशनकाले तेनास्त्रेण मृत्तिकां खनिष्यथ, ततः परं निर्गतमलं छादयिष्यथ। यतो युष्मान् रक्षितुं युष्माकं रिपून् युष्मत्करेषु १४ समर्पयितुञ्च युष्माकं प्रभुपरमेश्वरो युष्मच्छिविरमध्ये भ्रमति, स यथा युष्माकम् अपवित्रतादर्शनाद् युष्मत्तः पराङ्मुखो न भवेत् तदर्थं युष्माकं शिविरेण पवित्रेण स्थातव्यं।

यो दासः स्वस्वामिनः समीपात् पलाय्य युष्मान् आश्रयते यूयं तं १५ तत्स्वामिनः करे न समर्पयिष्यथ। स युष्माकं कुत्रचिन्नगरद्वारे स्वीय- १६ मनोऽभिलषितस्थाने युष्माकं मध्ये वत्स्यति यूयं तं नोपद्रोष्यथ।

इस्रायेल्वंशस्य कापि कन्या वेश्या न भवेत्, कश्चन पुमान् पुङ्गामी न १७ भवेत्। वेश्यावेतनं कुक्कुरमूल्यं वा प्रतिश्रुतार्थं युष्माकं प्रभुपरमेश्वरस्य १८ वेश्म नानेष्यथ यस्मात् तदुभयं युष्मत्प्रभुपरमेश्वरेण घृणितं।

१९ यूयं कुसीदार्थम् अर्थाद् रूप्यखाद्यद्रव्यादेः कुसीदं प्राप्तुं स्वभ्रात्रे
२० ऋणं न दास्यथ। लाभार्थं विदेशिने ऋणं दास्यथ किन्तु स्वभ्रात्रे न दास्यथ तेन यूयं यं देशम् अधिकर्त्तुं याथ तत्र युष्माकं प्रभुपरमेश्वरो युष्माकं करकृतं सर्व्वकर्म्म शुभान्वितं करिष्यति।

२१ यूयं स्वप्रभुपरमेश्वराय यत् प्रतिश्राष्यथ तद् दातुं न विलम्बिष्यध्वे यतो युष्माकं प्रभुपरमेश्वरो ऽवश्यं युष्मत्तस्तस्यादानं करिष्यति, तस्मिन् न
२२ दत्ते युष्माकं पापं भविष्यति। किन्तु यूयं यदि न प्रतिश्रुणुथ तर्हि पापं
२३ न भविष्यति। यूयं स्वोष्ठात् निर्गतं वाक्यं पालयिष्यथ, युष्माकं प्रभु-परमेश्वराय युष्माकं मुखेभ्यो निर्गतं यत् प्रतिश्रुतवाक्यं तदनुसारात् स्वेच्छोपहारो दातव्यः।

२४ स्वसमीपवासिनां द्राक्षाक्षेत्रे युष्माभिः प्रविष्टे यूयं स्वेच्छया तृप्तिं यावद् द्राक्षाफलानि भोक्ष्यध्वे किन्तु युष्मद्भाजने किञ्चिदपि न निधास्यथ।
२५ समीपवासिनः शस्यक्षेत्रे युष्माभिः प्रविष्टे यूयं स्वकरैः कणिशान्युत्पाट-यिष्यथ किन्तु स्वसमीपवासिनः शस्यं दात्रेण युष्माभि र्न छेदनीयं।

---

# २४ चतुर्व्विंशोऽध्यायः।

१ त्यागपत्रदानविधिः ५ कृतनवीनोद्वाहपुंसो रणगमननिषेधः ६ बन्धकविधिः ७ मनुजस्तेनदण्डः ८ कुष्ठात् सावधानाज्ञा १० बन्धकस्यापरकथा १४ वेतनजीविने वेतनदानाज्ञा १७ अन्यायं कर्त्तुं निषेधः १९ शस्यकर्त्तनफलाशातनविधिः।

१ कश्चित् पुमान् काञ्चन स्त्रियम् ऊढ्वा यदि तस्या दोषात् तां नानु-गृह्णाति तर्हि स त्यागपत्रं लिखित्वा तस्याः करे दत्त्वा स्वगृहात् तां
२ विस्रक्ष्यति। सा स्त्री तस्य गृहाद् वहिर्भूय यदि पुमांसमन्यं विवहति स
३ द्वितीयः पतिरपि यदि ताम् ऋतीयते त्यागपत्रं तस्याः करे दत्त्वा स्वगृहात् तां वहिष्करोति च, वा स विवाहकृद् द्वितीयः स्वामी यदि
४ म्रियते, तर्हि येन प्रथमस्वामिना सा त्यक्ता स तस्या अशुचित्वात् परं तां पुनर्व्विवोढुं न शक्ष्यति, यतस्तत् परमेश्वरसम्मुखे घृणार्हं कर्म्म ततो यूयम् अधिकारार्थं प्रभुपरमेश्वरेण दास्यमानं देशं पापेन न लेप्स्यथ।

५ कोपि मनुजो नवीनं विवाहं कृत्वा रणं न यास्यति कस्यापि कर्म्मणो भारं न ग्रहीष्यति, स वर्षपर्य्यन्तं निष्कर्म्मा स्वगृहे नवीनजायाया मनोरञ्जनं करिष्यति।

कोऽपि मनुजोऽन्यस्य पेषण्या अधऊर्द्धं वा प्रस्तरं बन्धकार्थं न गृह्णीयात् ६ तद्ग्रहणं जीवनहरणमेव।

येन केनचिद् इस्रायेल्वंशीयो भ्राता चोरयित्वा विनिमीयते विक्रीयते वा, स यदि ध्रियते तर्हि स चोरो हनिष्यते, इत्थं स्वमध्याद् यूयं दोषं दूरयिष्यथ। ७

यूयं कुष्ठरोगे ऽवधास्यध्वे, लेवीययाजका युष्मान् यद्यत् ज्ञापयिष्यन्ति तत्सर्व्वं कर्त्तुं यूयम् अतीव यतिष्यध्वे, ते मया यथादिष्टा यूयं यत्नेन तथैवाचरिष्यथ। मिसरदेशाद् युष्माकम् आगमनकाले प्रभुपरमेश्वरः पथि मरियमं प्रति यदकरोत् तत् स्मरत। ८ ९

यूयं स्वभ्रात्रे ऋणं दत्त्वा बन्धकं ग्रहीतुं तद्गृहं न प्रवेक्ष्यथ। यूयं बहिः स्थास्यथ, ऋणी च बन्धकं बहिष्कृत्य युष्माकं समीपम् आनेष्यति। किन्तु स ऋणी यदि दुर्गतो भवेत् तर्हि तस्य बन्धकं गृहीत्वा न निद्रास्यथ। सूर्य्यास्तकाले तस्य बन्धकं तस्मिन् पुनः समर्पयिष्यथ तेन स स्ववस्त्रे शयिष्यते युष्मान् आशिषं वदिष्यति च युष्माकं प्रभुपरमेश्वरस्य साक्षात् तत् पुण्यं भविष्यति। १० ११ १२ १३

यूयं स्वजातीयं वा युष्मन्नगरद्वारे प्रवसन्तं विदेशीयं दरिद्रं दीनं वा वेतनजीविनं नोपद्रोष्यथ। यूयं निरूपितदिने तस्य वेतनं दास्यथ सूर्य्यास्तं यावत् न स्थापयिष्यथ यतः स दरिद्रः स्ववेतनमाकाङ्क्षते। नो चेत् स युष्मत्प्रतिकूलं परमेश्वरम् उद्दिश्य प्रार्थयिष्यते, तेन यूयम् अपराधिनो भविष्यथ। १४ १५

पुत्त्रस्य विनिमयात् पिता पितु र्विनिमयात् पुत्त्रो न हनिष्यते, एकैको जनः स्वस्वपापाद् हनिष्यते। यूयं विदेशिपितृहीनान् अन्यायं न विचारयिष्यथ विधवाया वस्त्रं बन्धकं न ग्रहीष्यथ। यूयं मिसरदेशे दासा आस्त प्रभुपरमेश्वरश्च तस्माद् युष्मान् अमोचयत् तत् स्मारयितुम् अहम् एतानि कर्म्माणि कर्त्तुं युष्मान् आदिशामि। १६ १७ १८

यूयं शस्यच्छेदनकाले यदि मुष्टिमेकं क्षेत्रे विस्मरथ तर्हि तं ग्रहीतुं पुनर्न यास्यथ स विदेशिनां पितृहीनानां विधवानाञ्च भविष्यति, तेन युष्माकं प्रभुपरमेश्वरो युष्माकं करकृतकर्म्म शुभान्वितं करिष्यति। यूयं जिततरूणां फलानि शातयित्वा पुनः शाखासु न मृगयिष्यध्वे तत्र यत् तिष्ठति तद् विदेशिपितृहीनविधवानां भविष्यति। युष्माभि र्द्राक्षाक्षेत्रस्य द्राक्षाफलेषु संगृहीतेषु शेषं पुनर्न संग्रहीष्यते तद् विदेशि- १९ २० २१

२१ पितृहीनविधवानां भविष्यति। यूयं मिसर्देशे दासा आस्त तत् स्मारयितुम् अहमेतानि कर्म्माणि कर्त्तुं युष्मान् आदिशामि।

# २५ पञ्चविंशोऽध्यायः।

१ चत्वारिंशत्प्रहाराधिकदण्डनिषेधः ४ शस्यमर्द्दकवृषस्यास्यबन्धननिषेधः ५ भ्रातृवंशवर्द्धनविधिः ११ निर्लज्जस्त्रिया दण्डः १३ तोलनमापनयोरन्यायकरणनिषेधः १७ अमालेकवचनं।

१ मनुजयो र्विवादे जाते तौ यदि विचारार्थं विचारकान्तिकं यात-
२ स्तदा स निर्दोषं निर्दोषं दोषिणञ्च सदोषं करिष्यति। यदि दोषी प्रहारयोग्यो भवेत् तर्हि विचारकस्तं शाययित्वा तदपराधानुसारात्
३ प्रहारसंख्यां निश्चीय स्वसाक्षात् तं प्रहारयेत्। चत्वारिंशत् प्रहारं कुर्य्यात् तदधिकं न कुर्य्यात्। न चेत् तदधिकं महाप्रहारं प्राप्य युष्माकं साक्षाद् भ्राता तुच्छो भविष्यति।

४ यूयं शस्यमर्द्दकवृषस्यास्यं न भंत्स्यथ।

५ यदि सहोदरगण एकत्र वसति, तेषामेको निरपत्यो म्रियेत तर्हि मृतस्य जायां कश्चिद् वहिःस्थः पुमान् न विवहेत् तस्या देवर-
६ स्ताम् उद्वोपगच्छेत् तां प्रति देवरकर्म्म कुर्य्यात्। तस्मात्तस्यां यो ज्येष्ठ-सुतो जनिष्यते स मृतभ्रातुरुत्तराधिकारी भविष्यति, तेनेस्रायेल्वंशात्
७ तन्नाम न लोप्स्यते। स पुमान् यदि भ्रातृजायां ग्रहीतुम् अनिच्छुकः स्यात् तदा सा स्त्री नगरद्वारसमीपं गत्वा मम देवर इस्रायेल्वंश-मध्ये स्वभ्रातु र्नाम रक्षितुं नेच्छति मां प्रति देवरकर्म्म न करोति इति
८ वाक्यं प्राचीनानां साक्षाद् वदेत्। नगरप्राचीनास्तमाहूय सम्भाषेरन् यदि स नितान्तम् अनिच्छुकः सन् नाहम् एनां ग्रहीष्यामीति वदेत्,
९ तदा तस्य भ्रातृजाया प्राचीनानां साक्षात् तदन्तिकमागत्य तत्पादैकाद् उपानहं मोचयित्वा तदास्ये निष्ठीव्य वाक्यमिदं वदेत्, यः स्वभ्रातु
१० र्वंशं न रक्षति तं प्रतीत्थं कर्त्तव्यं। तत इस्रायेल्वंशमध्ये तस्य मुक्तपादुक-वंश इति नाम भविष्यति।

११ विवदमानयोः पुंसोरेकस्य पत्नी यदि प्रहारकस्य करात् स्वपतिं
१२ मोचयितुं स्वकरेण प्रहारकस्य मेढ्रं धरति, तर्हि यूयं तस्याः करं छेत्स्यथ तत्र नेत्रै र्न लज्जध्वे।

युष्मत्सम्पुटके लघुगुरुणी द्वे माने मा तिष्ठेतां। युष्मद्गृहेषु च १४ क्षुद्रमहती द्वे मानपात्रे न तिष्ठेतां। यूयं न्याय्यं यथार्थञ्च मानं न्याय्यं १५ यथार्थञ्च मानपात्रं स्थापयिष्यथ, तेन युष्माकं प्रभुपरमेश्वरदत्तदेशे युष्माकम् अवस्थितिकालो वर्द्धिष्यते। इत्थमन्यायं ये कुर्व्वन्ति ते युष्माकं १६ प्रभुपरमेश्वरस्य घृण्याः।

मिसर्देशाद् युष्माकं बहिरागमनकाले पथि युष्मान् प्रति अमालेक- १७ वंशो यदकरोद् अर्थाद् युष्माकं श्रमक्लान्तकाले स पथि युष्माभिः समं १८ मिलित्वा ईश्वरान्न भीत्वा युष्माकं पश्चाद्वर्त्तिनो दुर्ब्बललोकान् आक्रमत् तत् स्मरत। युष्माकं प्रभुपरमेश्वरो यं देशम् अधिकारार्थं युष्मभ्यं १९ दास्यति तत्र देशे युष्माकं प्रभुपरमेश्वरेण चतुर्दिक्स्थरिपुभ्यो युष्मभ्यं विश्रामे दत्ते यूयं व्योमाधोऽमालेकवंशस्य स्मरणचिह्नं लोप्स्यथ, तन्न विस्मरिष्यथ।

---

# २६ षड्विंशोऽध्यायः।

१ प्रथमफलोत्सर्गकारिणः स्वीकारः १२ तृतीयवर्षे दशमांशोत्सर्गकारिणः प्रार्थना १६ लोकैः सह परमेश्वरस्य नियमः।

युष्मत्प्रभुपरमेश्वरो युष्मभ्यम् अधिकारार्थं यं देशं दास्यति, यूयं यदा १ तं प्रविश्याधिकृत्य च तत्र वत्स्यथ, तदा युष्मत्प्रभुपरमेश्वरदत्तदेशस्य २ प्रथमोत्पन्नफलानां कानिचित् समादाय डल्लके निधाय स्वनामरक्षार्थं प्रभुपरमेश्वरेणाभिलषितं स्थानं गमिष्यथ। तत्कालीययाजकस्य ३ समीपं गत्वा तत्सम्मुखे वाक्यमिदं गदिष्यथ, परमेश्वरोऽस्मभ्यं यं देशं दातुम् अस्मत्पूर्व्वपुरुषाणां समीपे शप्तवान् तं देशम् अहं प्रविष्टोऽस्मी- त्यहमद्य तव प्रभुपरमेश्वरस्य साक्षात् स्वीकरोमि। ततः परं याजको ४ युष्माकं करेभ्यो डल्लकं गृहीत्वा परमेश्वरस्य वेदिसम्मुखे निधास्यति। यूयञ्च स्वप्रभुपरमेश्वरस्य समीपे वाचमेतां कथयिष्यथ, म्रतकल्प एको ५ ऽरामीयोऽस्माकं पूर्व्वपुरुष आसीत्, सोऽल्पपरिवारैः सह मिसर्देशम् उत्तीर्य्य तत्र प्रावसत् तत्र महिमबलान्वितबहुवंशो ऽभूत्। मिस्रीय- ६ लोका अस्मान् उपाद्रवन् अक्लिश्नन् कठिनदासत्वभारम् अस्मास्वर्पयन्, ततो वयं स्वपूर्व्वपुरुषाणां प्रभुपरमेश्वरम् उद्दिश्य प्रार्थयामहि परमेश्वरो ७ ऽस्माकं वाक्यं श्रुत्वास्माकं दुःखकष्टोपद्रवान् दृष्टवान्। स च परमे- ८

श्वरः पराक्रमिकरं विस्तीर्णबाहुं महाशङ्कां चित्राश्चर्य्यकर्म्माणि च
९ प्रकाश्य मिसर्देशाद् अस्मान् बहिरानयत्, अत्र चानीय दुग्धमधुप्रवाहिनं
१० देशमिमं अस्मभ्यमदात्। हे परमेश्वर त्वं मह्यं यां भूमिमदास्तस्याः
प्रथमजातफलान्यहमानीतवान् इत्युक्त्वा यूयं स्वप्रभुपरमेश्वरसम्मुखे
११ तन्निधाय प्रभुपरमेश्वरं प्रणंस्यथ। युष्मत्प्रभुपरमेश्वरो युष्माकं युष्म-
त्परिवाराणाञ्च यद् यत् क्षेमं कृतवान् तेन यूयं लेवीयलोका युष्म-
न्मध्यनिवासिनो विदेशीयलोकाश्चानन्दिष्यथ।

१२ तृतीयवर्षे ऽर्थाद् दशमांशकरणवर्षे युष्माभिस्तत्पन्नशस्यादेर्दश-
मांशकरणे समाप्ते यूयं तान् दशमांशान् लेवीयविदेशिपितृहीनविध-
१३ वाभ्यो दास्यथ, ताश्च युष्मद्ग्रामपुरेषु तान् भुक्त्वा तर्प्स्यन्ति। तदा यूयं
स्वप्रभुपरमेश्वरस्य सम्मुखे वाचमेतां गदिष्यथ, त्वदाज्ञापितवाक्यानु-
सारात् मया स्वगृहात् पवित्रद्रव्याण्यानीतानि लेवीयविदेशिपितृ-
१४ हीनविधवाभ्यश्च दत्तानि त्वदाज्ञा मया न लङ्घिता न वा विस्मृताः। शोक-
काले तेषां किञ्चिदपि मया न भुक्तम् अशौचकाले तेषां किञ्चिदपि
मया न गृहीतं मृतलोकमुद्दिश्य तेषां किञ्चिदपि मया न दत्तं,
अस्मत्प्रभुपरमेश्वरस्याज्ञा मयाचरिता त्वदादेशानुरूपाणि सर्व्वकर्म्माणि
१५ कृतानि। भवान् पवित्रनिवासाद् अर्थाद् स्वर्गाद् अवलोकताम् अस्म-
त्पूर्व्वपुरुषान् प्रति यथा शप्तवान् तदनुसाराद् भवल्लोकस्येस्रायेलवंशस्य
स्वदत्तदुग्धमधुप्रवाहिदेशस्य च शुभं विधत्तां।

१६ युष्माकं प्रभुपरमेश्वर एता या विधिव्यवस्था आचरितुम् अद्य युष्मान्
आदिशति, ता यूयं सर्व्वान्तःकरणप्राणैः सममाचरितुं यतध्वं।
१७ परमेश्वर एवास्माकम् ईश्वरो भविष्यति, वयं तस्य मार्गैश्चलिष्यामस्त-
स्याज्ञाविधिव्यवस्था आचरिष्यामस्तस्य वाचं शिरःसु धारयिष्याम इति
१८ यूयम् अद्य परमेश्वराय प्रतिश्रुतवन्तः। परमेश्वरश्चाद्य युष्मभ्यमिदं
प्रतिश्रुतवान्, यूयं मम वाक्यानुसारात् मम विशेषलोका भविष्यथ,
१९ मम सर्व्वाज्ञाम् आचरिष्यथ, तेन यूयं मत्सृष्टसर्व्वजातीयेभ्यः श्रेष्ठा
विधास्यध्वे प्रशंसाख्यातिसमादरपात्राणि भविष्यथ युष्मत्प्रभुपरमेश्व-
रस्य वाक्यानुसारात् तमुद्दिश्य पवित्रलोका भविष्यथ।

# २७ सप्तविंशोऽध्यायः।

१ प्रस्तरोपरि व्यवस्थालेखनाज्ञा ९ वेदिनिर्म्माणविधिः ११ गिरिषीम-एवल्गिर्य्योरिस्रायेल्वंशस्य विभजनं १४ एवलगिरौ शापकथनं।

मूसा इस्रायेल्वंशीयप्राचीनवर्गंश्च लोकान् इत्याज्ञापयत्, अद्याहं १ युष्मान् यद् यद् आदिशामि यूयं तत्सर्व्वम् आचरत। युष्मत्प्रभुः २ परमेश्वरो युष्मभ्यं यं देशं दास्यति, तं देशं प्रवेष्टुं यूयं यदा यर्द्दननदीपारं गमिष्यथ, तदा वृहत्प्रस्तरान् स्थापयिष्यथ चूर्णेन च लेप्स्यथ। युष्मत्प्रभुपरमेश्वरेण युष्मत्पूर्व्वपुरुषेभ्यो यत् प्रतिश्रुतं तदनुसाराद् ३ युष्मभ्यं तेन दास्यमानं दुग्धमधुप्रवाहिदेशं प्राप्तुं यदा पारं यास्यथ, तदा तत्प्रस्तरेषु व्यवस्थाया अस्याः सर्व्ववाक्यानि लेखिष्यथ। अहमद्य ४ यान् प्रस्तरानधि युष्मान् आदिशामि, तान् यूयं यर्द्दननदीपारगमनकाल एवल्पर्व्वते स्थापयिष्यथ चूर्णेन च लेप्स्यथ। तत्र स्वप्रभुपरमेश्वराय ५ वेदिमेकां करिष्यथ, सा प्रस्तरै र्निर्मातव्या किन्तु तत्र लौहास्त्रं न तोलयितव्यं। युष्माकं प्रभुपरमेश्वरस्य तां वेदिम् अनासादितप्रस्तरै र्निर्मा- ६ यिष्यथ तदुपरि युष्माकं प्रभुपरमेश्वराय होमबलीन् उत्स्रक्ष्यथ। मङ्ग- ७ लार्थकबलींश्च दास्यथ तत्र भुक्त्वा युष्माकं प्रभुपरमेश्वरस्य समक्षं आनन्दिष्यथ। तत्र प्रस्तरेषु व्यवस्थाया अस्याः सर्व्ववाक्यानि स्पष्टं लेखिष्यथ। ८

मूसा लेवीययाजकान् इस्रायेल्वंशस्य सर्व्वलोकांश्च पुनरवदत् हे ९ इस्रायेल्वंश यूयं शृणुत मद्वाक्यम् आकर्णयत च, यूयम् अद्य प्रभुपरमेश्वरस्य लोका जाताः, अतः स्वप्रभुपरमेश्वरस्य वाक्यं मनःसु निधाय १० अद्य मद्दत्तास्तदीयविधिव्यवस्थाज्ञा आचरत।

तद्दिने मूसा लोकान् इदमादिशत् युष्मासु यर्द्दन्नदीपारं गतेषु ११ लोकान् आशिषं वक्तुं शिमियोन्-लेवि-यिहूदा-इषाखर-यूषफ-विन्या- १२ मीनवंशीया गिरिषीमगिरौ स्थास्यन्ति। रुवेण-गाद-आशेर-सिवूलून् १३ दान-नप्तालिवंशीयाश्च शप्तुम् एवलगिरौ स्थास्यन्ति।

ततः परं यो नरः परमेश्वरेण घृणितां शिल्पकरकरकृतां तक्षितां १४ सिक्तां वा मूर्त्तिं निर्म्माय निभृते स्थापयति स शप्त इति लेवीयलोकैरि- १५ स्रायेल्वंशं उच्चैरुच्यतां, ततः सर्व्वलोका वदन्तु तथास्तु। यः स्वपितरौ १६ अवजानाति स शप्त इत्युक्ते सर्व्वलोका वदन्तु तथास्तु। यः समीपवासिनो १७ भूमिचिह्नं स्थानान्तरं करोति स शप्त इत्युक्ते सर्व्वलोका वदन्तु तथास्तु।

१८ योऽन्धं पथो वहिः करोति स शप्त इत्युक्ते सर्व्वलोका वदन्तु तथास्तु। यो
१९ विदेशिपितृहीनविधवानां विचारेऽन्यायं करोति स शप्त इत्युक्ते सर्व्व-
२० लोका वदन्तु तथास्तु। यः पितृजायां गच्छति पितुरावरणीयाना-
२१ च्छादनात् स शप्त इत्युक्ते सर्व्वलोका वदन्तु तथास्तु। यः पशुमुपगच्छति
२२ स शप्त इत्युक्ते सर्व्वलोका वदन्तु तथास्तु। यः स्वभगिनीम् अर्थात् स्वपि-
तुर्मातु र्वा कन्यामुपगच्छति स शप्त इत्युक्ते सर्व्वलोका वदन्तु तथास्तु।
२३ यः स्वश्वश्रूमुपगच्छति स शप्त इत्युक्ते सर्व्वलोका वदन्तु तथास्तु। यो
२४ गुप्तं स्वसमीपवासिनं हन्ति स शप्त इत्युक्ते सर्व्वलोका वदन्तु तथास्तु।
२५ यो निरपराधिनं हन्तुम् उत्कोचं गृह्णाति स शप्त इत्युक्ते सर्व्वलोका
२६ वदन्तु तथास्तु। य एतस्या व्यवस्थायाः सर्व्ववाक्यानि निश्छिद्रं न पालं-
यति स शप्त इत्युक्ते सर्व्वलोका वदन्तु तथास्तु।

---

## २८ अष्टविंशोऽध्यायः।

आज्ञावहनस्याज्ञालङ्घनस्य च फलं।

१ यूयं यदि स्वप्रभुपरमेश्वरस्य वाक्यानि मनःसु निधाय तस्य या आज्ञा
अद्य मयादिश्यध्वे ताः सर्व्वा आचरितुं यतध्वे, तर्हि युष्मत्प्रभुपरमेश्वरः
२ पृथ्वीस्थसर्व्वजातितो युष्मान् श्रेष्ठान् विधास्यति। स्वप्रभुपरमेश्वरस्य
वाक्यानि मनःसु निदधानान् युष्मान् इमानि शुभान्यनुवर्त्तिष्यन्त
३ आश्रयिष्यन्ते च। यूयं पुरे शुभान्विताः क्षेत्रे च शुभान्विता भविष्यथ।
४ युष्माकं देहफलं भूमिफलं गोमेषादेर्वत्सरूपपशुफलञ्च शुभान्वितं
५ भविष्यति। युष्माकं डल्लकपूपपात्राणि शुभान्वितानि भविष्यन्ति। यूयं
६ गेहागमनकाले शुभान्विता वहिर्गमनकाले च शुभान्विता भविष्यथ।
७ परमेश्वरो युष्माकं प्रतिकूलम् उत्थितान् रिपून् युष्माकं समक्षं नाशयि-
ष्यति, ते युष्माकं प्रतिकूलम् एकपथेनागमिष्यन्ति किन्तु युष्माकं
८ सम्मुखात् सप्तपथैः पलायिष्यन्ते। परमेश्वरो युष्माकं कोषागारेषु
युष्माकं करार्पितसर्व्वकर्म्मणि च युष्मान् शुभान्वितान् करिष्यति।
युष्माकं प्रभुपरमेश्वरो युष्मभ्यं यं देशं दास्यति तत्र युष्मान् आशिषं
९ वदिष्यति। स्वप्रभुपरमेश्वराज्ञाः पालयन्तस्तस्य पथि चलन्तश्च यूयं
१० परमेश्वरेण स्वशपथानुसारात् पवित्रलोकत्वेन स्थापयिष्यध्वे। यूयं
परमेश्वरस्य नाम्ना प्रसिद्धा इति विदिते पृथ्वीस्थसर्व्वलोका युष्मत्तो

भेष्यन्ति। परमेश्वरो युष्मभ्यं यं देशं दातुं युष्मत्पूर्व्वपुरुषाणां समीपे ११ शप्तवान् तत्र देहफलानां पशुफलानां भूमिफलानाञ्च बाहुल्यदानेन परमेश्वरो युष्माकं क्षेमं विधास्यति। परमेश्वर उपयुक्तकाले युष्माकं देशे १२ वृष्टिं दातुं युष्माकं करकृतं सर्व्वकर्म्म शुभान्वितं कर्त्तुञ्च स्वीयमङ्गलम् उत्तमं भाण्डागारं मोचयिष्यति। यूयं बहुजातिभ्य ऋणं दास्यथ, ऋणं न ग्रहीष्यथ। युष्माकं प्रभुपरमेश्वरस्यैता या आज्ञा ग्रहीतुम् आचरि- १३ तुञ्चाहं युष्मान् अद्यादिशामि ता यदि यूयं मनःसु निधद्ध्वे, तर्हि परमेश्वरो युष्मान् उत्तमाङ्गस्वरूपान् न च लाङ्गूलस्वरूपान् करिष्यति यूयम् उन्नता एव न चावनता भविष्यथ। अद्याहं युष्मान् यद् यद् १४ आदिशामि तस्माद् दक्षिणं वामं वा न परावर्त्तध्वम् इतरदेवान् सेवितुं तान् नानुगमिष्यथ।

किन्त्वहमद्य युष्मान् यान् आज्ञाविधीन् आदिशामि तान् ग्रहीतुम् १५ आचरितुञ्च यदि यूयं स्वप्रभुपरमेश्वरस्य वाक्यानि न मनःसु निधद्ध्वे तर्ह्येते शापा युष्मान् अनुवर्त्तिष्यन्त आश्रयिष्यन्ते च। यूयं पुरे शप्ताः १६ क्षेत्रे च शप्ता भविष्यथ। युष्माकं डल्लकपूपपात्राणि शप्तानि भविष्यन्ति। १७ युष्माकं देहफलानि भूमिफलानि गोमेषादिवत्सरूपपशुफलानि च १८ शप्तानि भविष्यन्ति। यूयं गेहागमनकाले शप्ता बहिर्गमनकाले च शप्ता १९ भविष्यथ। युष्माकं दुष्क्रियाहेतोरर्थात् मत्त्यागहेतोर्यावद् युष्माकं लोपो २० नाशश्च तूर्णं न भवेत् तावद् युष्माकं करकृतकर्म्मसु परमेश्वरो युष्मान् प्रति शापोद्वेगतिरस्कारान् प्रेषयिष्यति। यूयं यं देशमधिकर्त्तुं याथ २१ तस्माद् यावत् नोच्छेत्स्यध्वे तावत् परमेश्वरो युष्मासु महामारीं लागयिष्यति। परमेश्वरो यक्ष्माज्वरज्वालातिदाहखड्गशुष्कम्लानशस्यै २२ र्युष्मान् आहनिष्यति, तानि युष्माकं नाशं यावद् युष्मान् अनुवर्त्तिष्यन्ते। युष्माकं मस्तकोपरि स्थितव्योम पित्तलवद् अधःस्थितभूमिश्च लौहवद् २३ भविष्यति। परमेश्वरो युष्माकं भूमौ तोयविनिमयेन धूलिसिकता २४ वर्षिष्यति, यावद् युष्माकं नाशो न भवेत् तावत् तद् गगणाद् युष्मासु पतिष्यति। परमेश्वरो युष्माकं रिपुसम्मुखे युष्मान् ताडयिष्यति २५ यूयं रिपुप्रतिकूलम् एकपथेनागमिष्यथ किन्तु तेषां सम्मुखात् सप्तपथैः पलायिष्यध्वे, पृथ्वीस्थसर्व्वलोकानां समक्षं निन्दास्पदं भविष्यथ। व्योमपक्षिणो भूमिपशवश्च युष्माकं शवक्रव्यं भोक्ष्यन्ते तान् कोपि २६ न दूरयिष्यति। परमेश्वरो युष्मान् अप्रतिकार्य्यै र्मिस्रीयनाडीव्रणार्शः- २७

२८ पामकण्डूभिः प्रहरिष्यति। परमेश्वरो वातुलतान्धत्वमनोविस्मयताभि
२९ र्युष्मान् प्रहरिष्यति। यथान्धोऽन्धकारे हस्तामर्शं करोति तथा यूयं मध्याह्ने हस्तामर्शं करिष्यथ, युष्मत्पथो ऽशुभो भविष्यति यूयं सदो-
३० पद्रुता अपहृतास्च भविष्यथ, कोपि युष्मान् नोद्धरिष्यति। वाग्दत्ता कन्या वरादन्यनरेणोपगमिष्यते, स्वनिर्म्मिते गृहे यूयं न वत्स्यथ स्वकृतस्य
३१ द्राक्षाक्षेत्रस्य फलानि यूयं न सञ्चेष्यथ। स्वसम्मुखे हतायाः स्वगो-र्मांसं यूयं न भोक्ष्यध्वे युष्माकं गर्द्दभा युष्माकं साक्षात् बलात् हरि-ष्यन्ते, युष्मभ्यं परावर्त्य न दास्यन्ते, युष्माकं मेषादेर्व्रजाद् युष्माकं
३२ रिपुभ्यो दास्यन्ते, कोपि युष्मान् नोपकरिष्यति। युष्माकं पुत्रकन्या अन्यजातिभ्यो दास्यन्ते कृत्स्नं दिनं तेषां दिदृक्षूणां युष्माकं दृष्टिः
३३ क्षेष्यते तान् द्रष्टुं न शक्ष्यथ। युष्माकं भूमिश्रमफलानि युष्मदज्ञातलोकै
३४ र्भोक्ष्यन्ते यूयं सदा केवलं उपद्रुताः पीड़िताश्च भविष्यथ। युष्मन्नेत्रै
३५ र्यद्यद् द्रक्ष्यते, तद्दर्शनाद् यूयम् उन्मदिष्यथ। परमेश्वरो युष्माकम् आजा-नुजङ्घापदतलात् शिरो यावद् अप्रतीकार्य्यनाड़ीव्रणेन प्रहरिष्यति।
३६ परमेश्वरो युष्मान् युष्मन्नियुक्तं राजानञ्च युष्माकं युष्मत्पूर्व्वपुरुषाणा-ञ्चाज्ञातजातीयानां देशं नेष्यति, तत्र यूयं शिलाकाष्ठमयान् इतर-
३७ देवान् सेविष्यध्वे। परमेश्वरो युष्मान् येषां जातीयानां देशं नेष्यति,
३८ यूयं तेषां चमत्कारपुरावृत्तोपकथास्पदो भविष्यथ। क्षेत्रे युष्माभि र्बहुशस्येषूप्तेष्वल्पशस्यं संग्रहीष्यते यतः शूककीटास्तद् विनाशयि-
३९ ष्यन्ति। स्वनिर्म्मितस्य स्वकृष्टस्य द्राक्षाक्षेत्रस्य द्राक्षारसो युष्माभि र्न
४० पास्यते द्राक्षाफलानि न चेष्यन्ते यतः कीटाः सर्व्वं खादिष्यन्ति। युष्माकं सर्व्वसीम्नि जिततरुषु सत्सु यूयं तैलमर्द्दनं न करिष्यथ यतस्तत्फलानि
४१ पतिष्यन्ति। यूयं पुत्रकन्या जनयिष्यथ किन्तु तेषु युष्माकं स्वत्वं
४२ न स्थास्यति यस्मात् ते बन्दीभूय दूरं यास्यन्ति। शूककीटा युष्माकं
४३ सर्व्ववृक्षान् क्षेत्रोत्पन्नफलानि च भोक्ष्यन्ते। युष्माकं मध्यवर्त्तिविदे-शीयलोका युष्मत्तोपि उन्नता भविष्यन्ति यूयम् उत्तरोत्तरम् अवनता
४४ भविष्यथ। ते युष्मभ्यम् ऋणं दास्यन्ति किन्तु यूयं तेभ्य ऋणं न दास्यथ
४५ ते उत्तमाङ्गस्वरूपा भविष्यन्ति यूयं लाङ्गूलस्वरूपा भविष्यथ। यावद् युष्माकं विनाशो न भवेत् तावद् एते शापा युष्माकं प्रतिकूलम् आगत्य युष्मान् अनुवर्त्तिष्यन्त आश्रयिष्यन्ते च, यतो युष्माकं प्रभुपरमेश्वरेणा-
४६ दिष्टान् आज्ञाविधीन् आचरितुं यूयं तद्वाक्ये मनांसि न न्यधद्ध्वं। अतस्ते

चिह्नार्थमाश्चर्य्यलक्षणार्थञ्च युष्मदुपरि युष्मद्वंशोपरि च सदा स्थास्यन्ति। यतो युष्मत्प्रभुपरमेश्वरः सन्ततेर्बाहुल्याद् आनन्दिते हृष्टान्तःकरणैश्च ४७ युष्माभि र्न सेवितः। परमेश्वरो युष्माकं प्रतिकूलं यान् रिपून् प्रेष- ४८ यिष्यति ते सर्व्वाभावात् क्षुधातृष्णानग्नतार्त्तै र्युष्माभिः सेविष्यन्ते, यावद् युष्माकं विनाशो न भवेत् तावत् ते युष्माकं स्कन्धे लौहयुगं स्थापयिष्यन्ति। उड्डयमानोत्क्रोशपक्षिवच्छीघ्रगामिनी जातिरेकातिदूरात् पृथिव्याः ४९ सीमातो युष्मत्प्रभुणा परमेश्वरेण युष्मत्प्रतिकूलम् आनेष्यते, तज्जा- तीयलोकानां भाषा युष्माकं बोधागम्या। ते परुषवदना वृद्धान् न ५० समादरिष्यन्ते बालांश्च न दयिष्यन्ते। यावद् युष्माकं नाशो न भवेत् ५१ तावत् ते युष्माकं पशुवत्सान् भूमिफलानि च भोक्ष्यन्ते तेन युष्माकं नाशं यावद् युष्मच्छस्यद्राक्षारसतैलानां गोमेषादेर्वत्सानाञ्च किञ्चिदपि नावशेक्ष्यते। युष्मद्देशीयान्युच्चसुरक्षितप्राचीराणि युष्माकं विश्वास- ५२ भूमयस्तेषां प्राचीराणां पतनं यावद् यूयं युष्मत्सर्व्वनगरेषु तैरवरो- त्स्यध्वे युष्माकं प्रभुपरमेश्वरदत्तदेशस्य सर्व्वनगरेषु यूयं तैरवरोत्स्यध्वे। इत्थं शत्रुणा युष्मदवरोधे क्लेशे च जाते स्वदेहफलम् अर्थात् प्रभु- ५३ परमेश्वरेण दत्तानां स्वपुत्रकन्यानां मांसं युष्माभि र्भोक्ष्यते। युष्माकं ५४ मध्ये यः पुमान् सर्व्वेभ्यः कोमलो सुखभोगी च, स स्वभ्रातरं वक्षःस्थजायाम् अवशेषबालकांश्च प्रति कुदृष्टिं करिष्यति, यतो रिपुभि र्युष्माकं सर्व्व- ५५ नगरेषु युष्माकमवरोधे क्लेशे च जाते स सर्व्वभक्ष्याभावात् यत् स्वपुत्रस्य मांसं बुभुक्षिष्यते तस्य किञ्चिदपि तेषां कस्मैचिन्न दास्यति। या स्त्री कोम- ५६ लतासुखभोगाभ्यां पदतलं भूमौ निधातुं कदापि न प्रवृत्ता, युष्माकं सर्व्वाभ्यः कोमलाङ्गी सुखभोगिनी च सा नारी स्ववक्षःस्थस्वामिनं स्वपुत्र- कन्याश्च प्रति कुदृष्टिं करिष्यति। यतो रिपुभि र्युष्मन्नगरेषु युष्मा- ५७ कम् अवरोधे क्लेशे च जाते सा सर्व्वभक्ष्याभावात् स्वपादद्वयमध्यात् निर्गतं गर्भपुष्पं स्वप्रसूतान् बालकांश्च गुप्तं भोक्ष्यते। यूयं स्वप्रभुपर- ५८ मेश्वरइति श्रीयुक्तभयानकनाम्नो भेतुम् अत्र पुस्तके लिखितानि सर्व्वव्यवस्थावाक्यानि पालयितुं यदि नावधद्धे, तर्हि परमेश्वर ५९ आश्चर्य्यरूपं बहुकालस्थायिमहाघातै र्बहुकालस्थायिदुष्टरोगैश्च युष्मान् युष्मद्वंशञ्चाहनिष्यति। यूयं यतो बिभीथ तान् मिस्रीयमहाव्याधीन् ६० युष्माकं मध्यं पुनरानेष्यति। तेन ते युष्मान् आश्रयिष्यन्ति। अप- ६१ रम् कात्र पुस्तके ये न लिखितास्तादृशान् रोगाघातान् युष्माकं विनाश-

६१ पर्य्यन्तं युष्मान् प्रति परमेश्वर आनेष्यति। व्योमतारकावद् बहु-
संख्यानां युष्माकम् अल्पजना अवशेक्ष्यन्ते यतो यूयं स्वप्रभुपरमेश्वरस्य
६२ वाक्यं नागृह्णीत। परमेश्वरो युष्माकं क्षेमं कर्त्तुं युष्मान् वर्द्धयितुञ्च
यथा आह्लादित आसीत् तथा युष्मान् नाशयितुं लोप्तुञ्चाह्लादिष्यते,
६३ यूयं यं देशम् अधिकर्त्तुं याथ ततो दूरीकारिष्यध्वे। परमेश्वरो युष्मान्
पृथिव्या एकसीमातो ऽन्यसीमां यावत् सर्व्वजातीयानां मध्ये विक-
रिष्यति तत्र युष्माभि र्युष्मत्पूर्व्वपुरुषैश्चाज्ञाताः काष्ठपाषाणमया
६५ इतरदेवा युष्माभिः सेविष्यन्ते। तेषां भिन्नजातीयानां मध्ये यूयं
किमपि सुखं न प्राप्स्यथ युष्माकं पदतलानि कुत्रापि न विश्रमिष्यन्ति
किन्तु परमेश्वरस्तत्र युष्मभ्यं चित्तकम्पं नेत्रक्षीणतां मनःशोकञ्च
६६ दास्यति। यूयं स्वप्राणेषु निराशा भविष्यथ दिवानिशं शङ्किष्यध्वे
६७ स्वप्राणरक्षाम् असम्भवां ज्ञास्यथ। यूयं मनःसु यत् शङ्किष्यध्वे नेत्रैश्च
यद् द्रक्ष्यथ, तस्मात् प्रातः कथयिष्यथ हा हा यदि सन्ध्याभविष्यत्,
६८ सन्ध्याकाले च कथयिष्यथ हा हा यदि प्रातरभविष्यत्। एष पन्था
युष्माभिः पुनर्न दर्शिष्यत इत्यहं युष्मभ्यं यं पन्थानमधि कथितवान् पर-
मेश्वरस्तेन मिसरदेशपथेन पोतैर्युष्मान् पुनर्नेष्यति, तत्र यूयं स्वरि-
पूणां दासा दास्यश्च भवितुं विक्रेष्यध्वे किन्तु कोपि युष्मान् न क्रेष्यति।
६९ परमेश्वरो होरेबि इस्रायेल्वंशेन सह यं नियमं कृतवान् तदन्यं
यं नियमं तान् प्रति कथयितुं मोयाबदेशे मूससम् आदिशत् तस्य
नियमस्य वाक्यानि समाप्तानि।

---

## २९ ऊनत्रिंशोऽध्यायः।

१ आज्ञां पालयितुं विनयः १० ईश्वरेण समं नियमः १८ आज्ञालङ्घनफलं।

१ मूसाः सर्व्वम् इस्रायेल्वंशम् आहूय कथितवान् परमेश्वरो मिसर्देशे
२ फिरौणं तस्य सर्व्वदासान् सर्व्वदेशञ्च प्रति यानि कर्म्माणि कृतवान्
३ तानि यूयं स्वनेत्रै र्दृष्टवन्तः, अर्थात् महापरीक्षा महाश्चर्य्यचित्र-
४ कर्म्माणि युष्माभिः स्वनेत्रै र्दृष्टानि, तथापि परमेश्वरो ज्ञानग्राहीणि
चित्तानि दर्शनग्राहिणश्चक्षुषः श्रवणग्राहीणि कर्णाणि नाद्यापि युष्मभ्यं
५ दत्तवान्। अहमेव युष्माकं प्रभुः परमेश्वर इति यूयं यथा जानीयात,
तदर्थम् अहं चत्वारिंशद् वर्षाणि प्रान्तरेण युष्मान् गमयितवान् तत्र

गात्रेषु युष्माकं वस्त्राणि न जीर्णानि पादेषु च पादुकाः पुरातनत्वं न गताः; ६
यूयं पूपं नाभुंग्ध्वं द्राक्षारसं सुरां नापिवत। युष्माभिः स्थानेऽत्र प्राप्ते वयम् ७
अस्माभिः सह योद्धुं वहिरागतं हिष्वोनीयं सीहोनं भूपं वाशानी-
यम् ओगं भूपञ्चाहनाम, तेषां देशं वशीकृत्य रुवेणीयेभ्यो गादीयेभ्यो ८
मिनशेरर्द्धवंशाय चाधिकर्त्तुम् अदाम। अतो यूयं यथा सर्व्वकर्म्मसु ९
कृतार्था भवेत, तदर्थं नियमस्यैतस्य वाक्यानि मनःसु निधायाचरत।

परमेश्वरो युष्मान् यद् गदितवान् युष्माकं पूर्व्वपुरुषान् इब्राहीमं १०
इसहाकं याकूवं प्रति यच्छप्तवान् तदनुसाराद् यूयं तेन स्वकीय- ११
लोकत्वे निरूपिष्यध्वे स च युष्मदीश्वरो भविष्यतीति यं नियमं दिव्यञ्च
युष्माकं प्रभुपरमेश्वरोऽद्य युष्माभिः समं स्थिरयितुम् उद्यतोऽस्ति,
युष्माकं प्रभुपरमेश्वरेण सह तं स्थिरयितुं युष्माकं वंशपतयः प्राचीना १२
अध्यक्षा इस्रायेलीयाः सर्व्वपुरुषा युष्मत्सन्ताना भार्य्या युष्माकं शिवि- १३
रान्तरस्थविदेशिलोकाः काष्ठच्छेदकजलवाहकैः सहिता यूयं सर्व्वेऽद्य
स्वप्रभुपरमेश्वरस्य साक्षात् तिष्ठथ। अहम् इमं नियमं दिव्यञ्च १४
केवलं युष्माभिः सह करोमि तन्न, किन्त्वस्माकं प्रभुपरमेश्वरस्य १५
समक्षम् अस्माभिः सहाद्य वर्त्तमानैरवर्त्तमानैश्च सर्व्वैः सहाद्याहं
नियममेनं करोमि।

मिसर्देशेऽस्माकं प्रवासो नानाजातीयानां मध्येनास्माकं यात्रा च १६
युष्माभि र्ज्ञाता तेषां काष्ठपाषाणरौप्यस्वर्णमया घृणार्हा मूर्त्तयो १७
युष्माभि र्दृष्टाः। अस्माकं प्रभुपरमेश्वरं त्यक्तुं तेषां भिन्नजातीयानां १८
देवान् सेवितुञ्च प्रवृत्तमनाः पुमान् स्त्री परिवारो वंशो वा कोप्यद्य
युष्मन्मध्ये मा भवतु, विषवृक्षस्य नागदमनकस्य वा मूलं युष्मन्मध्ये नोत्-
पद्यताम्। अस्य शापस्य कथां श्रुत्वा कोपि स्वमनोमध्य आत्मानमित्या- १९
शिषं मा वदतु, तृष्णया मत्तस्यापि स्वमनोभिलाषाचलतो मम शुभं
भविष्यति। परमेश्वरस्तं नरं क्षन्तुम् अनिच्छुको भविष्यति, तस्य २०
प्रतिकूलं परमेश्वरः क्रोधाग्निं ज्वालयिष्यति पुस्तकेऽत्र लिखिताः शापाः
सर्व्वे तमाक्रमिष्यन्ति, परमेश्वरो व्योमाधस्तस्य नाम लोप्स्यति। परमे- २१
श्वर एतद्व्यवस्थाग्रन्थे लिखितनियमस्य सर्व्वशापानुरूपम् तस्मायशुभं
दातुम् इस्रायेल्वंशेभ्यस्तं पृथक् करिष्यति। युष्माकं पश्चाद् उत्पन्ना २२
युष्माकं भाविवंशा दूरदेशादागता विदेशिलोकाश्च यदा देशस्यैतस्या-
घातान् परमेश्वरेण कृतानि क्षतानि च गन्धकलवणाच्छन्नां दग्धाम् २३

अनुप्ताम् अनङ्कुरां तृणादिहीनां भूमिञ्च क्रोधात् प्रतापाच्च परमेश्वरेणो-
२४ च्छिन्नसिदोमघमोराग्रासिवोयिमा इवोच्छिन्नां द्रक्ष्यन्ति, तदा ते भिन्न-
जातीयाश्च सर्व्वे इति वक्ष्यन्ति, परमेश्वर एतद्देशं प्रति कुत इत्थं कृत-
२५ वान्? तस्य महाक्रोधज्वलनस्य किं कारणं? तदा त इदं वदिष्यन्ते,
मिसर्देशात् तेषां वहिरानयनकाले तेषां पैतृकः प्रभुपरमेश्वरस्तैः समं यं
२६ नियममकरोत् तं नियमं ते लङ्घितवन्त इतरदेवांश्चानुगतवन्तः सेवित-
२७ वन्तः स्वैरज्ञातान् परमेश्वरादत्तान् देवान् प्रणतवन्तश्च। अत एतत्-
पुस्तके लिखितान् शापान् एनं देशम् आक्रमयितुं तं प्रति परमेश्वर-
२८ क्रोधः प्राज्वलत्। परमेश्वरो महाक्रोधप्रतापकोपैस्तद्देशात् तान्
२९ उत्पाट्य अद्यवद् अन्यदेशे निरक्षिपत्। यद्यद् गुप्तं तद् अस्माकं
प्रभुपरमेश्वरस्य, किन्तु यद्यत् प्रकाशितं तत् सदास्माकम् अस्मद्-
भाविवंशस्य चास्ति, तदनुसाराच्चैतस्या व्यवस्थाया वाक्यान्यस्माभिरा-
चरितव्यानि।

---

## ३० त्रिंशोऽध्यायः।

१ अनुतापकृत्स्वनुग्रहं कर्त्तुम् ईश्वरप्रतिज्ञा ११ स्पष्टम् आज्ञाप्रकाशकथनं १५ लोकानां सम्मुखे मृत्युजीवनस्थापनकथा।

१ एतानि यान्याशीःशापयो र्वाक्यानि युष्मत्सम्मुखे मया स्थापितानि
तानि यदा युष्मान् आश्रयिष्यन्ते, तर्हि स्वप्रभुपरमेश्वरेण दूरीकृता यूयं
२ यत्र वत्स्यथ तत्र भिन्नजातीयानां देशेषु यदि मनोनिधाय प्रभुपरमेश्वरं
प्रति परावर्त्तध्वे, अद्याहं युष्मभ्यं या आज्ञा ददामि तदनुरूपं यदि
३ यूयं युष्माकं वंशश्च स्वान्तःकरणप्राणैः समं तद्वाक्यं गृह्णीथ, तर्हि युष्माकं
प्रभुपरमेश्वरो युष्मान् दयमानो बन्दित्वात् मोचयिष्यति यत्र यत्र स्थाने
येषां जातीयानां मध्ये यूयं तेन विकीर्णास्तस्मात् सर्व्वस्थानात् पुनर्युष्मान्
४ संग्रहीष्यति। यूयं यदि व्योमप्रान्तस्थसीमायां दूरीकृतास्तिष्ठेत तर्हि
५ युष्माकं प्रभुपरमेश्वरस्तस्माद् युष्मान् आनीय संग्रहीष्यति। युष्माकं
पूर्व्वपुरुषा यं देशम् अधिकृतवन्तः, युष्माकं प्रभुपरमेश्वरस्तं देशं युष्मान्
आनेष्यति यूयं तमधिकरिष्यथ, स युष्माकं पूर्व्वपुरुषेभ्यो युष्मभ्यमधिकं
६ शुभं दास्यति युष्मान् वर्द्धयिष्यति च। यूयं यथा स्वान्तःकरणप्राणैः
समं स्वप्रभुपरमेश्वरे प्रीयमाणा जीवथ तदर्थं युष्माकं प्रभुपरमेश्वरो

युष्माकं युष्मद्वंशस्य चान्तःकरणत्वचं छेत्स्यति। युष्माकं प्रभुपरमेश्वरो ७ युष्मद्द्वेष्टृणांकृतताड़नार्त्तरिपून् प्रति तान् शापान् दास्यति। परा- ८ वृत्तमनसो यूयं परमेश्वरस्य वाक्यानि ग्रहीष्यथ, अद्याहं युष्मान् तस्य या आज्ञा आदिशामि ताः पालयिष्यथ। युष्माकं प्रभुपरमेश्वरो युष्मत्- ९ क्षेमार्थं युष्माकं करकृतकर्म्मभि र्देहफलैः पशुफलै र्भूमिफलैश्च युष्मान् वर्द्धयिष्यति। यतः परमेश्वरो युष्माकं पूर्व्वपुरुषानधि यथानन्दं कृतवान् १० तथा शुभं कर्त्तुं युष्मान् प्रत्यपि पुनरानन्दिष्यति। यस्माद् यूयं स्वान्तः- करणप्राणैः समं स्वप्रभुपरमेश्वरं प्रति परावृत्यैतद्व्यवस्थाग्रन्थे लिखितान् स्वप्रभुपरमेश्वरस्य आज्ञाविधीन् पालयितुं तस्य वाक्यानि ग्रहीष्यथ।

अद्याहं युष्मान् यदादिशामि तद् युष्माकं बुद्धेरगम्यं दूरं वा नहि। ११ तत् स्वर्गे स्थितं नहि अतो वयं यथा तत् श्रुत्वा पालयाम एतदर्थम् अस्मत्- १२ कृते कः स्वर्गमारुह्य तद् आनेष्यति इति वाग् युष्माभि र्न गदितव्या। तत् सागरपारे स्थितं नहि, अतो वयं यथा तत् श्रुत्वा पालयाम १३ एतदर्थम् अस्मत्कृते सागरपारं गत्वा कस्तद् आनेष्यतीति वागपि युष्माभि र्न गदितव्या। किन्तु तद्वाक्यं पालयितुं युष्माकं समीपस्थम् १४ अर्थाद् युष्माकं वदने मनसि चास्ते।

पश्यताहमद्य युष्माकं समक्षं जीवनक्षेमं मृत्युक्लेशञ्च निधत्तवान्, १५ यतोऽहमद्य स्वप्रभुपरमेश्वरे प्रेम कर्त्तुं तस्य पथा चलितुं तस्याज्ञावि- १६ धिव्यवस्थाः पालयितुञ्चादिशामि, तदनुरूपम् आचरन्तो यूयं जीविष्यथ वर्द्धिष्यध्वे च, यूयं यं देशम् अधिकर्त्तुं याथ तत्र युष्माकं प्रभुपरमेश्वरो युष्मान् आशिषं वदिष्यति। किन्तु यदि यूयं मनः परावर्त्त्य ममादेशं १७ न गृहीत्वा विपथगामिनो भवथ, इतरदेवान् प्रणमथ सेवध्वे च, तर्ह्यहमद्य युष्मान् ज्ञापयामि यूयं नितान्तं नंक्ष्यथ; यूयं यं देशं १८ प्राप्तुम् अधिकर्त्तुञ्च यर्द्दननदीपारं याथ तत्र युष्माकम् अवस्थितेर्दिनानि न वर्द्धिष्यन्ते। अहमद्य युष्माकं प्रतिकूलं द्यावापृथिव्यौ साक्षिणौ करोमि, १९ अहं युष्माकं सम्मुखे जीवनमृत्यू शापाशिषौ स्थापितवान्। अतो यूयं युष्म- २० द्वंशश्च यथा जीवेत, तदर्थं जीवनं गृह्णन्तः स्वप्रभुपरमेश्वरे प्रेम कुरुत तदाज्ञा आचरत तस्मिन् आसक्तास्तिष्ठत, यतोऽनेन युष्माकं जीवन- दीर्घायुषी स्तः। इति कृते परमेश्वरो युष्मभ्यं यं देशं दातुं युष्माकं पूर्व्व- पुरुषेभ्य इब्राहीम्-इस्हाक्-याकूब्भ्यः शप्तवान् तत्र युष्माकं बहुकालं वासो भविष्यति।

# ३१ एकत्रिंशोऽध्यायः।

१ न भेतुं लोकान् प्रति मूसोनिवेदनं ७ यिहोशूयं प्रति निवेदनं ९ लेवीययाजकान् प्रति व्यवस्थासमर्पणं १४ यिहोशूयं प्रति ईश्वराज्ञा १६ गीतं लेखितुं मूसं प्रति ईश्वराज्ञा २३ यिहोशूयं प्रति आज्ञा २४ लेवीययाजकेषु पुस्तकसमर्पणं २८ प्राचीनानां साक्षात् गीतोच्चारणं।

१ मूसा गत्वा इस्रायेलः सर्व्ववंशाय वाक्यान्येतानि कथितवान् तान्
२ अवदच्च, अहमद्य विंशत्यधिकशतवर्षवयस्को ऽभवम् इतः परं वहिर्यातुम् अन्तरागन्तुं न शक्ष्यामि परमेश्वरो मामवदत् त्वं यर्द्दननदीपारं न
३ यास्यसि। युष्माकं प्रभुपरमेश्वर एव युष्माकम् अग्रे पारं यास्यति स युष्माकं साक्षात् तान् भिन्नजातीयान् नाशयिष्यति यूयं तान् अनधिकारान् करिष्यथ; परमेश्वराज्ञया यिहोशूयो युष्माकमग्रे पारं यास्यति।
४ परमेश्वरो यं सीहोनम् ओगम् इमोरीयानाम् एतौ राजानौ नाशितवान् तौ तयो र्द्देशञ्च प्रति यथाकरोत् एतान् प्रत्यपि तथा
५ करिष्यति। परमेश्वरो युष्माकं करे तान् समर्पयिष्यति तेन यूयं ममादे-
६ शानुसारात् तान् प्रत्याचरिष्यथ। यूयं शक्तिमन्तः साहसिनश्च भवत तेभ्यो मा बिभीत मा त्रस्यत। युष्माकं प्रभुपरमेश्वरः स्वयं युष्माभिः सह यास्यति स युष्मान् न प्रहास्यति न त्यक्ष्यति।

७ ततः परं मूसा यिहोशूयम् आहूय इस्रायेलः सर्व्ववंशस्य साक्षात् तं गदितवान्, त्वं शक्तिमान् साहसी च भव, यतः परमेश्वर एतेभ्यो यं देशं दातुम् एतेषां पूर्व्वपुरुषाणां समीपे शप्तवान् तं देशं त्वमे-
८ वैतान् प्रवेशयिष्यस्यधिकारयिष्यसि च। परमेश्वरः स्वयं तवाग्रे यास्यति तव सहायो भविष्यति स त्वां न हास्यति न त्यक्ष्यति तस्मात् त्वं माभैषी र्मा त्रस्य।

९ अपरं मूसा लिखिता व्यवस्थैषा परमेश्वरनियममञ्जूषावाहकेषु
१० लेवीययाजकेष्विस्रायेलः प्राचीनेषु च समर्पिता। मूसास्तान् इत्या-
११ दिशत् सप्तसप्तवर्षाणां परतः क्षमावर्षाख्ये वत्सर उटजोत्सवे यदा इस्रायेलः सर्व्ववंशः स्वप्रभुपरमेश्वरस्य मनोभिलषितस्थाने तस्य समक्षं समागमिष्यति तदा यूयम् इस्रायेलः सर्व्ववंशसाक्षात् तेषां कर्ण-
१२ गोचरे व्यवस्थामेतां पठिष्यथ। ते ऽर्थात् पुरुषस्त्रीबालका द्वारान्तरस्थ-विदेशिनः सर्व्वे यथा तां श्रुत्वा शिक्षेरन् स्वपरमेश्वरतो भीत्वा व्यवस्थाया एतस्या आज्ञाः पालयितुं यतेरन् तदर्थं यूयं तान् सर्व्वान्

मेलयिष्यथ। तेन युष्माकम् अज्ञानाः सन्तानास्तां श्रोष्यन्ति, यं देशम् १२ अधिकर्त्तुं यूयं यर्द्दननदीपारं याथ, तत्र युष्माकं अवस्थितेः सर्व्वदिनानि स्वप्रभुपरमेश्वरतो भेतुं तैः शिक्षिष्यते।

परमेश्वरो मूससं जगाद पश्य तव मृत्युदिनम् आगतं त्वं यिहोशूयम् १४ आहूय युवां द्वौ समाजावासमुपतिष्ठतम्, अहं तम् आदेक्ष्यामि, ततो मूसोयिहोशूयौ गत्वा समाजावासमुपस्थितौ। परमेश्वरो मेघस्तम्भमध्य १५ आवासे दर्शनं ददौ स मेघस्तम्भ आवासद्वारोपरि स्थितः।

परमेश्वरो मूससं जगाद पश्य स्वपितृलोकैः सह त्वयि शयित एते १६ लोका यं देशं प्रवेष्टुं यान्ति तद्देशीयैरितरदेवैः समं व्यभिचरिष्यन्ति मां त्यक्त्वा स्वैः सह मत्कृतं नियमं लङ्घिष्यन्ते। तदा तान् प्रति मम क्रोधे १७ प्रज्वलिते ऽहं तान् त्यक्ष्यामि तेभ्यः स्वमुखम् आच्छादयिष्यामि च तेन ते मृगरूपाः सन्तो ऽमङ्गलमहाक्लेशरूपै र्ग्रासै र्भक्ष्यन्ते, तदा ते वदिष्यन्ति, अस्माकमीश्वरो ऽस्माकं मध्यवर्त्ती नहीति हेतोः किम् एतान्यमङ्गलान्यस्मान् प्राप्तानि? किन्तु तैरितरदेवान् अनुगम्य यद्यद् अपराद्धं तस्मात् १८ तदाहं तेभ्यो मुखं छादयिष्यामि। अधुना युष्माभिः स्वार्थम् एतद्गीतं १९ लिख्यताम् इस्रायेलवंशश्च त्वया तत् शिक्ष्यतां कण्ठपाठश्च कार्य्यतां तत एतद्गीतम् इस्रायेलवंशप्रतिकूलं मम साक्षि भविष्यति। अहं यं दुग्ध- २० मधुप्रवाहिनं देशं तेभ्यो दातुं तेषां पूर्व्वपुरुषाणां समीपे ऽशपे तं देशं मयानीतास्ते भुक्त्वा तृप्त्वा यदा हृष्टपुष्टा भविष्यन्ति तदेतरदेवान् प्रति परावृत्य तान् सेविष्यन्ते मम नियमम् ऋतीयित्वा लङ्घिष्यन्ते। ततो २१ यदामङ्गलमहाक्लेशास्तान् प्राप्स्यन्ति तदा गीतमेतत् मम साक्षात् तेषां प्रतिकूलं साक्ष्यं भविष्यति यतस्तेषां वंशः कण्ठपाठं गानमिदं न विस्मरिष्यति। अहं यं देशमधि शप्तवान् तं देशं तेषामानयनात् पूर्व्वमधुनैव ते यन्मनःकल्पनायां प्रवर्त्तन्ते तामहं जानामि। ततो मूसास्तद्दिन २२ इदं गीतं लिखित्वा इस्रायेलवंशं शिक्षयामास।

स नूनस्य पुत्रं यिहोशूयम् आदिशन् जगाद त्वं शक्तिमान् साहसी २३ च भव, अहम् इस्रायेल्वंशेभ्यो यं देशं दातुं शप्तवान् तं देशं त्वं तान् नेष्यसि, अहं तव सहायो भविष्यामि।

मूसाः समाप्तिपर्य्यन्तं एतस्या व्यवस्थाया वाक्यानि पुस्तके लिखित्वा २४ परमेश्वरस्य नियममञ्जूषावाहकान् लेवीयान् इत्यादिशत्, यूयम् एनं २५ व्यवस्थाग्रन्थं गृहीत्वा स्वप्रभुपरमेश्वरस्य नियममञ्जूषायाः पार्श्वे स्थापयत २६

१७ तत्र स युष्माकं प्रतिकूलं साक्षिवत् तिष्ठतु। यतो युष्माकमाज्ञालङ्घनत्वम् अवाध्यत्वञ्चाहं जानामि। पश्यताद्य युष्माभिः समं मयि विद्यमाने यूयं परमेश्वरस्याज्ञां लङ्घध्वे, मयि मृते युष्माभिः किं न कारिष्यते?
१८ यूयं स्ववंशप्राचीनान् अध्यक्षांश्च मम समीपे मेलयत, अहं तेषां प्रतिकूलं व्योमपृथिव्यौ साक्षिणीकृत्य तेषां कर्णेषु वाच एताः कथयिष्यामि।
१९ यतो मम मरणात् परं यूयं सर्व्वथा दुष्टा भविष्यथ मयादिष्टपथः पराङ्मुखा भविष्यथ तदहं जानामि। यूयं स्वहस्तनिर्म्मितवस्तुना परमेश्वरं क्रोधयितुं तत्साक्षात् पापं करिष्यथ, तस्मात् शेषे युष्माकम्
२० अशुभं भविष्यति। ततः परं मूसाः समाप्तिपर्य्यन्तम् इस्रायेल्वंशस्य सर्व्वसमाजीयानां कर्णेष्वेतद्गीतवाक्यं कथयितुम् आरेभे।

---

## ३२ द्वात्रिंशोऽध्यायः।

१ गीतस्याभासः ७ गीत ईश्वरानुग्रहस्य वर्णनं १५ लोकानां भाविदोषदृष्टौ ४४ मूसोनिवेदनं ४८ निवोपर्ब्वतमारोढुं मूससं प्रत्याज्ञा।

१ अहं वदामि हे व्योमन् त्वं कर्णेन निशामय।
आकर्णय च हे क्षौणि मदास्यान्निर्गतं वचः।
२ उपदेशो मदीयो हि प्रवर्षिष्यति वृष्टिवत्।
क्षरिष्यन्ति मदीयानि वचनानि सुधीमवत्।
शीकरस्तृणजीवीव शाकसेचकवर्षवत्।
३ अहं प्रचारयिष्यामि नामधेयं परेशितुः।
सङ्कीर्त्तयत यूयञ्च महत्त्वमीश्वरस्य नः।
४ सोऽचलः सिद्धकर्म्मा च सरलः सर्व्ववर्त्मसु।
स सत्यवान् अदम्भी च न्याय्यः सरल ईश्वरः।
५ इमे भ्रष्टा न तत्पुत्राः कलङ्काश्च त आत्मनां।
विमार्गगामिनो वक्रा अन्ववाया भवन्ति ते।
६ हे मूढा ज्ञानहीनाश्च सकला मनुजा इमे।
समाचरथ किं यूयम् ईदृशं परमेश्वरे।
युष्माकं क्रयकर्त्ता स जनकश्च न किं भवेत्।
युष्माकं सृष्टिकर्त्ता स स्थितिकर्त्ता सएव च॥
७ यूयं स्मरत पूर्व्वस्य समयस्य दिनानि हि।

आलोचयत वर्षाणि पैतृकानि गतानि च।
परिपृच्छत युष्माकं पूर्व्वीयपुरुषान् निजान्।
तेन ते कथयिष्यन्ति युष्मभ्यं सकलाः कथाः।
यूयं पृच्छत प्राचीनान् युष्मान् वक्ष्यन्ति तेऽखिलं॥
जातीनामधिकारस्य निरूपणदिने पुरा। ८
यदादमः सुतव्रातः सर्व्वेशेन पृथक् कृतः।
इस्रायेल्वंशसंख्यातो लोकसीमा निरूपिताः।
समाजः परमेशस्य तदीयांशः स एव हि। ९
यतस्तदधिकारो हि भवेत् केवलयाकूबि।
स प्रान्तरे पशुक्रन्दे मरुभूमौ तमाप्तवान्। १०
स तं वेष्टितवान् तस्मै ज्ञानञ्च परिदत्तवान्।
स तं रक्षितवान् स्वस्य नेत्रस्य तारकामिव।
यथा नीडसमीपे हि कुररो जाग्रियात् स्वयं। ११
घूर्णायमानस्तिष्ठेच्च यथा स्वशावकोपरि।
विस्तीर्णपक्षयुग्मेन शावकान् तोलयेत् स च।
पक्षाश्रितान् स्ववत्सान् तु वहन् नयेच्च दूरतः।
तथा परेश एकाकी तान् जनान् परिणीतवान्। १२
तेन साकं तदानीं वै देवः कोऽपि न चेतरः।
उड्डीय स पृथिव्युच्चे गमयामास तान् स्वयं।
क्षेत्रोत्पन्नेन शस्येन स एव तान् अपोषयत्। १३
गिरेर्मधु रवेरद्रेस्तथा तैलमपाययत्।
गव्यं तु नवनीतं हि मेषजानि दधीनि च। १४
पशुशावकमेदांसि मेषान् छागांश्च वाशनः।
भद्रगोधूमचूर्णानि स हि तेभ्यो वितीर्णवान्।
रक्तवर्णं रसं म्रद्वास्तानेव पर्य्यपाययत्॥
स्थूलकलेवरो भूत्वा यिशुरून् प्रत्यहन् पदैः। १५
ते स्थूलदृप्तपीनाश्चाजहन् स्रष्टारमीश्वरम्।
लघुज्ञानम् अकार्षुश्च स्वपरित्राणपर्व्वतं।
स्वपूजितान्यदेवैश्च विरक्तं चक्रिरे हि तं। १६
स्वीयघृण्यक्रियाभिश्च तत्कोपम् उदपादयन्।
भूतेभ्योऽनीश्वरेभ्यश्च ते स्वानुदहजन् बलीन्। १७

ते देवास्तैः पुराज्ञाता नूतना अधुनागताः।
युष्माकं पितृलोकाश्च नाकुर्व्वन् साध्वसं ततः॥
१८ स्वं तातमचलं त्यक्त्वा ते पित्रीशं विसस्मरुः।
१९ इति वीक्ष्य परेशस्तु तेषां चक्रे विनिग्रहं।
विरक्तः स्वीयपुत्राणां पुत्रीणामपि कर्म्मभिः।
२० स चावादीदहं तेभ्यश्छादयिष्ये निजं मुखं।
तेषां शेषदशा का स्यात् तदेवाहं लुलोकिषे।
ते वक्रगामिनो वंशा न विश्वास्याः प्रजाश्च मे।
२१ एते यथा ममोत्तापम् पर्य्यकुर्व्वन्ननीश्वरैः।
मास् अक्लिश्नन् इमे यद्वद् अलीकैः सुरविग्रहैः।
अहमुत्तापयिष्ये तान् अगण्यमानवैस्तथा।
क्लेक्ष्यामि जातिम् एतांश्च प्रोन्मत्तभिन्नजातिभिः।
२२ ज्वलितो मम कोपाग्निः स्थितं नरकमप्यधः।
प्रतप्स्यति धरित्रीञ्च तत्सर्व्वाणि च लोप्स्यति।
मूलानि पर्व्वतानाञ्च स एव संग्रसिष्यति।
२३ सञ्चेष्याम्यहमेतेषाम् अशुभानि शिरःसु वै।
यावन्तश्च शरा मे स्युः सर्व्वान् त्यक्ष्यामि तान् प्रति।
२४ क्षेष्यन्ते ते हि दुर्भिक्षात् मार्य्या नंक्ष्यन्ति ते जनाः।
व्याधीनामपि संघातात् प्रक्षेष्यन्ते तथा मया।
प्रति तान् व्याघ्रदन्तांश्च पन्नगानां विषाणि च।
२५ अन्तर्भीत्या वहिः खड्गैस्तेषां नंक्ष्यन्ति मानवाः।
तरुणाश्च तरुण्यश्च स्तनपाः पलितं गताः॥
२६ रिपोर्दर्पकथाभ्यश्चेत् नाकरिष्यमहं भयं।
तदा तान् ध्वंसयिष्यामि मानवानाञ्च मध्यतः।
तेषां नामापि लोप्स्यामि समवक्ष्यमिदं वचः।
२७ तद् दृष्ट्वा शत्रवस्तेषां नाभ्यज्ञास्यन्त कर्म्म मे।
अवदिष्यंश्च दोषो नः स्वयमेवोन्नतिं गताः।
न परेशेन संसिद्धिं गतान्येतानि सर्व्वशः॥
२८ हतधीजातयस्ते हि विवेकहीनमानुषाः।
२९ हा हा चेत्ते विजानीयु र्बुध्येरंश्च कथामिमां।
यदि शेषदशायास्ते कुर्य्युश्च सद्विवेचनां।

कथं तु द्रावयेद् एको रिपुस्तेषां सहस्रकं। २०
अयुतं वा कथं तेषां पलायेत रिपुद्वयात्।
स्वाद्रिणा चेन्न विक्रीता रुद्धा ईशेन चेन्न ते।
यतो रिपुगणास्तैवास्मदीयस्य विचारणात्। २१
अस्माकं गिरिणा तुल्यस्तेषां कश्चिद् गिरिर्न हि॥
ते सिदोमीयगुल्मिन्या प्रजाता गोस्तनीलताः। ३२
ह्येघोत्पन्ना अमोराया स्तत्फलं विषतुल्यकं।
तिक्तास्तदीयगुच्छाश्च रसस्तेषामहेर्विषं। ३३
निष्ठुरतमसर्पाणां गरलैर्वा समो भवेत्॥
तन्मया सञ्चितं किं न गुप्तञ्च मम कोषके। ३४
दानं फलस्य मत्कर्म्म सूचितं प्रददाम्यहं। ३५
योग्यकाले स्खलिष्यन्ति स्वपदे मनुजा इमे।
विद्यते निकटासन्नं दिनं तेषां भयङ्करं।
मया निरूपिता तेषां तूर्णमेष्यति दुर्गतिः।
यतो विचारयिष्यन्ते परेशेन निजाः प्रजाः। ३६
प्रदर्शयिष्यते तेन दया स्वसेवकान् प्रति।
दौर्ब्बल्यं पश्यता तेषां क्षयञ्च मुक्तबद्धयोः॥
वदिष्यन्ते तु तेनेदं युष्मद्देवा गताः क्व वै। ३७
विश्वासभूमयो ये वो बलिमेदांसि वश्च यैः। ३८
भुक्तानि यैश्च पीतो वो रसो म्द्या निवेदितः।
त उत्थायोपकुर्व्वन्तु भवन्तु युष्मदाश्रयाः॥
पश्यतैकोऽहमेवास्मि विना मां कोपि नेश्वरः। ३९
मृत्युजीवनयो र्दाताहं रोगारोग्ययोरपि।
उद्धर्त्तुं मम हस्ताच्च न हि शक्नोति कश्चन।
उत्तोल्य मत्करं स्वर्गं शपेऽहनमरः सदा। ४०
स्वासिं क्षणप्रभातुल्यं शाणयिष्याम्यहं यदा। ४१
दण्डदाने प्रवृत्तौ च करौ मम भविष्यतः।
तदैवाहं रिपुभ्यो मे दास्ये समुचितं फलं।
ये जना माम् ऋतीयन्ते दण्डयिष्यामि तानपि।
मज्जयिष्यामि मद्बाणान् शोणिते हतबन्दिनोः। ४२
तर्पयिष्यामि खड्गं मेऽरिपते मूर्द्धमेदसा।

४३ हे अन्यजातयो यूयं समं नन्दत तज्जनैः।
स दासरक्तपातस्य प्रतीकारं करिष्यति।
तथा स्वकीयशत्रुभ्य उचितञ्च प्रदास्यति।
स स्वदेशस्वलोकेषु दयाशीलो भविष्यति।

४४ ततो मूसा नूनपुत्रो यिहोशूयश्चागत्य लोकानां श्रवणे गीतमिदं
४५ कथितवन्तौ। मूसा इस्रायेल्वंशस्य समीप एताः कथाः समाप्य तान-
४६ वदत् अहमद्य युष्माकं मध्ये यत् साक्ष्यं दत्त्वाकथयं यूयं तत्सर्व्वं मनःसु
निधाय व्यवस्था एता मन्तुं पालयितुञ्च स्वस्वसन्तानान् आदिशत।
४७ तद्वाक्यं युष्माकं निरर्थकं न हि यत एतेन युष्माकं जीवनं विद्यते
यूयञ्च यं देशम् अधिकर्त्तुं यर्दननदीपारं यास्यथ तत्र युष्माकम् अव-
स्थितेर्दिनानि वाक्येनैतेन बहूनि भविष्यन्ति।

४८ तस्मिन्नेव दिने परमेश्वरो मूससम् अवदत् त्वम् इमम् अवारिमं
४९ गिरिम् अर्थात् मोयाबदेशस्थं यिरीहोसम्मुखस्थं निवोपर्व्वतम् आरुह्य
५० अधिकारार्थं इस्रायेल्वंशाय मद्दास्यमानं किनानदेशं निरीक्षस्व। यथा
तव भ्राता हारोणो होराद्रौ मृत्वा स्वलोकानां समाजे गृहीतस्तथा त्वं
५१ यं गिरिम् आरोक्ष्यसि तत्र मृत्वा स्वलोकानां समाजे ग्राहीष्यसे। यत
इस्रायेलवंशस्य मध्ये युवां सीनप्रान्तरे कादेशस्थमिरीवाजलनिकटे
५२ मदाज्ञां लङ्घितवन्तौ, इस्रायेलवंशमध्ये माम् अवज्ञातवन्तौ। तस्माद्
अहम् इस्रायेलवंशाय यं देशं दास्यामि स स्वनेत्राभ्यां त्वया द्रक्ष्यते,
किन्तु न त्वया प्रवेक्ष्यते।

---

## ३३ त्रयस्त्रिंशोऽध्यायः।

१ ईश्वरमहिमकथा ६ इस्रायेलो द्वादशवंशाय मूसाभविष्यद्वाक्यं।

१ ईश्वरस्य लोको मसाः स्वमृत्युतः पूर्व्वम् इस्रायेल्वंशम् इमा आशिषो
२ जगाद। स उवाच,

परेश्वरः समायातः सीनयाख्यशिलोच्चयात्।
तान् लोकान् प्रति सेयीराद् उदितः स रविर्यथा।
पारणात् पर्व्वतात् तेन निजतेजः प्रकाशितं।
वृतस्य पुण्यलोकानां तदा दशसहस्रकैः।
तेषां कृते करात्तस्य निर्गतो वह्निवद् विधिः।

प्रीयते स स्वलोकेषु स्वभक्तास्तत्कराश्रिताः। ३
तत्पादौ समुपाविश्य गृह्णन्ति मूर्द्ध्नि तद्वचः।
मूसाश्च तं विधिं तस्माद् अस्मभ्यं परिदत्तवान्। ४
याकूबीयसमाजस्य स एव नैत्यिको निधिः॥
कुलीनेषु सभास्थेषु त्विस्रायेलन्वयैः सह। ५
यिशुरूणस्य मध्ये स राजा स्वयमवर्त्तत॥

तदा स रूवेणवंशमधीत्युवाच, ६

संजीविष्यति रूवेणो निधनं न गमिष्यति।
तथापि तस्य लोकानां संख्या स्वल्पा भविष्यति॥

यिहूदावंशमधि स इत्युवाच, ७

यिहूदावंशवाक्यानि संश्रोष्यति परेश्वरः।
समीपं निजलोकानां समानेष्यति तं स हि।
स्वकीयाभ्यां कराभ्यां स तत्साहाय्यं करिष्यति।
रक्षणात् तस्य शत्रुभ्य उपकारं करिष्यति॥

लेविवंशमधि सोऽवदत्, ८

त्वया पुरा मसायां हि कृतं यस्य परीक्षणं।
तोयान्तिके मिरीवायाः सार्द्धं येन विरोधितं।
तेन पुण्यवता लब्धे त्वदीयदीप्तिसिद्धते।
पितरं स्वं न जानेऽहं मातरञ्चेति वक्ति सः। ९
न मन्यते स्वसन्तानान् सहजान् स्वीकरोति न।
अवद्भिस्तव वाक्यानि रक्षद्भिर्नियमं तव। १०
तैरेवादेक्ष्यते याकूवन्वयस्तावकान् विधीन्।
इस्रायेलं व्यवस्थाञ्च शिक्षयिष्यन्ति ते तव।
समक्षं तव धूपस्ते वेद्याञ्च दास्यते बलिः।
परेश आशिषं तेषां सम्पत्तिं प्रति वक्ष्यति। ११
तेषां करकृतैः कार्य्यैः सन्तोषं स प्रयास्यति।
तेषां द्वेषाकृच्छत्रूणां कटिभङ्गं करिष्यति।
तेन ते न हि शक्ष्यन्ति समुत्थातुं कदाचन॥

स विन्यामीन्वंशमधि कथितवान्, १२

निष्प्रत्यूहं परेशस्यान्तिके वत्स्यति तत्प्रियः।
रक्षिष्यति परेशस्तं नित्यं तत्सन्निधौ वसन्॥

१३ स यूषफ्वंशमधि कथितवान्,

सुधीम उत्तमो व्योम्नोऽधोविस्तृतो जलाशयः।

१४ फलानि सूर्य्यपक्वानि मासैः पक्वफलानि च।

१५ पुरातनाद्रिजातानि चिरशैलोद्भवानि च।

१६ मह्या उत्तमवस्तूनि सर्व्वस्थानोद्भवानि हि।

एतैः परेश्वरात् तस्य देशः शुभमवाप्स्यते॥

भ्रातृभ्यो यः पृथग् यूषफ् तस्य वंशस्य मस्तके।

भवितानुग्रहः स्तम्बे वासिन ईश्वरस्य हि।

१७ महोत्तस्य बलं यद्वत् तदीयं तादृशं बलं।

शृङ्गिनः शृङ्गवत्तस्य भवेत् शृङ्गद्वयं किल।

अयुतम् इफ्रयिम्सैन्यं सहस्रं मिनशेस्र तत्।

स तेन धरणीसीमास्थितलोकान् हनिष्यति॥

१८ स सिवूलून्वंशमधि कथितवान्,

नन्दिता सिवुलून् लाभाद् शिविरेभ्यः इषाखरः।

१९ तौ निमन्त्र्य जनान् अद्रौ धर्म्मबलीन् प्रदास्यतः।

अब्धिद्रव्याणि भोक्ष्येते धनञ्च गुप्तसैकतं॥

२० गादवंशमधि स कथितवान्,

गादविस्तारको धन्यः सिंहीव शयिता च सः।

मृगाणां बाहुशीर्षे च खण्डं खण्डं करिष्यति॥

२१ देशस्य प्रथमांशं स निजार्थं परिदृष्टवान्।

तत्राधिकारस्तस्याभूत् विधायकनिरूपितः।

तथापि हि स लोकानाम् अग्रतः परिगच्छति।

न्याय्यं यत् परमेशस्य यच्च तेन निरूपितम्।

इस्रायेलीयवंशाय प्रसाधयति तत्तु सः॥

२२ दानवंशमधि स कथितवान्,

वाशनो लम्फकर्त्ता च दान्वंशः सिंहवत्सवत्॥

२३ नप्तालिवंशमधि स कथितवान्,

नप्ताल्यनुग्रहात् तृप्त आशीःपूर्णः परेशितुः।

प्रतीचीं दक्षिणाञ्चैव दिशावधिकरिष्यति॥

२४ आशेर्वंशमधि स कथयामास,

आशिषं प्राप्त आशेरो भविष्यति बहुप्रजः।

तैलाक्तचरणो भावी भ्रातृभिश्च ग्रहीष्यते।
तस्यार्गलं लोहमयं पैत्तलञ्च भविष्यति। २५
यादृशञ्च दिनं तस्य तादृक् शक्ति र्भविष्यति॥
यिस्रूरूणीशसंकाशो देवः कोपि न विद्यते। २६
साहाय्यं तव कर्त्तुं स आरूढो नभसो रथं।
आयाति चान्तरीक्षेण स्वमहामहिमान्वितः।
हे इस्रायेल् अनादिः स ईश्वरव तवाश्रयः। २७
सदास्थितौ च तद्बाहू तवालम्बस्वरूपकौ।
स तव सम्मुखात् सर्व्वान् रिपून् दूरान् करिष्यति।
विनश्यन्तु च ते सर्व्वे इत्यमाज्ञापयिष्यति।
इस्रायेल्वंश एकाकी सुखं वत्स्यति नीरिपुः। २८
शस्याढ्यां मद्विकाढ्याञ्च याकूब् भ्रत्स्यति स्वक्षितिं।
वियतस्तत्कृते नित्यं सुषीमः संचरिष्यति॥
इस्रायेल्वंश धन्यस्त्वं के सन्ति सदृशास्तव। २९
त्वमेव परमेशेन रक्षिता जातिरेकिका।
स खड्गस्ते प्रभाकारी फलकश्च तवोपकृत्।
तव शत्रुगणाः सर्व्वा भविष्यति वशे तव।
उच्चस्थानैश्च तेषां त्वं करिष्यसि गमागमौ॥

---

# ३४ चतुस्त्रिंशोऽध्यायः।

१ मूससो देशावलोकनं ५ तस्य मरणं ९ यिहोशूयस्य तत्पदप्राप्तिः १० मूससः सुख्यातिश्च।

मूसा मोयावप्रान्तरात् निवोपर्व्वतम् अर्थात् यिरीहोसम्मुखस्थं पिस्गाशिखरं आरोहत्। परमेश्वरो गिलियदमारभ्य दानं यावत् सर्व्वं देशं सर्व्वं नप्तालिम् इफ्रयिमो मिनशेश्च देशं प्रतीचीस्थसिन्धुं यावत् यिहूदासर्व्वदेशं सर्व्वं दक्षिणदेशं सोयरं यावत् प्रान्तरमर्थात् तालतरुनगरस्य यिरीहोस्तलभूमिञ्च तं दर्शितवान्। परमेश्वरस्तमवदत् अहं तव वंशाय देशमिमं दास्यामीति यं देशमधि इब्राहीम्-इस्हाक्-याकूबां समीपे प्रत्यजानां तं देशं त्वाम् अदर्शयं किन्तु त्वं तत्र न यास्यसि। १ २ ३ ४

५ परमेश्वरस्य दासो मूसाः परमेश्वरस्य वाक्यानुसारात् तत्र मोयाब्देशे
६ ममार। स बैत्पियोरसम्मुखस्थायां मोयाब्देशस्थिततलभूमौ तस्य
७ श्मशानं कृतवान् तत्स्थानमद्यापि कोपि न वेत्ति। मूसा विंशत्यधिकश-
तवर्षवयसि मृतवान् तथापि तस्य नेत्रे क्षीणे न जाते तस्य स्वाभाविक-
८ बलस्य ह्रासो नाभूत्। इस्रायेल्वंशा मूससोऽर्थं मोयाब्प्रान्तरे त्रिंशद्-
दिनानि शुशुचुः, ततो मूससोऽर्थं तेषां रोदनशोचनदिनानि पूर्णानि।
९ मूसा नूनसुतयिहोशूयस्य गात्रे करमार्पयत् तस्माद् यिहोशूयो ज्ञान-
दायिनात्मना पूर्ण आसीत्। ततो मूससं प्रति परमेश्वराज्ञया तस्य
वाचि इस्रायेल्वंशो मनो निवेश्य सर्व्वकर्म्म चकार।
१० किन्तु मिसर्देशे फिरौणं तस्य सर्व्वदासान् सर्व्वदेशान् प्रति यद्यत्
११ कर्त्तुं मूसाः परमेश्वरेण प्रेषितस्तैः सर्व्वलक्षणैश्चित्रकर्म्मभिः सर्व्वस्रायेल्वं-
शस्य दृष्टौ प्रकाशितेन महाप्रबलकरेण कृतसर्व्वमहाभयङ्करकर्म्मणा च
१२ मूससस्तुल्यः कोपि भविष्यद्वक्ता नेस्रायेल्वंशेऽजायत, यतः परमेश्वरस्तस्य
सम्मुखी भवन् तं समभाषत। इति।

---

# यिहोशूयपुस्तकं।

## १ प्रथमोऽध्यायः।

१ यिहोशूयं प्रति परमेश्वरस्य कथनं १० लोकान् प्रति यिहोशूयस्य कथनं १६ यिहोशूयं प्रति लोकानां स्वीकारो निवेदनञ्च।

१ परमेश्वरसेवकस्य मूससो मरणात् परं परमेश्वरो नूनस्य पुत्त्रं यिहो-
२ शूयनामानं मूससः सेवकं जगाद, मम सेवको मूसा मृतः, इदानीं
त्वमुत्तिष्ठ लोकैरेतैः सह सरितमेतां यर्द्दनमुत्तीर्य्य तेभ्य इस्रायेलो वंश-
३ भ्योऽहं यं देशं दास्यामि तं प्रति यात्रां कुरु। यत्र यत्र स्थाने यूयं
पदमर्पयिष्यथ तानि सर्व्वस्थानान्यहं मूससं प्रति स्ववाक्यानुसाराद्
४ युष्मभ्यं दास्यामि। एतौ प्रान्तरलिबानोनावारभ्य फरातारव्यां महा-
नदीं यावत् सूर्य्यास्तयानदिशि महासागरञ्च यावत् हित्तीयानां सर्व्व
५ देशा युष्माकं सीमानो भविष्यन्ति। तव यावज्जीवनं त्वत्सम्मुखे स्थातुं

केनापि रिपुणा न शक्ष्यते, यथाहं मूससा सार्द्धमासं तथा त्वया सार्द्धं स्थास्यामि त्वां न त्यक्ष्यामि न त्वां हास्यामि। त्वं शक्तिमान् उत्साहवांश्च ६ भव यत एतेभ्यो यं देशं दातुम् एतेषां पूर्व्वपुरुषाणां समीपेऽहं शप्तवान् तं त्वमेतल्लोकान् अधिकारयिष्यसि। अतस्त्वं शक्तिमान् अत्युत्साहवांश्च सन् ७ सावधानपूर्व्वकं मत्सेवकमूससादिष्टसमस्तव्यवस्थानुसारात् कर्म्म कुरु तद्व्यवस्थामार्गाद् दक्षिणस्मै वामाय वा न परावर्त्तस्व तेन यत् किञ्च-नोपक्रमिष्यसे, तत्र कृतार्थो भविष्यसि। इमं व्यवस्थाग्रन्थं निरन्तरं ८ कण्ठे कुरु तन्मध्ये लिखितं सर्व्वादेशमाचरितुं दिवानिशं तमालो-चय, तेन त्वं यद्यद् उपक्रमिष्यसे तस्मिन् कृतार्थो भविष्यसि तव कार्य्यञ्च संसेत्स्यति। अपरमहं किं त्वां नाज्ञापयं त्वं शक्तिमान् उत्साह- ९ वांश्च भव भीतो निराशश्च माभूः, यतस्त्वं यद्यद् उपक्रमिष्यसे तस्मिन्नेव तव प्रभुः परमेश्वरस्तव सहायो भविष्यति।

तेन यिहोशूयो लोकानामध्यक्षान् आज्ञापयत् यूयं शिबिरस्य मध्येन १० गत्वा लोकानिति वाचं वदत यूयं स्वेषां कृते पाथेयसामग्रीन् ११ आसादयत यतो युष्माकं प्रभुः परमेश्वरो यं देशमधिकर्त्तुं युष्मभ्यं दास्यति तं देशं प्रविश्याधिकर्त्तुं दिनत्रयमध्ये युष्माभिरिमां यर्दन-सरितम् उत्तीर्य्य यातव्यं। ततो यिहोशूयो रूबेणवंशं गादवंशं मिन- १२ शिरर्द्धवंशञ्च गदितवान् यूयं परमेश्वरसेवकस्य मूसस आज्ञां स्मरत, १३ युष्माकं प्रभुः परमेश्वरो युष्मभ्यं विश्रामस्थानार्थम् एतं देशं दत्तवान्। अधुना युष्माकं योषितो बालकाः पशवश्च मूससा दत्ते यर्दनस्यावा- १४ रस्थिते देशे तिष्ठन्तु, किन्तु यूयम् अर्थाद् वीरत्ववन्तः सर्व्वे जनाः सज्जमानाः स्वस्वभ्रातृणामग्रे गच्छन्तस्तान् उपकुरुत। पश्चात् परमे- १५ श्वरेण युष्मभ्यमिव युष्माकं भ्रातृभ्यो विश्रामे दत्ते प्रभुपरमेश्वरेण दत्ते देशे च तैरधिकृते यूयं यर्दनावारे सूर्य्योदयदिशि परमेश्वरस्य सेवकमूससा दत्तमधिकर्त्तव्यं देशं परावृत्यागत्य तं भोक्ष्यथ।

तेन ते यिहोशूयमवदन् त्वया यद्यद् आदिष्टं तत् सर्व्वं वयं १६ करिष्यामः त्वमस्मान् यत् स्थानं प्रहेष्यसि तत् स्थानं यास्यामः। वयं यथा मूससो वाक्यानि गृहीतवन्तस्तथैव तव वाक्यानि ग्रहीष्यामः, १७ तव प्रभुः परमेश्वरो यथा मूससा सहावर्त्तत तथा त्वयापि सह वर्त्ततां। यः कश्चित् तवाज्ञां लङ्घते त्वयाज्ञापिते वचसि मनो न निवेशयति स १८ हानिष्यते, त्वं शक्तिमान् उत्साहवांश्च भव।

# २ द्वितीयोऽध्यायः।

१ शिटीमाद् द्वयोश्चारयो र्देशनिरीक्षणार्थं प्रेषणं वेश्यया राहवा तच्चारयोर्ग्रहणं ८ चाराभ्यां सह राहवो नियमकरणं २३ चारयोः पुनरागमो वार्त्ताकथनञ्च।

१ अनन्तरं नूनस्य पुत्रो यिहोशूयो द्वौ चारौ शिटीमाद् गुप्तं प्रहितवान् तौ चेदम् उक्तवान् युवां गत्वा देशं यिरीहो नगरञ्च निरीक्षेथां, २ तेन तौ गत्वा राहवाख्याया वेश्याया गृहं प्रविश्य तत्राशयातां। किन्तु पश्य श्वो रात्रौ देशं निरीक्षितुम् इस्रायेल्वंशस्य द्वौ चारावत्रायातौ ३ वच इदं यिरीहो नृपस्य कर्णगोचरीभूतं। ततः स यिरीहोऽधिपो दूतै राहवम् इत्याज्ञापयत्, यौ जनौ त्वामुपेत्य तद्गेहं प्रविष्टासाते ४ तौ वहिष्कृत्यानय यतस्तौ सर्व्वं देशं निरीक्षितुमागतौ। सा योषित् तौ जनौ गोपयित्वावादीत् तौ जनौ मामुपागताविति सत्यं किन्तु ५ तौ कुत्रत्याविति मया न ज्ञातं। नगरद्वाररोधकाले ऽन्धकारे सति तौ वहिर्गतौ किन्तु क्व गताविति मया न ज्ञायते यूयं तूर्णं तयोः पश्चाद् ६ गच्छत तेन तौ धरिष्यथ। किन्तु सा वेश्या तौ स्वगेहपृष्ठमानीय तत्र ७ राशीकृतकार्पासैः संगोप्य निदधे। पश्चाद् दूता यर्द्दनमार्गेण पारावार-घट्टपर्य्यन्तं तयोः पश्चाद् गताः, तयोः पश्चाद्गामिनां वहिर्भवनमात्रं लोका नगरद्वारमरुन्धन्।

८ अनन्तरं तयोश्चारयोः शयनात् पूर्व्वं सा वेश्या गृहपृष्ठे तावुपागत्य ९ ताववदत् ईश्वरोऽस्मद्देशं युष्मभ्यमदात् तदहं जानामि युष्मत्तो ऽस्माकं १० भीति र्जाता देशवासिनश्च सर्व्व उद्वेगं गताः। यतो मिसरो युष्माकं वहिरागमनकाले परमेश्वरो युष्माकं सम्मुखे केन प्रकारेण सूफाब्धे-स्तोयान्यशोषयत् यूयं यर्द्दनः पारे स्थितानाम् इमोरीयाणाम् सीहोनोगनामानौ द्वौ नृपौ प्रति कथं व्यवहृत्य तौ निःशेषं व्यनाशयत तद-११ स्माभिः श्रुतं। श्रवणमात्रादस्माकं हृदयं व्याकुलितं युष्मत्कृते कस्यापि मनसि साहसो नोदेति यतो युष्माकं प्रभु र्यः परमेश्वरः स एव स्वर्गपृथि-१२ व्योरीश्वरः। अत इदानीं विनयेऽहं युवां मयोपकृतौ, अतः कारणाद् युवामपि मत्पितु र्निवेशनमनुग्रहीष्यथः परमेश्वरस्य नाम गृहीत्वा १३ शपथमिमं कुरुतं। युवां मम पितरं मातरं भ्रातॄन् भगिनीश्च तेषां सर्व्वस्वञ्च रक्षिष्यथो मरणादस्माकं प्राणान् उद्धरिष्यथ एतदर्थं सत्य-१४ चिह्नमेकं मह्यं दत्तं। तेन तौ प्रत्यवदतां यदि युवयमावयोरिदं कार्य्यं न

प्रकाशयेत तर्हि युष्माकं प्राणानां विनिमयेनावयोः प्राणा भविष्यन्ति, यदा परमेश्वरोऽस्मभ्यं देशं दास्यति तदावां त्वय्यनुग्रहं सत्यञ्चा-चरिष्यावः। ततः सा वातायनद्वारेण रज्ज्वा ताववारोहयत् १५ यतस्तस्या निवेशनं नगरस्य भित्तावासीत् सा प्राचीरे न्यवसत्। सा १६ तावददत् पश्चाद्गामिनो जना यथा युवां न धरेयुस्तदर्थं युवां गिरिमाश्रित्य दिनत्रयं गुप्तौ तिष्ठतं तदनन्तरं पश्चाद्गामिलोकेषु परा-वृत्यागतेषु युवां स्वमार्गेण चलिष्यथः। तेन तौ तामवदतां त्वमावां यं १७ शपथमकारयस्तत्रावां निरपराधौ भविष्यावः। पश्य यद्रक्तरज्ज्वावां १८ त्वयावरोहितौ तामेव रज्जुम् अस्माकमेतद्देशागमनकाले वातायने भंक्ष्यसि तव पितरौ भ्रात्रादीन् पितुः सर्व्वपरिवारान् स्वनिवेशन-मध्ये संग्रहीष्यसि। तेन यः कश्चित् तव निवेशनद्वारात् मार्गं निर्गच्छति १९ तद्रक्तपातापराधस्तस्यैव शिरसि भविष्यति, आवां निर्दोषौ भविष्यावः यश्च सार्द्धं त्वया निवेशनमध्ये स्थास्यति तस्मिन् यदि कश्चिद् हस्तम-र्पयिष्यति तर्हि तस्य रक्तपातापराध आवयोः शिरसो भविष्यति। किन्तु यदि त्वम् आवयोरिदं कार्य्यं प्रकाशयसि तर्हि त्वमावां यं शप- २० थमकारयस्तस्माद् आवां मुक्तौ भविष्यावः। ततः सावादीद् युवयो २१ र्वाक्यानुसारात् तथैव भवतु पश्चात् तया विसृष्टौ तौ प्रतस्थाते सा च तां रक्तरज्जुं वातायनेऽबध्नात्। अनन्तरं तौ गत्वा गिरिमाश्रित्य २२ पश्चाद्गामिनां पुनरागमनपर्य्यन्तं दिनत्रयं न्यवसतां तेन पश्चाद्गामिनो जनाः सर्व्वमार्गेषु तावन्विष्य कुत्रापि तयोरुद्देशं न लेभिरे।

तदनन्तरं तौ चारौ परावृत्य पर्व्वतादवरुह्य पारं गत्वा नूनपुत्रं २३ यिहोशूयं जग्मतुः स्वौ प्रति यद्यद् अघटत तत् सर्व्वम् आचख्यतुश्च। तौ २४ यिहोशूयम् ऊचतुः, परमेश्वर एतान् सर्व्वदेशान् अस्माकं करेषु समार्प-यदिति सत्यं, यत एतद्देशनिवासिनः सर्व्वे अस्मत्कारणाद् उद्वेगं प्राप्ताः।

## ३ तृतीयोऽध्यायः।

१ यर्द्दननदीतटे यिहोशूयस्योपस्थितिः ७ यिहोशूयाय परमेश्वरस्याश्वासदानं ९ लोकेभ्यो यिहोशूयस्याश्वासदानं १४ सरित्तोयस्य भिन्नत्वं।

अनन्तरं यिहोशूयः प्रत्यूष उत्थाय इस्रायेलः सर्व्ववंशेन समं शिटी- १ माद् यात्रां कृत्वा यर्द्दननदीकूलं प्राप्य पारमगत्वा तत्र यामिनीं यापि-

२ तवान्। दिनत्रयात् परं सेनापतयः शिविरमध्येन गच्छन्तो लोकान्
३ इत्याज्ञापयन् यदा यूयं स्वप्रभोः परमेश्वरस्य नियममञ्जूषां तद्वाहिनो लेवीययाजकांश्च द्रक्ष्यथ तदा स्वस्वस्थानाद् उत्थाय तत्पश्चाद्
४ गमिष्यथ। किन्तु तस्या युष्माकञ्च मध्ये द्विसहस्रहस्ता भूमयो व्यवहिताः स्थास्यन्ति यूयं तस्याः सविधा न भविष्यथ, तेन यूयं गन्तव्यपथं
५ ज्ञातुं शक्ष्यथ, यतो यूयं पूर्व्वं तेन मार्गेण कदापि नागच्छत। पश्चाद् यिहोशूयो लोकान् अवदत् श्वः परमेश्वरो युष्माकं मध्य आश्चर्य्याणि
६ कर्म्माणि विधास्यति, अतएवं यूयं स्वान् पवित्रीकुरुत। यिहोशूयो याजकान् आज्ञापयत्, यूयं नियममञ्जूषाम् आदाय लोकानाम् अग्रेऽग्रे पारं यात तेन ते नियममञ्जूषां गृहीत्वा लोकानाम् अग्रेऽग्रे गतवन्तः।
७ तदा परमेश्वरो यिहोशूयम् अवदत् अहं यथा मूससा सार्द्धम् आसं त्वया सार्द्धमपि तथास्मीति यद् इस्रायेल्वंशा जानीयुस्तदर्थमहम्
८ अद्यारभ्य तेषां सर्व्वेषां साक्षात् त्वां महान्तं करोमि। त्वं नियममञ्जूषावाहिनो याजकान् इत्याज्ञापय यूयं यर्द्दनसरितो जलं प्राप्य तत्र यर्द्दनमध्ये तिष्ठत।
९ ततो यिहोशूय इस्रायेल्वंशं जगाद यूयमत्रागत्य स्वप्रभोः परमे-
१० श्वरस्य वाक्यानि शृणुत। यिहोशूयः पुनरवदत्, अमरः परमेश्वरो युष्माकं मध्ये वर्त्तते युष्माकं सम्मुखात् किनानीय-हित्तीय-हिव्वीय-पिरिषीय-गिर्गाशीय-इमोरीय-यिबूषीयलोकान् दवयिष्यतीति यूयम्
११ एतेन ज्ञातुं शक्ष्यथ। पश्यत सर्व्वजगतः स्वामिनो नियममञ्जूषा युष्माकम्
१२ अग्रेऽग्रे यर्द्दनं प्रवेक्ष्यति। यूयम् इस्रायेल एकैकवंशाद् एकैकं जनमित्थं
१३ द्वादशवंशेभ्यो द्वादश जनान् गृह्णीत। सर्व्वजगतः स्वामिनः परमेश्वरस्य नियममञ्जूषावाहिनां याजकानां पदतलै र्यर्द्दनतोयस्पर्शमात्राद् यर्द्दनतोयानि प्रच्छेत्स्यन्ते, ऊर्द्धस्थानाद् आगच्छन्ति तोयानि राशिवत् स्थास्यन्ति।
१४ यर्द्दनः पारं यातुं लोकेषु स्वशिविरेभ्यः प्रस्थितेषु याजकेषु च लोका-
१५ नाम् अग्रेऽग्रे नियममञ्जूषां वहत्सु यदा मञ्जूषावाहिभिर्यर्द्दनसरिति प्राप्तायां मञ्जूषावाहिनां याजकानां चरणानि जलेऽमज्जन्, तदा या यर्द्दननदी शस्यच्छेदनस्य सर्व्वकालं यावत् सर्व्वं तटमाक्रम्य पूर्णास्ति,
१६ तस्या ऊर्द्धस्थानाद् आगच्छन्ति तोयानि सर्त्तनस्य समीपस्थं आदम्-पुरमारभ्य विदूरे राशिवद् उत्थाय तस्थुः, प्रान्तरीयजलधिम् अर्थात् लवणजलधिं प्रति गच्छन्ति तोयानि च प्रच्छिन्नानि क्षयं प्रापुः, तेन

लोका यिरीहोः सम्मुखे पारं गताः। किन्तु यावत् सर्व्वे जना निःशेषं १७
पारं नागमन् तावत् परमेश्वरस्य नियममञ्जूषावाहिनो याजका यर्द्दनो
मध्ये शुष्कभूमौ स्थिरा अतिष्ठन् तेन सर्व्वे इस्रायेलवंशाः शुष्कभूम्या
पारं जग्मुः।

## ४ चतुर्थोऽध्यायः।

१ यर्द्दनो द्वादशप्रस्तरग्रहणं यर्द्दनि तदन्यद्वादशप्रस्तरस्थापनं १४ लोकानां पारयानकथनं १९ गिल्गले चिह्नार्थं तद्द्वादशपाषाणस्थापनं।

इत्थं लोकेषु निःशेषं पारं गतेषु परमेश्वरो यिहोशूयं जगाद, १
लोकानाम् एकैकवंशाद् एकैको जन एतादृशा द्वादश जना युष्माभि र्गृह्य- २
न्ताम् इत्याज्ञाप्यन्ताञ्च यत्र याजकानां चरणाः स्थिरा आसन् यर्द्दन- ३
स्तस्मात् मध्यस्थानाद् यूयं द्वादशपाषाणान् आदाय स्वैः सार्द्धं पारम्
आनयत, अद्य रजन्यां यूयं यत्र प्रवत्स्यथ तत्र रात्रिप्रवासस्थाने
तान् स्थापयत। तेन यिहोशूय इस्रायेल्वंशस्यैकैकवंशाद् एकैको जन ४
इत्थं द्वादश जनान् निश्चित्याह्वयत्, तांश्चेदम् आज्ञापयत् यूयं स्वप्रभोः ५
परमेश्वरस्य मञ्जूषाया अग्रं गत्वा यर्द्दनो मध्यं यात, इस्रायेल्लोकानां
वंशसंख्यानुसाराद् एकैको जन एकैकं पाषाणं स्कन्धे गृह्णीत तेन युष्माकं
मध्ये तदेव चिह्नं स्थास्यति। भाविकाल एते पाषाणाः किङ्कारणा ६
इति स्वसन्तानैः पृष्टा यूयं तान् प्रतिवदिष्यथ, परमेश्वरस्य नियम- ७
मञ्जूषासम्मुखे यर्द्दनो नीराणि प्रच्छिन्नानि, तस्या यर्द्दनः पारयानकाले
यर्द्दनोऽम्बूनि छिन्नानि प्रस्तरा इमे सर्व्वदा इस्रायेल्वंशस्य तत्स्मा-
रकाः। पश्चाद् यिहोशूयो यथाज्ञापयत् तथैवेस्रायेलीयलोकाश्चक्रुः, ८
यिहोशूयं प्रति परमेश्वरस्य वाक्यात् तैरिस्रायेलो द्वादशवंशानुसाराद्
यर्द्दनसरितो मध्याद् द्वादश प्रस्तरा उत्तोलिताः स्वैः सार्द्धञ्च पारमानीता
रात्रिप्रवासस्थाने स्थापिताश्च। यर्द्दनो मध्ये यत्र नियममञ्जूषावाहि- ९
याजकानां पदाः स्थिरा आसन् तत्र यिहोशूयो द्वादश पाषाणान्
स्थापितवान् अद्यापि ते तत्रासते। यिहोशूयं प्रति मूसस आज्ञानु- १०
सारात् लोकान् यद्यद् आदेष्टुं परमेश्वरो यिहोशूयम् आज्ञापयत्
तत्सिद्धिं यावत् मञ्जूषावाहिनो याजका यर्द्दनो मध्ये स्थिता लोकाश्च
शीघ्रं पारं गताः। सर्व्वेषु लोकेषु पारं गतेषु परमेश्वरस्य मञ्जूषा ११
याजकाश्च लोकानां साक्षात् पारं गताः। रूबेणवंशो गादवंशो १२

मिनश्शेरर्द्धवंशस्य मूससो वाक्यानुसारात् सज्जमाना इस्रायेल्वंशा-
१२ नामग्रेऽग्रे पारं गताः। अर्थाद् योद्धुं चत्वारिंशत् सहस्राणि सज्जमाना
लोका यिरीहोः प्रान्तरे परमेश्वरस्य सम्मुखे पारं गताः।
१४ तद्दिने परमेश्वरः सर्व्वेस्रायेल्वंशस्य साक्षाद् यिहोशूयं महान्तं
चकार, तेन लोका यावज्जीवं यथा मूससमाद्रियन्त यिहोशूयमपि तथा-
१५ द्रियन्त। परमेश्वरो यिहोशूयम् अवादीत् त्वं साक्ष्यमञ्जूषावाहिनो
१७ याजकान् यर्द्दन उत्थायागन्तुम् आज्ञापय। तेन यूयं यर्द्दन उत्थाया-
१८ गच्छतेति वचसि यिहोशूयेन याजकान् आज्ञापिते यर्द्दनमध्याद् उत्था-
यागच्छतां परमेश्वरस्य नियममञ्जूषावाहिनां याजकानां पदतलेन यदा
शुष्कभूमिः स्पृष्टा तदा यर्द्दनो जलानि स्वस्थानमागत्य पूर्व्ववत्
सर्व्वतीरम् आक्रमन्त।
१९ इत्थं लोकाः प्रथममासस्य दशमदिवसे यर्द्दन्नदीपारं गत्वा यिरीहोः
पूर्व्वसीम्नि गिल्गले शिविरं स्थापयामासुः।
२० पुन र्यिहोशूयो यर्द्दनो मध्यात् तैरानीतान् तान् द्वादशप्रस्तरान्
२१ गिल्गले स्थापयामास। स इस्रायेल्वंशं जगाद एतत्पाषाणाः किङ्का-
२२ रणा इति भाविकाले यदा युष्माकं सन्तानाः स्वस्वपितॄन् प्रक्ष्यन्ति तदा
यूयं स्वसन्तानान् वदिष्यथ, इस्रायेल्वंशाः शुष्कभूम्या यर्द्दननदीपारम्
२३ आगताः। यतो युष्मत्प्रभुः परमेश्वरो ऽस्माकं पारयानपर्य्यन्तं यथा
सूफ्सागरं शुष्कीकृतवान् तथा यूयं यावत् पारं न गतास्तावद्
युष्माकं प्रभुः परमेश्वरो युष्माकं सम्मुखे यर्द्दनो नीरं शुष्कीचकार।
२४ अतः परमेश्वरस्य करो पराक्रान्ताविति पृथिवीस्थैः सर्व्वलोकै र्ज्ञातव्यं
युष्माभिश्च सदा स्वप्रभोः परमेश्वराद् भेतव्यं।

---

## ५ पञ्चमोऽध्यायः।

१ किनानीयानां भयकथनं २ त्वक्छेदनकथनं १० निस्तारपर्व्वपालनकथनं १२ मान्नाशेषः १३ परमेश्वरस्य सेनापते र्यिहोशूयं प्रति प्रकाशितत्वं।

१ अपरं वयं यावत् निःशेषं पारं नागतास्तावत् परमेश्वर इस्रा-
येल्वंशस्य सम्मुखे यर्द्दननदीं शुष्कीकृतवान् इति वाग् यदा यर्द्दनः
पश्चिमदिशि स्थितैरिमोरीयन्दैर्ज्जलधिसमीपस्थकिनानीयन्दैश्च श्रुता
तदा ते व्याकुलितचित्ता इस्रायेल्वंशाद् उत्साहहीनाश्चाभवन्।

तदा परमेश्वरो यिहोशूयं जगाद त्वं तीक्ष्णास्त्राणि निर्म्माय द्वितीयवारम् इस्रायेल्वंशस्य त्वक्छेदं कुरु। तेन यिहोशूयस्तीक्ष्णास्त्राणि निर्म्माय त्वगिराविस्रायेल्वंशस्य त्वचश्छेदयामास। यिहोशूयेन त्वक्छेदस्य कारणमिदं, मिसर्देशाद् आगतसर्व्वलोकानां मध्ये यावन्तः पुरुषा योद्धार आसन् ते सर्व्वे मिसरान्निर्गमनमार्गेऽर्थात् प्रान्तरे मृताः। निर्गताः सर्व्वे लोकाश्छिन्नत्वच आसन्, किन्तु मिसरादागमनात् परं ये ये मार्गे प्रान्तरेऽजायन्त तेषां त्वक्छेदः केनापि न कृतः। यतो मिसरादागतानां सर्व्वसैन्यानां लोपं यावद् इस्रायेल्वंशाश्चत्वारिंशद् वर्षाणि प्रान्तरे भ्रमणं चक्रुः। यतस्तैः परमेश्वरस्य वाक्ये न गृहीते परमेश्वरस्तानधि शपथमिमं चकार, अहं यं दुग्धमधुप्रवाहिदेशं लोकेभ्यो दातुम् एतेषां पूर्व्वपुरुषाणां समीपे शप्तवान् तम् एतान् न दर्शयिष्यामि। अतस्तेषां विनिमयेन तेषां ये सन्ताना उदपद्यन्त मार्गे तेषां त्वक्षु न छिन्नेषु यिहोशूयस्तेषां त्वक्छेदाभावात् तेषां त्वचश्छेदयामास। तेषां सर्व्वलोकानां त्वक्षु छिन्नेषु यावत् ते न सुस्थास्तावत् शिविरमध्ये स्वस्वस्थाने तस्थुः। ततः परमेश्वरो यिहोशूयम् अवदत्, अद्याहं युष्मत्तो मिसरीयापमानं दूरीकृतवान्, ततो हेतोरद्यापि तत्स्थानस्य नाम गिल्गल् (दूरीकरणमिति) चकार। २ ३ ४ ५ ६ ७ ८ ९

इस्रायेल्वंशास्तस्मिन् गिल्गलि शिविरं संस्थाप्य मासस्य चतुर्दशदिनस्य सायंकाले यिरीहोः प्रान्तरे निस्तारमहं चक्रिरे। तस्य परदिन एव ते देशोत्पन्नेन शस्येन किण्वशून्यपूपान् भृष्टकणांश्च बुभुजिरे। १० ११

तस्मिन्नेव परेऽहनि अर्थात् तेषां देशोत्पन्नशस्यस्य भोजनदिने मान्नानिवृत्तिरभूत्, तदारभ्य इस्रायेल्वंशेन पुनर्मान्ना नाप्ता, ते तद्वर्षे किनान्देशस्य फलं बुभुजिरे। १२

पश्चाद् यिहोशूयो यिरीहोः सविधः सन् चक्षुरुन्मील्य स्वसम्मुखे निष्कोषासिकरं पुरुषमेकं ददर्श, ततो यिहोशूयस्तमुपागत्य त्वं किमस्माकं पक्षीयो वा रिपुपक्षीयो लोक इति पप्रच्छ। ततः स उवाच, अहं परमेश्वरस्य सेनापतिरधुनागतोऽस्मि, तदा यिहोशूयो भूमौ न्युब्जः पतन् तं प्रणम्यावदत् स्वदासं प्रति मत्प्रभोः काज्ञा? ततः परमेश्वरस्य सेनापति र्यिहोशूयं जगाद, स्वपादाभ्यां त्वं पादुके दूरीकुरु यतस्त्वं यत्र तिष्ठसि तत् मेध्यं स्थानं, तदा यिहोशूयस्तत् चकार। १३ १४ १५

# ६ षष्ठोऽध्यायः।

१ यिरीहोनगरस्य रोधनम् २ तद्विरोद्धुं ईश्वराज्ञा १२ मञ्जूषामुत्तोल्य याजकानां नगरवेष्टनं १६ नगरस्य ग्रहणं २० प्राचीरभञ्जनं नगरस्य पराजयः २८ तस्य पुनर्निर्म्माणनिषेधः।

१ तदानीं बद्धद्वारं यिरीहोनगरम् इस्रायेल्वंशाद् भीतैः पौरै रुरुधे कोपि वहिरन्तश्च गमनागमने नाकरोत्।

२ ततः परमेश्वरो यिहोशूयं जगाद पश्याहं यिरीहोनगरमिदं तस्य
३ नृपं बलवतो योद्धॄंश्च तव हस्ते समर्पयामि। यूयं सर्व्वसैन्यै र्नगरमिदं वेष्टयित्वा प्रतिदिनम् एकवारं प्रदक्षिणं कुरुत, इत्थं षड्दिनानि युष्माभिः
४ कर्त्तव्यम्। सप्तयाजका मञ्जूषाया अग्रसरा भूत्वा महाशब्दकारिणीः सप्ततूरीर्वहन्तु, पश्चात् सप्तमदिने यूयं सप्तवारान् तत्पुरं प्रदक्षिणीकरि-
५ ष्यथ याजकास्तूरी र्वादयिष्यन्ति च। अपरं महाशब्दकारिणीषु तूरीषु तैरुच्चैःस्वरं वादितासु तत् श्रुत्वा सर्व्वे लोका उच्चैः शब्दं करिष्यन्ति तेन नगरस्य प्राचीरं पतन् समभूमि र्भविष्यति, ततो लोकानाम् एकैको जनः
६ स्वसम्मुखस्थितमार्गेण प्रवेक्ष्यति। अनन्तरं नूनपुत्त्रो यिहोशूयो याजकान् आहूय जगाद, यूयं नियममञ्जूषामुत्तोलयत, सप्त याजकाश्च परमेश्वरस्य मञ्जूषाया अग्रसरा भूत्वा महाशब्दकारिणीः सप्त तूरी
७ र्वहन्तु। स लोकान् अवदत्, यूयम् अग्रसरा भूत्वा नगरं वेष्टयत, यः कश्चित् सुसज्जोऽस्ति स परमेश्वरस्य मञ्जूषाया अग्रसरो भूत्वा गच्छतु।
८ ततो लोकान् प्रति यिहोशूयस्याज्ञानुसारात् महाशब्दकारिसप्ततूरीवाहिनः सप्त याजकास्तूरीर्वादयन्तः परमेश्वरस्याग्रगामिनो बभूवुः
९ परमेश्वरस्य नियममञ्जूषा तेषां पश्चात् चलिता। सुसज्जलोकास्तूरीवादकानां याजकानाम् अग्रसरा भूत्वा चलिताः, पश्चाद्गामिनो जना
१० मञ्जूषायाः पश्चात् जग्मुः, याजकैश्च गच्छद्भिस्तूरीशब्दोऽकारि। तदा यिहोशूयो लोकान् अवदत्, यूयमुच्चैः शब्दं मा करिष्यथ स्वस्वरेण कमपि शब्दं न करिष्यथ, युष्माकं मुखेभ्यः किमपि वचो न निर्गमिष्यति, पश्चादहं यस्मिन् दिने उच्चैः शब्दं कर्त्तुमाज्ञापयिष्यामि तस्मिन् दिने
११ यूयम् उच्चैः शब्दं करिष्यथ। अनन्तरं ते परमेश्वरस्य मञ्जूषां नगरस्य चतुर्दिक्षु वारमेकं प्रदक्षिणं कारयित्वा शिविरमागत्य तत्र शिविरे रात्रिं न्यूषुः।

अपरं यिहोशूयः प्रत्यूष उत्तस्थौ याजकाश्च परमेश्वरस्य मञ्जूषाम् १२ उत्तोलयामासुः। महाशब्दकारिसप्ततूरीधारिणः सप्त याजकाः परमेश्व- १३ रस्य मञ्जूषाया अग्रेऽग्रे चलन्तस्तूरी र्वादयामासुः सुसज्जमानास्तेषाम् अग्रसरा भूत्वा चलिताः पश्चाद्गामिनश्च परमेश्वरस्य मञ्जूषायाः पश्चात् जग्मुः, याजकैश्च गच्छद्भिस्तूरीशब्दोऽकारि। तथा ते द्वितीयदिवसेऽपि १४ वारमेकं पुरं प्रदक्षिणीकृत्य शिविरं प्रत्यागताः। इत्थं ते षड्दिनानि चक्रुः। अनन्तरं सप्तमदिने ते प्रत्यूष अरुणोदयकाल उत्थाय सप्त कृत्वः १५ पुरं प्रदक्षिणीचक्रुः केवलमस्मिन् दिने सप्तकृत्वः पुरं प्रदक्षिणं चक्रुः।

अपरं सप्तमवारे याजकैस्तूरीषु वादितासु यिहोशूयो लोकान् १६ जगाद परमेश्वरो युष्मभ्यं नगरं प्रादात्, युष्माभिरुच्चैः शब्दः क्रियतां। इदं पुरं पुरस्थं सर्व्वं वस्तु च परमेश्वरेण शप्तं भविष्यति तन्मध्ये १७ केवलं वेश्या राहब् अर्थात् सा तस्याः निवेशनस्थाः सर्व्वे सङ्गिनो जनाश्च जीविष्यन्ति यतः सास्माकं प्रहितौ दूतौ गोपितवती। अतो १८ यूयं शप्तद्रव्यात् सावधाना भवत, शप्तद्रव्यग्रहणेन स्वान् शापग्रस्तान् मा कुरुत, इस्रायेल्वंशस्य सकलजनान् शप्तान् मा कुरुत मा वा दुःखयत। रौप्यसौवर्णपैत्तललौहपात्राणि परमेश्वरमुद्दिश्य पवित्राणि भविष्यन्ति १९ परमेश्वरस्य भाण्डागारं तान्यानेतव्यानि।

अनन्तरं तूरीषु वादितासु लोका उच्चैःशब्दं चक्रुः, तूरीशब्दं श्रुत्वा २० लोकैरत्युच्चैः शब्दः कृतः, ततः पुरस्य प्राचीरं पतित्वा समभूमिरभूत्, ततो लोकाः स्वस्वसम्मुखस्थमार्गेण प्रविशन्तो नगरं वशे चक्रुः। असिधारैः २१ पुरस्थ स्त्रीपुरुषबालवृद्धगोमेषगर्द्दभादीन् निःशेषं विनाशयामासुः। किन्तु यिहोशूयो देशनिरीक्षणकारिणौ द्वौ जनावाज्ञापयत्, युवां स्व- २२ शपथानुसारात् तस्या वेश्याया गृहं गत्वा तां तस्याः सर्व्वांश्च वहिष्कृत्यानयतं। तेन तौ युवचारौ प्रविश्य राहबं तस्याः पितरौ भ्रातॄन् २३ तस्याः सर्व्वस्वञ्च सर्व्वपरिजनञ्च वहिष्कृत्यानीयेस्रायेल्वंशस्य शिविरस्य वहिः स्थापयामासतुः। अनन्तरं ते पुरं तन्मध्यस्थसर्व्ववस्तूनि च वह्निना २४ दाहयामासुः, रौप्यसौवर्णपैत्तललौहपात्राणि च परमेश्वरावासस्य भाण्डागारे निदधुः। किन्तु यिहोशूयो वेश्यां राहबं तस्याः पित्रादि- २५ परिवारं सर्व्वस्वञ्च ररक्ष तेन साद्यापीस्रायेल्वंशमध्ये वसति यतः सा यिरीहो निरीक्षणाय यिहोशूयेन प्रहितौ दूतौ गोपयाञ्चकार।

तदानीं यिहोशूयो शपथं कुर्व्वन् जगाद यः कश्चिद् उत्थाय २६

पुनरिदं यिरीहपुरं निर्म्मास्यति स परमेश्वरस्य साक्षात् शप्तो भवेत्, स ज्येष्ठपुत्त्रेण पणेन भित्तिमूलं स्थापयिष्यति, कनिष्ठपुत्त्रेण पणेन च
२७ नगरद्वाराणि स्थापयिष्यति। तेन यिहोशूयेन समं परमेश्वर आसीत तस्य यशसा च सर्व्वदेशो व्याप्तः।

## ७ सप्तमोऽध्यायः।

१ अयस्य समीप इस्रायेल्वंशस्य कतिपयलोकानां रणे हननं ६ तद्धि यिहोशूयस्य विलापः १० तत्कारणम् ईश्वरेण प्रकाशितं १६ आखनस्य दोषनिश्चयः २२ पापात् तस्य सर्व्वनाशः।

१ अपरम् इस्रायेल्वंशाः शप्तवस्तुनापराधिनो बभूवुः, यतो यिहूदा-वंशीयः सेरहस्य प्रपौत्रः शब्देः पौत्रः कर्म्मेः पुत्र आखनः शप्तवस्तूनां किञ्चिद् अपजहार, तत इस्रायेल्वंशं प्रति परमेश्वरस्य क्रोधः प्रजज्वाल।
२ पश्चाद् यिहोशूयो यिरीहोः कांश्चन दूतान् बैथेलस्य पूर्व्वदिक्स्थितं बैथावनस्य समीपस्थम् अयं प्रहित्यावदत्, यूयं गत्वा देशं निरीक्षध्वं,
३ ततस्ते गत्वा अयपुरं निरीक्षाञ्चक्रिरे। यिहोशूयं प्रत्यागत्य जगदुश्च, तत्स्थानं सर्व्वैर् यातव्यं द्वे सहस्रे त्रीणि सहस्राणि वा लोका गत्वा अयं
४ वशीकुर्व्वन्तु, तत्र सर्व्वैर्लोकैः श्रमो न कर्त्तव्यः यतस्तेऽल्पलोकाः। तेन त्रीणि सहस्राणि लोका तत्र यात्रां कृत्वा अयलोकानां सम्मुखात् पलायनं
५ चक्रुः। यस्माद् अयलोकास्तेषां षट्त्रिंशत् जनान् जघ्नुः, ते नगरद्वारात् शिवारीम्पर्य्यन्तं तान् विद्रावयन्तोऽधोगामिमार्गे तान् जघ्नुः, तेन भयात् सर्व्वेषाम् अन्तःकरणं जलवद् द्रवीभूतं।

६ तदा यिहोशूय इस्रायेल्वंशस्य प्राचीनलोकाश्च स्वं स्वं वस्त्रं छित्वा परमेश्वरस्य मञ्जूषासम्मुखे अधोमुखीभूय सन्ध्यापर्य्यन्तं भूमौ पतित्वा
७ तस्थुः, स्वे स्वे शिरसि धूलिं विचकरुश्च। ततः परं यिहोशूयो जगाद, हा हा, हे प्रभो परमेश्वर, विनाशायास्मान् इमोरीयाणां करेषु समर्पयितुम् एते जनास्त्वया यर्द्दनः पारं कुत आनीताः? हा हा, यदि
८ वयं क्षान्ता यर्द्दनः पारेऽस्थास्याम। हे प्रभो, इस्रायेल्वंशे स्वरिपूणां
९ सम्मुखे पराङ्मुखीभूतेऽहं किं वदेयं? यत इति संवादं श्रुत्वा किनानीया देशनिवासिनश्च सर्व्वे लोका अस्मान् वेष्टयित्वा क्षितेरस्माकं नाम लोप्स्यन्ति तेन स्वमहानामकृते त्वं किं कुर्य्याः?

१० ततः परमेश्वरो यिहोशूयं जगाद त्वं कुतोऽधोमुखीभूय पति

तोऽसि ? त्वमुत्तिष्ठ, इस्रायेल्वंशाः पापमकुर्व्वन् मयाज्ञापितनियमम् ११
अलङ्घयन्, ते शप्तवस्तूनां किञ्चिद् गृहीतवन्तः, चोरितवन्तश्च प्रतार्य्य
तत् स्वसंस्थानमध्ये स्थापितवन्तः। अतःकारणाद् इस्रायेल्वंशः स्वरिपूणां १२
सम्मुखे स्थातुमशक्तः शत्रुभ्यः पराङ्मुखोऽभूत् यतः स शप्तः, तच्छापास्पदं
यावद् युष्माभिर्न लोप्स्यते तावद् युष्माभिः सह नाहं स्थास्यामि। त्वम् १३
उत्तिष्ठ लोकान् पावय तांश्च वद यूयं श्वः कृते स्वान् पावयत, यत इस्रा-
येलः प्रभुः परमेश्वर इति वक्ति हे इस्रायेलवंशाः, युष्माकं मध्ये शापास्पदं
विद्यते, तद् यावद् युष्माकं मध्यात् न दूरयिष्यते तावद् यूयं स्वरिपूणां
सम्मुखे स्थिराः स्थातुं न शक्ष्यथ। अतो यूयं प्रातर्महावंशानुसारात् सर्व्वे १४
उपस्थास्यथ ततः परमेश्वरेण यो महावंशो निश्चेष्यते तस्य महावंशस्य
एकैकवंश उपस्थास्यति, ततः परमेश्वरेण यो वंशो निश्चेष्यते तस्यैकैक-
निवेशनम् उपस्थास्यते ततः परमेश्वरेण यन्निवेशनं निश्चेष्यते तस्यैकैक-
पुरुष उपस्थास्यति। तेन शप्तवस्तुग्राही यो जनो धरिष्यते स तस्य सर्व्वस्वञ्च १५
वह्निना दाहयितव्यः, यतः स परमेश्वरस्य नियमं लङ्घितवान् इस्रायेल
वंशे कुकर्म्म कृतवान्।

अनन्तरं यिहोशूयः प्रत्यूष उत्थायेस्रायेल्लोकं स्वस्वमहावंशानुसाराद् १६
उपास्थापयत् तेन यिहूदावंशो निश्चितः। पश्चात् तेन यिहूदा एकैकवंश १७
उपस्थापिते सेरहवंशो निरचीयत, पश्चात् तेन सेरहवंशे पुरुषानुक्रमाद्
उपस्थापिते सब्देर्निवेशनं निरचीयत। ततस्तेन तस्य परिजनगणे पुरु- १८
षानुक्रमाद् उपस्थापिते यिहूदावंशस्य सेरहस्य प्रपौत्रः सब्देः पौत्रः
कर्म्मेः पुत्र आखनो निरचीयत। तदा यिहोशूय आखनं बभाषे हे मम १९
वत्स विनयेऽहं त्वम् इस्रायेलः प्रभुं परमेश्वरम् आद्रियस्व तस्यान्तिके
दोषं स्वीकुरु च, त्वं किं कृतवान् तन्मां वद, मत्तस्तन् मा गोपय। तत २०
आखनो यिहोशूयम् उक्तवान् अहम् इस्रायेलः प्रभोः परमेश्वरस्य
प्रतिकूलं पापमकार्षं तत् सत्यं, मयामुकं कार्य्यं कृतं। अर्थात् लोठित- २१
द्रव्यमध्य उत्तमं बाबिलीयमहावस्त्रमेकं रूप्यशेकल्शतद्वयं पञ्चाशत्
शेकल्परिमाणं स्वर्णखण्डमेकञ्च दृष्ट्वा लुब्धेन मया गृहीतानि, पश्य
तानि मम दूष्यमध्ये स्थदि गुप्तानि सर्व्वाधो रूप्यमास्ते।

ततो यिहोशूयेन प्रहिता दूता धावित्वा तस्य दूष्यं जग्मुः, तत्र च २२
गुप्तानि तानि तदधः स्थितं रजतञ्च ददृशुः। तदा ते दूष्यमध्यात् तत्सर्व्वं २३
गृहीत्वा यिहोशूयस्येस्रायेल्सर्व्ववंशानाञ्च समीपम् आनयन् परमेश्वरस्य

२४ सम्मुखे तद् व्यस्तारयंश्च। ततो यिहोशूय इस्रायेल्वंशस्य सर्व्व लोकाश्च सेरहवंशीयम् आखनं तानि रूप्यवस्त्रस्वर्णखण्डानि तस्य पुत्त्रकन्या गोगर्द्दभमेषान् दूष्यम् अन्यत् सर्व्वस्वञ्च गृहीत्वा आखोराख्याम् उप-
२५ त्यकामानिन्युः। अनन्तरं यिहोशूयस्तमवदत् त्वया वयं कुतः क्लिष्टाः? अस्मिन् दिने परमेश्वरस्त्वां क्लेक्ष्यति, तत इस्रायेलः सर्व्वे वंशा प्रस्तरा-
२६ घातैस्तान् जघ्नुः, वह्निना दाहयामासुः प्रस्तरैश्चाच्छादयामासुः। ततस्ते तदुपरि पाषाणानां महाराशिं चक्रुः स राशिरद्यापि विद्यते, इत्थं परमेश्वरः स्वप्रचण्डक्रोधात् न्यवर्त्तत, अतः कारणात् तत्स्थानम् अद्यापि आखोरोपत्यका (क्लेशोपत्यकेति) नाम्ना विख्यातमास्ते।

---

## ८ अष्टमोऽध्यायः।

१ यिहोशूयस्य परमेश्वरेणाश्वसनं यिहोशूयं प्रति सेनागणस्य गोपनं स्थातुमाज्ञा ९ अयनगराक्रमणं १४ नगरीयसर्व्वलोकानां विनाशः ३० वेदिनिर्म्माणं व्यवस्थायाः शापाशीर्व्वादयोः प्रचारणञ्च।

१ अनन्तरं परमेश्वरो यिहोशूयं जगाद त्वं भीतो निराशश्च माभूः सर्व्व-सैन्यं गृहीत्वा अयं प्रति युद्धयात्रां कुरु, पश्याहम् अयराजं तदीय-
२ लोकान् नगरं जनपदञ्च तव हस्ते समार्पयं। त्वं यिरीहोः तस्य नृपं प्रति यथाकरोः, अयं तस्य नृपं प्रति च तथा करिष्यसि, केवलं तस्य लोठद्रव्याणि पशूंश्च यूयं स्वार्थं ग्रहीष्यथ, त्वं नगरस्य पश्चात् सैन्यदलमेकं गोपयिष्यसि।

३ तदा यिहोशूयः सर्व्वसैन्यञ्च अयस्य विरुद्धं युद्धयात्रां चक्रुः, यिहो-शूयस्त्रिंशत्सहस्राणि बलवतो लोकान् उद्धृत्य रात्रौ विसृज्येदमाज्ञा-
४ पयत् पश्यत युष्माभि र्नगरस्य प्रतिकूलं नगरस्य पश्चाद् गुप्तं स्थातव्यं
५ नगरादतिदूरं न यातव्यं किन्तु सर्व्वैः प्रस्तुतैः स्थातव्यं। पश्चादहं मत्स-ङ्गिनो लोकाश्च नगरसमीपम् उपस्थास्यामः, तेन तेषु पूर्व्ववद् अस्माकं
६ विरुद्धं वहिर्भूतेषु वयं तेषाम् अग्रे पलायिष्यामहे वहिर्भूतान् तान् नगराद् आकृष्य दूरयिष्यामश्च, यत इमे पूर्व्ववद् अस्मत्तः पलायन्ते
७ वचनमिदं ते वदिष्यन्ति। अपरम् अस्मासु तेषामग्रे पलायमानेषु यूयं गोपनस्थानाद् उत्थाय हठात् नगरमाक्रम्य हस्तगतं करिष्यथ यतो युष्माकं
८ प्रभुः परमेश्वरस्तद् युष्माकं हस्तगतं करिष्यति। यूयं हस्तगतं पुरं परमे-श्वराज्ञया वह्निना दाहयिष्यथ पश्यताहं युष्मान् इदम् आज्ञापयं।

इत्थं यिहोशूयेन विसृष्टास्ते गोपनस्थानं गत्वा अयस्य पश्चिम अयबै- ९ थेलयोर्मध्ये तस्थुः, किन्तु यिहोशूयो लोकानां मध्ये तां रात्रिं यापयामास। परेऽहनि यिहोशूय इस्रायेल्वंशस्य प्राचीनाश्च प्रत्यूष उत्थाय लोकान् १० गणयित्वा तेषामग्रेग्र अयं प्रति यात्रां चक्रुः। तस्य सङ्गिसर्व्वसैन्यं गत्वा ११ समीपमेत्य नगरस्य सम्मुख उपस्थायोत्तरदिशि शिबिरं स्थापयामास, तेषाम् अयस्य च मध्य उपत्यकैकासीत्। पश्चात् स पञ्च सहस्राणि लोका- १२ नादाय नगरस्य पश्चिमदिशि अयबैथेलयो र्मध्ये गुप्तं स्थापितवान्। इत्थं लोकान् अर्थात् नगरस्योत्तरस्थं सैन्यं पश्चिमदिक्स्थं गुप्तसैन्यञ्च निरू- १३ पितस्थले स्थापयित्वा यिहोशूयस्तस्यां रजन्यामुपत्यकाया मध्यं जगाम।

तदा अयस्य राजा तद् दृष्ट्वा प्रत्यूषे तूर्णमुत्थाय नगरस्थलोकैः सह १४ निरूपितस्थाने प्रान्तरस्य सम्मुख इस्रायेल्वंशस्य विरुद्धं योद्धुं वहिर- भूत्, किन्तु सैन्यदलमेकं नगरस्य पश्चात् तस्य विरुद्धं गुप्तमस्तीति स नाजानात्। ततो यिहोशूयः सर्व्व इस्रायेल्लोकाश्च तेषां सम्मुखे स्वान् १५ पराभूतानिव दर्शयित्वा प्रान्तरस्य मार्गेण पलायिताः। तेन अयस्य लोकाः १६ सर्व्वे मिलित्वा तेषां पश्चाद् अधावन्, यिहोशूयस्य पश्चाद् धावन्तस्ते नगराद् दूरीभूताः। इस्रायेल्लोकानां पश्चाद्गामी नाभूत् एतादृश १७ एकोऽपि जन अये बैथेले च न तस्थौ सर्व्वे स्वपुरं मुक्तद्वारं विहायेस्राये- लीयानां पश्चाद् दधावुः। तदा परमेश्वरो यिहोशूयं जगाद त्वं स्वकरस्थं १८ शल्यम् अयपुरदिशि विस्तारय तेनाहं तत्पुरं त्वत्करगतं करिष्यामि, ततो यिहोशूयः स्वकरस्थं शल्यं पुरदिशि व्यस्तारयत्। तेन हस्तविस्त- १९ रणमात्राद् गुप्तसेनास्तत्क्षणात् स्वस्थानादुत्थाय वेगेन गत्वा पुरं प्रविश्य करगतं चक्रिरे शीघ्रं वह्निना पुरं दाहयामासुः। ततोऽयलोकाः पश्चात् २० दृष्ट्वा गगणं प्रति नगरधूम उत्तिष्ठतीति वीक्षाञ्चक्रिरे, किन्तु कयापि दिशा पलायितुं तेषां शक्तिर्नाभूत्, अरण्ये पलायमाना इस्रायेल्लोकाश्च स्वविद्रावयितॄन् प्रति परावृत्ताः। यतो गुप्तसेनाः पुरं करगतं कृतवन्त २१ इति नगरस्य धूमोत्थानदर्शनात् ज्ञात्वा यिहोशूयः सर्व्व इस्रायेल्- वंशाश्च परावृत्य अयलोकान् संजघ्नुः। अन्यदिश्यपि लोकास्तेषां विरुद्धं २२ नगरात् निर्गताः, अत एके लोका अस्मिन् पार्श्वे ऽन्ये लोकाश्च परस्मिन् पार्श्वे तान् आक्रामन् तेन ते इस्रायेलीयानां मध्यवर्त्तिनो बभूवुः तैरित्थम् आहता यत् तेषाम् एकोऽपि जनो जीवन्नावशिष्यत। किन्तु २३ तैर् अयराजो जीवन् धृतो यिहोशूयान्तिकम् आनीतश्च। इत्थम् २४

अयनिवासिनां ये जना इस्रायेल्वंशस्य पश्चाद् धावन्तः प्रान्तरं गतास्तेषु तत्रस्थरणस्थले खड्गाघातेन निःशेषं यावत् हतेष्विस्रायेल्-
२५ लोका परावृत्य अयमागत्य तत्रस्थलोकानपि खड्गे जघ्नुः। तस्मिन् दिने
२६ अयनिवासिनां सर्व्वे स्त्रीपुरुषा द्वादशसहस्राणि हताः। यतो यिहोशूयोऽयनिवासिनां निःशेषं विनाशपर्य्यन्तं धृतशल्यं विस्तृतकरं पुनः
२७ सङ्कुचितं नाकरोत्। इस्रायेल्वंशो यिहोशूयं प्रति परमेश्वरस्याज्ञानु-
२८ सारात् केवलं तत्पुरस्य पशून् लोठ्यवस्तूनि च स्वार्थं जग्राह। यिहोशूयो ऽयपुरं वह्निना दाहयित्वा चिरकालार्थं राशिम् उच्छिन्नस्थानञ्च
२९ चकार। स अयराजं वृक्ष उद्बध्य सन्ध्याकालं यावद् परिहातवान्, सूर्य्यास्तकाले यिहोशूयस्तस्य शवं वृक्षाद् अवरोह्य पुरद्वारप्रवेशस्थाने निक्षिप्य पाषाणराशिनाच्छादयामास, स राशिरद्याप्यास्ते।
३० अनन्तरं यिहोशूय एवल्शैल इस्रायेलः प्रभुपरमेश्वरम् उद्दिश्य वेदिं
३१ निर्म्ममे। अर्थात् इस्रायेल्वंशं प्रति परमेश्वरस्य सेवकेन मूससा दत्ताज्ञानुसारात् मूसोव्यवस्थाग्रन्थे यत् लिखितमास्ते तदनुसारात् सा वेदि र्लौहास्त्रैरस्पृष्टैरतक्षितैः पाषाणै र्निर्म्मिता, तत्र ते परमेश्वर-
३२ मुद्दिश्य होमार्थकान् मङ्गलार्थकांश्च बलीन् उतसृजुः। स इस्रायेल्-वंशस्य सम्मुखे मूससा लिखिताया व्यवस्थाया अनुलेखनं तत्र पाषा-
३३ णेषु लिलेख। इस्रायेल्वंशास्तेषां प्राचीनाऽधिपा विचारका स्वजातीया प्रवासिनश्च सर्व्वे मञ्जूषायाः पार्श्वयोः परमेश्वरीयनियममञ्जूषावाहिनां याजकानां समक्षं तस्थुः, इस्रायेल्लोकानाम् आशीरर्थं परमेश्वरस्य सेवको मूसाः पुरा यद् आदिष्टवान् तदनुसारात् तेषाम् अर्द्धं गिरिषीमगिरे-
३४ र्दिशि, अर्द्धम् एवल्गिरेर्दिशि तस्थौ। अनन्तरं स व्यवस्थाया वाक्यानुसाराद् व्यवस्थाग्रन्थे लिखितयोराशीःशापयोः सर्व्वं वाक्यं पपाठ।
३५ मूससा यद्यद् आदिष्टं तत्सर्व्वम् इस्रायेलः सर्व्वसमाजस्य योषितां बालानां तन्मध्ये प्रवासिविदेशीयानाञ्च सम्मुखे पठितुं यिहोशूय एकमपि वाक्यं न परिजहौ।

## ९ नवमोऽध्यायः।

१ इस्रायेल्वंशेन समं कृतयुद्धानां राज्ञां कथनं ७ इस्रायेल्वंशेन सह छलात् गिबियोनलोकानां सन्धिकरणं १६ छलप्रकाशः २१ छलकरणात् तेषां दासत्वे नियोगः।

१ अपरं पर्व्वतस्थाः समभूम्या लिवानोनस्सम्मुखस्थमहाजलधितटस्थाश्च

यर्द्दनावारस्थाः हित्तीय-इमोरीय-किनानीय-पिरिषीय-हिव्वीय-यिबूषीयाः सर्व्वे नृपा इमं संवादं श्रुत्वैकचित्ता यिहोशूयस्येस्रायेल्वंशस्य च २ प्रतिकूलं योद्धुं मिलिताः।

अनन्तरं यिरीहम् अयञ्च प्रति यिहोशूयो यत् कर्म्म कृतवान् ३ तन्निशम्य गिबियोनलोकाश्छलम् आश्रीयन्त, ते यात्रिकवेशं परिधाय ४ स्वेषां गर्द्दभानां पृष्ठेषु पुरातनानि पुटकानि पुरातना जीर्णा योटनयुक्ता द्राक्षारसकुतूश्चारोहयन्, पुरातना योटनयुक्ताः पादुकाः पदेष्वददुः ५ पुरातनानि वसनानि गात्रेष्वददुः पाथेयार्थं शुष्कान् सकलङ्कांश्च पूपान् जगृहुः। ततस्ते गिल्गलस्थितशिबिरे यिहोशूयमुपागत्य तमि- ६ स्रायेलो वंशञ्च जगदुः, वयं दूरदेशादागता यूयमस्माभिः समं सन्धिं कुरुत। इस्रायेल्वंशो हिव्वीयलोकान् प्रत्यवदत् को जानाति यूयं ७ यद्यस्माकं मध्यस्था भवेत, तर्हि वयं युष्माभिः समं कथं सन्धिं कुर्य्याम? ततस्ते यिहोशूयम् अवदन् वयं भवतो दासाः। तदा यिहोशूयः ८ पप्रच्छ यूयं के? कुत आयाताः? तेऽब्रुवन् भवतो दासा वयं भवतः ९ प्रभुपरमेश्वरस्य नाम श्रुत्वा बहुदूराद् आगताः, यतस्तस्य यशोऽर्थात् मिसर्देशे तेन यत् कृतं, तथा हिष्वोनीयसीहोनोऽस्तारोतनिवासी १० वाशानीय ओगश्च, यर्द्दनपारस्थावेताविमोरीयराजौ प्रति तेन यत् कृतं तत्सर्व्वस्य संवादोऽस्माभिः श्रुतः। अतोऽस्माकं प्राचीना देशवासिनश्च ११ सर्व्वे लोका अस्मान् अवदन् यूयं करेषु पाथेयवस्तूनि गृहीत्वा तान् साक्षात् कर्त्तुं गत्वा वाचमिमां वदत, वयं युष्माकं दासा अत इदानीं यूयमस्माभिः सह सन्धिं कुरुत। युष्माकं समीपम् आगन्तुं यद्दिने वयं १२ प्रयातास्तद्दिने गेहाद् यान् तप्तान् पूपान् अगृह्णाम पश्यत त इमे पूपा अधुना शुष्काः सकलङ्काश्च जाताः, याश्च नवीनाः कुतूर्द्राक्षा- १३ रसैरपूरयाम, पश्यत ताश्छिन्नाः, अस्माकं वस्त्राण्युपानहश्चापि पथो-ऽतिदीर्घत्वात् जीर्णानि। तत इस्रायेल्लोका परमेश्वरात् मन्त्रणाम- १४ पृष्ट्वा तेषां भक्ष्यद्रव्याणां किञ्चित् जगृहुः। यिहोशूयस्तैः सह सन्धिं कृत्वा १५ तेषां प्राणरक्षां स्वीकृतवान् समाजाध्यक्षाश्च तान् प्रति शपथं चक्रुः।

सन्धिकरणस्य दिनत्रयात् परम् एतेऽस्माकं समीपवासिनोऽस्माकं १६ मध्ये वसन्तीति तैः श्रुतं। इस्रायेल्वंशो यात्रां कुर्व्वंस्तृतीयदिवसे १७ गिबियोन-किफीरा-बेरोत-किरियत्यियारीमनामानि तेषां नगराणि प्रापुः। समाजाध्यक्षा इस्रायेलः प्रभुपरमेश्वरस्य नाम्ना शपथं कृत- १८

यस्मात्तस्माद् इस्रायेल्लोकास्तान् न जघ्नुः, किन्तु सर्व्वसमाजोऽधिपानां
१९ प्रतिकूलं वचसा युयोध। ततोऽधिपाः सर्व्वसमाजीयान् अवदन् वयं
तान् प्रति इस्रायेलः प्रभोः परमेश्वरस्य नाम्ना शपथमकुर्म्म अतस्तान्
२० स्प्रष्टुं न शक्नुमः। वयं तथैव करिष्यामः, तान् जीवतो रक्षिष्यामः
नो चेत् तान् प्रति यं शपथमकुर्म्म तस्माद् अस्मान् प्रति क्रोधः प्रकाशि-
२१ ष्यते। अतोऽधिपा अवदन्, ते जीवन्तस्तिष्ठन्तु किन्तु सर्व्वसमाजीयानां
कृते काष्ठच्छेदका जलवाहकाश्च भवन्तु।

२२ अनन्तरं यिहोशूयस्तान् आहूय जगाद, यूयम् अस्माकं समीपस्था
२३ अतो युष्मत्तो वयं बहुदूरस्था इति वाचा कुतोऽस्मान् प्रावञ्चयत? अतो
यूयं शप्ता जाता अतोऽस्मत्परमेश्वरीयावासस्य काष्ठच्छेदकानां जल-
२४ वाहिनाञ्च दास्यकर्म्मणः कदापि मुक्तिं न प्राप्स्यथ। ततस्ते यिहोशूयं
प्रत्यवदन् तव प्रभुः परमेश्वरो युष्मभ्यम् एतान् देशान् दातुं युष्माकं
सम्मुखाद् एतद्देशनिवासिनः सर्व्वलोकान् विनाशयितुञ्च स्वसेवकं मूससं
यद् आज्ञापयत् तत् तव दासैरस्माभिः श्रुतम् अतो युष्मत्तः प्राणभयाद्
२५ भीतैरिदं कार्य्यम् अकारि। पश्चाधुना वयं तव हस्तगता आस्म, अस्मान्
२६ प्रति कर्त्तुं त्वया यद् भद्रं न्याय्यञ्च बुध्यते तदेवास्मान् प्रति कुरु। ततः स
तान् प्रतीत्थं कृत्वा इस्रायेलवंशस्य हस्तात् तान् ररक्ष, तेन ते तान् न
२७ जघ्नुः। किन्तु यिहोशूयस्तद्दिने परमेश्वरस्य मनोभिलषितस्थाने परमेश्व-
रस्य वेद्याः कर्म्मार्थं समाजस्य काष्ठच्छेदनाय जलवहनाय च तान् न्ययुङ्क्त।

# १० दशमोऽध्यायः।

१ गिबियोनलोकैः समं पञ्चनृपाणां योधनं ६ यिहोशूयाय वार्त्तादानं ८ पञ्चभि र्नृपैः समं यिहोशूयस्य योधनं १२ यिहोशूयाज्ञया पय्यदन्तयोः खे स्थगितत्वं १५ तेषां पञ्च-नृपाणां गुहायां स्थापनं २२ वहिष्कृत्य तेषां हननं २८ मक्केदा-लिब्ना-लाखीश-गेषर-दूग्लोन-दिवीरादिदेशानां दक्षिणभागस्य च वशीकरणं।

१ अनन्तरं यिहोशूयेन अयपुरं वशीकृतं निःशेषं नाशितञ्च, यिरीहो
तस्य नृपञ्च प्रति यथाचरितम् अयं तस्य नृपञ्च प्रति तथाचरितं, गिबि-
योननिवासिभिस्त्रेस्रायेल्वंशेन समं सन्धिं कृत्वा तन्मध्ये स्थानं लब्धम्,
२ इति वार्त्तां श्रुत्वा यिरूशालमीयभूपतिरदोनीषेदको ऽतीवाबिभेत्,
यतो गिबियोनं राष्ट्रस्य महानगरीवद् बृहत् पुरम् अयतोपि बृहदा-
३ सीत् तस्य सर्व्वे लोकाश्च बलवन्त आसन्। अनन्तरं यिरूशालमीयादो-

नीषेदको राजा हिब्रोणीयहोहमस्य नृपस्य यर्म्मूतीयपिरामस्य नृपस्य लाखीशीययाफियस्य नृपस्य इग्लोनीयदिवीरस्य नृपस्य समीपं दूतान् प्रहित्य वच इदं जगाद, यूयं मदन्तिकम् आगत्य माम् उपकुरुत, ४ गिबियोनीयलोका अस्माभि र्हन्यन्तां यतस्ते यिहोशूयेनेस्रायेल्वंशेन च समं सन्धिमकुर्व्वन्। अतो यिरूशालमीयराजो हिब्रोणीयराजो ५ यर्मूतीयराजो लाखीशीयराज इग्लोनीयराजश्च इमोरीयाणां ते पञ्च नृपा मिलित्वा ससैन्या गत्वा गिबियोनस्य सम्मुखे शिबिरं स्थापयित्वा तत्प्रतिकूलं युयुधुः।

ततो गिबियोनीया गिल्गलस्थशिबिरं दूतं प्रहित्य यिहोशूयं जगदुः ६ त्वं स्वदासान् प्रति शैथिल्यमकृत्वा तूर्णमागत्यास्मान् रक्षोपकुरु च यतः शैलवासिन इमोरीयाः सर्व्वे नृपा अस्माकं विरुद्धं मिलिताः। ततो ७ यिहोशूयः सर्व्वसेना वीरांश्च गृहीत्वा गिल्गलाद् यात्रां चकार।

अपरं परमेश्वरो यिहोशूयं बभाषे त्वं तेभ्यो मा भैषीः, तव करेऽहं तान् ८ समर्पयिष्यामि तेषां कोपि त्वत्सम्मुखे स्थातुं न शक्ष्यति। ततो यिहोशूयो ९ गिल्गलात् कृत्स्नां यामिनीं गत्वाकस्मात् तेषां सन्निधिमुपतस्थौ। ततः १० परमेश्वर इस्रायेल्वंशस्य साक्षात् तान् म्लानमुखान् कृत्वा गिबियोने महाप्रतिघातेनाजघान, बैथोरोणस्योर्द्ध्वगामिना मार्गेण तान् विद्रावयन् असेकां मक्केदाञ्च यावत् ताड़यामास। ततो यदा त इस्रायेल्- ११ वंशस्य सम्मुखाद् बैथोरोणस्य निम्नगामिना मार्गेण पलायाञ्चक्रिरे तदा परमेश्वरो ऽसेकां यावद् आकाशात् तेषामुपरि महाशिला ववर्ष ततस्ते मृतवन्तः, इस्रायेलवंशेन खड्गैस्तेषां ये हतास्तेभ्योऽधिकाः शिलाभिर्म्मृुः।

इस्रायेल्वंशस्य करे परमेश्वरेणेमोरीयाणां समर्पणदिने यिहोशूय १२ इस्रायेल्वंशस्य साक्षात् परमेश्वरं प्रति निवेद्य जगाद हे सूर्य्य त्वं गिबियोनोपरि हे चन्द्र त्वम् अयालोनोपत्यकायां तिष्ठ। तेन लोका यावद् १३ रिपून् नादण्डयन् तावत् पुष्पदन्तौ तस्थतुः, तत् किं याशरग्रन्थे लिखितं न हि? इत्थं व्योममध्ये रविः स्थिरस्तस्थौ सम्पूर्णमेकदिनम् अस्तं यातुं विललम्बे। तत्पूर्व्वं परं वा परमेश्वरो यस्मिन् दिने मनुष्यवाक्य इत्थं श्रुती १४ ददौ तादृशं किमपि दिनं नाभूत्, यतः परमेश्वरः स्वयम् इस्रायेल्वंशस्य पक्षः सन् युयोध। ततो यिहोशूयः सर्व्वम् इस्रायेल्वंशं गृहीत्वा गिल्ग- १५ लस्थशिबिरं प्रत्यागन्तुं परावर्त्तत। ते पञ्च नृपाः पलाय्य मक्केदास्थगुहायां १६ गुप्तास्तस्थुः। मक्केदास्थगुहायां ते पञ्च नृपा गुप्ताः सन्तीति वार्त्तां १७

१८ यिहोशूयः श्रुत्वावदत् यूयं तद्गुहाया आस्ये महापाषाणान् स्थापयित्वा
१९ तान् रक्षितुं लोकान् नियुङ्ध्वं। विलम्बमकृत्वा रिपूणां पश्चाद्गामिनो भूत्वा तेषां पार्ष्णिस्थजनान् उच्छिन्त तान् स्वं स्वं नगरं प्रवेष्टुं मा दत्त
२० युष्माकं प्रभुः परमेश्वरस्तान् युष्माकं करेष्वार्पयत्। यिहोशूयेनेस्रायेल्-वंशेन च तेषां विनाशं यावत् तेषु महाप्रतिघातेन व्यापादितेषु शेष-
२१ लोकाः पलाय्य प्राचीरवेष्टितानि पुराणि प्रविविशुः। अनन्तरं सर्व्वे लोका मक्केदायां यिहोशूयस्य समीपे शिबिरं कुशलेन प्रत्यागमन् तत इस्रायेल्वंशस्य प्रतिकूलं कोपि जिह्वामपि न लाडयामास।

२२ ततो यिहोशूय आज्ञापयत् यूयं गुहाद्वारं मोचयित्वा ततस्तान्
२३ पञ्च नृपान् वहिष्कृत्य मदन्तिकम् आनयत। तथा कृते ते यिरूशालमन्टपं हिब्रोणन्टपं यर्मूतन्टपं लाखीशन्टपम् इग्लोनन्टपञ्च गुहातो वहिष्कृत्य
२४ तदन्तिकम् आनिन्युः। इत्थं तैस्तेषु राजसु यिहोशूयान्तिकम् आनीतेषु यिहोशूयः सर्व्वान् इस्रायेल्पुरुषान् आहूय स्वसङ्गिनः सेनापतीन् आज्ञापयत् यूयं समीपमेत्य राज्ञामेतेषां ग्रीवासु पादान् निधत्त ततस्ते
२५ समीपमागत्य तेषां ग्रीवासु पादान् ददुः। अपरं यिहोशूयस्तान् जगाद भीता निराशाश्च मा भूत शक्तिमन्तोऽतीवोत्साहवन्तश्च भवत, यूयं यै
२६ रिपुभिर्योत्स्यथ तान् सर्व्वान् प्रति परमेश्वर इत्थं करिष्यति। ततो यिहोशूय आघातेन तान् पञ्च नृपान् हत्वा पञ्चसु तरुषूल्लम्बयामास
२७ ततस्ते सायं पर्य्यन्तं तरुषूल्लम्बितास्तस्थुः। सूर्य्यास्तकाले यिहोशूयाज्ञया लोकास्तान् तरुतोऽवरोह्य ते यस्यां गुहायां गुप्ता आसन् तन्मध्ये तान् निक्षिप्य तद्गुहास्ये महापाषाणान् निदधिरे ते ऽद्यापि विद्यन्ते।

२८ अनन्तरं तस्मिन् दिने यिहोशूयो मक्केदां वशीकृत्य खड्गाघातेन विनाश्य तन्नृपं तन्मध्यस्थितान् सर्व्वप्राणिनो निःशेषं जघान, कमपि न ररक्ष; यिरीहोन्टपं प्रति यथाकार्षीत् मक्केदान्टपं प्रति च तथाकरोत्।

२९ ततो यिहोशूयः सर्व्वान् इस्रायेल्वंशान् आदाय मक्केदातो लिब्नां
३० प्रगत्य तत्प्रतिकूलं युयोध। ततः परमेश्वरो लिब्नां तदीयन्टपञ्चेस्रायेल्-वंशस्य करेष्वार्पयत् स तन्नगरं तन्मध्यस्थान् सर्व्वप्राणिनश्च खड्गेनाजघान, कमपि शेषं न ररक्ष, यिरीहोन्टपं प्रति यथाकार्षीत् तस्य नृपं प्रत्यपि तथाकरोत्।

३१ अपरं यिहोशूयः सर्व्वान् इस्रायेल्वंशान् आदाय लिब्नातो लाखीशं
३२ प्रगत्य तद्विरुद्धं शिबिरं संस्थाप्य तत्प्रतिकूलं युयोध। ततः परमेश्वरो

लाखीश इस्रायेल्वंशस्य करेऽर्पिते स द्वितीयदिवसे लाखीशं वशीकृत्य लिब्नां प्रति यथाकार्षीत् तथैव कृत्वा तन्नगरं तन्मध्यस्थान् सर्व्वप्राणिनश्च खड्गेनाजघान।

तदा होरमनामा गेषरीयराजो लाखीशस्य साहाय्यं कर्त्तुम् आगमत् ३३ यिहोशूयस्तं तल्लोकांश्च समाजघान तस्य कमपि नावशेषयत्।

ततो यिहोशूयः सर्व्वान् इस्रायेल्वंशान् आदाय लाखीशत इग्लोनं ३४ प्रगत्य तत्सम्मुखे शिबिरं संस्थाप्य तत्प्रतिकूलं युयोध। तद्दिने ते तन्न- ३५ गरं वशीकृत्य यथा लाखीशं प्रत्यकार्षुस्तथैव कृत्वा खड्गेनाहत्य तत् तन्मध्यस्थान् सर्व्वप्राणिनश्च निःशेषं जघ्नुः।

ततो यिहोशूयः सर्व्वेस्रायेल्वंशान् आदाय इग्लोनतो हिब्रोणं प्रगत्य ३६ तत्प्रतिकूलं युयोध। तद् वशीकृत्य ते तन्नगरं तस्य नृपं तदुपनगराणि ३७ तन्मध्यस्थितान् सर्व्वप्राणिनश्च खड्गैरघ्नन् इग्लोनं प्रति यथाकार्षुस्तथैव कृत्वा तस्य कमपि शेषं न रक्षित्वा तन्नगरं तन्मध्यस्थान् सर्व्वप्राणिनश्च निःशेषं जघ्नुः।

ततो यिहोशूयः परावृत्य सर्व्वान् इस्रायेल्वंशान् आदाय दिवीरं ३८ प्रगत्य तत्प्रतिकूलं युयोध। ते तन्नगरं तस्य नृपं तदुपनगराणि च हस्ते ३९ कृत्वा खड्गैराहत्य तन्मध्यस्थसर्व्वप्राणिनो निःशेषं जघ्नुस्तस्य कमपि शेषं न ररक्षुः, ते हिब्रोणं प्रति लिब्नां तस्य नृपञ्च प्रति यथा कृतवन्त- स्तथैव दिवीरं तस्य नृपञ्च प्रति चक्रुः।

इत्थं यिहोशूयः पर्व्वतीयदेशं दक्षिणदेशं समभूमिम् उपत्यकाश्च ४० कृत्स्नमेव देशं वशीकृत्य तत्रत्यान् सर्व्वनृपान् जघान तेषां कमपि शेषं नारक्षत् स इस्रायेलः प्रभोः परमेश्वरस्याज्ञया सर्व्वप्राणिनो निःशेषं जघान। इत्थं यिहोशूयः कादेशबर्णेयमारभ्य अस्सां यावत् तान् गिबियोनं ४१ यावत् सर्व्वं गोशनदेशञ्च व्यनाशयत्। यिहोशूय एतान् नृपान् देशांश्च ४२ युगपद् वशीचकार यत इस्रायेलः प्रभुः परमेश्वर इस्रायेल्वंशस्य पक्षः सन् युयोध। ततो यिहोशूयः सर्व्वान् इस्रायेल्वंशान् आदाय गिल्ग- ४३ लस्थशिबिरं प्रत्याजगाम।

## ११ एकादशोऽध्यायः।

१ इस्रायेल्वंशस्य विरुद्धं देशोत्तरभागस्थानां बहुनृपाणां मेलनं ६ तेषां विनाशः १० हात्सोरनगरस्य हस्तगतं दाहनञ्च १६ बहुदेशवशीकरणं २१ अनाकीयलोकाना- मुच्छेदः।

१ अपरं यावीननामा हात्सोरीयराज इमां वार्त्तां श्रुत्वा योववनाम्नो
२ मादोनीयन्टपस्य शिम्रोणीयन्टपस्याच्चफीयन्टपस्य च समीपं तथा पर्व्व-
तीयदेशे किन्नेरतस्य दक्षिणस्थे प्रान्तरे समभूमौ पश्चिमदिक्स्थदोरदेशे
३ च निवसताम् उत्तरीयन्टपाणां समीपं पूर्व्वपश्चिमदेशीयकिनानीयानाम्
इमोरीयाणां हित्तीयानां पिरिषीयाणां गिरिस्थयिबूषीयाणां हर्म्मोणगिरे
४ र्मूलस्थहिव्वीयानां समीपञ्च दूतान् प्रेषयामास। ततस्ते सर्व्वे ससैन्या
५ जलधितीरस्थसिकतावद् बहुलोकान् रथांश्च गृहीत्वा वहिर्बभूवुः। सर्व्वे
न्टपा मिलित्वा इस्रायेल्वंशस्य प्रतिकूलं योद्धुं मेरोमाख्यजलाशय-
समीपमागत्य शिविरं स्थापयामासुः।

६ अनन्तरं परमेश्वरो यिहोशूयं बभाषे त्वं तेभ्यो माभैषीः। श्व एतत्-
समयेऽहम् इस्रायेल्वंशस्य सम्मुखे तान् सर्व्वान् हतान् निधास्यामि तेन
त्वं तेषां हयानां पदशिरां छेत्स्यसि रथान् वह्निना दाहयिष्यसि।
७ ततो यिहोशूयः सर्व्वसेना आदाय मेरोमतोयसमीपम् अकस्मात् तेषां
८ सन्निधिमुपस्थाय तान् आचक्रमे। ततः परमेश्वरेण तेष्विस्रायेल्वंशानां
करे समर्पितेषु ते तान् ताडयित्वा महासीदोनं मिस्रिफोत्-मयिमञ्च
यावत् मिस्पाः पूर्व्वीयाम् उपत्यकाञ्च यावद् विद्रावयामासुस्तेषां कमपि
९ शेषं न रक्षन्तः सर्व्वान् जघ्नुः। ततो यिहोशूयः परमेश्वराज्ञया तेषां
हयानां पादशिरां चिच्छेद रथांश्च वह्निना दाहयामास।

१० तदानीं यिहोशूयः प्रत्यागत्य हात्सोरं वशीकृत्य खड्गेन तस्य न्टपं
आजघान यतः पूर्व्वं हात्सोरं तेषां सर्व्वराज्याणां मुख्यं पुरम् आसीत्।
११ तन्मध्यनिवासिनः सर्व्वप्राणिनः खड्गेनाहत्य निःशेषम् अवधीत् कमपि
१२ प्राणिनं नावशेषयत्, ततः स हात्सोरं वह्निना दाहयामास। यिहो-
शूयस्तेषां न्टपाणां सर्व्वपुराणि तेषां सर्व्वन्टपांश्च वशीकृत्य परमेश्वरस्य
सेवकमूससः आज्ञानुसारात् खड्गेन तान् आहत्य निःशेषं नाशयामास
१३ तथापि गिरेः शृङ्गस्थितानि नगराणीस्रायेल्वंशेन न दाहितानि केवलं
१४ हात्सोरं यिहोशूयेन दाहितं। इस्रायेल्वंशास्तेषां पुराणां वस्तूनि
पशूंश्च स्वार्थं लोठयामासुः, किन्तु सर्व्वमनुष्यान् खड्गेन निःशेषं जघ्नुस्तेषां
१५ मध्ये कमपि नावशेषयामासुः। परमेश्वरेण स्वसेवको मूसा यथादिष्ट-
स्तथैव मूससा यिहोशूय आदिष्टस्तथैव च यिहोशूयेन कृतं, परमेश्वरो
मूससं यद्यद् आदिशत् तन्मध्य एकमपि वाक्यम् असिद्धं नातिष्ठत्।
१६ इत्थं तत्रत्यः सर्व्वदेशः पर्व्वतः सर्व्वदक्षिणदेशो गोशनदेशः समभूमिः

प्रान्तरम् इस्रायेल्पर्व्वतस्तस्य समभूमिश्चार्थात् सेयीरं प्रति गामिनं १७ हालक्पर्व्वतम् आरभ्य हर्म्मोणपर्व्वतस्य नितम्बस्थायां लिवानोनोपत्यकायां स्थितं वालगादं यावत् सर्व्वदेशो यिहोशूयेन वशीकृतस्तत्रत्या नृपाश्च धृताः प्रहारेण हताश्च। यिहोशूयस्तैर्नृपैः समं बहुकालं युयोध। १८ गिबियोननिवासिनो हिव्वीयलोकान् विना केपि नागरिकलोका इस्रा- १९ येल्वंशैः समं सन्धिं नाकुर्व्वन् तेऽन्यसर्व्वान् रणेन वशीचक्रुः। यतस्ते २० यन्निःशेषं हन्येरन् दयिता न भवेयुः, किन्तु मूससं प्रति परमेश्वराज्ञानुसाराद् विनाश्येरन् तदर्थम् इस्रायेल्वंशेन समं योद्धुमागमनाय तेषामन्तःकरणानि कठिनानि कर्त्तुं परमेश्वरस्य मतिरासीत्।

तदानीं यिहोशूय आगत्य पर्व्वतीयदेशाद् हिब्रोणाद् दिवीराद् २१ आनवाद् यिहूदाः सर्व्वशैलेभ्य इस्रायेलश्च सर्व्वशैलेभ्य अनाकीयान् उच्छिद्य यिहोशूयस्तेषां पुरैः समं निःशेषं तान् व्यनाशयत्। इस्रायेल्- २२ वंशस्य देशे ऽनाकीयानां केपि नावशिष्टाः केवलम् असायां गाते ऽस्दोदे च तेषां शेषः स्थितः। इत्थं मूससं प्रति परमेश्वरस्याज्ञानुसा- २३ राद् यिहोशूयः कृत्स्नं देशं वशीकृत्य वंशानाम् अंशानुसाराद् अधिकर्त्तुम् इस्रायेल्वंशाय भोगार्थं ददौ पश्चाद् देशे युद्धं विरराम।

---

# १२ द्वादशोऽध्यायः।

१ मूससा नृपयोर्देशविभजनं ७ यिहोशूयेनैकत्रिंशन्नृपाणामधिकारवशीकरणं।

अपरं यं यं राजानम् इस्रायेलवंशो हत्वा तेषां देशमधिचकार १ तेषां राज्ञां नामानि। यर्द्दनस्य पूर्व्वकूले सूर्य्योदयदिशि अर्णोननदीमारभ्य हर्म्मोणगिरिं यावत् समस्तदेशे पूर्व्वदिक्स्थप्रान्तरे च हिष्वोणनिवासीमोरीयाणां सीहोन् राजा। स अर्णोननदीतीरस्थारोयेरं २ नदीमध्यञ्चारभ्य अम्मोन्वंशस्य सीमां यब्बोकनदीं यावद् गिलियददेशस्यार्द्धस्य तथा किन्नेरतहृदस्य पूर्व्वतटं यावद् वैत्यिशीमोतपथसन्निधौ ३ प्रान्तरस्थलवणसागरस्य पूर्व्वतटञ्च यावत् प्रान्तरस्य अस्दोत्पिसगाधःस्थितदक्षिणदेशस्य च भूपतिरासीत्। तथा तैरोगनाम्ना वाशानीय- ४ राजस्य जनपदो वशीकृतः, स रफायलोकानां शेषः, अस्तारोतम् इद्रियी च तस्य वासस्थाने आस्तां। स गिशूरीयाणां माखाथीयानाञ्च ५ सीमां यावत् हर्म्मोणगिरेः सल्खायाः सर्व्ववाशानस्य तथा हिष्वोणीय-

सीहोनस्य राज्ञः सीमानिकटवर्त्तिनो ऽर्द्धगिलियदस्य भूपतिरासीत्।
६ परमेश्वरस्य सेवकेन मूससेस्रायेल्वंशेन च तयो राज्ञो र्वशीकृतयोः परमेश्वरस्य सेवको मूसास्तं देशम् अधिकर्त्तुं रूवेणवंशाय गादवंशाय मिनशेरर्द्धवंशाय च ददौ।
७ यर्द्दनद्याः पारे पश्चिमदिशि लिवानोनोपत्यकास्थं वालगादम् आरभ्य सेयीरं प्रति गामिनं हालकपर्व्वतं यावत् पर्व्वतस्थसमभूमिस्थ-प्रान्तरस्थोपत्यकास्थकाननस्थदक्षिणदेशस्थानां हित्तीयानाम् इमोरीयाणां
८ किनानीयानां पिरिषीयाणां हिव्वीयानां यिवूषीयाणाञ्च ये नृपा यिहो-शूयेनेस्रायेल्वंशेन च वशीकृता येषां देशञ्च वंशानाम् अंशानुसाराद्
९ अधिकर्त्तुं यिहोशूयेनेस्रायेल्वंशाय दत्तस्तेषां नृपाणां नामानि। यिरी-
१० होरेको राजा वैथेलसमीपस्थस्य अयस्यैको राजा। यिरूशालमस्यैको राजा
११ हिव्रोणस्यैको राजा। यर्म्मूतस्यैको राजा लाखीशस्यैको राजा। इग्लोन-
१३ स्यैको राजा गेषरस्यैको राजा। दिवीरस्यैको राजा गेदरस्यैको राजा।
१५ हर्म्मायाः एको राजा अरादस्यैको राजा। लिब्नाया एको राजा,
१७ अदुल्लमस्यैको राजा। मक्केदाया एको राजा वैथेलस्यैको राजा। तपूह-
१८ स्यैको राजा हेफरस्यैको राजा। अफेकस्यैको राजा लशारोणस्यैको
२० राजा। मादोनस्यैको राजा हात्सोरस्यैको राजा। शिम्रोणमिरोणस्यैको
२१ राजा, अक्षफस्यैको राजा। तानकस्यैको राजा मगिद्दोरेको राजा।
२२ केदशस्यैको राजा कर्म्मिलस्थयग्नियामस्यैको राजा। दोरसीमास्थ-
२४ दोरस्यैको राजा गिल्गलदेशीयानाम् एको राजा। तिर्साया एको राजा च, सर्व्व एते एकत्रिंशद् राजान आसन्।

---

## १३ त्रयोदशोऽध्यायः।

१ शेषदेशानां कथा १५ रूवेणवंशभोग्यभूमेः कथा २४ गाद्वंशभोग्यभूमेः कथा २९ मिनशेरर्द्धवंशभोग्यभूमेः कथा च।

१ अपरं परमेश्वरो प्रवयसं वृद्धं यिहोशूयमवदत् त्वं वृद्धः स्थाविर-
२ प्राप्तश्च, इदानीमपि वशीकर्त्तव्यो बहुदेशः शेषोऽस्ति। तस्यावशिष्टदेशस्य
३ निर्णयोयं, पिलेष्टीयानां सर्व्वजनपदो गिशूरीयाणां सर्व्वदेशश्च। मिसर-सम्मुखस्थशीहोरमारभ्योत्तरदिक्स्थम् इक्रोणं यावत् किनानीयानाम् अधिकारेण गणितो देशः। असातीय-अस्दोदीय-अस्किलोनीय-गातीय-

इक्रोणीयपिलेष्टीयानाम् एतेषां पञ्चनृपाणां जनपदा अव्वीयदेशश्च ।
दक्षिणदिशि किनानीयानां सर्व्वो देशः, अफेकाम् इमोरीयाणां सीमाञ्च ४
यावत् सीदोनीयानाम् अधीना मियारा, गिब्लीयानां देशः, हर्म्मोण- ५
पर्व्वतस्य मूलस्थितं बालगादम् आरभ्य हमातप्रवेशस्थानं यावत् सूर्य्यो-
दयदिक्स्थः सर्व्वलिबानोनपर्व्वतः। तं लिबानोनम् आरभ्य मिस्रिफोत- ६
मयिमं यावत् पर्व्वतनिवासिनां सीदोनीयानाञ्च देशः। अहम् इस्रायेल-
वंशस्य सम्मुखात् तान् दूरीकरिष्यामि अहं यथा त्वाम् आज्ञापयं तथैव
त्वं लोकानां स्वस्ववंशेन भोग्यां भूमिम् अंशय, इदानीं नववंशानां मिनशे- ७
रर्द्धवंशस्य च कृते ते भोग्यो देशस्त्वया विभक्तव्यः । तस्यान्यार्द्धवंशो ८
रूबेणवंशो गाद्वंशश्च यर्द्दनसरितः पारे पूर्व्वदिशि मूससा दत्तं स्वे भोग्यं
देशं लेभिरे, यतो परमेश्वरस्य सेवको मूसास्तेभ्योऽर्णोनसरितस्तटस्थम् ९
अरोयेरं तथा सरिन्मध्यस्थनगरम् आरभ्य दीबोनं यावत् मेदिबायाः
सर्व्वसमभूमिं, तथा अम्मोनवंशस्य सीमां यावत् हिष्बोणनिवासिन १०
इमोरीयाणां सीहोननाम्नो महीपतेः समस्तं नगरं, तथा गिलियदं ११
गिशूरीयाणां माखाथीयानाञ्च जनपदं सर्व्वं हर्म्मोणपर्व्वतं सल्खां
यावत् सर्व्वबाशानम् अर्थाद् अस्तारोत इद्रिय्याञ्च निवसतो वृहत्काय- १२
वंशाद् अवशिष्टस्य ओगनाम्नो बाशानीयराजस्य राष्ट्रञ्च दत्तवान् ।
यतो मूसा एतान् प्रहृत्य दूरीकृतवान्। तथापीस्रायेल्वंशो गिशूरीयान् १३
माखाथीयांश्च न दूरीचकार तेन गिशूरीया माखाथीयाश्चाद्यापीस्रा-
येल्वंशस्य मध्ये वसन्ति । स लेविवंशाय काञ्चन भोग्यभूमिं नाददत् १४
परमेश्वरस्याज्ञानुसारेणेस्रायेलः प्रभोः परमेश्वरस्य वह्निकृतोपहारस्तस्य
भोग्यांशो बभूव ।

तस्मिन् समये रूबेणवंशीयानां परिजनानुसारेण मूसास्तेभ्यो भोग्यं १५
देशं दत्तवान्। तेषां देशस्य निर्णयोयम् अर्णोनसरितस्तटस्थम् अरो- १६
येरम् आरभ्य सरितो मध्यस्थितं नगरं मेदिबायाः समीपस्था समस्तसम-
भूमिस्तथा हिष्बोणं समभूमौ स्थितानि तस्य समस्तनगराणि दीबोनं १७
बामोत्-बालं बैत्-बाल्-मियोनं यहसं किदेमोतं मेफातं किरियाथयिमं १८
सिब्मा निम्नभूमेः पर्व्वतस्थं सेरतनगरं बैत्पियोरम् अस्दोत्-पिस्गा २०
बैत्-यिशीमोतं समभूमौ स्थितानि समस्तनगराणि हिष्बोणनिवासिन २१
इमोरीयराजस्य सीहोनस्य निखिलो जनपदः, यतो मूसास्तम् इविं रेकमं
सूरं हूरं रेबाञ्च सीहोनस्य सेनान्यस्तद्देशनिवासिन एतान् मिदियनीय-

२१ यतीन् विनाशयामास। इस्रायेल्वंशः खड्गधारेण यान् अवधीत्, तेषां
२२ मध्यगतं बियोरपुत्त्रं मायाविनं बिलियमनपि जघान। अपरं यर्द्दननदी
तस्याः प्रदेशश्च रूबेणवंशस्य सीमासीत्, इति परिजनानुसाराद् रूबेण-
वंशेन भोग्यस्य देशस्य नगराणां ग्रामाणाञ्च निर्णयः।
२४ अनन्तरं मूसा गादवंशस्य परिजनानुसारेण गादवंशायांशमेकं
२५ दत्तवान्। तस्य निर्णयोऽयं यासेरं गिलियदस्य सर्व्वनगराणि रब्बायाः
२६ सम्मुखस्थम् अरोयेरं यावद् अम्मोनवंशस्यार्द्धदेशश्च, अपरं हिष्बोणस्य
रामतमिस्पाश्च मध्यस्थानं बिटोनीमञ्च मह्नयिमस्य दिबीरसीमायाश्च
२७ मध्यस्थानं, समभूमिस्थबैथारमं बैत्निम्रा सुक्कोतं साफोनं हिष्बोणी-
यसीहोनाख्यनृपस्यापरो जनपदः, अपरं यर्द्दनपारे पूर्व्वदिशि स्थितं
२८ किन्नेरतह्रदस्य तटं यावद् यर्द्दननदी तस्याः प्रदेशश्च। इति स्वपरिजना-
नुसाराद् गादवंशेन भोग्यस्य देशस्य नगराणां ग्रामाणाञ्च निर्णयः।
२९ अनन्तरं मूसा मिनशेरर्द्धवंशस्य परिजनानुसारात् मिनशेरर्द्धवंशायां-
३० शमेकं दत्तवान्। तस्य निर्णयोयं मह्नयिमम् आरभ्य कृत्स्नो वाशान-
देशो वाशानीयराजस्य ओगस्य सर्व्वजनपदो वाशानस्थानि सर्व्वाणि
३१ यायीरनगराणि अर्थात् षष्टिनगराणि, अपरं गिलियदस्यार्द्धम् ओग-
राजस्य अस्तारोतम् इद्रियी च वाशानस्थे एते राजपुर्य्यौ। एतानि
मिनशेः पुत्त्रस्य माखीरस्य वंशायार्थात् परिजनानुसारेण माखीरस्यार्द्ध-
३२ वंशाय दत्तानि। इति यर्द्दनस्य पूर्व्वपारे यिरीहोः समीपे मोयाब-
३३ प्रान्तरे मूसयांशीकृतानां देशानां निर्णयः। स मूसा लेविवंशाय कामपि
भूमिं भोगार्थं नाददात्, इस्रायेलः प्रभुः परमेश्वरस्तान् प्रति स्वीय-
वाक्यानुसारेण स्वयं तेषां भोग्यांशस्वरूपो बभूव।

# १४ चतुर्दशोऽध्यायः।

१ सार्द्धनववंशानां ६ कालेवस्य च भोग्यांशस्य कथनं।

१ अपरं किनान्देशे इस्रायेल्वंशे भोग्यां यां यां भूमिम् इलियासरो
२ याजको नूनपुत्रो यिहोशूय इस्रायेल्वंशानां कुलमुख्याश्च मूससा दत्तया
परमेश्वरस्याज्ञया गुटिकापातेन सार्द्धनववंशमध्य अंशीचक्रुस्तासां
३ भूमीनां निर्णयोयं। यर्द्दनः पारे मूसाः सार्द्धवंशद्वयाय भोग्यभूमिं
४ दत्तवान् किन्तु लेविवंशाय तेषां मध्ये भोग्यभूमिं न दत्तवान्। यूषफ-

वंशीयानां मिनशिरिफ्रयिमस्य च द्वौ वंशावास्तां, अपरं लेवि वंशाय वासनगराणि पश्वादिसंस्थानार्थं तेषां परिसरांश्च विना कोऽप्यंशो न दत्तः। परमेश्वरो मूससं यदादिशत् तदेवाचरन्त इस्रायेलीयलोकाः ५ स्तेषां मध्ये देशं विभज्य जगृहुः।

तस्मिन् समये यिहूदावंशे गिल्गलि यिहोशूयस्य समीपमागते ६ किनसीययिफुन्नेः पुत्रः कालेवस्तं जगाद परमेश्वरस्त्वाम् माञ्चाधि कादेशबर्णेये स्वसेवकं मूससं यद्वाक्यम् अवदत् तत् त्वं ज्ञातोऽसि। मम ७ चत्वारिंशद् वर्षवयःसमये परमेश्वरस्य सेवको मूसा देशं निरीक्षितुं कादेशबर्णेयात् मां प्रैषयत्। तेनाहं तस्य समीपम् आगत्य यथाबुद्धि वार्त्ताम् उक्तवान्। मम सहगामिनो भ्रातरो लोकानां मनांसि ८ विषण्णानि कृतवन्तः किन्त्वहं सम्पूर्णरूपेण स्वप्रभोः परमेश्वरस्यानुगतोऽतिष्ठं। इति कारणात् मूसास्तस्मिन् दिने शपथं कुर्व्वन् अकथयत्, ९ यस्या भूमेरुपरि तव पादार्पणं जातं सा त्वया तव वंशेन च सदा भोग्या भविष्यति यतस्त्वं सम्पूर्णरूपेण मम प्रभोः परमेश्वरस्यानुगतो विद्यसे। इदानीं पश्य, इस्रायेल्वंशस्य प्रान्तरेण गमनस्य यस्मिन् समये पर- १० मेश्वरो मूससं तां वाचमवदत् तमारभ्य परमेश्वरः स्ववाक्यानुसारेण पञ्चचत्वारिंशद्वत्सरान् मां जीवन्तं रक्षितवान् अद्याहं पञ्चाशीति-वर्षवयस्कोऽस्मि। मूसा यस्मिन् दिने मां प्रेषितवान् तस्मिन् दिने ११ मम यद् बलम् आसीत्, तदेव बलम् अधुनापि ममास्ति, युद्धं कर्त्तुम् अन्तर्वहिर्गमनागमनं कर्त्तुञ्च मम तदानीं यादृशी शक्तिरासीद् इदानीमपि तादृश्यास्ते। अतः कारणात् तस्मिन् दिवसे परमेश्वरो यं गिरि- १२ मधि कथितवान् स एष पर्व्वतो मह्यं दीयतां। अनाकीवास्तत्र स्थाने तिष्ठन्ति तेषां नगराणि वृहन्ति प्राचीरवेष्टितानि चेति तस्मिन् दिने त्वयाश्रावि किन्तु परमेश्वरो यदि मया सार्द्धं तिष्ठेत् तर्हि परमेश्वरस्य वचनानुसारेण तानहं वहिः करिष्यामि। ततो यिहोशूयस्तस्मा आशिषं १३ ददौ, अपरं स यिफुन्नेः सुतेन कालेवेन भोग्यमंशं हिब्रोणं तस्मै ददौ। इत्थं हिब्रोणम् अद्यापि किनसीययिफुन्नेः सुतस्य कालेवस्य वंशभोग्या १४ भूमिरास्ते, यतः स सम्पूर्णत्वेनेस्रायेलः प्रभोः परमेश्वरस्यानुगत आसीत्। पूर्व्वं तस्य हिब्रोणस्य नाम किरियथर्वम् आसीत् सोऽर्व्वोऽनाकीयानां १५ मध्ये मुख्य एको मानव आसीत्। पश्चाद् देशे रणस्य विरामो बभूव।

# १५ पञ्चदशोऽध्यायः।

१ यिहूदावंशस्य सीमानिर्णयः १३ हिब्रोणं जित्वा कालेवस्याधिकारप्राप्तिः १६ दिबीरं जित्वा कालेवस्य दुहितृग्रहीतुरत्नीयेलस्य कथनं २० यिहूदावंशस्य देशान्तःपातिनगराणां निर्णयो यिबूषीयाणां पराजयकथनञ्च।

१ अपरं स्वस्वपरिजनानुसारेण यिहूदावंशीयानाम् अंशस्य सीमानिर्णयोऽयं, दक्षिणदिशि इदोमदेशस्य पार्श्वस्थं सीन्प्रान्तरं तेषां दक्षिणप्रान्त आसीत्। २ तेषां दक्षिणसीमा लवणजलधेः प्रान्तमर्थाद् दक्षिणदिगभिमुखं खातम् आरभ्य ३ दक्षिणदिशं प्रति माले-अक्रब्बीमनाम्ना ऊर्द्धगामिवर्त्मना सीनपर्य्यन्तं याति, अपरं कादेशवर्णेयस्य दक्षिणपार्श्वेन हिष्रोनं यावद् गत्वा तत ऊर्द्धगामिनी भूत्वा अदरं गत्वा ४ वक्रमार्गेण कर्क्कां प्रगच्छति। अनन्तरं अस्मोनं प्रति गत्वा मिसरसरिता समुद्रं निर्गच्छति स एव तस्याः सीमाया अन्तः। इयं ५ युष्माकं दक्षिणसीमा भविष्यति। अपरं यर्द्दनस्य शेषं यावत् लवणजलधिः पूर्व्वसीमा। अपरम् उत्तरदिशः सीमेयं, यर्द्दनस्य प्रान्तस्थाद्धि- ६ खातम् आरभ्य सा सीमा वैथग्लां प्रति गत्वा वैथराबाया उत्तर- ७ पार्श्वेन रूवेणवंशीयबोहनस्य पाषाणं यावद् गच्छति। अनन्तरं सा सीमा आखोरोपत्यकया दिबीरं गत्वा ततः सरितो दक्षिणपारस्थस्य अदुम्मीनस्योर्द्धगामिनः पथः सम्मुखस्थं गिल्गलं प्रति मुखं दत्वा उत्तरदिशं गच्छति, ततःपरम् एनशेमशनामकं तोयं प्रति चलति, तस्यान्त- ८ भाग एनरोगेलम् अस्ति। सा सीमा बिनहिन्नोमनामिकोपत्यकया प्रगत्य यिबूषस्यार्थाद् यिरूशालमस्य दक्षिणपार्श्वं गच्छति, अनन्तरं सा सीमा पश्चिमे हिन्नोमोपत्यकाभिमुखस्य रिफायिमनामिकायाः समभूमेरुत्तर- ९ प्रान्ते स्थितस्य पर्व्वतस्य शृङ्गं गच्छति। अनन्तरं सा सीमा तस्य पर्व्वतस्य शिखरात् निप्तोहस्तोयस्य प्रस्रवणं यावद् वक्रीभूयेफ्रोणपर्व्वतस्थनगराणि प्राप्नोति, अपरं सा सीमा बालानगरेणार्थात् किरियतयियारीमनगरे- १० णाङ्क्यते। पश्चात् सा सीमा बालातः पश्चिमदिशि वक्रीभूय सेयीरपर्व्वतेन यियारीमपर्व्वतस्योत्तरपार्श्वेनार्थात् किषालोन वैत्शेमशं प्राप्य ११ तिम्नायां प्रगच्छति। अपरं सा सीमा इक्रोणस्योत्तरपार्श्वं गच्छति, पश्चात् सा सीमा शिक्रोणं यावद् विस्तार्य्यते, अपरं बालापर्व्वतं गत्वा यब्नीयेलं १२ यावद् गच्छति, समुद्रस्य तस्याः सीमायाः अन्तो भवति। अपरं पश्चिम-

सीमा महासमुद्रस्तदीयप्रदेशश्च, इति परिजनानुसारेण यिहूदावंशस्य चतुर्दिक्स्थितसीमानिर्णयः समाप्तः।

अपरं यिहोशूयं प्रति परमेश्वरस्याज्ञया यिहूदावंशस्य मध्याद् अनाकस्य पितुरर्ब्बस्य नाम्ना विख्यातं किरियतर्ब्बमर्थात् हिब्रोणनगरं यिफुन्नेः सुताय कालेवायादायि। अपरं कालेवस्तस्माद् अनाकीयवीरत्रयम् अर्थाद् अनाकस्य शेशय-अहीमान-तल्मयनाम्नः सुतान् दूरीचकार। अनन्तरं तस्माद् दिवीरनिवासिनां प्रतिकूलं जगाम, पूर्व्वं तद् दिवीरं किरियतसेफरनाम्ना विख्यातम् आसीत्। ‹१३ १४ १५›

तस्मिन् समये कालेवो जगाद यः किरियतसेफरम् आक्रम्य हस्तगतं करिष्यति, अहम् अक्षानामिकां निजकन्यां तं विवाहयिष्यामि। ततः कालेवस्य भ्राता यः किनसस्तस्य सुतेनात्नियेलेन तन्नगरे हस्तगते कृते स अक्षानामिकां निजकन्यां तं विवाहयामास। अपरं भर्त्तुः समीपम् आगमनकाले सा कन्या स्वपितुः सकाशाद् एकं क्षेत्रं याचितुं भर्त्तुरनुमतिं ययाचे, तदा तस्यां निजगर्द्दभाद् अवरूढायां कालेवस्तां पप्रच्छ त्वं किं याचसे? सा प्रत्यवदत्, भवान् मह्यम् आशिषं ददातु, यतो दक्षिणस्यां भूमिं मह्यम् अददात्, इदानीं तोयप्रस्रवणानि मह्यं ददातु, ततः स उपरिस्थानि अधःस्थानि च प्रस्रवणानि तस्यै दत्तवान्। ‹१६ १७ १८ १९›

अपरं स्ववंशानुसारेण यिहूदावंशेन भोग्याया भूमेर्निर्णयोयं। दक्षिणदिशि इदोमः सीमायाः समीपस्थानि यिहूदावंशस्य प्रान्तस्थितानि नगराणीमानि, कव्सेलम् एदरं यागुरं कीना दीमोना अदादा केदशं हात्सोरं यित्नं सीफं टेलमं वालोतं हात्सोरहदत्ता किरियोतं हिब्रोणं वा हात्सोरम् अमामं शिमा मोलादा हत्सरगद्दा हिष्मोणं वैत्पेलटं हत्सरशियालं वेर्शेवा विषियोथिया वाला इयीमम् एत्समम् इल्तोलदं किषीलं हर्म्मा सिक्लगं मद्मन्ना सन्सन्ना लिवायोतं शिल्हीमम् ऐनं रिम्मोणश्च, इमान्यूनत्रिंशन्नगराणि तेषां ग्रामाश्च। अपरं समभूमौ इष्टायोलं सरियम् अश्ना सानोहम् ऐनगन्नीमं तपूहं ऐनमं यर्मूतम् अदुल्लमं सोखुः असेका शारयिमम् अदीथयिमं गिदेरा गिदेरोथयिमश्च, इमानि चतुर्दश नगराणि तेषां ग्रामाश्च। अपरं सिननं हदाशा मिग्दलगादं दिलियनं मिस्पी यक्तेलं लाखीशं वस्कतम् इग्लोनं कव्वोनं लहमवं कितलीशं गिदेरोतं वैत्दागोनं नयमा मक्केदा च, इमानि षोडश नगराणि तेषां ग्रामाश्च। तथा लिव्ना एथरम् ‹२० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० ४१ ४२›

४४ आशनं यिप्तहम् अश्ना नित्सीवं कियीला अक्षीवं मारेशा च, इमानि
४५ नव नगराणि तेषां ग्रामाश्च। अपरम् इक्रोणं तस्य शाखानगराणि
४६ ग्रामाश्च। इक्रोणमारभ्य जलधिं यावद् अस्दोदस्य समीपस्थः प्रदेशः
४७ सर्व्वे ग्रामाश्च। अपरम् अस्दोदं तदीयशाखानगराणि ग्रामाश्च, अस्रा मिसरसरितं यावद् तदीयशाखानगराणि ग्रामाश्च, महाजलधिश्च सीमासीत्।

४८ पर्व्वते शामीरं यत्तीरं सोखः दन्ना किरियतसन्ना अर्थाद् दिवीरम्
५१ आनवम् इष्टिमोयम् आनिमं गोशनं होलोनं गिलुश्च, इमान्येकादश
५२ नगराणि तेषां ग्रामाश्च। अपरम् अरवं दूमा इशियनं यानूमं वैत्तपूहम्
५४ अफेका हुमटा किरियथर्ब्बमर्थात् हिब्रोणं सीयोरश्च, इमानि नवनग-
५६ राणि तेषां ग्रामाश्च। अपरं मायोनं कर्म्मिलं सीफं यूटा यिष्रियेलं यग्-
५७ दियामं सानोहं कयिनं गिबिया तिम्ना च, इमानि दश नगराणि तेषां
५९ ग्रामाश्च। अपरं हल्हूलं वैत्सूरं गिदोरं मारतं वैथनोतम् इल्तिकोनश्च,
६० इमानि षट् नगराणि तेषां ग्रामाश्च। अपरं किरियतवालम् अर्थात् किरियतयियारीमं रब्बा च, इमे द्वे नगरे तयो र्ग्रामाश्च।

६१ प्रान्तरे वैथरावा मिद्दीनं सिकाखा निव्शनं लवणनगरम् ऐनगिदी
६२ च, इमानि षट् नगराणि तेषां ग्रामाश्च। किन्तु यिहूदावंशो यिरूशा-लमनिवासिनो यिबूषीयान् दूरयितुं न शशाक, ततो हेतो र्यिबूषीया अद्यापि यिहूदावंशेन समं यिरूशालमे वसन्ति।

---

# १६ षोडशोऽध्यायः।

१ यूषफवंशस्य सीमानिर्णयः ५ विशेषत इफ्रयिमवंशस्य सीमाया निर्णयः।

१ अपरं यूषफवंशस्यांशो निरणीयत। स यिरीहोः समीपस्थयर्द्दनम् अर्थात् पूर्व्वदिक्स्थितं यिरीहोस्तोयं यिरीहोर्वैथेलपर्व्वतगामि प्रान्तर-
२ ञ्चारभ्य वैथेलेन लूसं गच्छति, ततोऽर्कीयसीमाम् अटारोतं गच्छति।
३ अपरं पश्चिमदिशि यफ्लेटीयसीमां प्रति गत्वा नीचस्थवैथोरोणस्य
४ सीमां गेषरञ्च प्राप्नोति तस्यान्तभागो जलधौ विद्यते। यूषफो वंशीयो मिनशिरिफ्रयिमश्च द्वावंशौ जगृहतुः।

५ स्ववंशानुसारेण इफ्रयिमवंशस्यांशस्य निर्णयोऽयं। तस्य सीमा
६ पूर्व्वदिश्यट्रोतादरम् आरभ्योर्द्धस्थवैथोरोणं यावत् प्रगच्छति। ततः

सा सीमा पश्चिमदिशि मिक्मिथाया उत्तरपार्श्वं गच्छति, पश्चात् सा सीमा पूर्व्वदिशि वक्रीभूय तानतशीलुं प्राप्य तेन पूर्व्वदिशि यानोहं गच्छति। अनन्तरं यानोहतः सा अटारोतं नारताञ्च गच्छति, ततो ७ यिरीहें प्राप्य यर्द्दनं निर्गच्छति। पश्चात् सा सीमा तपूहात् काना- ८ सरिता पश्चिमदिशं गच्छति तस्या अन्तभागो जलधावास्ति। इति स्वस्व- वंशानुसारेणेफ्रयिमवंशस्यांशस्य निर्णयः। इफ्रयिमवंशस्य विभिन्नानि ९ कतिपयनगराणि तेषां ग्रामाश्च मिनशिवंशीयानां भूमिमध्य आसन्। ते १० गेषरवासिनः किनानीयान् न दूरयामासुस्तस्ते किनानीया अद्यापीफ्र- यिमवंशेन समं वसन्ति कराधीनाः सन्ति च।

---

## १७ सप्तदशोऽध्यायः।

१ मिनशिवंशस्यांशनिर्णयः ७ देशस्य सीमादीनां निर्णयः १४ यूषफवंशं प्रति यिहोशूयस्य कथनं।

अनन्तरं मिनशिवंशस्यांशो निरणीयत यतः स यूषफो ज्येष्ठः सुतः, १ अपरं गिलियदः पिता मिनशिर्ज्येष्ठः सुतो माखीरो योद्धृत्वकारणाद् गिलियदं बाशानञ्च प्राप। ततः स्वस्ववंशानुसारेण मिनशिरन्यवंशानाम् २ अर्थाद् अवीयेषरवंशस्य हेलकवंशस्य अस्रीयेलवंशस्य शेखमवंशस्य हेफरवंशस्य शिमीदावंशस्य च कृते स अंशो निरणीयत, एते स्वस्वपरि- जनानुसाराद् यूषफसुतस्य मिनशेः पुत्त्रसन्ताना आसन्। किन्तु मिनशे- ३ र्वृद्धप्रपौत्त्रस्य माखीरप्रपौत्त्रस्य गिलियदपौत्त्रस्य हेफरपुत्त्रस्य सिलफदस्य पुंसन्तानो नासीत्, मह्ला-नोया-हग्ला-मिल्का-तिर्सानामिकाः केवलं कतिपयाः कन्या आसन्। ता इलियासरस्य याजकस्य नूनपुत्त्रस्य यिहो- ४ शूयस्याधिपानाञ्च साक्षाद् आगत्येदं निवेदयाञ्चक्रिरे, अस्माकं भ्रातॄणां मध्येऽस्मभ्यं भोग्यभूमिं दातुं परमेश्वरो मूससमाज्ञापयत्, ततः स परमे- श्वरस्याज्ञया भ्रातॄणां मध्ये ताभ्योऽपि भोग्यभूमिं दत्तवान्। इत्थं ५ यर्द्दनस्य पारस्थितं गिलियदं बाशानञ्च विना मिनशेर्दशांशा बभूवुः। यतो मिनशेः पुत्त्राणां मध्ये तस्य कन्या अपि भोग्यभूमिं प्रापुः, अपरं ६ मिनशेः शेषपुत्त्रा गिलियददेशं प्रापुः।

मिनशेः सीमा आशेरमारभ्य शिखिमस्य सम्मुखस्थं मिक्मिथतं यावत् ७ प्रगच्छति। सा सीमा दक्षिणदिशं गत्वा एनतपूहनिवासिनां देशं

८ गच्छति। मिनशिस्तपूर्व्वदेशं प्राप किन्तु मिनशेः सीमास्थं तपूहनगरम्
९ इफ्रयिम्वंशस्य बभूव। सा सीमा कान्नासरितो दक्षिणतटेनावरुह्य गच्छति, तत्रत्यानीफ्रयिमीयनगराणि मिनशेर्नगराणां मध्ये सन्ति, सरित
१० उत्तरतटं मिनशेः सीमास्ते, अपरं तस्या अन्तभागो जलधावास्ते। दक्षिण-तटम् इफ्रयिमस्य, उत्तरतटञ्च मिनशे भूमिरास्ते, अपरं जलधिस्तस्याः सीमास्ते। अपरम् उत्तरदिशि सा आशेरेण, पूर्व्वदिशि इषाखरेण
११ युक्तास्ते। अपरम् इषाखराशेरयोर्मध्ये बैत्शानं तस्य ग्रामा यिब्लियमं तस्य ग्रामा दोरं तस्य ग्रामा ऐन्दोरं तस्य ग्रामास्तानकं तस्य ग्रामा मगि-
१२ द्दुस्तस्या ग्रामा अर्थात् प्रदेशत्रयं मिनशेर्वंशायादायि। तथापि मिनशे-र्वंशस्तन्नगरीयान् जनान् दूरयितुं न शशाक, किनानीयलोकाश्च तस्मिन्नेव
१३ देशे वस्तुं मतिं चक्रुः। अनन्तरम् इस्रायेल्वंशः पराक्रमी भूत्वा किना-नीयान् करदान् चकार किन्तु निःशेषं न दूरयाञ्चकार।

१४ अनन्तरं यूषफवंशा यिहोशूयं विज्ञाप्य जगदुः, त्वम् अस्माभि र्भोग्य-भूम्यर्थम् अस्मभ्यं केवलमेकांशम् एकभागञ्च कुतो दत्तवान्? परमेश्वर-
१५ स्याशीर्व्वादाद् वयमधुना विशालवंशा अभवाम। ततो यिहोशूयस्तान् अवदत्, यदि यूयं विशालवंशास्तर्हि काननस्थलं यात, एष इफ्रयि-मपर्व्वतो यदि संकीर्णो बुध्यते तर्हि तस्मिन् स्थाने पिरिषीयाणां
१६ रिफायिमवंशीयानाञ्च देशे निजार्थं द्रुमान् छिन्त। तेन यूषफवंशो जगाद तस्मिन् पर्व्वतेऽस्माकं समावेशो न जायते, अपरं समभूमिनि-वासिनां सर्व्वेषां किनानीयानां विशेषतो बैत्शानस्थानां तद्ग्रामस्थानाञ्च
१७ तथा यिष्रियेल्समभूमिवासिनां लौहा रथाः सन्ति। अनन्तरं यिहो-शूयो यूषफवंशाविफ्रयिमं मिनशिञ्च जगाद यूयं विशालवंशा महा-
१८ पराक्रमाश्च युष्माकं केवलमेकांशो न भविष्यति। किन्तु पर्व्वतो युष्माकं भविष्यति, तत्र वनमास्ते, तद्वने युष्माभिः छिन्ने तस्याधोभागो युष्माकं भविष्यति, रथादिबलेन पराक्रान्ताः किनानीया युष्माभिर्दूरयिष्यन्ते।

---

## १८ अष्टादशोऽध्यायः।

१ आवासस्य स्थापनं २ देशनिर्णयार्थं जनप्रेषणं १० देशविभजनं ११ बिन्यामीनस्यांश-निर्णयो नगराणां नामानि च।

१ अनन्तरम् इस्रायेल्वंशस्य सर्व्वे समाजीयाः शीलो मिलित्वा तत्र स्थाने समाजावासं स्थापयामासुर्देशश्च तेषां सम्मुखे पराजित आसीत्।

२ तस्मिन् समये इस्रायेल्वंशस्य मध्ये अलब्धभोग्यभूमयः सप्तवंशा अवशिष्टा आसन्। ३ ततो यिहोशूय इस्रायेल्वंशान् बभाषे यूयं स्वेषां पैतृकेण प्रभुणा परमेश्वरेण दत्तं देशम् अधिकर्त्तुं गमनाय कियत्कालं विलम्बं करिष्यथ? ४ एकैकस्य वंशस्य मध्यात् त्रीन् त्रीन् नरान् दत्त मया प्रेषितैस्तैर्गत्वा देशो निरीक्ष्यतां स्वेषां प्राप्तव्यांशानुसारेण कृतस्तस्य निर्णयो मम समीपम् आनीयताञ्च। ५ ते तं विभज्य सप्तांशं करिष्यन्ति, दक्षिणदिशि स्वसीमायां यिहूदाः स्थास्यति तथोत्तरदिशि स्वसीमायां यूषफवंशः स्थास्यति। ६ यूयं देशं सप्तांशं कृत्वा निर्णीय तन्निर्णयपत्रं मम समीपम् आनयत, ततोऽहमत्र स्थाने ऽस्माकं प्रभोः परमेश्वरस्य साक्षाद् युष्मन्निमित्तं गुटिकापातं करिष्यामि। ७ किन्तु युष्माकं मध्ये लेवीयानां कश्चिदंशो न भविष्यति यतः परमेश्वरस्य याजकत्वकर्म्मैव तेषाम् अंशस्वरूपं। तथा गादवंशाय रूवेणवंशाय मिनशेरर्द्धवंशाय च परमेश्वरस्य सेवकेन मूससा यो देशो ऽदायि, ते तत्र यर्द्दनस्य पारे पूर्व्वदिशि स्वैर्भोग्यान् अंशान् गृहीतवन्तः। ८ अनन्तरं तैर्लोकैरुत्थाय यात्राऽकारि यिहोशूयेन च देशस्य निर्णयपत्रमधि तेभ्यो ऽयमादेशोऽदायि, यूयं गत्वा देशस्य सर्व्वत्र भ्रमन्तो देशनिर्णयपत्रं लिखित्वा मम समीपं प्रत्यागच्छत ततोऽहम् अत्र शीलो परमेश्वरस्य साक्षाद् युष्माकं कृते गुटिकापातं करिष्यामि। ९ अनन्तरं ते लोका गत्वा देशस्य सर्व्वत्र भ्रमन्तस्तं सप्तांशं कृत्वा नगरादीनां निर्णयं पत्रे लिलिखुः। अनन्तरं शीलुस्थं शिविरं यिहोशूयस्य समीपं प्रत्याजग्मुः।

१० ततो यिहोशूयः शीलो परमेश्वरस्य साक्षात् तेषां कृते गुटिकापातं चकार, इत्थं यिहोशूयस्तस्मिन् स्थाने इस्रायेलीयानाम् अंशानुसारेण देशं विभज्य तेभ्यो ददौ।

११ स्वस्वपरिजनानुसारेण बिन्यामीनवंशस्य भागनिर्णयः, तेषाम् अंशस्य सीमा यिहूदावंशयूषफवंशयोर्मध्ये बभूव। १२ उत्तरप्रान्ते सा सीमा यर्द्दनमारभ्य यिरीहोरुत्तरपार्श्वं गत्वा ततः पर्व्वतस्य मध्येन पश्चिमदिशं गच्छति वैथावनप्रान्तरे तस्या अन्तभाग आस्ते। १३ अपरं सा सीमा तस्मात् लूसं प्रगत्य वैथेलस्य दक्षिणस्थेन लूसस्य पार्श्वेन गच्छति, तस्माद् अटारोताद्दरं प्रत्यवरुह्य अधःस्थवैथोरोणस्य दक्षिणदिक्स्थं पर्व्वतं प्राप्नोति। १४ अपरं सा सीमा तस्माद् आकृष्टा दक्षिणगामिनी पश्चिमसीमा जाता वैथोरोणस्य सम्मुखस्थेन पर्व्वतेन दक्षिणदिशं गच्छति किरियतबालम्

अर्थात् किरियतयियारीमनामकं यिहूदावंशस्य नगरं तस्या अन्तभागो
१५ भवति, सा पश्चिमसीमा। अपरं दक्षिणसीमा किरियतयियारीमस्य
प्रान्तमारभ्य पश्चिमदिशं गत्वा निप्तोहस्य प्रस्रवणं यावद् गच्छति।
१६ अपरं सा सीमा रिफायिमसमभूमेरुत्तरदिक्स्थस्य विनहिन्नोमो-
पत्यकायाः सम्मुखस्थस्य पर्व्वतस्य प्रान्तं यावदवरुह्य तथा हिन्नोमोपत्य-
१७ कया यिवूषस्य दक्षिणपार्श्वेनावरुह्य ऐनरोगेलं प्राप्नोति। तत्र सा
उत्तरदिश्याकृष्टीभूय ऐनशेमशं गत्वा अदुम्मीमोर्द्धगामिमार्गस्य सम्मु-
खस्थं गिलीलोतं प्रति निर्गत्य रूवेणवंशीयबोहनस्य पाषाणं यावद्
१८ गच्छति। अपरं सा अरावाया उत्तरपार्श्वेन अरावाख्यं प्रान्तरं याति।
१९ अपरं सा सीमा बैथग्लाया उत्तरपार्श्वं प्राप्नोति। यर्द्दनस्य दक्षिणान्तो-
ऽर्थात् लवणजलधेरुत्तरीयमहाखातं तस्या अन्तभागो भवति, एषा
२० दक्षिणसीमा। अपरं पूर्व्वदिशि यर्द्दनसरिद् विन्यामीनस्य सीमासीत्,
इति स्वस्वपरिजनानुसारेण विन्यामीनवंशेन भोग्याया भूमेश्चतुर्द्दिक्स्थ-
२१ सीमाया निर्णयः। स्वस्वपरिजनानुसारेण विन्यामीनवंशस्य नगराणी-
२२ मानि बभूवुः, यिरीहो बैथग्ला किस्तीससमभूमि बैथरावा सिमारयिमं
२४ बैथेलम् अव्वीमं पारा अफ्रा कफरम्मोनी अफ्नि गेवा च, इमानि द्वादश
२६ नगराणि तेषां ग्रामाश्च। अपरं गिवियोनं रामतं वेरोतं मिस्पी किफीरा
२७ मोत्सा रेकमं यिर्पेलं तरला सेला एलफं यिवूषम् अर्थाद् यिरूशालमं।
२८ अपरं गिविया किरियतश्च, एतानि चतुर्दश नगराणि तेषां ग्रामाश्च।
इति स्वस्वपरिजनानुसारेण विन्यामीनवंशस्य भूमेर्निर्णयः।

---

## १९ ऊनविंशोऽध्यायः।

१ शिमियोनवंशस्य भागः १० सिवूलून्वंशस्य भागः १७ इषाखरवंशस्य भागः २४ आशेरवंशस्य भागः ३२ नप्तालिवंशस्य भागः ४० दानवंशस्य भागः ४९ यिहोशूयस्य भागश्च।

१ अनन्तरं द्वितीयांशः शिमियोनस्यार्थात् स्वस्वपरिजनानुसारेण शिमि-
योनवंशीयानां बभूव। तै र्भोग्या भूमि र्यिहूदावंशेन भोग्याया भूमे
२ र्मध्य आसीत्। तस्या भूमेर्मध्य इमानि नगराण्यासन् बेर्षेवा शेवा
५ मोलादा हत्सरशूयालं बाला एत्समम् इल्तोलदं विथूलं हर्म्मा सिक्लग
६ बैतमर्कावोतं हत्सरसुषीमं बैतलिवायोतं साष्हनञ्च, इमानि त्रयोदश
७ नगराणि तेषां ग्रामाश्च। अपरम् ऐनं रिम्मोणम् एथरम् आशनञ्च,

इमानि चत्वारि नगराणि तेषां ग्रामाश्च। अपरं बालतबेरं दक्षिण- ८
देशस्थं रामतञ्च यावत् तेषां नगराणां चतुर्दिक्स्थाः सर्व्वे ग्रामाः, इति
स्वस्वपरिजनानुसारेण शिमियोनवंशीयांशस्य निर्णयः। शिमियोन- ९
वंशेन भोग्यैषा भूमि यिहूदावंशेन भोग्याया भूमे र्मध्य आसीत्, यतो
यिहूदावंशस्यांशस्तस्य प्रयोजनाद् अधिक आसीत्, अतः शिमियोन-
वंशस्तेन भोग्याया भूमेर्मध्ये भोग्यभूमिं लब्धवान्।

अपरं तृतीयांशः स्वस्वपरिजनानुसारेण सिबूलूनवंशस्य बभूव। सा- १०
रीदं यावत् सिबूलूनवंशीयै र्भोग्याया भूमे र्निर्णयोयं। तेषां सीमा पश्चिमं ११
अर्थात् मरियलादिशं गत्वा दब्बेशतं प्राप्य यग्नियामस्य सम्मुखस्थां सरितं
यावद् गच्छति। अपरं सारीदतः पूर्व्वदिशमर्थात् सूर्य्योदयदिशं प्रति १२
परावृत्य किष्लोततावोरस्य सीमां यावद् गच्छति, पश्चाद् दाविरतं
यावत् निर्गत्य याफियम् उत्थाय गच्छति। अपरं तस्मात् पूर्व्वदिशं गत्वा १३
गातहेफरेण एतकात्सीनं यावद् गत्वा रिम्मोणमिथियोरं नेयञ्च यावद्
गच्छति। सा सीमा उत्तरदिशि तत्स्थानं वेष्टयित्वा हन्नाथोनं प्रगच्छति १४
यिप्तहेलोपत्यकायाञ्च तस्या अन्त आस्ते। अपरं तेषां कटतं नहलोलं १५
शिम्रोणं यिदाला वैतलेहमञ्च साकल्यतो द्वादश नगराणि तदीयग्रामा-
श्चासन्। इति स्वस्वपरिजनानुसारात् सिबूलूनवंशेन भोग्याया भूमेस्त- १६
दीयनगराणां ग्रामाणाञ्च निर्णयः।

अनन्तरं चतुर्थांश इषाखरवंशस्यार्थात् स्वस्वपरिजनानुसारेणेषाख- १७
रवंशीयानां बभूव। तेषां भूमे र्निर्णयोयं, यिष्रियेलं किषुल्लोतं शूनेमं १८
हफारयिमं शीयोनम् अनहरतं रब्बीतं किशियोनम् एवसं रेमतम् २१
ऐनगन्नीसम् ऐनहद्दा वैतपत्सेषञ्च। अपरं सा सीमा तावोरं शहत्सीमं २२
वैत्शेमशञ्च यावद् गच्छति, यर्द्दननदी तेषां सीमाया अन्त आस्ते। साक- २३
ल्यतस्तेषां षोडश नगराणि तदीयग्रामाश्च। इति स्वस्वपरिजनानुसाराद्
इषाखरवंशेन भोग्याया भूमेस्तदीयनगराणां ग्रामाणाञ्च निर्णयः।

अनन्तरं पञ्चमांशः स्वस्वपरिजनानुसाराद् आशेरवंशस्य बभूव। २४
तस्य सीमाया निर्णयोयं, हिल्कतं हली वेटनम् अक्षफम् अलम्मेलकम् २६
अमियादं मिशियलञ्च सा सीमा पश्चिमदिशि कर्म्मिलं शीहोरलिब्नाञ्च
प्राप्नोति। अपरं सूर्य्योदयदिशि वैतदागोनं प्रति वक्रीभूय सिबूलूनं २७
यिप्तहेलोपत्यकाञ्च यावत् प्रगच्छति उत्तरदिशि च वैथेमकं न्यीयेलञ्च
प्राप्नोति, ततो वामदिशि काबुलम् इब्रोणं रिहोवं हम्मोनं कान्नाञ्च २८

२९ प्रगत्य मह्लासीदोनं यावद् याति। अनन्तरं सा सीमा वक्रीभूय रामां सोरनामकं दुराक्रमं नगरञ्च यावद् गच्छति। अपरं सा वक्रीभूय होषां
३० गच्छति, अक्षीवदेशम् आरभ्य समुद्रस्तस्या अन्त आस्ते। अपरम् उम्मा अफेकं रिहोवञ्च साकल्यतस्तेषां द्वाविंशति नगराणि तदीयग्रामाश्च।
३१ इति स्वस्वपरिजनानुसाराद् आशेरवंशेन भोग्याया भूमेस्तदीयनगराणां ग्रामाणाञ्च निर्णयः।

३२ अनन्तरं षष्ठांशो नप्तालेरर्थात् स्वस्वपरिजनानुसारेण नप्तालिवंशीयानां
३३ बभूव। तेषां सीमा हेलफं सानन्नीमस्थ समीपस्थम् अलोन्‌वृक्षञ्चा-रभ्य अदामीनेकवेन यव्‌नियेलेन च लक्कुमं यावद् गच्छति यर्द्दननदी
३४ च तस्या अन्तभाग आस्ते। अपरं सा सीमा पश्चिमदिशं परावृत्य अस्नोततावोरं गत्वा तस्माद् हुक्कोकां प्रगच्छति दक्षिणपार्श्वे सिवूलूनं पश्चिमपार्श्वे आशेरं सूर्य्योदयदिशि च यर्द्दनसमीपस्थां यिहूदां प्राप्नोति।
३५ अपरं प्राचीरवेष्टितानि नगराणीमानि, सिद्दिमं सेरं हमातरक्कातं
३७ किन्नेरतम् अदामा रामा हात्सोरं केदशम् इद्रियी ऐनहात्सोरं
३८ यिरोणं मिगदलेलं होरेमं वैथनातं वैतशेमशञ्च। साकल्यतस्तेषाम्
३९ ऊनविंशति नगराणि तदीयग्रामाश्च। इति स्वस्वपरिजनानुसारात् नप्तालिवंशेन भोग्याया भूमेस्तदीयनगराणां ग्रामाणाञ्च निर्णयः।

४० अनन्तरं सप्तमांशः स्वस्वपरिजनानुसारेण दानवंशीयानां बभूव।
४१ तै र्भोग्याया भूमे र्निर्णेयं, सरियम् इष्टायोलम् ईरशेमशं शालब्बीमम्
४४ अयालोनं यित्‌ला एलोनं तिम्नाथा इक्रोणम् इल्‌तिकी गिब्बिथोनं
४६ वालतं यिहूदं विनेविरकं गातरिम्मोणं मेयर्कोनं रक्कोनं याफोः सम्मु-
४७ खस्था सीमा च। दानवंशीयानां सीमा तेषां प्रयोजनाद् अल्पासीत्, अतो दानवंशीया लेशमस्य प्रतिकूलं योद्धुं गत्वा तन्नगरं वशे चक्रुस्तत्रत्य-लोकांश्चासिभि र्हत्वा तेषां देशमधिकृत्य तन्मध्य ऊषुः स्वेषां पूर्व्व-
४८ पुरुषस्य दानस्य नामानुसारेण लेशमस्य नाम दानं चक्रुश्च। इति स्वस्वपरिजनानुसाराद् दान्‌वंशेन भोग्याया भूमेस्तदीयनगराणां ग्रामाणाञ्च निर्णयः।

४९ इत्थं स्वस्वसीमानुसारेणाधिकर्त्तुं तैर्देशविभजने समापित इस्रायेल्-
५० वंशाः स्वेषां मध्ये नूनसुतेन यिहोशूयेन भोग्यां भूमिं तस्मै ददुः। ते परमेश्वरस्याज्ञया तेन याचितं नगरम् अर्थाद् इफ्रयिमपर्व्वतस्थं तिम्नत-
५१ सेरहं तस्मै ददुः, ततः स तन्नगरं निर्म्माय तन्मध्य उवास। इत्थम्

इलियासरो याजको नूनसुतो यिहोशूय इस्रायेल्वंशस्याधिपाश्च शीलौ परमेश्वरस्य सम्मुखे समाजावासस्य द्वारसमीपे गुटिकापातेन सर्व्वेषाम् अंशान् निर्णीय देशस्य विभजनं समापयामासुः।

## २० विंशोऽध्यायः।

१ आश्रयनगराणि निरूपयितुम् ईश्वरस्याज्ञा ७ तेषां निरूपणञ्च।

अनन्तरं परमेश्वरो यिहोशूयं जगाद, त्वम् इस्रायेल्वंशेभ्यः कथय, १ अहं यान्याश्रयनगराण्यधि मूससा युष्मान् आदिष्टवान्, यूयं स्वार्थं २ तानि निरूपयत। तेन यः कश्चिद् हठाद् अज्ञानतो वा नरं हन्ति, स ३ तत्स्थानं पलायितुं शक्ष्यति तानि नगराणि शोणितपातस्य प्रतिफलदातृ रक्षार्थं युष्माकम् आश्रयस्थानानि भविष्यन्ति। अपरं तेषां किमपि नगरं ४ पलायितो हन्ता नगरद्वारस्य विचारस्थान उपतिष्ठन् नगरस्य प्राचीनानां कर्णगोचरे स्वकार्य्यं ज्ञापयिष्यति, तदा ते तं नगरमध्ये स्वेषां समीपमानीय स्वेषां मध्ये वस्तुं स्थानं तस्मै दास्यन्ति। अपरं शोणितप्रति- ५ फलदातरि तस्य पश्चाद् आगते ते तस्य हस्ते तं नरहन्तारं न समर्पयिष्यन्ति यतः स अज्ञानतो निजसमीपवासिनम् अवधीत् पूर्व्वं तं प्रति द्वेषं नाकरोत्। अतः स यावद् विचारार्थं समाजस्य साक्षात् नोप- ६ तिष्ठति, अर्थात् तत्कालीयप्रधानयाजकस्य मरणं न भवति तावत् स तस्मिन् नगरे वत्स्यति। अनन्तरं स नरहन्ता स्वं नगरं स्वं गृहञ्च अर्थाद् यन्नगरात् पलायितस्तत् स्थानं पुनर्यास्यति।

ततस्ते नप्तालिपर्व्वतस्थं गालीलदेशस्थं केदशम् इफ्रयिमपर्व्वतस्थं शिखिमं ७ यिहूदापर्व्वतस्थं किरियथर्व्वञ्चार्थतो हिब्रोणं निरूपयामासुः। तथा पूर्व्व- ८ दिशि यिरीहोः समीपस्थयर्द्दनपारे रूवेणवंशस्य देशमध्ये समभूमौ स्थितं वेत्सरं गादवंशस्य देशमध्ये गिलियदस्थं रामोतं मिनशिवंशस्य देशमध्ये वाशानस्थं गोलनञ्च निरूपयामासुः। यः कश्चिद् अज्ञानतो नरं हन्ति ९ स यथा तत्र पलायेत यावच्च समाजस्य समीपे तेन नोपस्थातव्यं तावत् शोणितप्रतिफलदातुः करेण न हन्येत, तदर्थम् एतानि नगराणीस्रायेलः समस्तवंशस्य तन्मध्ये प्रवासिनां विदेशीयानाञ्च कृते न्यरूप्यन्त।

# २१ एकविंशोऽध्यायः।

१ लेविवंशस्य कृते नगरनिरूपणं ९ हारोणवंशस्य कृते नगरनिरूपणं २० किहातवंशस्य कृते नगरनिरूपणं २७ गेर्शोनवंशस्य कृते नगरनिरूपणं ३४ मिरारिवंशस्य कृते नगरनिरूपणं ४३ विभागस्य समाप्तिश्च।

१ अनन्तरं लेविवंशस्य मुख्यनरा इलियासरस्य याजकस्य नूनसुतस्य २ यिहोशूयस्येस्रायेल्वंशानां प्राचीनानाञ्च समीपमागमन्। ते किनानदेशस्थशीलो तान् जगदुः, अस्माकं वासार्थं नगराणि पशूनां कृते तदीयपरिसरांश्चास्मभ्यं दातुं परमेश्वरो मूससा युष्मान् आज्ञापयत्। ३ तत इस्रायेल्वंशाः परमेश्वरस्याज्ञया स्वेषां भोग्यभूमेर्मध्यात् लेवि-४ वंशीयेभ्यो निम्नलिखितानि नगराणि तेषां परिसरांश्च ददुः। किहातीयवंशस्यांशस्य निर्णयोयं। लेवीयानां मध्ये याजकहारोणस्य वंशो गुटिकापातेन यिहूदाशिमियोनबिन्यामीनवंशेभ्यस्त्रयोदश नगराणि लेभे। ५ किहातस्यान्यवंशो गुटिकापातेन इफ्रयिमदानवंशाभ्यां मिनशिवंश-६ स्यार्द्धाच्च दश नगराणि लेभे। गेर्शोनवंशो गुटिकापातेन इषाखराशेरनप्तालिवंशेभ्यो वाशानस्थात् मिनशिवंशस्यार्द्धाच्च त्रयोदश नगराणि लेभे। ७ मिरारिवंशश्च स्वस्वपरिजनानुसाराद् गुटिकापातेन रूवेणगादसिवू-८ लूनवंशेभ्यो द्वादशनगराणि लेभे। परमेश्वरो मूससा यथादिष्टवान् तथेस्रायेल्वंशा निम्नलिखितानि नगराणि तेषां परिसरांश्च ददुः।

९ ते यिहूदावंशस्य शिमियोनवंशस्य च भूम्या एतानि वक्ष्यमाण-१० नगराणि ददुः। तानि लेविवंशीयानां मध्ये किहातीयवंशोद्भवानां हारोणसन्तानानां बभूवुः, यतस्तेषां प्रथमांश आसीत्। अनाकस्य ११ पितुरर्वस्य नगरम् अर्थाद् यिहूदापर्व्वतस्थं हिब्रोणनगरं तस्य चतु-१२ र्दिक्स्थः परिसरश्च तेभ्योऽदायि। किन्तु तस्य नगरस्य क्षेत्रं तस्य १३ ग्रामाश्च वंशभोग्यभूम्यर्थं यिफुन्नेः सुताय कालेबाय दत्ताः। अतो याजकहारोणस्य सन्तानेभ्य इमानि नगराणि दत्तानि। नरहन्तुराश्रयनगरं १४ हिब्रोणं तस्य परिसरश्च लिब्ना तस्याः परिसरश्च, यत्तीरं तस्य १५ परिसरश्च, इष्टिमोयं तस्य परिसरश्च, होलोनं तस्य परिसरश्च दिबीरं १६ तस्य परिसरश्च, ऐनं तस्य परिसरश्च युटा तस्याः परिसरश्च बैतशेमशं तस्य परिसरश्च, अनयोर्द्वयोर्वंशयो भूमिमध्याद् एतानि नव नगराणि। १७ अपरं बिन्यामीनवंशस्य भूमिमध्याद् गिबियोनं तस्य परिसरश्च, गेबा १८ तस्याः परिसरश्च, अनाथोतं तस्य परिसरश्च, अल्मोनं तस्य परिसरश्च,

एतानि चत्वारि नगराणि। साकल्येन त्रयोदश नगराणि तदीयपरि- १९
सराश्च हारोणवंशीययाजकानां बभूवुः।

अपरं किहातवंशीयलेवीयेभ्योऽर्थात् किहातवंशस्य शेषलोकेभ्य इफ्- २०
यिम्वंशस्य भूमिमध्यात् कतिपयनगराणि दत्तानि। तानीमानि, नर- २१
हन्तुराश्रयनगरम् इफ्रयिमपर्वतस्थं शिखिमं तस्य परिसरश्च, गेषरं
तस्य परिसरश्च, किव्सयिमं तस्य परिसरश्च, बैथोरोणं तस्य परिस- २२
रश्च, एतानि चत्वारि नगराणि। अपरं दानवंशस्य भूमिमध्याद् २३
इल्तिकी तस्याः परिसरश्च गिब्बिथोनं तस्य परिसरश्च, अयालोनं तस्य २४
परिसरश्च गातरिम्मोणं तस्य परिसरश्च,एतानि चत्वारि नगराणि।
अपरं मिनशेरर्द्धवंशस्य भूमिमध्यात् तानकं तस्य परिसरश्च गातरि- २५
म्मोणं तस्य परिसरश्च, एते द्वे नगरे। साकल्येन दश नगराणि तेषां २६
परिसरश्च किहातीयशेषवंशस्य बभूवुः।

अनन्तरं स्वस्वपरिजनानुसाराद् गेर्शोनवंशीयेभ्यो लेवीयेभ्य इमानि २७
नगराणि दत्तानि, मिनशेरर्द्धवंशस्य भूमिमध्यात् नरहन्तुराश्रयनगरं
वाशानस्थं गोलनं तस्य परिसरश्च बिष्टिरा तस्याः परिसरश्च, एते द्वे
नगरे। अपरम् इषाखरवंशस्य भूमिमध्यात् किशियोनं तस्य परिसरश्च २८
दाबिरतं तस्य परिसरश्च, यर्म्मूतं तस्य परिसरश्च, ऐनगन्नीमं तस्य २९
परिसरश्च, एतानि चत्वारि नगराणि। अपरम् आशेरवंशस्य भूमि- ३०
मध्यात् मिशियलं तस्य परिसरश्च अब्दोनं तस्य परिसरश्च हिलकतं ३१
तस्य परिसरश्च रिहोवं तस्य परिसरश्च, इमानि चत्वारि नगराणि।
अपरं नप्तालिवंशस्य भूमिमध्यात् नरहन्तुराश्रयनगरं गालीलस्थं केदशं ३२
तस्य परिसरश्च हम्मोतं तस्य परिसरश्च दोरं तस्य परिसरश्च कर्त्तनं
तस्य परिसरश्च, एतानि त्रीणि नगराणि। साकल्येन त्रयोदश नगराणि ३३
तेषां परिसराश्च स्वस्वपरिजनानुसारेण गेर्शोनवंशस्य बभूवुः।

अनन्तरं स्वस्वपरिजनानुसारात् मिरारिवंशीयेभ्योऽर्थाद् अवशिष्ट- ३४
लेविवंशीयेभ्य इमानि नगराणि दत्तानि। सिवूलूनवंशस्य भूमिमध्याद्
यक्नियामं तस्य परिसरश्च कार्त्ता तस्याः परिसरश्च, दिम्ना तस्याः परि- ३५
सरश्च, नहलोलं तस्य परिसरश्च, एतानि चत्वारि नगराणि। अपरं ३६
रूबेणवंशस्य भूमिमध्याद् बेत्सरं तस्य परिसरश्च यहसं तस्य परिसरश्च
किदेमोतं तस्य परिसरश्च मेफातं तस्य परिसरश्च, एतानि चत्वारि नग- ३७
राणि। अपरं गादवंशस्य भूमिमध्यात् नरहन्तुराश्रयनगरं गिलियदस्थं ३८

३९ रामोतं तस्य परिसरञ्च मह्नयिमं तस्य परिसरञ्च हिष्वोणं तस्य
४० परिसरञ्च, यासेरं तस्य परिसरञ्च, चत्वार्य्येतानि नगराणि। साकल्येन द्वादश नगराणि स्वस्वपरिजनानुसारात् मिरारिवंशेनार्थाद् अवशिष्ट-
४१ लेविवंशीयैर्लब्धानि। साकल्येनेस्रायेलवंशीयानां भूमिमध्ये लेविवंशी-
४२ यानाम् अष्टचत्वारिंशन्नगराणि सपरिसराणि बभूवुः। तेषां सर्व्वेषां नगराणां मध्य एकैकस्य चतुर्दिक्षु तदीयपरिसर आसीत्।

४३ इत्थं परमेश्वर इस्रायेलवंशीयानां पूर्व्वपुरुषाणां समीपे यं देशम् अधि शपथमकरोत् तं कृत्स्नं देशं स तेभ्यो ददौ, अपरं ते तमधिकृत्य तत्र वासं
४४ चक्रुः। परमेश्वरस्तेषां पूर्व्वपुरुषाणां समीपे यथा शप्तवान् तथैव चतुर्दिक्षु तेभ्यो विश्रामं ददौ, तेषां शत्रूणां मध्ये कोपि तेषां सम्मुखे स्थातुं न
४५ शशाक, परमेश्वरस्तेषां सर्व्वान् रिपून् तेषां हस्तगतान् चकार। इस्रायेल्वंशमधि परमेश्वरस्य यति मङ्गलार्थकानि प्रतिश्रुतवचनानि तेषाम् एकमपि निष्फलं न बभूव, सर्व्वमेव सिषेध।

---

## २२ द्वाविंशोऽध्यायः।

१ प्राप्ताशिषः सार्द्धवंशद्वयस्य पारगमनकथनं ९ यर्द्दनतटे वेदिनिर्म्माणं ११ वेद्या वार्त्तां श्रुत्वा अवशिष्टेस्रायेल्लोकै र्दूतानां प्रेषणं २१ दूतान् प्रति तेषामुत्तरं ३० तान् प्रति पीनिहसस्य कथनं ३२ तेषां प्रतिवचनं श्रुत्वा इस्रायेल्वंशस्य सन्तुष्टिः।

१ अनन्तरं यिहोशूयो रूवेणवंशं गादवंशं मिनशेरर्द्धवंशञ्चाहूय जगाद
२ परमेश्वरस्य सेवको मूसा युष्मान् यद्यदादिशत् तद् युष्माभिः सिद्धम्,
३ अहञ्च युष्मान् यद्यदादिशं युष्माभिस्तत्रापि मनो निहितं। बहुदिनमारभ्याद्य यावद् यूयं स्वस्भ्रातॄन् न त्यक्त्वा स्वप्रभोः परमेश्वरस्याज्ञाः
४ पालयथ। इदानीं युष्माकं प्रभुः परमेश्वरः स्वप्रतिज्ञानुसारेण युष्माकं भ्रातृभ्यो विश्राममददात् अत इदानीं यूयं स्वस्ववासस्थानम् अर्थात् परमेश्वरस्य सेवकेन मूससा दत्तं स्वेषां भोग्यं देशं यर्द्दनपारं प्रति
५ गच्छत। अपरं परमेश्वरस्य सेवको मूसा युष्मभ्यं याम् आज्ञां व्यवस्थाञ्चोक्तवान् अधुना तदनुसारेणाचरितुं युष्माकं प्रभुपरमेश्वरे प्रेतुं तस्य सकलमार्गेण गन्तुं तस्याज्ञा ग्रहीतुं तस्मिन् आसक्ता भवितुं सर्व्वान्तः-
६ करणैः सर्व्वप्राणैश्च समं तं सेवितुञ्चातीव यतध्वं। अनन्तरं यिहोशूय-
७ स्तान् आशिषमुक्त्वा विससर्ज ततस्ते स्वस्ववासस्थानं जग्मुः। मूसा मिनशेरर्द्धवंशाय वाशाने भूमिं दत्तवान् यिहोशूयश्च तस्यान्यार्द्धवंशाय यर्द्दनस्य

पश्चिमदिशि स्वभ्रातॄणां मध्ये भूमिं ददौ, अनन्तरं स्वस्ववासस्थानं प्रति तेषां विसर्जनकाले यिहोशूयस्तान् आशिषमुक्का जगाद, यूयं पशुरूप्यस्वर्ण- ८ पित्तललोहवस्त्रादीनि प्रचुरधनानि समादाय स्वस्ववासस्थानं पुनर्यात, यूयं रिपुभ्यो लोठितानि द्रव्याणि स्वस्वभ्रातृभिः सार्द्धं विभज्य गृह्णीत।

ततो रूबेणवंशो गादवंशो मिनशेरर्द्धवंशश्चेस्रायेल्वंशे विसृष्टाः ९ किनानदेशस्थशीलोः प्रतस्थिरे, मूसाः परमेश्वरस्याज्ञया तै र्भोग्यं यं देशं तेभ्यो दत्तवान् स्वेषां वंशभोग्यं तं गिलियददेशं प्रति यात्रां चक्रिरे। अनन्तरं किनान्देशस्थं यर्द्दनप्रदेशं प्राप्य रूबेणवंशो गादवंशो मिनशेरर्द्ध- १० वंशश्च तत्र यर्द्दनस्य समीपे बृहदाकृतिम् एकां वेदिं निर्म्ममिरे। अपरं ११ पश्यत, रूबेणवंशो गादवंशो मिनशेरर्द्धवंशश्च किनानदेशस्य सम्मुखे यर्द्द- नस्य प्रदेश इस्रायेल्वंशस्य पारयानस्थाने वेदिमेकां निर्म्मितवन्त इति वच इस्रायेलवंशः शुश्राव। इस्रायेल्वंशेन तस्मिन् श्रुते तेषां प्रतिकूलं १२ योद्धुं गमनार्थं इस्रायेलवंशस्य सर्व्वसमाजः शीलौ मिलितः। अपरं १३ रूबेणवंशस्य गादवंशस्य मिनशेरर्द्धवंशस्य च समीपम् इलियासरस्य याजकस्य पुत्रः पीनिहसस्तेन सार्द्धम् इस्रायेलः समस्तवंशानाम् एकैको १४ ऽधिप इत्थं दशाधिपा इस्रायेल्वंशे गिलियददेशं प्रहिताः, ते ऽधिपा इस्रायेल्वंशीयसहस्रलोकानां मध्ये स्वस्वपितृवंशस्य मुख्या आसन्। अनन्तरं ते गिलियददेशे रूबेणवंशस्य गादवंशस्य मिनशेरर्द्धवंशस्य १५ च समीपमागत्य तान् इति वचो जगदुः, परमेश्वरस्य सर्व्वः समाज १६ इति वाचं वदति, यूयम् अद्य परमेश्वरस्य प्रातिकूल्येनाचरितुं यज्ञ- वेदिनिर्म्माणेन परमेश्वरस्यानुगतेः परावर्त्तमाना इस्रायेल ईश्वरस्य यद् अपराध्नुथ, युष्माकं तस्यापराधस्य किं कारणं? परमेश्वरस्य समाजमध्ये १७ येन महामारी जाता यस्माच्च वयम् अद्यापि न परिष्कृतास्तत् पियो- रीयपापं युष्माभिः किं लघुतरं बुध्यते? इति हेतो र्यूयं किम् अद्य १८ परमेश्वरस्यानुगतेः परावर्त्तध्वे? युष्माभिरद्य परमेश्वरस्य प्रातिकूल्येना- चरिते श्वः स इस्रायेलवंशस्य सर्व्वसमाजं प्रति क्रुद्धो भविष्यति। युष्माकं १९ वंशभोग्यो देशो यद्यशुचि र्भवति तर्हि पारं गत्वा परमेश्वरस्यावास- विशिष्टं परमेश्वरेणाधिकृतं देशम् आगत्यास्माकं मध्ये स्वे र्भोग्यां भूमिं गृह्णीत; किन्त्वस्माकं प्रभोः परमेश्वरस्य यज्ञवेदिं विना स्वेषां कृत अन्ययज्ञवेद्या निर्म्माणेन परमेश्वरस्य प्रातिकूल्येनास्माकञ्च प्राति- कूल्येन माचरत। शूप्तद्रव्यमधि सेरहसुतेनाखनेनापराद्धे ईश्वरस्य २०

क्रोधः किम् इस्रायेलः सर्व्वसमाजं प्रति प्रकाशितो नाभवत्? इति कारणात् स मनुष्यः स्वपापेन केवलम् एकाकी विनष्टो नाभवत्।

२१ ततो रूवेणवंशगादवंशमिनशेरर्द्धवंशा इस्रायेल्वंशीयसहस्रपतीन्
२२ प्रतिजगदुः, प्रभूणां प्रभुः परमेश्वरः प्रभूणां प्रभुः परमेश्वर एव तज्जानाति, अपरम् इस्रायेल्वंशोपि तज्ज्ञास्यति, यदि परमेश्वरस्य प्रातिकूल्याद् अपराधेच्छया वा तत् कर्म्मास्माभिः कृतं तर्हि भवान् अद्यास्मान्
२३ मा क्षमतां। परमेश्वरस्यानुगमनात् परावर्त्तितुं तदुपरि होमं नैवेद्यं मङ्गलार्थकबलींश्चोत्स्रष्टुं वा यद्येषा यज्ञवेदिरस्माभि र्निरमायि, तर्हि
२४ परमेश्वरः स्वयं तस्य फलं ददातु। तत् कर्म्मास्माभि र्भयात् कृतं,
२५ अर्थाद् इस्रायेलः प्रभुणा परमेश्वरेण सह युष्माकं कः सम्बन्धः? हे रूवेणवंश हे गादवंश युष्माकमस्माकञ्च मध्ये परमेश्वरो यर्द्दनसरितं सीमां कृतवान् अतः परमेश्वरे युष्माकं कश्चिदंशो नास्तीति वाचं भाविकाले युष्मत्सन्तानाश्चेद् अस्मत्सन्तानान् वदेयुः, चेच्च युष्माकं वंशो-
२६ ऽस्माकं वंशं परमेश्वराद् भीतिं त्याजयेदिति भयाद् वयम् उक्तवन्तः, वयं वेदिमेकां निर्म्मातुम् उद्यमं करवाम, होमं वा बलिं दातुं तां
२७ निर्म्मामेति न हि। किन्तु होमबलिभि र्मङ्गलार्थकादिबलिभिश्च परमेश्वरस्य साक्षात् तं परिचरितुमस्माकम् अधिकार आस्त इति प्रमाणाय सा वेदि र्युष्माकम् अस्माकञ्च मध्येऽस्मत्तः परञ्चास्मद्वंशयोश्च मध्ये साक्षिणी भविष्यति; तेन परमेश्वरे युष्माकं कोप्यंशो नास्तीति वाचं
२८ भाविकाले युष्माकं वंशोऽस्माकं वंशं वक्तुं न शक्ष्यति। अपरं वयं कथितवन्तस्ते यदि भविष्यत्काल अस्मान् अस्माकं वंशं वा वाचमिमां वदेयुः, तर्हि वयं वदिष्यामः परमेश्वरीययज्ञवेद्याः समानाकृतिं वेदिमिमां निरीक्षध्वं सा अस्मत्पूर्व्वपुरुषै र्निर्म्मिता होमादिबलिदानार्थिका न हि,
२९ किन्तु सा युष्माकम् अस्माकञ्च मध्ये साक्षिणी विद्यते। वयं यत् स्वेषां प्रभोः परमेश्वरस्यावासस्य सम्मुखस्थितां तस्य यज्ञवेदिं विना होमनैवेद्यबलिदानार्थिकाम् अन्ययज्ञवेदिं निर्म्मातुं परमेश्वरस्यानुगमनाद् अद्य परावर्त्तेमहि परमेश्वरस्य प्रातिकूल्येनाचरेम वा, इत्थं मा भवतु।

३० तदानीं याजकपीनिहसस्तस्य सहवर्त्तिनः समाजाधिपा इस्रायेलवंशस्य सहस्राणाम् अधिपाश्च रूवेणवंशेन गादवंशेन मिनशेरर्द्धवंशेन
३१ चोक्तान्येतादृशानि वचांसि निशम्य सन्तुष्टा बभूवुः। याजकेलियासरस्य सुतः पीनिहसो रूवेणवंशं गादवंशं मिनशेरर्द्धवंशञ्च बभाषे परमेश्वरो-

ऽस्माकं मध्ये विद्यत इति वयमद्याजानाम, यतो युष्माभिः परमेश्वरस्य किमपि नापराद्धम् अपरं यूयम् इदानीम् इस्रायेल्वंशं परमेश्वरस्य कराद् उद्धृतवन्तः।

अनन्तरं याजकेलियासरस्य सुतः पीनिहसोऽधिपाश्च रूबेणवंशस्य ३२ गादवंशस्य च समीपाद् गिलियददेशात् किनानदेशं प्रत्यागत्य इस्रायेल्-वंशं तेषामुत्तरस्य वार्त्तां जगदुः। तत इस्रायेल्वंशास्तेन तुष्टिं गत्वेस्रायेल्- ३३ वंशानाम् ईश्वरस्य धन्यवादं चक्रिरे, रूबेणवंशस्य गादवंशस्य च निवास-देशं विनाशयितुं युद्धाय गमनस्य पुनः किमपि न बभाषिरे। अनन्तरं ३४ रूबेणवंशो गादवंशश्च तस्या वेद्या एदः (साक्षिणीति) नाम चक्रुः, यतः परमेश्वर एव प्रभुरस्ति, सास्माकं मध्य एतस्य साक्षिणी भविष्यति।

---

# २३ त्रयोविंशोऽध्यायः।

मरणात् पूर्व्वम् इस्रायेलः सर्व्ववंशान् प्रति यिहोशूयस्य कथनं।

इत्थं परमेश्वरेण इस्रायेल्वंशाय तस्य चतुर्दिक्षु स्थितेभ्यः सकल- १ रिपुभ्यो विश्रामे दत्ते बहुकालात् परं यिहोशूयो बहुवयस्को वृद्धो भूत्वा सर्व्वान् इस्रायेल्वंशान् तेषां प्राचीनान् अधिपान् विचारकान् २ सेनापतींश्चाहूय गदितवान् अहं बहुवयस्को जरनभवं। युष्माकं ३ प्रभुणा परमेश्वरेण युष्माकं साक्षाद् एता जातीः प्रति यद्यत् कर्म्माकारि तद् युष्माभि र्लोचनैरदर्शि युष्माकं प्रभुः परमेश्वरः स्वयं युष्माकं पक्षीयो भवन् अयुद्धत्। पश्यत यर्द्दनमारभ्य पश्चिमदिक्स्थं महाजलधिं ४ यावद् या जातयो मयोच्छिन्ना याश्चावशिष्टाः सन्ति, तासां देशान् अहं युष्माकं वंशानुसारेण गुटिकापातेनांशितवान्। अपरं युष्माकं प्रभुः ५ परमेश्वरो युष्माकं सम्मुखात् तास्ताडयिष्यति युष्माकं दृष्टिगोचराद् दूरयिष्यति च, अपरं यूयं स्वेषां प्रभोः परमेश्वरस्य वाक्यानुसारेण तासां देशान् अधिकरिष्यथ। अतो यूयं मूससो व्यवस्थाग्रन्थे लिखितं ६ सकलवाक्यं ग्रहीतुम् आचरितुञ्चातीव दृढमनसो भवत, तस्य दक्षिणं वामं वा प्रति न परावर्त्तध्वं। अपरं युष्मन्मध्य अवशिष्टानाम् एतद्देशस्थ- ७ जातीयानां मध्ये गतायातं मा कुरुध्वं तेषां देवतानां नामान्युच्चारयन्तः शपथं न कुरुत तान् मा सेवध्वं मा प्रणमत च। किन्तु यूयम् अद्य ८ यावद् यादृशं कुरुथ, तादृशं स्वप्रभौ परमेश्वरे समासक्तास्तिष्ठत।

९ यतः परमेश्वरो युष्माकं सम्मुखाद् बृहती र्बलवती र्जातीरदूरयत्, अद्य
१० यावद् युष्माकं सम्मुखे स्थातुं केनापि न शक्यते। युष्माकम् एको जनो
रिपूणां सहस्रजनान् विद्रावयिष्यति यतो युष्माकं प्रभुः परमेश्वरो युष्मान्
११ प्रति स्वप्रतिज्ञानुसारेण स्वयं युष्मत्पक्षे योत्स्यति। ततो यूयं स्वेषां कृते
१२ भृशं सावधानाः सन्तः स्वेषां प्रभौ परमेश्वरे प्रेम कुरुत। नोचेद् यूयं
यदि परावृत्य युष्मन्मध्ये निवासिभिरेतैरवशिष्टै र्भिन्नजातीयैः संयुज्यध्वे
तैश्च सह युष्माकं विवाहसम्बन्धो भवति तेषां समीपं युष्माकं युष्माकञ्च
१३ समीपं तेषां समागमो जायते, तर्हि युष्माभिरिदं निश्चितं ज्ञायतां,
युष्माकं प्रभुः परमेश्वरो युष्माकं सम्मुखात् तान् भिन्नजातीयान् दूरयितुं
निवर्त्तिष्यते, तेन युष्माकं प्रभुणा परमेश्वरेण दत्ताद् अस्माद् उत्तम-
देशाद् यावद् यूयं न लोप्स्यध्वे तावत् ते युष्माकम् उन्माथा जालानि
१४ कटिप्रहारककशा नेत्राणां कण्टकानि च भविष्यन्ति। पश्यत सर्व्वमर्त्त्यै
र्येन मार्गेण गम्यते तेनाद्याहं गच्छामि, अपरं प्रभुणा परमेश्वरेण
युष्मानधि यति मङ्गलसूचकानि वाक्यान्युक्तानि तेषां नैकस्यापि न्यूनत्वम्
अकारि सर्व्वाणि सिद्धानि, एकमपि निष्फलं नाभूत्, एतद् युष्माभिः
१५ सर्व्वान्तःकरणैः सर्व्वबुद्धिभिश्च ज्ञायतां। अतो युष्माकं प्रभुः परमेश्वरो
युष्मानधि यानि मङ्गलदायकानि वाक्यानि जगाद तानि यथा युष्मान्
प्रति सिद्धान्यभवन्, तथा युष्माकं प्रभुणा परमेश्वरेण दत्तादस्माद्
उत्तमदेशाद् युष्माकं निराकरणं यावद् युष्मान् प्रति स्वोक्तं सर्व्वमङ्गल-
१६ सूचकं वाक्यं साधयिष्यति। यदा यूयं स्वप्रभुणा परमेश्वरेणाज्ञापितं
नियमं लङ्घिष्यथ गत्वा चेतरदेवान् सेविष्यध्वे तान् प्रणंस्यथ च तदा
युष्मान् प्रति परमेश्वरस्य क्रोधः प्रज्वलिष्यति, तस्माद् यूयं तेन दत्ताद-
स्माद् उत्तमदेशात् तूर्णं विनंक्ष्यथ।

---

## २४ चतुर्विंशोऽध्यायः।

१ सर्व्वेषाम् इस्रायेल्वंशानां यिहोशूयेन मेलनं २ संक्षेपेण तेषां पूर्व्वपुरुषाणां पुरावृत्त-कथनं १४ तैः सह नियमस्थिरीकरणं २६ नियमस्य साक्षिणे एकस्य पाषाणस्य स्थापनं २९ यिहोशूयस्य मरणं ३२ यूषफस्यास्थ्नां श्मशाने स्थापनम् इलियासरस्य मरणञ्च।

१ अनन्तरं यिहोशूय इस्रायेलः सकलवंशान् शिखिमे मेलयामास तेषां प्राचीनान् अधिपतीन् विचारकान् सेनापतींश्चाजुहाव, तेन ते परमे-श्वरस्य समक्षम् उपतस्थुः।

तदानीं यिहोशूयः सर्व्वलोकान् अवदत्, इस्रायेलः प्रभुः परमेश्वर २
इति वाचं वक्ति, इब्राहीमस्य नाहोरस्य च पिता तेरहो युष्माकमन्ये
पूर्व्वपुरुषाश्च पूर्व्वं फरातसरितः पारे वसन्त इतरदेवान् असेवन्त।
ततोऽहं युष्माकं पूर्व्वपुरुषम् इब्राहीमं तस्याः सरितः पाराद् गृहीत्वा ३
किनानदेशस्य सर्व्वत्र भ्रमयामास, अपरं तं बहुप्रजं कर्त्तुम् इस्हाकं
सुतं अददां। इस्हाकाय च याकूबम् एषौनामकञ्च सुतौ दत्तवान् ४
एषौनामकस्याधिकारार्थं तस्मै सेयीरपर्व्वतं दत्तवान् किन्तु याकूबस्तस्य
वंशश्च मिसरदेशम् अगच्छत्। अनन्तरम् अहं मूससं हारोणञ्च प्रेषित- ५
वान्, अपरं मिस्रीयाणां मध्ये यानि कर्म्माण्यकरवं तैस्तान् अताडयं,
अनन्तरम् अहं युष्मान् वहिष्कृत्यानयं। ततो मया मिसरदेशाद् युष्माकं ६
पितृलोकेषु वहिष्कृतेषु यूयं जलधिं प्राविशत, अपरं मिस्रीयलोका
रथान् अश्वारूढसैन्यानि च गृहीत्वा सूफजलधे र्मध्यं यावद् युष्माकं
पितृलोकानां पश्चाद् अधावन्। ततस्तैः परमेश्वरम् उद्दिश्य प्रार्थनायां ७
कृतायां स मिस्रीयाणां युष्माकञ्च मध्ये तिमिरमस्थापयत् जलधिना तान्
समाच्छादयच्च, मया मिस्रीयान् प्रति यत् कर्म्माकारि तद् युष्माभि र्नेत्रै-
रदर्शि अनन्तरं यूयं बहुकालं प्रान्तर अवसत। ततः परं यर्द्दनः पारवा- ८
सिनाम् इमोरीयाणां देशं युष्मानहं आनयं ततो युष्माभिः सार्द्धं युध्यत्सु
तेषु मया युष्मत्करे समर्पितेषु यूयं तेषां देशम् अध्यकुरुत, इत्यहं
युष्माकं साक्षात् तान् अमारयं। अनन्तरं मोयाबस्य राजा सिप्पोरसुतो ९
बालाक उत्थायेस्रायेल्वंशेन सहायुध्यत्, अपरं लोकं प्रहित्य युष्मान् शप्तुं
बियोरसुतं बिलियमं आकाययत्। किन्त्वहं बिलियमस्य वाक्ये मनो नि- १०
धातुं नैच्छं ततः स युष्मभ्यम् आशिषमददात्, इत्थं मया तस्य कराद् यूयं
मोचिताः। अनन्तरं युष्मासु यर्द्दनसरितः पारमागत्य यिरीहो समुप- ११
स्थितेषु यिरीहोर्लोका इमोरीयाः पिरिषीयाः किनानीयाः हित्तीया
गिर्गाशीया हिव्वीया यिबूषीयाश्च लोका युष्माकं प्रतिकूलमयुध्यन् ततो
ऽहं युष्माकं करेषु तान् समार्पयं। अपरमहं तान् इमोरीयराजद्वया- १२
दीन् युष्माकं सम्मुखाद् दूरयितुं नीलाङ्कक्षमिगणं युष्माकं अग्रेऽग्रे प्रहित-
वान् ते युष्माकं खड्गै र्धनुर्भि र्वा पराजितास्तन्नहि। अपरं यूयं यदर्थं श्रमं १३
नाकुरुत तादृशं देशं येषां निर्म्माणं नाकुरुत तादृशानि नगराणि चाहं
युष्मभ्यम् अददां यूयञ्च तन्मध्ये वसथ, अपरं येषां द्राक्षाक्षेत्राणां जित-
वृक्षक्षेत्राणाञ्च रोपणं युष्माभि र्न कृतं तस्य फलं भुञ्यते।

१४ इदानीं यूयं परमेश्वराद् बिभीत, सरलान्तःकरणैः सत्यतया च तं सेवध्वम्, अपरं युष्माकं पूर्व्वपुरुषा महानद्याः पारे मिसरे च यान्
१५ देवान् असेवन्त तान् दूरयित्वा परमेश्वरं सेवध्वं। यदि परमेश्वरस्य सेवनं युष्माभिरशुभं बुध्यते तर्हि नदीपारे वसनकाले युष्माकं पूर्व्वपुरुषैः सेवितानां देवानां मध्ये वा युष्माकं निवासदेशीयैरिमोरीयैः सेवितानां देवानां मध्ये कं सेविष्यध्वे तम् अद्यैव निर्णयत, किन्त्वहं मम परिज-
१६ नाश्च वयं परमेश्वरं सेविष्यामहे। ततो लोकाः प्रतिजगदुः, वयं यद्
१७ इतरदेवान् सेवितुं परमेश्वरं त्यजामस्तन्माभूत्। परमेश्वरोऽस्माकम् ईश्वरः स एवास्मान् अस्मत्पितृलोकांश्च मिसरस्थदासत्वागाराद् आनीतवान् अस्माकं दृष्टिगोचरे महाचिह्नानि प्रकाशितवान् अस्माकं यात्रायाः सर्व्वस्मिन् समये तथा येषां मध्येन वयम् आगतास्तेषां
१८ लोकानां मध्ये ऽस्मान् रक्षितवान्। परमेश्वरो देशनिवासिन इमो-रीयादीन् सर्व्वलोकान् अस्माकं सम्मुखाद् दूरीकृतवान्, अतो वय-
१९ मपि परमेश्वरं सेविष्यामहे यतः स एवेश्वरः। ततो यिहोशूयो लोकान् जगाद, परमेश्वरस्य सेवनं युष्माभिरशक्यं भवेत् यतः स पवित्र ईश्वरः स्वगौरवरक्षक ईश्वरश्च स युष्माकम् आज्ञालङ्घनं पापञ्च न क्षंस्यते।
२० यदि यूयं परमेश्वरं विहायेतरदेवान् सेवध्वे तर्हि स परावृत्य युष्मान्
२१ क्लेक्ष्यति मङ्गले कृते च युष्मान् संहरिष्यति। अनन्तरं लोका यिहोशूयं
२२ अवदन्, नहि, वयं परमेश्वरमेव सेविष्यामहे। यिहोशूयो लोकान् बभाषे यूयं परमेश्वरं सेवितुं तमेव निरणयत, एतस्मिन् यूयं स्वेषां प्रतिकूलं स्वयं साक्षिणोऽभूत, ततस्ते जगदुः सत्यं वयं साक्षिणोऽभूम।
२३ अनन्तरं स जगाद, यूयम् अधुना स्वेषां मध्यस्थान् इतरदेवान् दूरयत, इस्रायेलः प्रभुं परमेश्वरम् उद्दिश्य स्वेषां मनांसि समासादयत च।
२४ अनन्तरं लोका यिहोशूयं बभाषिरे वयं स्वेषां प्रभुं परमेश्वरं सेविष्या-
२५ महे तस्य वाक्यं ग्रहीष्यामश्च। ततो यिहोशूयस्तस्मिन् दिने लोकैः समं नियमं स्थिरीकृत्य शिखिमे तेषां कृते व्यवस्थां विधिञ्च स्थापयामास।
२६ अनन्तरं यिहोशूयस्तानि वाक्यानि परमेश्वरस्य व्यवस्थाग्रन्थे लिलेख, अपरं वृहन्तं पाषाणं गृहीत्वा परमेश्वरस्य पवित्रावाससमीप अलोन-
२७ तरोरधः स्थापयामास। अनन्तरं यिहोशूयः सर्व्वान् जनान् जगाद, पश्यत पाषाणोऽयं अस्मान् प्रति साक्षी भविष्यति यतः परमेश्वरोऽस्मान् यां यां वाचं अवदत् ता वाचः स श्रुतवान् अतो यूयं यत् स्वेषाम् ईश्वरं

न वञ्चयेत तदर्थं स युष्मान् प्रति साक्षी भविष्यति। अनन्तरं यिहो- २८
श्रूयः प्रतिजनं स्वस्वभोग्यभूमिं गन्तुं विससर्ज।

इतः परं नूनस्य सुतः परमेश्वरस्य सेवको यिहोश्रूयो दशाधिकं शतं २९
वर्षाणि जीवित्वा ममार। ततो लोका इफ्रयिमपर्व्वते गाशश्रैलोत्तर- ३०
दिक्स्थिते तस्य स्वीयभूमेः सीम्नि तिम्नतसेरहे तस्य श्मशानं चक्रुः।
तस्य यिहोश्रूयस्य यावज्जीवनं ये च प्राचीना इस्रायेलः कृते परमेश्वरेण ३१
कृतानि सर्व्वकार्य्याणि वीक्ष्य यिहोश्रूयस्य मरणात् परम् अजीवन्
तेषामपि यावज्जीवनम् इस्रायेल्वंशः परमेश्वरं सिषेवे।

अनन्तरं यां भूमिं याकूबः शतरूप्यमुद्राभिः शिखिमस्य पितुर्हमोरस्य ३२
वंशाद् अक्रीणात् तन्मध्य इस्रायेल्लोका मिसरत आनीतानि यूषफस्या-
स्थीनि निदधिरे, अपरं तस्यां भूमौ यूषफवंशस्याधिकारो बभूव।
अनन्तरं हारोणस्य सुत इलियासरो ममार, ततो लोका इफ्रयिम- ३३
पर्व्वते तस्य सुताय पीनिहसाय दत्ते प्रत्यन्तपर्व्वते तस्य श्मशानं चक्रुः।

---

# सूचीपत्रं।